वरेन्द्र-अनुसन्धान-समिति-ग्रन्थमाला

# काशिकाविवरणपञ्जिका ।

बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचिता

शास्त्रिश्रीश्रीशचन्द्रचक्रवर्त्तिभट्टाचार्य्येण संस्कृता ।।

THE

# KASIKA-VIVARANA-PAÑJIKA

## (THE NYASA)

## A COMMENTARY ON VAMANA-JAYADITYA'S KASIKA

BY

JINENDRA BUDDHI.



EDITED

WITH INTRODUCTION AND OCCASIONAL NOTES

BY

SRISH CHANDRA CHAKRAVARTI, B. A.

READER OF SANSKRIT, DACCA UNIVERSITY.

**Vol. II. Part I.**

( Adhyaya 5 ).



PUBLISHED BY

THE VARENDRA RESEARCH SOCIETY

RAJSHAHI, BENGAL.



1919

अथ

# काशिकाविवरणपञ्जिका।

## पञ्चमाध्यायस्य

### प्रथमः पादः।

——:*:——

१। प्राक् क्रीताच्छः।

विधिरधिकारः परिभाषा वेति त्रयमत्र सम्भाव्यते। यथा चैतत् त्रितयमपि निर्दोषं तथा प्राग्दीव्यतोऽणित्यत्र (४।१।८३) दर्शितम्। यद्येवं काशिकाकारेण कस्मान्न सूचितम्? एकदेशानुस्मरणेन सर्वस्य सूचितत्वादित्यभिप्रायः। अथ प्रागिति कोऽयं निर्देशः? यावता प्रपूर्वस्याञ्चतेः क्विनि नलोपादिके विहित उगिदचामिति (७।१।७०) नुमि संयोगान्तलोपे च क्विन्प्रत्ययस्य कुरिति (८।२।६२) नकारस्य ङकारे प्राङिति भवितव्यम्। अथेद्दृशी व्युत्पत्तिराश्रीयेत यावताञ्चतेश्चोपसंख्यानमिति (४।१।६, वा) कृते ङीपि प्राच्यां दिशि वसतीति दिक्शब्देभ्यः सप्तमीत्यादिना (५।३।२७) ऽस्तातिः। तस्याञ्चेर्लुगिति (५।३।३०) लुक्। लुक् तद्धितलुकीति (१।२।४९) ङीपोऽपि। तसिलादिस्तद्धित एधाच्पर्य्यन्त इत्यव्ययत्वे ऽव्ययादिति (२।४।८२) सोर्लुकि न लुमताङ्गस्येति (१।१।६३) प्रत्ययलक्षणप्रतिषेधात् सर्वनामस्थानाभावे नुमोऽप्यभावः। ततः कुत्वे सति प्रागिति सम्पद्यते। यस्तु मन्यत आद्येऽपि पक्षे क्रियाविशेषणत्वान्नपुंसकत्वम्। क्रियाविशेषणानां यथा नपुंसकत्वं कर्म्मभावश्च तथा करणे च स्तोकाल्पकृच्छ्रेत्यत्र (२।३।३३) प्रतिपादितम्। तत्र कर्मणि द्वितीयायाः स्वमोर्नपुंसकादिति (७।१।२३) लुकि कृते पूर्ववन्नुमभाव इति तन्मते द्वितीयैकवचनान्तं पदं सञ्जायते। तदेवमितरस्मिन् पक्षे

षष्ठ्यतसर्थप्रत्ययेनेति (२।३।३०) षष्ठ्या भवितव्यम् । तत् कथं क्रीतादिति पञ्चमीनिर्देशः । नैतदस्ति । यावतान्यारादितरर्त्तेदिक्शब्देत्यत्रेद-(२।३।२९) मुक्तं दिक्शब्दत्वादेव सिद्धे ऽञ्चूत्तरपदग्रहणं षष्ठ्यतसर्थेत्यनेन (२।३।३०) प्राप्तां षष्ठीमपि बाधित्वा पञ्चम्येव यथा स्यादिति कुतः षष्ठीप्रसङ्गः ? अतो व्यवस्थित मिदं प्राक् क्रीतादिति । अथ प्राग्वचनं किम् ? न क्रीताच्छ इत्येवोच्येत । नैतदस्ति । एवं ह्युच्यमाने क्रीतशब्द एव प्रकृतित्वेन ज्ञायेत । ततश्च क्रीतशब्दादेव प्रत्ययः स्यात् । तस्मात् क्रीतादित्यवधिद्योतनार्थं प्रागिति वक्तव्यम् । तर्ह्ययमर्थः प्राग्धितादित्यतः (४।४।७४) प्रकृतेन प्राग्ग्रहणेन हि सम्बध्यते । एवं तत्रैतत् स्यात् । तद्धि भवे च्छन्दसीति (४।४।११०) । तेन च्छन्दोऽधिकारेण प्रकृतं प्राग्ग्रहणं सम्बद्धम् । अतस्तदनुवृत्तौ सत्यां तस्याप्यनुवृत्तिरिति वार्त्तमेतत् । अस्वरितत्वादेव च्छन्दोऽधिकारस्य निवृत्तेः । तर्हि हि प्राग्दीव्यत इत्यतः (४।१।८३) प्रकृतत्वात् तेनापि च वहतेरित्येवमादिकं सम्बध्येत यथा स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति (४।१।८०) । नैतदस्ति । एवं हि सोमाट् ट्यणित्यादौ (४।२।३०) यत्र पञ्चमी श्रूयते तत्र सर्वत्र प्राग्वचनेन सम्बन्धे न ज्ञायते को विधिः का च प्रकृतिरिति स्यात् । येषामवधित्वमिष्यते तेषामेव प्राक्शब्दमधीतवानिति । इह तु प्रकृतेन प्राग्वचनेन सम्बध्यते । ननु च विपर्य्ययः कस्मान्न भवति ? भवनादिति प्रकृतिः स्त्रीपुंसाभ्यामित्यवधिनिर्देश इति । नैतदस्ति । अवधेरेकत्वादेकवचनेन निर्देशो न्याय्यः । प्रकृतिनिर्देशे तु द्वे एव प्रकृती परस्परापेक्षे इति द्विवचनमुपपद्यते । ननु च विशदमिदमुदितमप्यर्थज्ञानम् । स्वरितलिङ्गादधिकाराणामासङ्ग इत्येतद् भवता विस्मृतम् । तदेवं सोमाट् ट्यणित्यादौ (४।२।१०) कः प्राग्वचनसम्बन्धप्रसङ्ग इति नार्थः प्राग्ग्रहणेन । सत्यमेतत् । किन्तु स्वरितत्वास्वरितत्वख्यापनपरम्परया मन्दधियो मोहमासादयन्तीति तत्प्रतिपत्त्यर्थं प्राग्ग्रहणं कर्त्तव्यम् । अवसीय इति । विकल्पनात् त्रयमत्र सम्भवति । अनुत्पन्ने प्रत्यये नञास्य सम्बन्ध इति । उत्पन्ने वा । संसर्ग उत्पत्तिकाल एवेति । तत्राद्ये पक्षे वत्सादन्यस्मै हितमितीष्टाभिधानं न प्राप्नोति । द्वितीये तु गोधुगनभिधानप्रसङ्गः । तृतीये तु सापेक्षमसमर्थं

भवतीति प्रत्ययो न प्राप्नोति। न चापि चतुर्थी। हितार्थस्य प्रतिषिध्यमानत्वात्। तृतीये तु पक्षे यथा दोषो न भवति तथा प्रतिविधीयते। तत्र वत्सहितशब्दयोः पदान्तरनिरपेक्षयोः क्रियापदेन भवतिनानुगम्यमानत्वात् न च बाह्यसम्बन्धोऽन्तरङ्गसम्बन्धं निवर्त्तयितुं शक्नोति। अतएव न देवदत्ताय गां ददातीति सम्प्रदाने चतुर्थी भवति। कर्मणाभिप्राप्तेरन्तरङ्गत्वादिति। तथानेन च क्रमेण यत्रापि प्राप्तिर्न विद्यते केवलं त्विच्छामात्रमेव तत्रापि कर्मसंज्ञा प्रवर्त्तते। तद्यथा ग्रामं गन्तुमिच्छामि न कश्चित् सहायोऽस्तीति। यदप्युच्यते ऽसामर्थ्यात् तद्धितेन न भवितव्यमिति तदेतदप्यसारम्। यदयं नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिता इति (६।२।१५५) तदन्तान्युत्तरपदानि नञो गुणप्रतिषेधे वर्त्तमानानि पराण्यन्तोदात्तानि भवन्तीति तद्धितग्रहणमनर्थकं स्यात्। अथ किमर्थमियानवधि रुपादीयते ? नहि तत्र तावदस्य व्यापारोऽस्ति। प्रत्ययान्तरैर्बाधितत्वात्। लघुत्वात् प्राक् ठञश्छ इति वक्तव्यमित्यत आह अर्थोऽवधित्वेनेत्यादि। कः पुनरर्थमवधित्वेनाङ्गीकुर्वतो गुण इति चेदयमभिप्रायः। प्राक् ठञश्छ इत्युच्यमाने प्राक् ठञो याः प्रकृतयस्ताभ्यश्छो भवतीत्ययमर्थः स्यात्। ततश्चाधिकारस्य प्रतियोगोपस्थानादपवादविषये छप्रत्ययः प्रसज्येत। अर्थे त्ववधित्वेनोपादीयमाने प्राक् क्रीताद्ये ऽर्थास्तेषु छो भवतीत्ययमर्थः सम्पद्यते। ततोऽतिप्रसङ्गो न भवति। तेन समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानोऽपवादश्छं बाधते। ननु च प्राक् ठञ इत्युच्यमानेऽपवादविषयेऽपि छो न भविष्यत्येव। ज्ञापकात्। यदयं विभाषा हविरपूपादिभ्य इति (५।१।४) विभाषाग्रहणं शास्ति। इतरथा ह्यधिकाराच्छोऽपि लब्ध एवेति विभाषाग्रहणमनर्थकं स्यात्। सत्यमेतत्। किन्तु ज्ञापकद्वारेणार्थप्रतिपत्तौ सत्यां प्रतिपत्तिगौरवं स्यात्। तस्मात् सुखप्रतिपत्त्यर्थमर्थोऽवधित्वेनोक्तः। अन्ये पुनराहु र्गृहीत इत्याशंसायां भूतवच्चेत्यनेन (३।३।१३२) भविष्यति निष्ठाप्रत्यय इति। तेनायमर्थः सम्पद्यते वत्सीयादिरूपसिद्ध्यर्थमर्थमवधिं ग्रहीष्यामीति। अतः शालातुरीयेण (A) प्राक् ठञश्छ इति नोक्तम्। अन्यथा हि प्रत्ययावधित्वे प्रतिपदोक्ता अन्तरङ्गा इत्युपा-

(A) By शालातुरीय, evidently पाणिनि is meant. So the न्यासकार supports the

त्ताभ्यः प्रकृतिभ्य एव प्रत्ययः स्यादित्याशङ्क्येत । अन्ये पुनरन्यथा वर्णयन्ति । परिखाया ढञित्यत्र (५।१।१७) च्छयतोः पूर्णोऽवधि रित्यभिधास्यति । ततश्च तेन क्रीतमिति वक्ष्यतोत्युच्यते । ततश्चेदं विरुद्धमित्याह अर्थोऽवधित्वेनेत्यादि । गतार्थम् । नैयायिक इत्याह (B) क्वचिदर्थोऽवधित्वेन गृह्यते यथाऽऽर्हाद् (५।१।१९) भवनादिति (४।१।८७) । क्वचित् प्रत्ययः प्राग् वहते (४।४।१) रा च त्वादिति (५।१।१२०) । क्वचित् प्रकृति रा कड़ारात् ( १।४।१ ) प्राक् कड़ारादिति (२।१।३) । क्वचिदेकदेशः प्राग् दीव्यतोऽणिति (४।१।८३) । क्वचिन्निरवधिः प्रत्ययो ङ्याप्प्रातिपदिकादिति ( ४।१।१ ) । तेनायमात्मनो वैचित्र्यमाचार्य्यो दर्शयतीत्यवसीयत इति । अथ क्रीतशब्दादेव पूर्वेण च्छप्रत्ययो भवतीत्येवं कस्मान्न विज्ञायते ? यथा विभाषा सुपो बहुच् पुरस्तात् त्विति (५।३।६८) ? अनभिधानात् । नहि क्रीतशब्दात् पुरस्तादुत्पद्यमानेन प्रत्ययेन कस्यचिदर्थस्याभिधानमस्ति । नचापि तेन क्रीतमिति निर्देश उपपद्यते । तत्रैवमपि प्राक् क्रीतशब्दादेव प्रत्ययो भवतीत्येव कस्मान्न विकल्प्यते ? अनभिधानादेव । नहि तत उत्पन्नेन प्रत्ययेन विवक्षितोऽर्थोऽवगम्यते । अर्थान्तरं भवादिकम् । तत्र च वृद्धलक्षणश्छ एव सिद्ध इत्यनर्थकमिदं स्यात् । तस्मात् प्रागुदितमेव प्रयोजनं न्याय्यम् ।

## २ । उगवादिभ्यो यत् ।

उगिति प्रत्याहारग्रहणं वा स्यात् ? उवर्णग्रहणं वा ? तत्राद्ये पक्षेऽयं वाक्यार्थो जायत उगन्तेभ्यः प्रातिपदिकेभ्यो ऽवादिभ्यो ऽवकारादिभ्यो-ऽवसुप्रभृतिभ्य इति । वकारादीन् वर्जयित्वेत्यर्थः । ननु चैवं सति पञ्चम्या निर्देशः स्यात् । नैष दोषः । सुपां सुलुगिति (७।१।३९) लुका निर्दिष्टत्वात् । एवं तर्हि प्रातिपदिकेषु गवादिपाठसामर्थ्यात् प्रत्याहारग्रहणं न भवति ।

---

view that शलातुर had been the residence of the sage's ancestors.—शलातुरोऽभिजनोऽस्येति तूदीशलातुरेत्यादिना ढक्ण् (४।३।४९) शालातुरीयः । तेन ।

(B) Who was this नैयायिक ?

अन्यथा हि गवादीनां पाठोऽनर्थकः स्यात्। एतत् सर्वं मनसि कृत्वाह उवर्णान्तादित्येव। सर्वत्रग्रहणे तदन्तविधेरभ्युपगमादित्यभिप्रायः। शङ्कव्यमिति। ओर्गुणः (६।४।१४६)। वान्तो यि प्रत्यय (६।१।७९) इत्यवादेशः। सनङ्गुरित्यादि। चर्मविकारलक्षणस्याञोऽवकाशो वार्ध्रं वारत्रम्। उवर्णान्तलक्षणस्य यतोऽवकाशः शङ्कव्यम् पिचव्यमिति। सनङ्गुर्नाम चर्मविकारः। तत्रोभयप्राप्तौ परत्वाच्च चर्मणोऽञित्यञ् (५।१।१५) प्राप्नोति। तथेत्यादि। अन्नविकारेभ्यश्चेति। अपूपादिलक्षणस्य पाक्षिकस्य यतोऽवकाशः। अपूप्यास्तण्डुला अपूपीया इति। उवर्णान्तलक्षणस्य सएव। चरुर्नाम हविर्विशेषः। सक्तुश्चान्नविकारः। तत उभयप्रसङ्गे परत्वाद्विभाषा हविरपूपादिभ्य इति (५।१।४) हविर्लक्षणोऽन्नविकारलक्षणश्च विधिः प्राप्नोति। तदेवं सनङ्गुशब्दादञ् प्राप्तः। चरुसक्तुशब्दाभ्यां विकल्पेन यत्। नित्यश्चेष्यते। तदर्थं पूर्वविप्रतिषेधो भाषितव्य इति। ओर्गुणः (६।४।१४६)। वान्तो यि प्रत्यय इत्यवादेशः (६।१।७९)। सनङ्गव्यमित्यादि। एतच्चेष्टवाचित्वात् परशब्दस्य लभ्यत इत्यवगन्तव्यम्। गवादिषु नाभि नभञ्चेति पठ्यत इत्यत्र कस्यचिदियमाशङ्का स्याद् भसंज्ञाप्रतिषेधो विधीयत इति। ततश्च यस्येति (६।४।१४८) लोपेन भवितव्यमित्यत आह नाभिशब्दो यत्प्रत्ययमिति। शरीरावयवो यो नाभिशब्दस्तत्र कथं भवितव्यमित्याह यस्त्वित्यादि। ततः शरीरावयवाद् यति कृते परत्वाद् नाभ्यं तैलमिति। ननु च शरीरावयवलक्षणे यति सति नभभावः कस्मान्न भवतीत्याह गवादिषु यतेत्यादि। स हि गवादियता सह विहितः। तेन सन्नियोगशिष्टानामन्यतराभाव उभयोरप्यभाव इति नभभावो न भवति। शुन इत्यादि। श्वन्नित्येतस्य सम्प्रसारणे कृते ऽन्नन्तास्तीति न स्तद्धित इति (६।४।१४४) टिलोपेन भाव्यमेवेति। एवं तर्हि सम्प्रसारणसामर्थ्यान्न भवति। नैतदस्ति। यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते। यस् तु विधेर्निमित्तमेव नासौ बाध्यत इति तदवस्थो दोषः। दीर्घविधानसामर्थ्यादिति चेदेवमपि पक्षे स्याद्। एवं तर्ह्यन्यथा व्याख्यायते। इह चकारद्वयं पठ्यते सम्प्रसारणञ्च वा दीर्घत्वञ्चेति। द्वितीयश्चकारो भिन्नक्रमः सम्प्रसारणसमीपे द्रष्टव्यः। स च समुच्चयार्थो ऽन्यस्य

समुच्चेतव्यस्याभावात् तदेव समुच्चिनोति । तत्र सम्प्रसारणमेकेन क्रियते । द्वितीयेन तद्रूपस्यैवावस्थितिरिति । तत्सन्नियोगेनेत्यादि । तदित्यनेन दीर्घत्वं प्रत्यवमृश्यते । तेन दीर्घत्वेन यत एवान्तोदात्तत्वं भवति । अन्यथा यतोऽनाव (६।१।२१३) इत्याद्युदात्तत्वं स्यात् । जघसो नङ् चेति । जघःशब्दस्य नङादेशो भवति । चकाराद् यच्च । जघन्यः । पूर्ववत् प्रकृतिभावः ।

## ३ । कम्बलाच्च संज्ञायाम् ।

नन्वपरिमाणविस्ताचितकम्बल्येभ्य इति (४।१।२२) निपातनादेव कम्बल्य इति सिध्यति । कम्बल्यं हि परिमाणविशेषः । इतरथा हि कम्बल्यशब्दस्य तत्र ग्रहणमनर्थकं स्यात् । परिमाणविशेषस्य कम्बल्यशब्दो नामधेयम् । अयमपि प्रत्ययः संज्ञायां विधीयमान स्तत्रैव भवति । नान्यत्र । नह्यत्र कम्बल्यशब्दः संज्ञा । तस्मान्नार्थोऽनेन । नैतदस्ति । निपातनेन हि कम्बल्यशब्दः परिमाणे साधुरित्येतावत् प्रतीयते । नतु यदन्तोऽयमिति । ततश्चान्तस्वरितत्वं न स्यात् । तस्मात् स्वरितत्वपरिज्ञानार्थमिदं कर्त्तव्यम् । अनन्तरश्रुतस्य यतोऽनुकर्षणार्थश्चकारः । ननु स्वरितत्वादेव यद् भविष्यति । छोऽपि तर्हि स्यात् । ननु च च्छस्य सन्निधाने प्रकृतिमात्राच्छ उक्त इति नियमार्थमिदं स्यात् । तच्चानिष्टम् । यत् पुनर्नियतविषय इति तत्सम्बन्धे विध्यर्थता । विधिनियमयोश्च विधिरेव ज्यायान् । नैतदस्ति । छस्यापि सम्बन्धे विध्यर्थता सम्भवति । कथं संज्ञायामित्युच्यते ? संज्ञा चानुपात्तावयवार्थापि भवति । तत्रानवयवार्थानामप्राक्क्रीतीयत्वाद्धिताद्यर्थाभावे छप्रत्ययार्थमेतत् स्यात् । तस्माच् चकारो यत्प्रत्ययानुकर्षणार्थः कर्त्तव्यः । न कर्त्तव्यः । इष्टतोऽप्यधिकाराणां प्रवृत्तिनिवृत्ती भवत इति यत एवानुवृत्तिर्भविष्यति । नतु च्छस्य । एवं तर्हि चकार उगवादिभ्य इत्यनुकर्षणार्थः । किमर्थमिदम् ? सनङ्गादिभ्यः परत्वादञादयः प्राप्नुवन्ति । तद्बाधनार्थमिति । अथ गवादिष्वेव कम्बलाच्च संज्ञायामिति कस्मान्न पठति । तत्र पाठे न कश्चिद् गुरुलाघवकृतो विशेष इति यत्किञ्चिदेतदिति ।

## ४। विभाषा हविरपूपादिभ्यः।

हविःशब्दो गवादिषु पठ्यते। तेन तस्मान्नित्यं यता भवितव्यम्। अत्र हविर्विशेषाणां ग्रहणम्। न स्वरूपस्येति। उगवादिसूत्रे (५।१।२) स्वरूपपरिभाषाया उपस्थानात् नहि तत्र सोपतिष्ठमाना केनचिन्निवार्य्यते। तेन स्वरूपस्यैव ग्रहणम्। तत्र स्वरूपग्रहणे सतीह स्वरूपपरिभाषा नोपतिष्ठते। अन्यथा हि यद्यत्रापि स्वरूपग्रहणं स्यात् ततः स्वतन्त्र एकस्माच् शब्दान् नित्यश्च यतो विधिः स्यादनित्यश्चेतुभयमेकत्र नोपपद्यत इति न भवति विपर्य्ययः। अथवा हविःशब्दस्येह पृथगुपादानादर्थप्रधानत्वमवसीयते। अन्यथा ह्यपूपादिष्वेव पठेदिति। अन्नविकारेभ्यश्चेति। अन्नविकारा अन्नप्रकाराः। ते च प्रत्ययमुत्पादयन्ति विभाषा। उदन्या उदनीया इति। यद्येवमपूपादीनां किण्वपर्य्यन्तानामन्नविकारत्वादेव सिद्धत्वात् पाठोऽनर्थको जायते। यदा तर्हि केनचिदाकारसादृश्येनापूपादयोऽर्थान्तर उपचर्य्यन्ते तदर्थं एषां पाठः। किञ्चान्नविकारग्रहणेनापूपादिषु प्रत्ययमिच्छत इहापि स्याद् यवापूपा व्रीहितण्डुला इति। प्रतिपदपाठे तु ग्रहणवत्त्वात् तदन्तविधिः पर्य्युदस्तो भवति। ननु चासमासे निष्कादिभ्य (५।१।२०) इत्यसमासग्रहणाद् भवितव्यमेवात्र तदन्तविधिना। एतेनासमासग्रहणेन पूर्वत्र तदन्तविधिरस्तीतिएषोऽर्थः प्रतिपाद्यते। सत्यमेतत्। अपूपादिषु प्रतिपदपाठसामर्थ्यान्न भविष्यति।

## ५। तस्मै हितम्।

एतदेव ज्ञापकं हितयोगे चतुर्थ्यस्तीति। तेन यदुक्तं हितयोगे चतुर्थी (२।३।१३, वा) वक्तव्येत्येतदुपपन्नं भवति।

## ६। शरीरावयवाद् यत्।

शीर्य्यत इति शरीरम्। तेन घटादेरपि ग्रहणम् भविष्यतीत्यत आह शरीरं प्राणिकाय इति। एतेन रूढिरियमिति दर्शयति। गवादावेते शरीरावयववाचिनः। तत्र तु याः प्रकृतयस्ताभ्योऽनेनापि पूर्वेणापि वा यति विशेषो नास्त्येव। यत्र विशेषो नाभि नभश्चेति स विशेषस्तत्रैव वेदितव्य एव।

## ७। खलयवमाषतिलवृषब्रह्मणश्च ।

खलादीनां वृषपर्य्यन्तानां यस्येति (६।४।१४८) लोपः। ब्रह्मण्यमिति। न संयोगाद् वमन्तादिति (६।४।१३७) प्रतिषेधादल्लोपोऽन (६।४।१३४) इत्यकारलोपो न भवति। न स्तद्धित इति (६।४।१४४) टिलोपोऽपि न भवति। ये चाभावकर्म्मणोरिति (६।४।१६८) प्रकृतिभावात्। वृषशब्दोऽयमत्राकारान्तो गृह्यते। नतु ब्राह्मणशब्दोऽकारान्त इति। ननु चाशङ्का वृषशब्दे युक्ता नलोपे सति किमयमकारान्त आहोस्विद् नकारान्त इति। ब्रह्मन्‌शब्दस्तु नकारान्त एवेति तद्विषये भ्रान्तिरेव नोपपद्यते। तत् कथं ब्रह्मन्‌शब्दो विकल्प्यते? सत्यम्। किन्तु वृषन्‌शब्दाच्च यतो निवृत्तिप्रसङ्गाद् ब्रह्मन्‌शब्दादपि यच्च प्रत्ययो निवर्त्तत इति भावः। अतएवाह च्छप्रत्ययोऽपीत्यादि। यत्प्रत्ययापेक्षयापिरयम्। न केवलं यत्प्रत्ययो न भवत्यपितु च्छप्रत्ययोऽपीति। ब्राह्मणशब्दाच्छप्रत्ययाभावो योज्यः। ननु चाभ्यामिहानुपादानाद् यत्प्रत्ययो न भवति। तस्मै हितमिति (५।१।५) च्छप्रत्ययस्तु कस्मान्न भवतीत्याह अनभिधानादिति। नहीह वृषीयं ब्राह्मणीयमित्युक्ते विवक्षितोऽर्थः प्रतीयते। यतोऽर्थप्रतिपादनं प्रति नियता एव शब्दशक्तयो भवन्तीति क्वचित् क्वचित् प्रत्ययान्तेनार्थस्याभिधानं क्वचिद्वाक्येनेति। अतो वाक्यमेवावतिष्ठते। वृषो हितम् ब्राह्मणेभ्यो हितमिति। वाक्यसमधिगम्यस्यार्थस्य तद्धितेनानभिधानादिति यावत्।

## ८। अजाविभ्यां थ्यन्।

अजशब्दोऽयमिह पुंलिङ्ग उपात्तः। अविशब्दस्य व्यन्तशब्दस्यापूर्वनिपातात्। आबन्तस्य ग्रहणे ह्यविशब्दस्य पूर्वनिपातः स्यात्। अदन्तस्य ग्रहणे द्वन्द्वे घीत्येतस्य (२।२।७२) बाधितत्वादजाद्यदन्तमि—(२।२।३३) त्यजशब्दस्य पूर्वनिपातो युज्यते। तस्मात् पुंलिङ्गस्य ग्रहणम्। तथाच प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति स्त्रीलिङ्गादपि प्रत्ययो भवत्येव। अजाभ्यो हितमजथ्यम्। तसिलादिष्वा कृत्वसुच (६।३।३५) इति

पुंवद्भावः । परिसंख्यायन्ते हि तत्र तसिलादयः । तेषाञ्च मध्ये परिसंख्याती थ्यंस्थालावपि । स्त्रीप्रत्ययान्तस्य ग्रहणे शब्दान्तरत्वादकारान्तात् पुंलिङ्गान्न स्यात् ।

## ८ । आत्मन्विश्वजनभोगोत्तरपदात् खः ।

अथात्मन्नित्यत्र नलोपः कस्मान्न कृतो यावता द्वन्द्वेनायं निर्देशः क्रियते ? तत्र नलोपः प्रातिपदिकान्तस्येति ( ८।२।७ ) नलोपः प्राप्नोतीत्यत आह आत्मेत्यादि । आत्मन्नित्येव भवत्येषा प्रकृतिरिति ज्ञापनार्थाय नलोपो न कृतः । कः पुनरेवं सति विशेष इत्याह तेनेत्यादि । गतार्थम् । यद्येवं विश्वजनशब्देन ह्युत्तरपदस्य सम्बन्धः प्राप्नोति । एवं मन्यते । आत्मन्निति नलोपाभावेन प्रत्येकं वाक्यपरिसमाप्तेर्व्यभिचारस्य दर्शितत्वात् ततः प्रत्यासत्तेर्भोगशब्देनैव सम्बध्यते । नतु विश्वजनशब्देनेति नास्ति दोषः । कर्मधारयादेवेष्यत इति । आचार्यपारम्पर्योपदेशात् । विभाषाग्रहणानुवृत्ते-र्व्यवस्थितविभाषाविज्ञानाद्वेदं वेदितव्यम् । विश्वस्य जनो विश्वजनः । विश्वो जनोऽस्येति विश्वजन इति समासेन भवितव्यम् । यथा खो न भवति तथा च्छोऽपि न भवतीत्याशङ्क्याह बहुव्रीहे स्त्वित्यादि । उपसंख्यानमिति । प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम् । इह हि भोगसमासादिति वक्तव्य-मुत्तरपदग्रहणमधिकविधानार्थम् । न चैवं सति बहुपूर्वादीषदसमाप्तो भोगो बहुभोग इत्यस्मात् खः स्यादित्याशङ्कनीयम् । बहुच्प्रत्ययस्य समासा-भावात् । ततोऽत्र च्छेनैव भवितव्यम् बहुभोगीय इति । तेन पञ्चजनादपि भविष्यति । संज्ञाशब्दश्चायम् । दिक्संख्ये संज्ञायामिति (२।१।५०) समासः । तथा सर्वजनादपि वेदितव्यः । तत्पुरुषादेवेति विशेषानभिधानेऽपि महा-जनादिति निर्देशादेव समानाधिकरणादेव विज्ञायते । आन्महतः समानाधि-करणजातीययोरिति (६।३।४६) समानाधिकरणोत्तरपदे महत आत्विधानात् । भोगशब्दोऽयं भावसाधनो भुक्तिर्भोग इति । कर्मसाधनो वा भुज्यत इति भोग इति । अयमव्युत्पन्नः शरीरवाची । तस्येह ग्रहणमित्याह भोगशब्द इत्यादि । भोगशब्दः शरीरमेव प्रतिपादयतीत्यर्थः । यत्र वर्त्तमानोऽयं साक्षात्-

सम्बन्धमाह तत्रैव खप्रत्ययमासादयति । वर्त्तते च क्रियायां द्रव्ये च । तथाहि यद्यपि भुजिक्रियया द्रव्येण च सम्बन्धोऽस्ति तथापि शरीरेण मुख्यः सम्बन्ध इति ततो भवति प्रत्ययः । यथा राजाचार्य्याभ्यां वाक्यमेव भवति तथेहापि भवितव्यमिति य श्चोदयेत् तं प्रत्याह केवलेभ्य इति । मात्रीयम् पित्रीयमिति । दिङ्मात्रमेतत् । अन्येषामपि दुहित्रीयमित्यादीनां दर्शनात् । आचार्य्यादणत्वमिति । क्षुभ्नादिपाठात् । केवलाभ्यां वाक्यमेव भवतीति । छप्रत्ययो न भवति । अनभिधानादेव ।

## १० । सर्वपुरुषाभ्यां णढञौ ।

सर्व्वास्मस्य वावचनमिति । अभिधानेऽभिधेयोपचाराद् वेति विकल्पमाह । इहापि विभाषाग्रहणानुवृत्तेरेव वेदितव्यम् । न च सर्वपुरुषाभ्यां विकल्प आशङ्का । व्यवस्थितविभाषात्वात् । पुरुषाद्वधेति । तत्र वधे तस्येदमित्यणोऽपवादः (४।३।१२०) । विकारे प्राणिरजतादिभ्यो (४।३।१५४) ऽञः । समूहेऽपि तस्य समूह (४।२।३७) इत्यणः । तेन कृते ग्रन्थ इत्यण (४।३।११६) एव ।

## ११ । माणवचरकाभ्यां खञ् ।

उभयस्मिन् ञित्करणं स्वरार्थम् । चरके वृद्ध्यर्थञ्च । माणवे तु वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकार (६।३।३९) इति पुंवद्भावप्रतिषेधार्थम् । माणवीना भार्य्या यस्य स माणवीनाभार्य्य इति ।

## १२ । तदर्थं विकृतेः प्रकृतौ ।

तस्मायिदं तदर्थम् । चतुर्थी तदर्थेत्यादिना (२।१।३६) समासः । एतदेव वचनं ज्ञापकमथोत्तरपदे समासे समुदायार्थस्य लिङ्गं भवति न च परवल्लिङ्गतेति । एतेन यदुक्तमर्थेन नित्यसमासः सर्वलिङ्गता च वक्तव्येति (२।१।३६,वा) सा सिद्धा भवति। प्रकृतिरुपादानकारणमिति। समानजातीयमभिन्नसन्तानवृत्तिकारणमुपादानकारणमित्युच्यते । उपादीयत इत्युपादानम् । बहुलवचनात् कर्मणि ल्युट् । तस्य कारणमिति षष्ठीसमासः । तस्यैवेत्यादि।

तस्यैवोपादानकारणस्योत्तरभाव्यवस्थाविशेषो विकृतिः। विकृतिवाचिन इत्यादि। ननु च समर्थानां प्रथमाद्वेति (४।१।८२) वचनात् तदर्थमिति प्रथमं निर्दिष्टत्वात् प्रकृतेश्च तदर्थत्वात् तद्वाचिन एव प्रत्ययः प्राप्नोति। नैष दोषः। प्रथमस्य चाप्रथमस्य च कार्य्यप्राप्तौ प्रथमादेव यथा स्यादित्येवमर्थम् प्रथमग्रहणं नियमार्थं कृतम्। इह तु प्रथमात् प्राप्तिरेव नास्ति। प्रकृताविति। सप्तम्या प्रकृतेः प्रत्ययार्थत्वेन सम्पादितत्वात्। विकृतेरिति। पञ्चम्या विकृतेः प्रकृतित्वेन। तस्मान्नायमस्य विषय इति विकृतिवाचिन एव प्रत्ययो भवति। विकृत्यर्थायामिति। अनेन तदर्थमित्यत्र सुब्व्यत्ययेन सप्तम्याः स्थाने प्रथमा लिङ्गव्यत्ययेन च स्त्रीलिङ्गस्य स्थाने नपुंसकलिङ्गं कृतमिति दर्शयति। ननु च च्छन्दसि व्यत्यय उक्तः। नेदं छन्दः। तत् कुतो व्यत्ययः? छन्दोवत् सूत्राणि भवन्तीत्यदोषः। तदर्थग्रहणेनेत्यादि। इह प्रकृतिविकारवाक्ये क्वचिद् योग्यतामात्रं विवक्ष्यते मूत्राय कल्पते यवागूः पादशोफाय नड्वलोदकमिति। क्वचित् प्रकृत्यन्तरनिवृत्तिः यवानां धाना धानानां सक्तव इति। क्वचिद् विकारस्य प्रकृतिसम्बन्धो धानानां यवाः सक्तूनां धाना इति। क्वचित् प्रकृतेरनन्यार्थता यथा काष्ठाना-मङ्गाराः। प्रकृतेरनन्यार्थताख्यानार्थेन यदिष्टं सम्पद्यते तद्दर्शयति प्रत्ययार्थस्य चेत्यादि। इह विकृत्यर्थायां प्रकृतौ प्रत्यय उच्यते। तस्य तस्मात् तादर्थ्यं चतुर्थ्येव शक्यते प्रतिबोधयितुम्। अतः प्रत्ययार्थस्य तदर्थत्वेन सामर्थ्या-च्चतुर्थी समर्थविभक्तिर्लभ्यते। केचित्त्वित्यादि। तेषां वचनबलादेव चतुर्थी समर्थविभक्तिः। तदर्थमिति किमिति षष्ठी प्रत्युदाह्रियते? षष्ठ्यपि तादर्थ्यं ब्रूते यथा गुरोरिदं गुर्व्वर्थमिति। तथा सति षष्ठ्यपि समर्थ-विभक्तिर्भवति। अङ्गाराणां काष्ठानीति प्रत्युदाहरणं तु प्रकृत्यन्तरनिवृत्त्या। तया यवादेः समर्थ्यते। अङ्गारेभ्यः काष्ठानि प्राकारेभ्य इष्टका इति। इदमसति तदर्थग्रहणे न ज्ञायते किमर्थं विवक्षितमिति। तस्मादनन्यार्थता प्रकृतेर्विवक्षितेति। एतत् प्रयोजनं प्रतिपादयितुं तदर्थग्रहणं कृतमिति भावः। तथाच प्रकृत्यन्तरनिवृत्त्या प्रकृतिरेव सम्बध्यमाना व्यतिरिच्यत इति यवादेरेव व्यतिरेकविभक्तिर्भवति। ये तु चतुर्थीमनुवर्त्तयन्ति तेषां तदर्थग्रहणं

चतुर्थीविशेषणं विज्ञायते तादर्थ्ये चतुर्थीति । तत्र मूत्राय कल्पते यवागूरिति प्रत्युदाहरणम् । तेषां चतुर्थ्यनुवृत्तिरपार्थिका । तदर्थग्रहणेनैव गतार्थत्वात् । तथाच या तादर्थ्यसमानार्था षष्ठी सा चासत्यां विशिष्यते । या काचिदिति । न तूपादानकारणभूतापीत्यर्थः । स्यादेतत् । कूपः प्रकृतिरुदकस्य न भवत्येव । ततस्तन्निवृत्त्यर्थं विकृतिग्रहणं न कर्त्तव्य मित्यत आह भवति चेत्यादि । चशब्दोऽवधारणे । ननु चान्येभ्य एव स्वकारणेभ्य उदकमुत्पाद्यते । तत् कथं कूपस्तस्य प्रकृतिरित्याह तच्चोत्पादनादिति । यथैव हि प्रयाजादीनां धर्म्माणामुत्पत्त्याधारभूतौ दर्शपौर्णमासौ प्रकृती भवत एवमुदकस्योत्पत्त्याधारभूतत्वात् कूपः प्रकृतिर्भवति । यद्येव मुदकमपि तस्य विकृतिरित्याह नन्वित्यादि । अत्रैवोपपत्तिमाह अत्यन्तभेदादिति । विकारो हि प्रकृतेरुत्तरमवस्थान्तरमिति ततो नात्यन्तभिन्नो भवति यथा काष्ठानामङ्गाराः । ते हि पार्थिवेनाभिन्नसन्तानवर्त्तित्वेन काष्ठेभ्यो नात्यन्तं भिद्यन्ते । उदकन्तु भिन्नस्वभावत्वाद् भिन्नसन्तानवर्त्तित्वाच्च कूपादत्यन्तं भिन्नम् । अतो न तस्योत्तरमवस्थान्तरमिति न भवति विकृतिः । नतु कोशी तस्य प्रकृतिरिति । अतत्कारणत्वात् । अनुत्पत्त्याधारभूतत्वाच्च । ननु च प्रकृतिविकृतिरिति सम्बन्धिशब्दावेतौ । सम्बन्धिशब्दश्च नियत एव प्रतियोगिनि प्रतीतिमुपजनयति यथा हि मातरि वर्त्तितव्यमित्युक्ते न चोच्यते स्वस्यां मातरीति । या यस्य माता तस्यामिति प्रतीयते । एवं सति कूपलक्षणायां प्रकृतौ विकृत्यर्थायां प्रत्ययार्थत्वेन विवक्षितायामसत्यपि विकृतिग्रहणे तस्यैव कूपस्य या या विकृतिस्ततएव प्रत्ययो विज्ञायते । तथा च विकारवाचिनोऽस्मिशब्दात् प्रत्यये विधित्सिते यस्यासौ प्रकृतिस्तस्यामेव तदर्थायां प्रकृतावसत्यपि प्रकृतिग्रहणे प्रत्ययो विज्ञायते । तस्मादन्यतरोपादानेऽपि सर्वमिष्टं सम्पद्यते । न किञ्चिदनिष्टमापद्यत इत्याह तदर्थं द्वयोरपीत्यादि । अनेनैवं मन्यते । स्यादेतदेव यदासौ प्रकृतिविकृतिशब्दौ नियोगतः सम्बन्धिशब्दौ । नचेमौ नियोगतः सम्बन्धिशब्दौ । तथाहि विपूर्वं स्तावदयं करोतिरस्त्येवापकारे देवदत्तोऽस्थित्यै विकरोतीति । अस्ति चेष्टानानात्वे विकुर्वते च्छात्रा इति । अस्त्यनौचित्ये

विकृतिरेषा स्त्रीणां यत् स्वातन्त्र्यमिति। अस्ति कार्य्ये तन्तूनां पटो विकार इति। तथा प्रपूर्वोऽप्ययमस्ति कारणे तन्तवः प्रकृतिः पटस्येति। अस्ति चौदासीन्ये सत्त्वादीनां प्रकृतिरिति। तान्युच्यन्ते यान्यनारम्भकाणि। अस्ति दोषापगमे प्रकृतिस्थोऽयमिति। अस्ति स्वभावे प्रकृत्याभिरूप इति। अस्ति धर्माणामुत्पत्त्याधारे यथा दर्शपौर्णमासौ धर्माणां प्रकृतिरिति। तदेवमर्थबहुत्वादनयोः सम्बन्धित्व मनैकान्तिकमिति। अतोऽन्यतरग्रहणे न सिध्यति। न चान्यतरेण शक्यते वक्तुं विवक्षितः प्रकृतिविकारभावः। अयमुपादानकारणस्य तदुत्तरावस्थाभूतस्य च यो विकारः स इह वेदितव्यः। यदि तु विपूर्वः करोतिरनेकार्थस्तस्य विकार (४।३।१३४) इत्यत्रापि सन्देहापगमाय तर्हि प्रयतितव्यम्। सत्यमेतत्। शैलीयमाचार्य्यस्य यस्य क्वचिदभिधानमाश्रयति क्वचिन्न्यायं क्वचिद्वचनमिति तत् सर्वमुच्यते। तेन सर्वं प्रत्याख्यते।

## १३। छदिरुपधिवलेर्ढञ्।

यदा छदिश्चर्मविकारो विवक्ष्यते तदापि ढञेवेष्यते। छादिषेयञ्चर्मेति। ननु च परत्वाच्चर्मणोऽञित्यञ् (५।१।१५)प्राप्नोति। नैष दोषः। चर्मणोऽञित्यत्र (५।१।१५) छदिषो ढञनुवर्त्तिष्यते। यथा च्छदिःशब्दाद् वलिशब्दाच्चतुर्थीसमर्थात् प्रकृतिविकारभावे प्रत्यय उपजायते तथोपधिशब्दादपि भवितव्यमित्याशङ्क्याह उपधिशब्दादित्यादि। अत्र युक्तिमाह उपधीयत इत्यादि। तेन कर्मण्युपसर्गे घोः किरिति (३।३९२) दर्शयति। तेन च द्रव्यस्यानासादितोत्तरावस्थस्याभिधानम्। यद्युपधिशब्दाद् विकृतिवाचिनः स्यादेवमर्थान्तरे स्यात्। नचासौ प्रकृतिविशेषे भवति। नतूपधिशब्दाद् वाच्यस्य प्रत्ययान्तरस्य प्रकृतिविकारभावोऽस्ति। अभेदात्। तथाहि यदेव रथाङ्गमुपधिशब्देनोच्यते तदेवानासादितोत्तरावस्थमौपधेयशब्देनापि। स्यादेतत्। यदा भावसाधन उपधिशब्द उपधानमुपधिरिति तदा नास्ति भेदः क्रियाभिधानात्। यदाप्युपधिशब्देन क्रियाद्रव्यस्य विकार उच्यते तदौपधेयशब्देन च तत्प्रकृति द्रव्यम्। अतः प्रकृतिविशेषे परप्रत्ययो भविष्यतीति। एतच्चायुक्तम्। नहि

क्रियाद्रव्यस्य विकारो युज्यते। अत्यन्तभेदात्। तस्मात् स्वार्थ एवोपधिशब्दात् प्रत्ययो विज्ञायते।

## १४। ऋषभोपानहो र्ञ्यः।

चर्मण्यपीत्यादि। ञ्यस्यावकाश औपानह्यो मुञ्जः। अञोऽवकाशः वार्ध्रम्। वारत्रम्। चर्मणि प्रकृतित्वेन विवक्षिते सत्युभयप्राप्तौ पूर्वविप्रतिषेधेन ञ्यएव भवति। औपानह्यं चर्मेति।

## १५। चर्मणोऽञ्।

चर्मण इति परपञ्चमी वा स्यात् षष्ठी वा? यदि पञ्चमी चर्मण एव प्रत्ययो भवेत्। न चर्मविकारवाचिभ्यः। एतच्च कुतो लभ्यते? अनभिधानात्। तथाहि प्रकृतिविशेष एव प्रत्यय इष्यते। नच चर्मशब्दादुत्पन्ने प्रत्यये विवक्षितार्थस्याभिधानमस्ति। तस्मान्नेयं पञ्चमी। अपि तु षष्ठी।

## १६। तदस्य तदस्मिन् स्यादिति।

द्वितीयाशङ्कामपनिनीषुराह तदित्यादि। अस्तेरकर्मकत्वादित्यभिप्रायः। अवयवार्थपूर्वत्वादवयव्यर्थस्येत्याह अस्येत्यादि। करोतीति करणः। कर्त्तरि बहुलवचनाल्ल्युट्। इति आसौ करणश्चेति कर्मधारयः। सम्भावने ऽलमिति चेत् सिद्धाप्रयोग (३।३।१५४) इति। ननुच प्राकारीया इष्टकाः प्रासादीयं दार्विति च पूर्वेणैव सिद्धम्। तथाहि यासामिष्टकानां यस्य च दारुणो बहुत्वेन प्राकारः प्रासादश्च सम्भाव्यते तासामिष्टकानां तस्य च दारुणो यथासंख्येन प्राकारप्रासादौ विकारौ भवतः। तादर्थ्याच्चेष्टकानां दारुणश्चा-स्त्वोविल्यत आह प्रकृतिविकार इत्यादि। गतार्थम्। द्वि स्तदग्रहणमित्यादि। इत्येष न्यायोऽनेन प्रदर्श्यते। तदस्यास्त्यस्मिन्निति मतुबित्यादौ (५।२।९४) नैकः प्रत्ययार्थः। तत्र तत्समुदायेन समर्थविभक्तेः सम्बन्धो विज्ञायते। ततश्च यत्र द्वाभ्यां प्रत्ययार्थाभ्यां समर्थविभक्तेः सम्बन्धः सम्भवति शाखावान् वृक्ष इत्यादौ तत्रैव तत् स्यात्। यत्र त्वन्यतरेणैव सम्बन्धो गोमान् देवदत्तो वृक्षवान् पर्व्वत इत्यादौ तत्र न स्यात्। अस्मिं स्तु न्याये प्रदर्शिते सर्वत्र भवति।

१७। परिखाया ढञ्।

परिखाशब्देन चात्र खेयमुच्यते (C)।

१८। प्राग्वतेष्ठञ्।

प्राग्वचनं शीर्षच्छेदाद् यच्च (५।१।६५)। दण्डादिभ्यो य (५।१।६६) इत्येवमादिनाधिकारवता ठञि विच्छिन्ने पारायणतुरायणचान्द्रायणं (५।१।७२) वर्त्तयतीत्येवमादावर्थनिर्देशे ठञेव यथा स्यादित्येवमर्थम्।

१९। आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्।

तदर्हतीत्येको (५।१।६३) विधिः। तदर्हमिति (५।१।११७) द्वितीयः। तत् कस्येहावधित्वेनोपादानमित्याह तदर्हतीत्यादि। इतरस्य ग्रहणं कस्मान्न भवति? एवं मन्यते। यदि तस्य ग्रहणमभिप्रेतं स्यात् प्राग्वतेरित्यनेनैव (५।१।१८) सम्बन्धं कुर्यात्। नार्हादित्यनेन। ननुच वत्यर्थेऽपि ठग्विधिर्यथा स्यादित्येवमर्थमार्हादिति वचनं स्यात्। अस्ति तस्मिंश्चञ्च ठकः प्राग्वतेर्व्यापार इति विज्ञायते। नैतदस्ति। यद्यपि वत्यर्थेऽपि ठगधिक्रियते तथापि तत्र तेन न भवितव्यम्। प्रतिपदविहितेन वतिना बाधितत्वात्। अनभिधानाद्वा। तस्मादर्हतिशब्दैकदेशस्यैवार्हशब्दस्यावधित्वं न्याय्यम्। गोपुच्छादीन् वर्जयित्वेति। कथं पुनरेतज्ज्ञायते ऽगोपुच्छादिति प्रतिषेधोऽयमिति? अन्यस्यार्थस्येहासम्भवात्। ननु चायमर्थः स्यादगोपुच्छशब्दात् संख्यायाः परिमाणाच्चेति। अशक्योऽयमर्थ इह सम्भावयितुम्। यदि ह्ययमर्थः स्यान् निष्कादिभ्यः परिमाणादेव सिद्धत्वात् पुनर्वचन मनर्थकं स्यात्। ननुच नियमार्थं पुनर्वचनं स्यात्। असमास एव यथा स्यादिति। नैतदस्ति। नहि विधौ सति नियमार्थता युक्ता। नियमे हि सत्यवक्तव्यस्य त्यागाच्छब्दबाधनम्। किञ्च सिद्धञ्च पुनर्वचन मुपादीयत इति। उक्तानुवादे दोषश्च। विधौ तु न शब्दबाधनम्। नानुवाददोष इति। विधिनियमसम्भव-

(C) One MS. gives कीकोच्यते। But what is कोकन् वा कोका? The word कीक is of course पुंलिङ्ग। कोकी वृकी चक्रवाके खर्जूरीद्रुमभेकयोरिति हेमचन्द्रः।

विचारे विधिनैव युक्तं भवितुम् । तस्मादन्यस्य हार्थस्यासम्भवादगोपुच्छादिति प्रतिषेधोऽयमिति विज्ञायते । ज्ञापका प्रकृतिरत्र न विवच्यते यदयं लोक-सर्व्वलोकाट् ठञिति (५।१।४४) ठको निवृत्त्यर्थं ठञं करोति । अभिविधावय-माकार इति । मर्य्यादायां हि वर्त्तमानस्याकारस्यात्र ग्रहणमनर्थकं स्यात् । प्राग्ग्रहणानुवृत्तैरव सिद्धत्वात् । अभिविधिवृत्तेराकारस्य ग्रहणे सति यदिष्टं संपद्यते तद्दर्शयितु माह अर्हत्यर्थेऽपि ठग् भवतीति । भेदगणनं संख्येति । भिद्यन्त इति भेदाः । भिन्नाः पदार्थाः । ते गण्यन्ते संख्यायन्ते परिच्छिद्यन्ते येन तद् भेदगणन मेकत्वादि । संख्याभेदे हि सति पदार्थानुसङ्कलन-मेकत्वादिभिः क्रियते । एकत्वसंख्यापि बहुषु सन्निवेशितेषु भेदमेक मसहायमाह । गुरुत्वमानमुन्मान मिति । सुवर्णादेर्वस्तुनो गुरुत्वमुत्क्षिप्यते येन तदुन्मानं तुलादि । आयाममानं प्रमाणमिति । तिर्य्यगभिमुखस्य वस्तुनो येनायामपरिच्छेदःक्रियते तत् प्रमाणं वितस्त्यादि । आरोहपरिणाहमानं परिमाणमिति । आरोहतः परिणाहतश्च मीयते व्रीह्याद्यर्थो येन तत्परि-माणम् । आरोह उच्छ्रायः । परिणाहो विस्तारः । संख्यापरिमाणयोर्भेदे दृष्टे यदुन्मानादीनां विशेषप्रदर्शनं तत्प्रसङ्गेन तद्विषयस्याज्ञानस्यापनयनार्थम् । संग्रहेण किलशब्द एवमादिमतमाचार्य्याणामित्यर्थं सूचयति । सर्वत इति । आरोहतः परिणाहतश्चेत्यर्थः । संख्या वाह्या तु सर्वत इति । उन्मानात् परिमाणात् प्रमाणाच्च संख्या वाह्या । तत्रानन्तर्भावात् ।

## २० । असमासे निष्कादिभ्यः ।

ठञोऽपवाद इति । येन नाप्राप्तिन्यायेन । निष्कादिभ्यो द्रोणपर्य्यन्तेभ्यः परिमाणशब्दत्वात् षष्टिशब्दस्य संख्याशब्दत्वाट् ठकि पर्य्युदस्ते ठञेव प्राप्नोति । अतस्तस्यैवायमपवादः । तदन्ताप्रतिषेधस्येति । तदन्तविधेरप्रतिषेधस्येत्यर्थः । यदि तर्हि तदन्तात् प्रत्ययो विज्ञायत एवं तर्हि व्यपदेशिवद्भावोऽप्रातिपदि-केनेति केवलेभ्यः प्रत्ययो नोपपद्यते । नैष दोषः । असमासग्रहणेन हि ग्रहणवत्परिभाषाया निवृत्तिराख्याता । निवृत्तायाञ्च येन विधिस्तदन्त-स्येति तदन्ताद्भवति । तत्र च स्वस्य च रूपस्येति प्रकृतत्वात् केवलादपि

भवति। यत्तु मन्यते ऽपूर्वोपादानसामर्थ्यात् केवलादिति लाघवार्थं केवलानां पाठः स्यादिति यत्किञ्चिदेतत्। इत उत्तरञ्चेत्यादि। कथं पुनरिष्यमाणोऽपि तदन्तविधिर्लभ्यते ? यावता ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नेति प्रतिषिध्यते। अस्याः परिभाषाया अनित्यत्वात्। अनित्यत्वन्तु तस्या गर्गादिषु वाजास इति समासे प्रत्ययप्रतिषेधाद् गम्यते। नित्यत्वे हि वाजशब्दादुत्पद्यमानस्य प्रत्ययस्य समासे प्राप्तिरेव नास्तीति प्रतिषेधं कुर्य्यात्। द्विशूर्पमिति। द्वाभ्यां शूर्पाभ्यां क्रीतमिति तद्धितार्थे द्विगुं कृत्वा। न तावदेषा लुगन्ता प्रकृतिरिति संख्यापूर्वपदादपि शूर्पादञन्यतरस्यामित्यञेव (५।१।२६) क्रियते। तस्याध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायामिति (५।१।२८) लुक्। द्विशौर्पिकमिति। परिमाणान्तस्यासंज्ञाशाणयोरित्युत्तरपदवृद्धिः (७।३।१७)। यदुक्तं संख्यापूर्वपदानां तदन्तविधिरितीष्यत इति यच्चोक्तं लुगन्तायास्तु प्रकृतेर्नेष्यत इति तदुभयमाप्तागमेन स्थिरीकर्त्तुमाह तथाचोक्तमित्यादि (५।१।२०,वा)।

## २१। शताच्च ठन्यतावशते।

कनोऽपवाद इति। उत्तरसूत्रेण प्राप्तस्य। शतिकमिति। तदस्य परिमाणमिति (५।१।५७) वर्त्तमाने संख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति (५।१।५८) सङ्घे प्रत्ययार्थे विवक्षित उत्तरसूत्रेण कन्नेव भवति। प्रत्ययार्थोऽत्र सङ्घ इति। शतमध्यायानां परिमाणं यस्य निदानाख्यग्रन्थस्य स चेह प्रत्ययार्थः। स च शतसंख्याव्यवच्छिन्नाध्यायसमुदायात्मक इति सङ्घ एव प्रत्ययार्थो भवति। शतमेव वस्तुत इति। अध्यायशतस्यानन्यार्थत्वात् ततश्च प्रकृत्यर्थान् न भिद्यते। तदेव ह्यध्यायानां शतं प्रकृत्याभिधीयते। प्रत्ययान्तेनापि तदेवेति नेह प्रकृत्यर्थात् प्रत्ययार्थभेदः। तदेतेन यत्र चाव्यतिरिक्तः प्रकृत्यर्थात् प्रत्ययार्थस्तत्र प्रतिषेधो भविष्यति। नच व्यतिरिक्त इत्येतदाख्यातम्। ननु च सङ्घे चानौत्तराधर्य्ये (३।३।४२) संख्यायाः संज्ञासङ्घसूत्राध्ययनेष्वित्यत्र (५।१।५८) च प्राणिसमूहे सङ्घशब्दो गृह्यते। तत्र कथं ग्रन्थविषयो गृह्यते। उपचारेणेत्यदोषः। यदि वा संख्यासूत्रे (५।१।५८) संज्ञाशब्द-

साहचर्य्याद् विशिष्टः संघो गृह्यते संघे चानौत्तराधर्य्ये (३।३।४२) इत्यत्रापि च्छन्दोनाम्नि चेत्यतः (३।३।३४) नामग्रहणानुवृत्तेः प्राणिसंघो गृह्यते । इह तु यत्नाभावाद् ग्रन्थस्यापि ग्रहणमित्यविशेषः । इह त्वित्यादि । ननु च शतेऽभिधेये प्रतिषेधेन भवितव्यम् । इह च शत्यं शाटकशतं शतिकं शाटकशतमित्युक्ते शतं प्रतीयत एव । तत् किमिति प्रतिषेधो न भवतीतत्राह वाक्येनेत्यादि । शत्यशतिकशब्दौ हि सामान्यशब्दौ । सामान्यशब्दाश्च न प्रकरणादिकमन्तरेण विशेषे वर्त्तन्ते । तेन यावच्छाटकशतमित्येतत्पदान्तरं न प्रयुज्यते तावत् प्रत्ययार्थस्य शतत्वं नावसीयते । तस्मात् पदान्तरसन्निधौ गम्यमानत्वात् पदान्तरार्थो भवति । न प्रत्ययार्थः । न श्रुत्येति । गम्यत इति सम्बन्धः । यत्र प्रत्ययान्तेन पदान्तरनिरपेक्षेण प्रत्ययार्थस्य शतताख्यायते तत्र श्रुत्या प्रत्ययान्तश्रवणमात्रेणैव गम्यते यथा प्रत्युदाहरणे शतं परिमाणमस्य शतकमित्युक्ते गम्यत एवैतत् प्रत्ययार्थोऽपि शतमेवेति । इह तु वाक्याच्छतत्वं प्रतीयते । न च पदसंस्कारकाले वाक्यार्थस्याङ्गभावोऽस्ति । तदा तस्योपसर्जनत्वात् प्रकृत्यर्थादतिरिक्ते प्रत्ययार्थे प्रतिषेधो भवति । ननु व्यतिरिक्तवाक्यगम्य इति । तदाप्तवचनेन दृढयितुमाह तथाचोक्तमित्यादि । शतप्रतिषेधे कर्त्तव्ये प्रकृत्यर्थादन्यस्य प्रत्ययार्थस्य शतत्वेऽप्रतिषेध इतेऽतदुक्तं भवति । तत्रान्यत् प्रकृत्यर्थः शतमन्यत् प्रत्ययार्थः शतम् । तत्र विधिरेव भवति । न प्रतिषेध इति । केन पुनः समासे प्राप्नोति ? यतस्तत्प्रतिषेधार्थो ऽसमासानुकर्षणार्थश्चकारः क्रियत इत्याह प्राग्वते रित्यादि ।

## २२ । संख्याया अतिशदन्तायाः कन् ।

पञ्चकः पट इति । लौकिक्याः संख्याया उदाहरणम् । बहुक इत्यादि । परिभाषितायाः । चात्वारिंशत्क इति । इसुसुक्तान्तात् कः (७।३।५३) । अर्थवतस्तिशब्दस्य ग्रहणादिति । अर्थवद्ग्रहणपरिभाषया । डतेः पर्य्युदासो न भवतीति । शब्दापेक्षयावयवषष्ठीति । प्रत्ययस्य य एकदेशस्तिशब्दस्तस्य पर्य्युदासो न भवति । न ह्ययमर्थवान् । कतिक इति । किं परिमाणमेषामिति किमः संख्यापरिमाणे डति चेति (५।२।४१) डतिः । टेरिति (६।४।१५५)

टिलोपः। कतिभिः क्रीतमिति विगृह्य कन्। यद्यर्थवतस्तिशब्दस्य ग्रहणं नवतेर्यस्तिशब्दस्तस्यापि पर्य्युदासो न प्राप्नोति। नवतिशब्द एव हि समुदायः संख्याविशेषेणार्थवान्। न तदेकदेशस्तिशब्दः। नैष दोषः। नवतिशब्दे यो नवशब्दः सोऽनेकार्थः। तथाच संख्याविशेषावगतिमतो नवशब्दात् परो यस्तिशब्दस्तत एव विज्ञायते। तद्भावे भावात्। अशीतिशब्दस्य तर्हि तिशब्दस्य पर्य्युदासो न प्राप्नोति नासावर्थवान्। नापि ततः पूर्व्वो योऽशीशब्दस्तस्य कश्चिदर्थोऽस्ति। समुदाय एव तु संख्याविशेषेणार्थवान्। नैतदस्ति। यद्यप्यशीतिशब्दस्य न कश्चनार्थः प्रकाशते तथापि प्रतिज्ञायते। अशीतिशब्दो ह्येवं व्युत्पाद्यते। अष्टानां दशानामशीभावः। तिशब्दश्च प्रत्ययः। य एवाष्टानां दशानामर्थः सोऽशीशब्दस्य। यस्तु संख्याविशेषः सोऽयं तिशब्दस्यैवेति। ततस्तस्य नानर्थक्यम्। एवमपि विंशतेः प्रतिषेधो न सिध्यति। स ह्येवं व्युत्पाद्यते। द्वयोर्दशतोर्विन्भावः। शतिश्च प्रत्ययः। तत्र शतिप्रत्ययात् पूर्वस्य भागस्य द्वयोर्दशतो योऽर्थः स एव प्रतिज्ञायते शतिप्रत्ययस्य। संख्याविशेषस्तिशब्दस्य न कश्चित्। इष्टमेव तत्। संग्राह्यितः कन् विंशतेः। तद्विंशतिकमिति (५।१।२७)। अथातिशदन्ताया इत्यत्रान्तग्रहणं किमर्थम्? अतिशच्छब्दस्य न प्राग्वतीयत्वात् प्रत्ययग्रहणपरिभाषयैव तदन्तविधिर्भविष्यति। एतदेव तर्हि प्रयोजनम्। अनया परिभाषया तदन्तविधिर्मा भूदिति। किञ्च स्यात्? इहैकसप्तत्या क्रीत इति प्रतिषेधो न स्यात्। एकसप्तदशतस्तिप्रत्ययस्याविधानात्। अन्तग्रहणे तु क्रियमाणे सति समुदायस्यान्ते तिशब्दः श्रूयत इतयत्रापि प्रतिषेधः सिद्धो भवति।

## २३। वतोरिड् वा।

वत्वन्तस्य संख्यात्वादिति। बहुगणसूत्रेण (१।१।२३) संख्यासंज्ञाविधानात्। तस्येत्यादि। कथं पुनस्तस्यानेनागमः शक्यो विज्ञातुम्? यावता नेह कन्ग्रहणम्। यदपि प्रकृतं तदपि प्रथमानिर्दिष्टम्। षष्ठीनिर्दिष्टेन चेहार्थः। नैष दोषः। वतोरिति पञ्चमी कन्निति प्रथमायाः षष्ठीं प्रकल्पयिष्यति

तस्मादित्युत्तरस्येति (१।१।६७)।  तावत्क इति।  तत्परिमाणमस्येति यत्-तदेतेभ्यः परिमाणे वतुप् (५।२।३९)। आ सर्वनाम्न इत्यात्वम् (६।३।९१)।

## २४। विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम्।

विंशक इति। ति विंशते र्डितीति तिशब्दस्य लोपः (६।४।१४२)। अतो गुणे पररूपत्वम् (६।१।९७)। यस्येति (६।४।१४८) लोपो न भवति। असिद्धवदत्राभादिति (६।४।२२) लोपस्यासिद्धत्वात्। नन्विहान्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसंज्ञा। तत् कथं पररूपत्वम्? एवं तर्ह्यसिद्धत्वस्यानित्यत्वाद् यस्येति (६।४।१४८) लोपो भविष्यतीत्यदोषः। कथं पुनरत्र कन्निति? त्रिंशत्क इत्यधिकृत्य प्रश्नः। विंशतिक इत्यत्रार्थवत स्तिशब्दस्य ग्रहणात् पर्य्युदासो न प्रवर्त्तत इति तमधिकृत्यास्य प्रश्नस्योपन्यासो नोपपद्यते। योगविभागः करिष्यत इति। त्रिंशदर्थमित्यभिप्रायः।

## २५। कंसाट् टिठन्।

ठञोऽपवाद इति। न ठकः। कंसशब्दस्य परिमाणवाचित्वात्।

## २६। शूर्पादञन्यतरस्याम्।

ठञोऽपवाद इति। न ठकः। शूर्पशब्दस्य परिमाणवाचित्वात्।

## २७। शतमानविंशतिकसहस्रवसनादण्।

ठञोऽपवाद इति। शतमानं परिमाणम्। सहस्रं संख्या। तेनैताभ्यां ठग् न प्राप्नोतीति ठञोऽपवादः। विंशत्या क्रीतं विंशतिकमिति। तच्च परिमाणमपि सम्भवति। तत्र परिमाणाट् ठञोऽपवादः। अपरिमाणाट् ठकः। वसनशब्दाट् ठगपवादः।

## २८। अध्यर्द्धपूर्वद्विगो र्लुगसंज्ञायाम्।

अध्यर्द्धकंसमिति। अध्यर्द्धेन कंसेन क्रीतमिति तद्धितार्थे समासः। प्राग्वतेः संख्यापूर्वपदानां तदन्तविधिरलुकीति (५।१।२०, वा) कंसाट् टिठन्निति टिठन्। तस्य लुक्। द्विकंसमिति। अध्यर्द्धशूर्पमिति। शूर्पादञन्यतरस्या-

मित्यञ् (५।१।२६)। ठञन्यतरस्याम्। तस्य लुक्। यद्यत्र द्विगोः परस्या-र्हीयस्य लुग् विधीयते विशेषानुपादानात् तद्धितलुगन्तादपि द्विगोः परस्य प्राप्नोति। द्वाभ्यां शूर्पाभ्यां क्रीतः पटो द्विशूर्पः पटः। द्विशूर्पेण पटेन-क्रीतमिति द्विशौर्पिकमिति। नैष दोषः। वक्ष्यमाणं विभाषाग्रहणं पूर्वेणापि सम्बध्यते। व्यवस्थितविभाषा सा। तेन तद्धितलुगन्ताद् द्विगोः परस्य न भविष्यति। द्विशौर्पिकमिति। प्राग्वतीये ठञि कृते परिमाणा-न्तस्यासंज्ञाशाणयोरित्युत्तरपदवृद्धिः (७।३।१७)। पाञ्चलोहितिकम्। पाञ्च-कलापिकमिति। कस्यचित् परिमाणविशेषस्य नामधेये एते। पञ्च लोहिन्यः परिमाणमस्येति पञ्च कलापाः परिमाणमस्येति विगृह्य तद्धितार्थे समासः। तदस्य परिमाणमिति (५।१।५७) ठञ्। भस्याढे तद्धित इति (६।३।३५, वा) पुंवद्भावाल्लोहिनीशब्दस्येकारनकारनिवृत्तिः। अध्यर्द्धशब्दः संख्येवेति। अभिधानेऽभिधेयोपचारं कृत्वा ऽध्यर्द्धशब्दः संख्येवेत्युक्तम्। यथैव ह्येकादिका लौकिकसंख्यैवमध्यर्द्धशब्दोऽपि। स किमर्थं भेदेनोपादीयत इति? संख्याया इति शेषः। इह हि द्विगोरध्यर्द्धपूर्वस्य भेदेनोपादानादध्यर्द्ध-पूर्वस्य भेदेन संख्याया उपादानं भवतीति। अतस्तस्याध्यर्द्धशब्दस्य भेदेनोपा-दानस्य प्रयोजनं दर्शयति। पृच्छति ज्ञापकार्थमित्यादिना प्रयोजनमाचष्टे। किं पुनरस्य संख्याकार्य्यं न भवतीत्याह संख्याया इत्यादि।

## २९। विभाषा कार्षापणसहस्राभ्याम्।

अध्यर्धसहस्रमिति। शतमानविंशतिकेत्यादिना (५।१।२७) विहितस्याणो लुक्। अध्यर्धसाहस्रमिति। संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः (७।३।१५)। सुवर्णशतमानयोरुपसंख्यानमिति। उपसंख्यानं प्रतिपादनमित्यर्थः। तत्रेदं प्रतिपादनम्। विस्ताच्चेत्यतः (५।१।३१) सिंहावलोकितन्यायेन चकारो-ऽत्रोपतिष्ठते। स चानुक्तसमुच्चयार्थः। तेन सुवर्णशतमानयोरपि भविष्यति। अध्यर्द्धसुवर्णमिति। ठञो लुक्। अध्यर्धशतमानमिति। शतमानेत्यादिविहित-स्याणः (५।१।२७)। अध्यर्धशातमानमिति। परिमाणान्तस्येत्यादिनोत्तर-पदवृद्धिः (७।३।१७)। ननु च सुवर्णमुन्मानम्। न परिमाणम्। तत् कुतस्तस्य

वृद्धिः ? नैष दोषः । उत्तरपदवृद्धौ ह्युन्मानमपि परिमाणमिति गृह्यते । कुतो ज्ञायते ? असंज्ञाशाणयोरिति (७।३।१७) शाणशब्दस्य प्रतिषेधात् । यदि तर्हि तत्रोन्मानं न गृह्येत तदा शाणस्योन्मानार्थस्य प्राप्तिरेव नास्तीति प्रतिषेधं न कुर्यात् । अध्यर्द्धपूर्वद्विगुभ्यां कार्षापणसहस्रयोर्यथासंख्यं कस्मान्न भवति ? लक्षणव्यभिचारेण तदभावस्य सूचितत्वात् । इह तावदध्यर्धपूर्वद्विगोरिति निर्देशे ऽल्पाच्तरत्वाद् घ्यन्तत्वाच्च द्विगुशब्दस्य पूर्वनिपातः प्राप्नोति । कार्षापणसहस्राभ्यामित्यत्राप्यल्पाच्तरत्वात् सहस्रशब्दस्य । तावेतौ निर्देशौ लक्षणान्तरनिरपेक्षतां बोधयन्तौ यथासंख्यपरिभाषाया अप्यभावं बोधयत इति न भवति यथासंख्यपरिभाषा ।

## ३० । द्वित्रिपूर्व्वान्निष्कात् ।

अध्यर्धपूर्वग्रहणमस्वरितत्वान्नोपतिष्ठते । द्विनिष्कमिति । द्वाभ्यां निष्काभ्यां क्रीतमिति । असमासे ठको विधानादत्र ठञ् । तस्य लुक् । द्विनैष्किक मिति । परिमाणान्तस्येत्यादिनोत्तरपदवृद्धिः (७।३।१७) । बहुपूर्वाच्चेति । बहुपूर्वाद् द्विगो निष्कशब्दान्तादार्हीयस्य प्रत्ययस्य विभाषा लुग् भवतीत्येतदर्थरूपं व्याखेय मित्यर्थः । तत्रेदं व्याख्यानम् । द्वित्रिभ्यां निष्कादित्येव (५।१।३०) सिद्धे पूर्वग्रहणमधिकं कुर्वतैतत् सूचितमन्यदप्यधिकं किञ्चिदस्तीति । तेन बहुपूर्वादपि भवति ।

## ३१ । विस्ताच्च ।

द्वित्रिपूर्वादिति चकारेणानुकृष्यत इति । ननुच स्वरितत्वादेव द्वित्रिग्रहण मनुवर्त्तिष्यते । स्वरितत्वे सत्यधिकारपरिमाणं न ज्ञायत इति चेद् वार्त्तमेतत् । व्याख्यानतोऽधिकारपरिमाणं विज्ञास्यते । एवं तर्हि स्वरितत्वादेव द्वित्रिपूर्वग्रहणस्यानुवृत्तौ सिद्धायां यत् तदनुकर्षणार्थं चकार मधिकं करोति तेनैतत् सूचयति । अन्यदप्यत्र किञ्चिदधिकं भवतीति । तेन बहुपूर्वादपि विभाषा लुक् सिद्धो भवति । बहुविस्तमिति । द्विविस्तमिति । द्वौ विस्तौ परिमाण मस्येति ठञ् । तस्य लुक् । द्विवैस्तिकमिति । उत्तरपदवृद्धिः ।

### ३२ । विंशतिकात् खः ।

द्वित्रिपूर्वग्रहणं निवृत्तम् । पूर्वत्र चानुकृष्टत्वात् । अस्वरितत्वाद्वा । शतमानादिसूत्रेणापि (५।१।२७) प्राप्ते तस्य लुकि खो विधीयते । विधान-सामर्थ्यादस्य लुङ् न भवतीति । यदि लुक् स्यात् खविधानमनर्थकं स्यात् । नह्यणः खस्य च लुकि सति कश्चिद्विशेषोऽस्ति ।

### ३३ । खार्य्या ईकन् ।

खारीशब्दस्य परिमाणवाचित्वात् ठञि प्राप्ते तस्येकन् विधीयते । केवलायाश्चेति वक्तव्यमिति । केवलो योऽसमस्तः खारीशब्दस्तस्येकन् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । इकन्निति वक्तव्ये यदीकनो मात्राधिकस्य विधानं तदन्यदप्यत्र किञ्चिद् भवतीति सूचयति । तेन केवलादपि खारीशब्दादीकन् भवतीति । कथं पुनरिकनि रूपं सिध्यति ? सवर्णदीर्घत्वेन । ननु च यस्येति (६।४।१४८) लोपः प्राप्नोति । नैतदस्ति । यदि हि यस्येति (६।४।१४८) लोपः स्यात् ठनमेव ब्रूयात् । काकिण्याश्चोप-संख्यानमिति । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । प्रतिपादनन्तु तस्यै-वाधिकसूचनार्थस्येकनो विधानमाश्रित्य कर्त्तव्यम् । केवलायाश्चेत्युपसंख्यान-मिति । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । पूर्ववत् प्रकृतेन सम्बन्धः ।

### ३४ । पणपादमाषशताद् यत् ।

पणपदमाषेभ्योऽसमासे निष्कादिभ्य इति । असमासे ठको विधानाट् ठञि प्राप्ते तस्य लुकि शतशब्दादप्यसमासे शताच्च ठन् यतावशत इति (५।१।२१) ठन्यतो विधानात् समासे संख्यालक्षणे कनि यद् विधीयते । द्विपाद्यमि-त्यादि । ननु पद्भावः कस्मान्न भवति पद्यत्यतदर्थे (६।३।५३) इति ? सत्यम् । पादस्य पदाज्यातीत्यत्र (६।२।५२) प्राण्यङ्गस्यैव पद्भावविधानात् । कुत एतत् ? आज्यातीत्यादिना गतिवचनेन सम्बन्धस्तस्यैवोपपद्यते । न परिमाणशब्दस्य । स एव प्राण्यङ्गवाच्युत्तरसूत्रेऽप्यनुवर्त्तिष्यत इति तस्यैव पद्भाव इष्यते । स्यादेतत् । अयमपीह पादशब्दः प्राण्यङ्गवाची । अतो भवितव्यमेवेह पद्भावे-

नेत्यत आह पद्भावो न भवतीति । पद्यत्यतदर्थे (६।३।५३) इति पद्भावः प्राप्नोति । स न भवति । किं कारणमित्याह प्राण्यङ्गस्येत्यादि । पादस्य पदाज्यातिगोपहतेष्वित्यत्र (६।३।५२) प्राण्यङ्गस्य पादस्य ग्रहणम् । इदन्तु परिमाणग्रहणमिति । पणादिभिः परिमाणैः साहचर्यात् परिमाणं पादो गृह्यते । न प्राण्यङ्गमिति पद्भावस्याप्रसङ्गः ।

## ३५ । शाणाद्वा ।

ठञोऽपवाद इति । न ठकः । शाणस्य परिमाणत्वात् । शताच्चेति वक्तव्यमिति । शताच्चाध्यर्द्धपूर्वाद् द्विगोश्च यत्प्रत्ययो भवतीत्येतदर्थंरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । पूर्वसूत्रादिह शतशब्दोऽनुवर्त्तते । तेन तदन्तादपि यद्भवतीति । यद्येवं पूर्वसूत्रे तस्य पाठोऽनर्थक इति । इहैव शतशाणाभ्याञ्चेति वक्तव्यम् । नैवं शक्यम् । एवं ह्युच्यमाने द्वित्रिपूर्वादण् चेत्यनेनापि (५।१।३६) शतात् प्रसज्येत । पूर्वसूत्रे तु पाठसामर्थ्यादण्विधौ नानुवर्त्तते । शतशब्दः स्वरितत्वाच्चेहानुवर्त्तमानो वा यत मुत्पादयति ।

## ३६ । द्वित्रिपूर्वादण् च ।

तेन त्रैरूप्यं सम्पद्यत इति । एकं रूपं सूत्रनिर्दिष्टेऽणि । द्वितीयं चकारसमुच्चिते यति । तृतीयं वाशब्दप्रापितस्य ठञो लुकि । द्विशाण-मिति ठञो लुक् ।

## ३७ । तेन क्रीतम् ।

साप्ततिकमाशीतिकमिति । प्राग्वतेष्ठञ् (५।१।१८) । नैष्किकम् । पाणिकमिति । असमासे निष्कादिभ्य इति (५।१।२०) ठक् । शत्यं शतिक-मिति । शताच्च ठन् यतावशत इति (५।१।२१) । द्विकं त्रिकमिति । संख्याया अतिशदन्तायाः कन् (५।१।२२) । सामान्यार्थाभिधाने तेनेति तृतीयोपादानादिह कस्मान्न भवति ? देवदत्तेन क्रीतम् पाणिना क्रीतमित्यत आह तेनेत्यादि । करणे तृतीया । परिमूल्यात् ततः प्रत्ययेन भवितव्यम् । अन्यत्रेति । अन्यत्र मूल्यात् करणे तृतीया भवति । अनभिधानादिति ।

नहि या कर्त्तरि तृतीया याप्यमूल्यात् करणे तृतीयोत्पाद्यते तदन्तादुत्पन्नः प्रत्ययो विवक्षितं वस्तु प्रतिपादयितु मलं सम्भवति। तथाहि दैवदत्तिकं पाणिकमिति चोक्ते देवदत्तेन कर्त्रा क्रीतम् पाणिना करणेन क्रीतमित्येषोऽर्थो नावसीयते। देवदत्तेनेति कर्त्तरि तृतीया। पाणिनेति करणे। तदेतदुक्तं भवति प्रत्यासन्नविनिमयद्रव्यसम्बन्धानभिधानादिति। अनभिधानादेवेति। नहि प्रास्थिकमित्युक्ते प्रस्थाभ्यां क्रीतं प्रस्थे वा क्रीतमित्येषोऽर्थोऽवगम्यते। तत्र पुनरभिधाने को हेतुः? शब्दशक्तिरीदृशी। किमत्रान्येन हेतुना? अपि च प्रस्थादयः शब्दा अर्थतस्तु परिमाणानामर्थानां वाचका इति तेषामभिधेयस्य प्रचये प्रवृत्तिसम्भवे को हेतुः? नन्वेवं वाक्येऽपि प्रचयो नोपपद्येत। नैष दोषः। वाक्ये हि प्रचयस्य वाचिका विभक्तिरस्तीति प्रचयाभिधानं न विरुध्यते। वृत्तौ तु न कश्चित् प्रचयमाचष्ट इति नासौ वृत्तिविषये युज्यते। यदि तर्हि द्विवचनबहुवचनान्तात् प्रत्ययेन न भवितव्यमेवं सति द्वाभ्यां क्रीतं द्विकं त्रिभिः क्रीतं त्रिकमित्येवमादि न सिध्यतीत्यत आह यत्र त्वित्यादि। अनभिधानं द्विवचनान्तात् प्रत्ययानुत्पत्तेर्हेतुः। तच्चाभिधानं क्व न भवति। यत्र प्रकृत्यर्थस्य संख्याभेदावगमो नास्तीति। प्रमाणाभावात्। इह तु प्रमाणमस्त्येव किञ्चित्। द्व्यादय एव शब्दाः प्रकृतित्वेनोपात्ताः। ते हि स्वप्रवृत्तिनिमित्तभूतयैव संख्ययावच्छिन्नं वस्तु प्रतिपादयन्ति। अतः स्वार्थस्य संख्याविशेषावगमे प्रमाणम्। तेनात्रानभिधानादित्येष हेतुर्नास्तीति भवति प्रत्ययः। तथेत्यादि। यथा त्रिकमित्यादौ प्रकृत्यर्थसंख्यानभावोपगमे प्रमाणसम्भवाद् बहुवचनान्तादपि प्रत्ययो भवति तथा मौद्गिकमित्यादावपि मुद्गादिशब्दप्रकृतिरत्र स्वार्थस्य संख्यावगमे प्रमाणमित्येतद् दर्शयितुमाह न ह्येकेनेत्यादि। मुद्गादिनैकया व्यक्त्या क्रयो न भवतीति विनापि विभक्त्या मुद्गादिशब्दानुवृत्तौ बहुत्वं गम्यते। तत्र प्रमाणं भवति। एकग्रहणञ्च त्रयानुपयोगिनोर्द्वयोरप्युपलक्षणं वेदितव्यम्।

## ३८। तस्य निमित्तं संयोगोत्पातौ।

महाभूतानामिति। पृथिव्यप्तेजोवाय्वाकाशानाम्। साहस्रमिति। सहस्राच् शतमानादिसूत्रेण (५।१।२७)।

## ३९ । गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ।

ठञादीनामपवाद इति । आदिशब्देन ठगादीनां ग्रहणम् । ननु च संख्यापरिमाणयोः पर्युदासात् कन ष्ठकोऽपवाद इति वक्तुं शक्यते । तत् कस्मात् ठञादीनामित्युच्यते ? ठञादीनामित्ययमतद्गुणसंविज्ञानो बहुव्रीहि र्द्रष्टव्यः । अनयैवापिच्यतोत्तमश्वस्य निमित्तमाश्विकमिति । ठक् प्रत्युदाहृतः । सर्वप्रत्ययसम्भवः । तद्बाधनार्थमिदमुक्तम् । पञ्चकम् । अष्टकमिति । संख्यालक्षणः कन् । प्राश्विक इति । प्राग्वतीयष्ठञ् ।

## ४० । पुत्राच्छ च ।

## ४१ । सर्वभूमिपृथिवीभ्यामणञौ ।

## ४२ । तस्येश्वरः ।

तस्य निमित्तमित्यत (५।१।५८) स्तस्यग्रहणमनुवर्त्तते । तत् किमर्थं पुनस्तस्य निर्देश इत्याह षष्ठीप्रकरणे पुनः षष्ठीसमर्थविभक्तिनिर्देश इत्यादि । प्रत्ययार्थस्येति । निमित्तस्य । अन्यथेति । यदि षष्ठीनिर्देशः प्रत्ययार्थे निवृत्त्यर्थो न क्रियते ततो यथा संयोग उत्पातश्च प्रत्ययार्थविशेषणं तथेश्वरोऽपि तस्यैव विशेषणं सम्भाव्येत । तथाचेश्वरविशिष्टे निमित्त एव प्रत्ययः स्यात् ।

## ४३ । तत्र विदित इति च ।

ईश्वरानुकर्षणार्थश्चकारः । इतिकरणो विवक्षार्थः ।

## ४४ । लोकसर्वलोकाट् ठञ् ।

सर्वत्र ठञ्ग्रहणं ठको निवृत्त्यर्थम् । अन्यथा हि प्रकृतिमात्रनिर्देशे क्रियमाणयार्हादिति (५।१।१९) ठक् प्रसज्येत ।

## ४५ । तस्य वापः ।

उप्यतेऽस्मिन् वाप इति । अधिकरणसाधनो हलश्चेति घञ् (३।३।१२१) ।

## ४६ । पात्रात् ष्ठन् ।

पात्रशब्दः परिमाणवाचीति ठञोऽपवाद इति । अत्रेयं युक्तिः । यदि

ह्यपरिमाणवाचो स्यात् तदार्हीयस्य ठञोऽपवादः। न ठञः। पात्रिकीति। षिद्गौरादिभ्यश्चेति (४।१।४१) ङीष्।

## ४७। तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते।

ननु च वृद्ध्यादीनां बहुत्वाख्यानेनैव बहुवचनं तेन भवितव्यमिति कथं दीयत इत्येकवचनान्तेन तस्य निर्देश इत्याह दीयत इत्येकवचनमित्यादि। यदि समुदितैर्वृद्ध्यादिभिः सम्बन्धः क्रियते तर्हि स्याद् बहुवचनम्। न च तैः समुदितैः क्रियते। किं तर्हि? प्रत्येकम्। अत एकवचनमेव। वृद्धिशब्द इह लौकिको धनविशेषवाची गृह्यते। न च संज्ञापदम्। आयादिभिर्धनविशेषवाचिभिः सह निर्देशात्। अतएवाह तत्रेत्यादि। उत्तमर्णस्य यद्धनं तस्मादतिरिक्तमधिकं धनमधमर्णेन यद् दातव्यं तद् वृद्धिः। ग्रामादिष्विति। आदिशब्देन क्षेत्रादि। पटादीनामित्यादि। पटादीनां व्यवक्रियमाणानामुपादानं सूत्रादि। तस्य यन्मूल्यं तस्मादतिरिक्तं द्रव्यं पटादिविक्रयेण यल्लभ्यते स लाभः। रक्षानिर्वेश इति। वणिजां रक्षाकारी राज्ञो भागो रक्षानिर्वेश इत्युच्यते। ननु चासावप्यायः। तदपार्थकं शुल्कस्य पृथगुपादानम्। नैतदस्ति। यत्रास्मिन् ग्राम आय इतत्रायं प्रति ग्रामस्याधिकरणभावः। उत्पाद्यमानस्यायस्याधेयभावात्। शुल्के तु न सम्भवति। यत्रास्मिन् शते शुल्का इति शतं न शुल्कस्याधिकरणम्। किं तर्हि? इयत्तापरिच्छेदः शतेन शुल्कस्य क्रियते। तस्मादस्य भिन्नत्वाच् शुल्कः पृथगुक्तः। सिद्धं त्वित्यादि। विवक्षातः कारकाणि भवन्तीति सम्प्रदानाख्ये चाधिकरणत्वेन विवक्षेत्याह समेत्यादि। गतार्थम्।

## ४८। पूरणाद्बाट् ठन्।

पूरणवाचिन इति। पूर्य्यते येनार्थेन स पूरणः। तद्वाचिनः प्रातिपदिकात्। एतेन पूरण इत्यर्थस्य ग्रहणं न प्रत्ययस्येति दर्शयति। कथञ्च प्रत्ययस्य ग्रहणं स्यात्? यदि पूरणग्रहणं स्वर्य्येत। तस्मिन् हि स्वर्य्यमाणे तस्य पूरणे डडित्यधिकृत्य (५।२।४८) ये प्रत्यया विहितास्ते गृह्येरन्। किञ्च स्यात्? पूरणाद् भागे (५।३।४८) तीयादन्नित्यन्नन्ताट् ठन् न स्यात्। अपूरणप्रत्ययान्त-

त्वात् । तस्याग्रहणे तु सति स्वार्थिकः स्यादन् । तस्मिन्नप्युत्पन्ने पूरण एवार्थे तदन्तमपि वर्त्तत इति ततोऽपि ठन् सिद्धो भवति । ठक्टिठनोरपवाद इति । पूरणादार्द्धीयस्य ठकोऽपवादः । अर्धाद्यप्यर्द्धाच्चेति वक्तव्य-(५।१।२५, वा) मित्योपसंख्यानिकस्य टिठनः । ठकि टिठनि च सति ङीप् स्यात् । ठनि तु टाब् भवति । द्वितीयिक इति । द्वयोः पूरण इति द्वेस्तीय इति (५।२।५४) तीयप्रत्ययः । तृतीयिक इति । त्रेः सम्प्रसारणञ्च (५।२।५५) । पञ्चमिकः । सप्तमिक इति । तस्य पूरणे डड़िति डट् प्रत्ययः (५।२।४८) । तस्य नान्ताद-संख्यादेर्मड़िति (५।२।४९) मड़ागमः ।

## ४९ । भागाद् यच्च ।

ठञोऽपवाद इति । न ठकः । भागशब्दस्य परिमाणत्वात् । ननु चाङ्ग-मात्रवचनोऽपि भागशब्दोऽस्ति । सत्यमस्ति । नतु तस्येह ग्रहणम् । तस्य हि ग्रहणे द्व्यादिभिः सम्बन्धो नोपपद्यते । परिमाणवचनस्तु प्रसिद्धो रूपकांशे वर्त्तत इति द्व्यादिभिः सम्बन्ध उपपद्यते ।

## ५० । तद्धरति वहत्यावहति भाराद् वंशादिभ्यः ।

प्रकृतिविशेषणमित्यादि । प्रकृतेः प्रातिपदिकस्य । भाराद् वंशादिभ्य इत्यर्थं इति । अत्रार्थे वंशादय एव शुद्धाः प्रत्ययमुत्पादयन्ति । ननु च वंशादयः शब्दा भार इत्यपि शब्द एव । नच शब्दः शब्दान्तरस्य समानाधि-करणं विशेषणमुपपद्यते । तत् कथं भारभूतेभ्यो वंशादिभ्य इत्येषोऽर्थो भवतीत्याह भारशब्दोऽर्थद्वारेणेत्यादि । वंशादीनामर्थस्य भारशब्दस्यार्थो मुख्यं विशेषणम् । अर्थद्वारेण तु वंशादीनां भारशब्दस्य चोपचरितम् । अर्थ-धर्मेण शब्दोऽपि तथा व्यपदिश्यत इत्यर्थः ।

## ५१ । वस्नद्रव्याभ्यां ठन्कनौ ।

पूर्वेण ठकि प्राप्ते तदपवादौ ठन्कनौ विधीयेते ।

## ५२ । सम्भवत्यवहरति पचति ।

प्रमाणानतिरेक इति । प्रमाणादनाधिक्यमित्यर्थः । ननु चेत्यादि । तथाहि स्थालीप्रस्थं पचति तत्रावश्यं प्रस्थस्य सम्भवेन भवितव्यम् । नह्यन्यथा

शक्यते पक्तुमित्यभिप्रायः। नास्यत्र नियोग इति। व्यभिचारमाह। प्रस्थं पचति ब्राह्मणीति। अत्र हि पाक एव गम्यते। न सम्भवः।

## ५३। आढ़काचितपात्रात् खोऽन्यतरस्याम्।

ठञोऽपवाद इति। आढ़कादीनां परिमाणत्वात्। पूर्वेण प्राप्तस्य।

## ५४। द्विगोः ष्ठंश्च।

पूर्वेण ठन्खयोः प्राप्तयोस्तत्र लुकीदमुच्यते। विधानसामर्थ्यादनयोर्लुग् न भवतीति। यदि ह्यत्रापि लुक् स्याद् विधानमनर्थकं स्यात्। ठञस्तु पक्षेऽनुज्ञातस्येति। अन्यतरस्यांग्रहणेन। द्व्याढ़कीति। ठञो लुक् पक्षे द्विगोरिति (४।१।२१) ङीप्। द्व्याचितेति। अपरिमाणेत्यादिना (४।१।२२) ङीप्प्रतिषेधे टाप्।

## ५५। कुलिजाल्लुक्खौ च।

चातूरूप्यमिति। एकं खे रूपम्। ष्ठनि द्वितीयम्। लुकोऽपि विकल्पितत्वाट् ठञोऽलुकि तृतीयम्। लुकि चतुर्थम्। ननु च कुलिजशब्दस्य परिमाणवाचित्वात् परिमाणान्तस्येत्युत्तरपदवृद्धिः (७।३।१७) कस्मान्न भवतीत्यत आह परिमाणान्तस्येति। परिमाणान्तस्यासंज्ञाशाणकुलिजादित्येवैतत् सूत्रं प्रत्येतव्यमिति दर्शयति।

## ५६। सोऽस्यांशवस्नभृतयः।

वस्नद्रव्याभ्यामित्यत्रापि (५।१।५१) वस्नशब्देन मूल्यमुच्यते।

## ५७। तदस्य परिमाणम्।

प्रास्थिको राशिरित्यादौ सर्वत्र ठञ्। द्विषाष्टिक इत्यादि। संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः (७।३।१५)। पुनर्विधानसामर्थ्यादित्यादिना पुनर्विधानफलं दर्शयति। द्विषाष्टिक इत्यादौ द्विः प्रत्ययविधानम्। तत्र पूर्वसूत्रात् समर्थविभक्तेः प्रत्ययार्थस्यानुवृत्तेः प्रथमं प्रत्ययो विधीयते। तस्याध्यर्द्ध-

सूत्रेण (५।१।२८) लुग् भवति । नन्विह च यः सूत्रे समर्थविभक्तेः प्रत्ययार्थस्य चोपादानात् पुनर्विधीयते तस्यापि पुनर्विधानमनर्थकं स्यात् ।

## ५८ । संख्यायाः संज्ञासंघसूत्राध्ययनेषु ।

परिमाणोपाधिकादिति । परिमाणमुपाधिर्विशेषणं न सम्भवति । नहि शब्दः परिमाणं शब्दस्य सम्भवतीति तदर्थस्य विशेषणं विज्ञास्यत इत्यदोषः । ननु चार्थस्यापि न सम्भवति । संख्या हि नैव परिमाणम् । नैष दोषः । नात्र रूढः परिमाणशब्दो गृह्यते । किं तर्हि क्रियाशब्दः । परिमीयते येन तत् परिमाणमिति । संख्ययापि च परिमीयत इति सापि परिमाणम् । नन्वेवमपि विशेषणमनर्थकम् । न ह्यपरिच्छेदिका संख्यास्ति । सञ्चक्षाणा हि संख्योच्यते । सत्यम् । परिच्छेदिकैव संख्या । सा तु स्वस्याभिधेयं परिच्छिनत्तीति षष्ठ्यर्थमवश्यं न परिच्छिनत्ति । पञ्चास्य संघस्य पुत्रा इति नात्र संघस्येयत्ता प्रतीयते । इह तु पञ्चसंख्या परिमाणमस्य संघस्येति भवतीयत्ता-प्रतीतिः संघस्य । तस्मादुपपन्नं संख्यायाः परिमाणं विशेषणम् । तत्रेत्यादि । पञ्चशब्दोऽयं संख्येय एव वर्त्तते । न कदाचिदपि संख्यानमात्रे । ततश्च यएव संख्येयाः पञ्चत्वसंख्ययावच्छिन्नाः पञ्चशब्देनोच्यन्ते प्रत्ययान्तेनापि त एव । नहि तेषां भिन्नानामत्र संख्येयान्तरं परिमाणं प्रत्ययवाक्यं सम्भवति । तस्मात् संज्ञायां स्वार्थ एव प्रत्ययो वाच्यः । तथाचाह वार्त्तिककारः संज्ञायां स्वार्थे युत्पद्यत इति । पञ्चकोऽधीत इति पाठापेक्षया पुंलिङ्गः । अधीतिरध्ययन-मिति । अनेन भावसाधनमध्ययनशब्दं दर्शयति । यद्यधीयत इत्यध्ययनं कर्मसाधनोऽध्ययनशब्दः स्यात् सूत्रग्रहणं पृथग् वक्तव्यं न स्यात् । अध्ययन-ग्रहणेनैव सिद्धत्वात् । सूत्रमप्यधीयत एव । पञ्चावृत्तय इति पाठे पुनः क्रियात्मिकाः पञ्च वारा इत्यादिना पर्यायान्तरेण पञ्चावृत्तय इत्यस्यैवार्थं व्यक्तीकरोति । स्तोमे डविधिरिति । अत्रापि च्छन्दसीति सम्बध्यते । मन्त्रसमुदायः स्तोमः । एकविंश इति । अतो गुणे (६।१।९७) पररूपत्वञ्च । ति विंशते र्डितीति (६।४।१४२) तिशब्दलोपः । पश्चात् शन्शतोरित्यादि । शन्नित्येवमन्ताच्छन्दसि डिनिर्वक्तव्यः ।

५९। पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्य-शीतिनवतिशतम्।

अपदत्वञ्चेति। पदनिबन्धनस्य जश्त्वादेः कार्य्यस्य प्रतिषेधार्थमिहैते विंशत्यादयः परिमाणे निपात्यन्ते। तदस्य परिमाणमित्यधिकारे (५।१।५७) निपातनात्। एवञ्च गवां विंशतिरिति षष्ठी व्यतिरेकनिबन्धना न प्राप्नोति। विंशतिशब्देन हि तान्येव गोद्रव्याणि गृह्यन्ते न तदधिकं किञ्चिदर्थान्तरम्। बहुवचनं प्रसजति तेषां बहुत्वादिति यश्चोदयेत् तं प्रत्याह विंशत्यादय इत्यादि। यथा कथञ्चित् प्रकारेण। विनाप्यवयवार्थेनेति-यावत्। रूपमात्रं प्रधानम्। नावयवार्थः। यस्त्वेषामर्थः स लोकत एव व्यवतिष्ठत इत्यभिप्रायः। नात्राभिनिवेष्टव्यमिति। संख्यापरिमाणो-पाधिकः प्रकृत्यर्थः। परिमाणमात्रं प्रत्यया इति नायमत्राभिनिवेशः कर्त्तव्य इत्यर्थः। अनभिनिवेशस्य कारणमाह तथाहीत्यादि। स्यादेतत्। अत्राप्यवयवार्थोऽस्तीत्यत आह नचेत्यादि। ब्राह्मणानां पङ्क्तिरित्युक्ते संख्यापरिमाणोपाधिकः प्रकृत्यर्थः। परिमाणी वा कश्चित्। प्रत्ययार्थो हि न गम्यते। किं तर्हि? सन्निवेशविशेषः संख्यानात्मको गुण एव प्रतीयते। तथाहि तस्य सन्निवेशविशेषस्यानवगमे तावत्स्वेव ब्राह्मणेषु पङ्क्तिरिति न प्रयुज्यते। तदेवं गुणशब्दत्वाद् विंशत्यादीनां गवां विंशतिरिति सिध्यति षष्ठी। विंशतिशब्दस्य संख्यानवृत्तित्वात्। यदि तर्हि गुणशब्दा एते विंशतिर्गाव इति द्रव्यशब्देन सामानाधिकरण्यं न प्राप्नोति। गुणिन्यत्र वृत्तिः। गुणमात्रे न। ततोऽयमदोष इति वक्तव्यः। स हेतु र्येन एतेषां क्वचिद् गुणमात्रे वृत्तिर्भवति क्वचिद् गुणिनि। बहुवचनप्रसङ्गाच्च गुणिनि वृत्ति-रित्येतदेव दुःस्थम्। बहुत्वाद् गुणिनाम्। इह च विंशतिः कुण्डानीति नपुंसकलिङ्गं प्राप्नोति। विंशतिर्ब्राह्मणा इति पुंलिङ्गम्। गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति यथा शुक्लः कम्बलः शुक्लं वस्त्रं शुक्ला शाटीति। यदासौ द्रव्यमाश्रितत्र भवति गुणस्तस्य लिङ्गवचनं यत् तद् गुणवचनस्यापि भवति यथा गुणशब्दत्वेऽप्येषामाश्रीयमाणे न भवत्येव दोष-

प्रसङ्गान्मुक्तिरित्यत आह या चैषामित्यादि । न केवलमर्थाभिधानं स्वाभाविकं किन्त्वेतदपीत्यपिशब्देन दर्शयति । यत्र द्रव्येण गुणिनैषामभिधेयो गुणो विशिष्यते तत्र स्वभावादेव गुणमात्रे वृत्तिः । यत्र त्वेत उपसर्जनीभूतस्वार्थास्तेन स्वार्थेन द्रव्यं विशेषयन्ति तत्रैषां स्वभावत एव गुणिनि वृत्तिः । स्वलिङ्गसंख्यानुविधानञ्चेति । गुणिन्यपि वर्त्तमानानां ययोर्लिङ्गसंख्ययोर्यदनुविधानमनुवर्त्तमानमेतदपि सर्वं स्वाभाविकम् । अन्येषामपि गुणशब्दानामपि क्वचित् स्वभावत एव गुणिनि वृत्तिर्भवति तद्यथा शुक्लः पट इत्यत्र शुक्लशब्दस्य । क्वचिद् गुणमात्रे यथास्यैव शुक्लो गुणः पटस्येत्यत्र । अन्येषामपि केषाञ्चिच् शब्दानां स्वाभाविकं स्वलिङ्गसंख्यानुविधानं दृश्यत एव तद्यथा वेदाः प्रमाणं श्रुतयः प्रमाणमिति । तस्मात् स्वाभाविकत्वाद् गुणमात्रे गुणिनि च वृत्तेः स्वलिङ्गसंख्यानुविधानस्य च न भवति यथोक्तदोषप्रसङ्गः । यदा हि स्वभावत एव संख्यानमात्रे गुणे गुणमात्रे वृत्तिस्तदा व्यतिरेकनिबन्धना षष्ठी भवति । यदा तु गुणिनि तदा तयोरपि च द्रव्यशब्दत्वात् सामानाधिकरण्यमपि भवति । द्रव्येऽपि वर्त्तमानानां स्वाभाविकं स्वलिङ्गसंख्यानुविधानम् । अथ सहस्रादयोऽपि कस्मान्न व्युत्पाद्यन्त इत्याह सहस्रादयोऽपीत्यादि । एवंजातीयका एवंप्रकारा विंशत्यादिभिः सदृशा इत्यर्थः । तेषामपि गुणवत्त्वात् तद्वदेव विंशत्यादिवदेव द्रष्टव्याः । विंशत्यादय इव तेऽपि प्रकृत्यादिविभागेन व्युत्पाद्यन्त इत्यर्थः । यद्येवं किमर्थं विंशत्यादय एव सूत्र उपात्ता इत्याह उदाहरणमात्रमित्यादि । उदाहरणमात्रं विंशत्यादिग्रहणम् । अन्येऽप्येवंजातीयाः सहस्रादयस्तथैव व्युत्पाद्याः ।

## ६० । पञ्चद्दशतौ वर्गे वा ।

ननु च संघ इत्यनुवर्त्तिष्यते । किं वर्गग्रहणेन ? नैतदस्ति । संघशब्दो हि प्राणिसमुदाये रूढः । वर्गशब्दस्तु समूहमात्र इति वर्गग्रहणं कर्त्तव्यम् ।

## ६१ । सप्तनोऽञ्छन्दसि ।

संख्यालक्षणे कनि प्राप्ते सप्तन्‌शब्दाच्छन्दस्यञ्विधानम् ।

## ६२। त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्।

त्रिंशच्छब्दाद् विंशतित्रिंशद्भ्यामिति (५।१।२४) योगविभागेन कनि प्राप्ते चत्वारिंशच्छब्दादपि प्राग्वतेष्ठञिति (५।१।१८) ठञि प्राप्तेऽयमारभ्यते। अभिधेये सप्तम्येषेत्यादि। विषयसप्तम्यामस्यां ब्राह्मणविषयश्चेत् प्रयोगो भवतीत्येषोऽर्थः स्यात्। तथाचान्यत्र प्रत्ययान्तस्य प्रयोगो न स्यात्। तस्मान्न विषयसप्तम्येषा। एतच्च संज्ञाग्रहणादेव विज्ञायते। नहि ब्राह्मणग्रहणात् त्रिंशच्चत्वारिंशतौ डणन्तौ कस्यचित् पदार्थस्य संज्ञिनौ स्तः। ब्राह्मणानां तु विद्यते।

## ६३। तदर्हति।

श्वैतच्छत्रिकम्। वास्त्रयुग्मिकमित्यादिषु ठक्। आर्हादित्यभिविधौ (५।१।१९)चायमाकार इति।

## ६४। छेदादिभ्यो नित्यम्।

नित्यग्रहणमिति। अथ विभाषाया निवृत्त्यर्थं नित्यग्रहणं कस्मान्न विज्ञायते ? अशक्यं तन्निवृत्त्यर्थं विज्ञातुम्। विनापि नित्यग्रहणेन महाविभाषानिवृत्तिः शक्यते विज्ञातुम्। तथाहि च्छेदादिभ्यः पूर्वेणैव ठकि सिद्धे पुनर्वचनादेव नित्यविधिर्भविष्यति। किं नित्यग्रहणेन ? ततो नित्यग्रहणमहन्यहन्यर्हत्वात् तदर्हतीतरस्यार्थस्य (५।१।६३) विशेषणं विज्ञास्यते। तथाच जातमारम्भस्य प्रयोजन मिति वाक्य न निवर्त्तते। विरागो विरङ्गश्चेति। विरागशब्दष्ठक मुत्पादयति विरङ्गादेशञ्चापद्यते। नित्यं विरागमर्हति वैरङ्गिकः। प्रत्ययसन्नियोगेन चायमादेश इति। प्रतरयाभावाद् वाक्ये न भवति।

## ६५। शीर्षच्छेदाद् यच्च।

प्रत्ययसन्नियोगेन शीर्षभावः। तेन वाक्ये प्रतरयाभावान्न भवतीति भावः।

## ६६। दण्डादिभ्यो यः। (D)

दण्डशब्दोऽयमस्ति क्रियावचनः। दण्डनं दण्ड इति। अस्ति द्रव्यवचनः। विशेषाभावाद् द्वयोरपि ग्रहणम्।

---

(D) The classical commentators do not agree with regard to the reading of this rule. Some say दण्डादिभ्यो यत् is the rule; others, including वामन and the न्यासकार, give it as दण्डादिभ्यो यः। Another class take it merely as दण्डादिभ्यः।

## ६७। छन्दसि च।

यदनुवर्त्तते। नानन्तरो यः। यत एव स्वरितत्वात्।

## ६८। पात्राद् घंश्च।

ठक्ठञोरपवाद इति। ननुच पात्रं भाजनम्। न परिमाणम्। अतस्तद्वाचिनष्ठक् प्राप्नोति। तस्यैवापवादो युक्तः। तत् किमुच्यते ठक्-ठञोरपवाद इत्यत आह पात्रं परिमाणमप्यस्तीति। न केवलं भाजनमित्यपि-शब्देन दर्शयति। तत्र यदा परिमाणे पात्रशब्दो वर्त्तते तदा ठञोऽपवादः। यदा भाजने तदा ठकः। पात्रं स्थाल्यादि। कोऽर्थः? चण्डालादिर्ब्राह्मणश्च पात्रं परिमाणमर्हति। येन भुक्ते पुनर्न संस्कारेण भाजनं शुध्यति स पात्रियः पात्रय इति चोच्यते।

## ६९। कड़ङ्करदक्षिणाच्छ च। (E)

चकाराद् यच्चेति। अथानन्तरस्य घनः समुच्चयः कस्मान्न भवति। एवं मन्यते। स्वरितत्वं प्रतिज्ञातमिति। अनन्तराच्च स्वरित आसन्नतरः। स च प्रतियोगमुपतिष्ठमानो वाक्यशेष एव भवति। तस्माद् यत एव समुच्चयो युक्त इति। यो गौर्निर्गुणत्वात् खलकणाद्यनर्हः स कड़ङ्कर्य्यः कड़ङ्करीय इति चोच्यते। माषादीनां खलेष्ववस्करनालकाष्ठमतिदुर्जरं वुसाद्यपि कड़ङ्करमुच्यते। अथात्र यथासंख्यं कस्मान्न भवति। अस्ति हि तस्य प्राप्तिः। प्रकृतिप्रत्ययानां साम्यात्। तथाहि द्वे प्रकृती द्वौ प्रत्ययावित्यत आह अल्पाच्तरस्येत्यादि। दक्षिणशब्दस्याल्पाच्तरस्य पूर्वनिपाते प्राप्ते योऽयमिह परनिपातः स लक्षणानपेक्षतां निर्देशस्य दर्शयल्ँ लक्षणव्यभिचारस्य चिह्नं भवति। अतस्तेन चिह्नेन यथासंख्याभावं सूचयति सूत्रकारः। तेन न भवति यथासंख्यम्।

---

(E) In the printed काशिका we get कड़ङ्कर। मिश्र derives it thus :—कड़ मदे। कड़तीति कड़ः। कड़ं करोतीत्यत एव निपातनात् खच्। भानुजी in his अमरटीका notices both the forms, setting कड़ङ्कर in the text. Either spelling appears to be admissible.

## ७० । स्थालीबिलात् ।

छयतावनुवर्त्तते इति । ननु चानुकृष्टमुत्तरत्र नानुवर्त्तेत इति चानुकृष्टस्य यतः पुनरिह चकारेणानुवृत्तिर्नोपपद्यते । नैष दोषः । अनित्या ह्येषा परिभाषा । कथं ज्ञायते ? एकाजुत्तरपदे (८।४।१२) ण इत्यत्र णे प्रकृते पुनर्णग्रहणात् । तद्धि वा भावकरणयोरित्यनुवर्त्तमानस्य (८।४।१०) विकल्पस्य निवृत्त्यर्थं क्रियते । यदि चेयं नित्या स्यात् पूर्वसूत्रे चानुकृष्टत्वादेव हि तस्यानुवृत्तिर्न भवति । अथवा चकारोऽप्यत्रानुवर्त्तते यतोऽनुकर्षणार्थः । तेन पूर्वत्र चानुकृष्टस्यापि तस्य पुनरिह चकारेणानुकृष्यमाणस्यानुवृत्तिर्भविष्यति । स्थाली बिलकडङ्गरदक्षिणाच्छ चेत्येकयोगे कर्त्तव्ये यदिदं योगविभागकरणं तत्स्थालीबिलाद् विशेषे वर्त्तमानात् प्रत्ययो यथा स्यादित्येवमर्थम् । तेन स्थालीमुख एव वर्त्तमानः स्थालीबिलशब्दः प्रत्ययमुत्पादयति । ननु स्थालीसम्बन्धिनि छिद्रमात्रे वर्त्तमानः ।

## ७१ । यज्ञर्त्विग्भ्यां घखञौ ।

## ७२ । पारायणतुरायणचान्द्रायणं वर्त्तयति ।

द्वितीयाप्रकरणे पुनर्द्वितीयोच्चारणमिष्टविषये द्वितीयान्ताद् यथा स्यादित्येवमर्थम् । तेन यद्यपि पारायणं (F) गुरुणा शिष्येण च गम्यते तथापि शिष्य एव प्रत्ययो भवति । न गुरौ । तथा तुरायणो यागो यद्यपि यजमानेन याजकैश्च वर्त्त्यते तथापि यजमान एव प्रत्ययो भवति । न याजके ।

## ७३ । संशयमापन्नः ।

अत्रापि द्वितीयाप्रकरणे पुनर्द्वितीयोच्चारण मिष्टविषये द्वितीयान्ताद् यथा स्यादित्येवमर्थम् । तेन यद्यपि द्वे अपि कर्त्तृकर्मणी संशयमापन्ने तथापि यद्विषयः संशय उत्पद्यते तत्रैव कर्मणि स्थाण्वादौ प्रत्ययो भवति । न तु संशयस्य कर्त्तरि पुरुषे । अनभिधानात् ।

---

(F) पारायणमादित आरभ्याऽन्तादविच्छेदेन वेदादीनामध्ययनम् । तुरायणः संवत्सरसाध्यो हविर्यज्ञविशेषः । चान्द्रायणं तपोविशेषः । वर्त्तनं निष्पादनमित्यर्थः ।

७४ । योजनं गच्छति ।

क्रोशशतयोजनशतयोरुपसंख्यानमिति । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तथा ततोऽभिगमनमर्हतीति चेत्यादावपि वाक्ये । तत्रेदं प्रतिपादनम् । इह द्वितीयाधिकारे पुनर्द्वितीयोच्चारणमधिकन्तु कुर्वतैतत् सूचितमन्यदप्यत्र किञ्चिदधिकं भवति । तेन सर्वमेतद् गदितं कार्य्यमुपपन्नं भवति ।

७५ । पथः ष्कन् ।

७६ । पन्थो ण नित्यम् ।

नित्यग्रहणमित्यादि । अथ वाक्यनिवृत्त्यर्थं कस्मान्न भवति ? पन्थशब्दस्य वाक्यासमवायित्वात् । स हि प्रत्ययसन्नियोगेन विधीयते । न वाक्येन समवैति । ननु च पथिन्शब्देन वाक्यं मा भूदित्येवमर्थं नित्यग्रहणं स्यात् । नैतदस्ति । यदि तदेवमर्थं स्यात् पूर्वसूत्र एव कृतं स्यात् यत्र पथिन्शब्दः श्रूयते । इह तु करणे प्रत्ययार्थविशेषणं विज्ञायते ।

७७ । उत्तरपथेनाहृतञ्च ।

चकारः प्रत्ययार्थ इति । प्रत्ययार्थसमीपे श्रूयमाणत्वात् । गच्छतीत्यत्र पूर्वं द्वितीयान्तात् प्रत्यय उत्पन्नः । तदिहापि तत एव प्रत्ययेन भवितव्यमिति भ्रान्तिः स्यात् । अतस्तान्निराकर्त्तुमाह अत्रापीत्यादि । चकारो ह्यर्थात् परःश्रूयमाणोऽत्रार्थमात्रस्यैव गच्छतीत्यस्यानुकर्षकः प्रतीयते । नतु विभक्तेरपि । सम्बन्धाभावात् । तस्मात् स इहानुवृत्तः सन्निहितया समर्थविभक्त्या सम्बध्यमानस्तृतीयासमर्थादेव प्रत्ययमुत्पादयतीति भावः । वारिजङ्गलेत्यादि । वार्य्यादयः पूर्वपदं यस्य तत् तथोक्तम् । एतयोरेवार्थयोरुपसंख्यानम् । मधुकमरिचयोरित्यादि । मधुकमरिचयोरभिधेययोः स्थलात् परो यः पथिन् शब्दस्तदन्तादाहृते वक्तव्यः ।

७८ । कालात् ।

कालादिति स्वरूपग्रहणं न भवति । कुतः ? पृथगस्य योगस्यारम्भात् ।

कालशब्दस्यापि यदि स्वरूपग्रहणमभीष्टं स्यादिमं पृथग् योगमकृत्वोत्तर-सूत्रे कालशब्दादेव तृतीयामुच्चारयेत् कालेन निर्वृत्तमिति। एवं हि निर्देशादेव तृतीयासमर्थात् प्रत्ययो विज्ञायते। उत्तरसूत्रे च कालशब्दः स्वरितत्वादनुवर्त्तिष्यत इति सिद्धमिष्टम्। अतो न कर्त्तव्य एवायं पृथग् योगः। स एव क्रियतेऽर्थग्रहणं तदिति दर्शयितुम्।

## ७९। तेन निर्वृत्तम्।

आह्निक इति। अल्लोपोऽन इत्यकारलोपः (६।४।१३४)। टिलोपस्त्वह्नष्टखोरेवेति (६।४।१४५) नियमादिह न भवति।

## ८०। तमधीष्टो भृतो भूतो भावी।

कालाध्वनोरत्यन्तसंयोग इति (२।३।५) द्वितीया। तमधीष्ट इत्यादौ कर्मणि द्वितीया नोपपद्यते। अध्येषमाणादि हि पुरुषादिकर्मानयानिष्टयाभिहितम्। न चान्या क्रियास्ति यस्यां मासादि कर्म स्यात्। ननु चेत्यादिना यदुक्तं कालाध्वनोरत्यन्तसंयोगे द्वितीयेति (२।३।५) तद्विघटयति। तेन कथं मासो व्याप्यत इति ? न कथञ्चित्। विघटत इत्यर्थः। यद्धि मुहूर्त्तं क्रियते तेन मुहूर्त्तेन मासैकदेशो व्याप्यते। नतु सकलो मासः। क्रियार्थे इति। अध्ययनादिक्रियार्थे। तदर्थं हि ते क्रियेते। फलभूतया क्रिययेति। अध्ययनादिकया। ताभ्यामेव व्याप्त इत्युच्यत इति। तदन्यव्यापारस्य तत्रोपचारात्। यथा चौरेण ग्रामो दग्ध इत्युक्ते न चौरेण ग्रामो दह्यते ऽपि तु तदाहृतेनाग्निना। उपचारेण तु तथा व्यपदेशः।

## ८१। मासाद् वयसि यत्खञौ।

सामर्थ्याद् भूत एवात्राभिसम्बध्यत इति। वयसि भूतार्थस्यैव सम्भवादिति भावः। भाव्यर्थोऽपि तत्र सम्भवतीति चिन्त्यमेतत्। अथ तु नेष्यते। पुनरभिधानं शरणमाश्रयितव्यम्। खञो ञित्करणं स्वरार्थम्। वृद्ध्यर्थञ्च। ननु च वृद्ध एव मासशब्दः। सत्यं वृद्धोऽयम्। तथापि वृद्धस्यापि वृद्धि-

रेषितव्या। मासीनाभार्य्य इति वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकार इति (६।३।३९) पुंवद्भावप्रतिषेधो यथा स्यात्।

८२। द्विगोर्यप्।

प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति (५।१।१।२० व,) तदन्तविधेरभ्यनुज्ञानाद् द्विगोरपि मासान्तात् पूर्वेण यत्खञोरेव प्राप्तयो-रयमारभ्यते। यपः पित्करणमनुदात्तार्थम्। अन्यथा मासशब्दान्तात् प्रत्यये विहिते सति शिष्टत्वादिगन्तकालेति (६।२।२९) द्विगाववेति स्वरबाधनात् प्रत्ययस्वरः स्यात्। ततश्च वर्ज्यमानस्वरेणानुदात्तादि स्यात्। प्रत्ययेऽनुदात्तार्थे पितीगन्तेति (६।२।२९) पूर्वपदप्रकृतिस्वरः सिद्धो भवति।

८३। षण्मासाण्ण्यच्च।

षण्मासशब्दो द्विगुः। तस्मात् पूर्वेण यपि प्राप्ते वचनम्। स चकारेण समुच्चेतव्य इति। यद्येवं कथमनन्तरो यब् भवतीत्याह स्वरितत्वाच्चानुवर्त्तिष्यत इति। तेनानुवृत्तिसामर्थ्यादनन्तरो यब् भवतीति मन्यते।

८४। अवयसि ठंश्च।

८५। समायाः खः।

८६। द्विगो र्वा।

पूर्वेणेत्यादि। कथं पुनः समाशब्दाद् विधीयमानः प्रत्ययस्तदन्ताद्द्विगोः प्राप्नोतीत्यत आह प्राग्वतेरित्यादि। गतार्थम्।

८७। रात्र्यहःसंवत्सराच्च।

द्व्यह्नीन इति। अह्नष्टखोरेवेति (६।४।१४५) टिलोपः। विभाषानुवर्त्तते। तेन व्यवस्थितविभाषात्वान् न टञ् भविष्यति। द्वैयह्निकः। त्रैयह्निक इति। न य्वाभ्यामित्यादिनैजागमः (७।३।३)। वृद्धिप्रतिषेधश्च।

८८। वर्षाल्लुक् च।

भाविनि तु त्रैवर्षिक इति। तत्र ह्यभविष्यतीति (७ ३।१६) वचनात्। इहादि वृद्धिरेव भवति।

८९। चित्तवति नित्यम्।

यदि चित्तवति प्रत्ययार्थे नित्यं लुग् भवति वर्षस्याभविष्यतीत्यत्र (७।३।१६) यदक्ष्यति द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्य इति तद्विरुध्यते। नहि। नित्ये लुक्यधीष्टभृतयोरुत्पन्नस्य प्रत्ययस्य चित्तवत्यभिधेय एवं रूपमुपपद्यते। नैष दोषः। भृत एवास्योत्पन्नस्य प्रत्ययस्य चित्तवति नित्यं लुगिष्यते। न सर्वत्र। कुत एतत्? नित्यग्रहणात्। इह नित्यग्रहणमनर्थकमेव। आरम्भसामर्थ्यादेव नित्यो लुग् भविष्यतीति किं नित्यग्रहणेन? तत् क्रियते विशिष्टेऽर्थे नित्यो लुग् यथा स्यादित्येवमर्थम्। स पुनर्विशिष्टो भृत एव।

९०। षष्टिकाः षष्टिरात्रेण पच्यन्ते।

बहुवचनान्तस्य निर्देशाद्बहुवचन एव षष्टिकशब्दस्य साधुत्वम्। नान्यत्रेति यश्चोदयेत् तं प्रत्याह बहुवचनमतन्त्रमिति। अप्रधानमित्यर्थः। अप्रधानत्वं तु तस्य नान्तरीयकत्वाद्। अवश्यं हि येन केनचिद्वचनेन निर्देशः कर्त्तव्यः। यद्येवमेकवचनेन निर्देशः कस्मान्न कृतः? एवं हि लघुर्भवति। सत्यम्। वैचित्र्यार्थं बहुवचनेन कृतः। यदि षष्टिरात्रेण पच्यन्त इत्यस्मिन्नर्थे एतन्निपातनं मुद्गादिष्वतिप्रसङ्गः। तेऽपि हि षष्टिरात्रेण पच्यन्त इत्यत आह संज्ञैषेत्यादि। धान्यविशेष एव हि षष्टिकशब्दः संज्ञात्वेन रूढः। तेनानभिधानाद् मुद्गादिष्वतिप्रसङ्गो न भवति।

९१। वत्सरान्ताच्छश्छन्दसि।

९२। संपरिपूर्वात् ख च।

९३। तेन परिजय्यलभ्यकार्य्यसुकरम्।

परिजय्य इति। परिः सर्वतोभावे। शक्यार्थे कृत्यः। सर्वतः शक्यो जेतुं परिजय्यः। लभ्य इति कार्य्यं इति। अत्रापि शक्यार्थ एव कृत्यो। मासेन शक्यो लभ्यो मासिकः पटः। मासेन शक्यं कर्त्तुं सुकरं वा मासिकं

चान्द्रायणम् । तेन निर्वृत्तं (५।१।७९) तमधीष्ट (५।१।८०) इति विभक्तिद्वये प्रकृते पुनस्तेनेति तृतीयोपादानं द्वितीयानिवृत्त्यर्थम् ।

## ९४ । तदस्य ब्रह्मचर्य्यम् ।

द्वाभ्यामपि सम्बध्यत इति । समर्थविभक्त्या प्रत्ययार्थेन च । कथं सम्बध्यत इत्याह कालस्येत्यादि । इह हि द्वितीयात्यन्तसंयोगे । सा हि यः कालस्य व्यापकस्तमपेक्षते । नान्तरीयकत्वात् । नहि तेन विना ऽत्यन्त-संयोग उपपद्यते । ब्रह्मचर्य्यञ्च कालस्य व्यापकमिति । व्यापकमिति । व्यापकमपेक्षमाणायां विभक्तौ ब्रह्मचर्य्यसम्बन्धो भवति । कथं प्रत्ययार्थेन सम्बध्यत इत्यत आह प्रत्ययार्थस्य च स्वमिति । प्रत्ययार्थः प्रतियोगि वस्तु स्वमपेक्षते । प्रकृतत्वाच्च ब्रह्मचर्य्यस्यैव प्रतियोगित्वं विज्ञायते । तद्धि तस्य स्वं भवति । अतः प्रतियोग्यपेक्षायां प्रत्ययार्थस्यापि ब्रह्मचर्य्येण सम्बन्धो भवति । पूर्ववेत्यादिना पूर्वोत्तरयोर्वृत्त्योर्विशेषं दर्शयति । किं पुनरत्र प्रमाणमित्याह द्वयमपीत्यादि । कथं पुनर्द्वयमपि प्रमाणमित्याह उभयथे-त्यादि । उभयस्मिन्नपि ह्यर्थे सूत्रमेतदाचार्य्येण प्रणीतम् । द्वयमपि प्रमाणम् । महानाम्न्यादिभ्य इति । ब्रह्मचर्य्ये एवार्थे इदमुपसंख्यानम् । तच्चरतीत्यादि । तदिति द्वितीयासमर्थेभ्यो महानाम्न्यादिभ्यः शब्देभ्य-श्चरतीत्येतस्मिन्नर्थे इदं ठञ उपसंख्यानम् । तत्सहचरितं व्रतं तच्छब्देनोच्यत इति । भवति हि साहचर्य्यात् ताच्छब्द्यं यथा यष्टीः प्रवेशयेति । अथ ऋच एवोच्यन्त इत्येवं कस्मान्न विज्ञायते ? चरणार्थस्यायोगात् । ब्रह्मचर्य्यं हि चर्य्यते । चतुर्मासाण्णो यज्ञ इत्यादि । चतुर्मासशब्दात् तत्रेति सप्तमीसमर्थाद् भव इत्येतस्मिन्नर्थे यज्ञे विषये ण्यो वक्तव्यः । संज्ञायामण् वक्तव्य इति । चतुर्मासाद्भव इत्येतदपेक्षते । इदञ्च यज्ञादन्यत्रोपसंख्यानम् । ननु च तत्र भव (४।३।५३) इत्यनेनाण् भवत्येव । किमर्थमुपसंख्यायते ? सत्यमस्ति । तस्य तु द्विगोर्लुगनपत्य इति (४।१।८८) लुक् प्राप्नोति । अतो लुग्बाधनार्थं तस्योपसंख्यानम् ।

## ९५। तस्य च दक्षिणा यज्ञाख्येभ्यः।

अथाख्याग्रहणं किमर्थम्? न यज्ञेभ्य इत्युच्येतेत्यत आह आख्याग्रहणमित्यादि। यज्ञनामधेयमात्रादकालवाचिनोऽपि प्रत्ययो यथा स्यादित्येवमर्थमाख्याग्रहणमिति। इतरथा ह्येत्यादि। यद्याख्याग्रहणं न क्रियेतेत्यर्थः। ननु चैकाहद्वादशाहादयो नैव कालशब्दाः। तत् कुतस्तेषामेवात्र ग्रहणप्रसङ्गः? अथाकालवाचिनामप्येषां ग्रहणं सम्भवति? एवं सत्यग्निष्टोमादीनामपि भविष्यतीत्यपार्थकमाख्याग्रहणमित्यत आह प्राग्वतेरित्यादि। यद्यप्येते कालशब्दा न भवन्ति तथापि प्राग्वतेः संख्यापूर्वपदानां तदन्तविधिरभ्यनुज्ञातः। तेन सत्यपि कालाधिकारेऽप्यस्ति तेषु ग्रहणप्रसङ्गः। तथाच तत्र वचनस्य चरितार्थत्वादग्निष्टोमादिभ्यो न स्यात्। तेभ्योऽपि यथा स्यादित्याख्याग्रहणम्। ननु चैवमपि सूत्रमनर्थकम्। या ह्यग्निष्टोमस्य दक्षिणा साप्यग्निष्टोमे भवति। तत्र बह्वचोऽन्तोदात्तात् ठञ् (४।३।६७) क्रतुयज्ञेभ्यश्चेत्येव (४।३।६८) ठञ् सिद्धः। इदमपि सूत्रं ठञर्थमेवारभ्यते। सत्यमेतत्। किन्तु भवार्थे तस्येदमिति (४।३।१२०) विवक्षिते तदा परत्वादणादयः स्युरिति युक्तं विधानम्। अपि च यज्ञाख्येभ्यस्तेन ठञिष्यते। ग्रहणवता प्रातिपदिकेन तदन्तविध्यभावात् संख्यापूर्वपदेभ्यष्ठञ् न लभ्येत द्वयोर्वाजपेययोर्भवा दक्षिणा द्वैवाजपेयिकीति। अनेन च विधानेन प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति ठञ् ( ५।१।२०, वा ) सिद्धो भवति। अथापि कथञ्चित् तदन्तविधिर्भवार्थे लभ्यते तथापि द्विगोर्लुगनपत्य इति ( ४।१।८८ ) लुक् प्रसज्येत। तस्माद् युक्तः सूत्रारम्भः।

## ९६। तत्र च दीयते कार्य्यं भववत्।

यथा मासे भवं मासिकमित्यादि। कालाट् ठञिति (४।३।११)। प्रावृषेण्यमिति। प्रावृष एण्यः (४।३।१७)। वासन्तं शारदमिति। सन्धिवेलादिसूत्रेणाण् (४।३।१६)। हैमनमिति। हेमन्ताच्चेति (४।३।२१)। सर्वत्राण् च तलोपश्चेति (४।३।२२)। वतिः सर्वसादृश्यार्थः। कालेभ्यो भववदित्यत्रैतद्व्याख्यातम् (४।२।३४)। तत एवानुगन्तव्यम्। चकारः काला-

दित्यनुकर्षणार्थः । तेन चानुकृष्टत्वादुत्तरत्र नानुवर्त्तते । अत आह कालाधिकारस्य पूर्णोऽवधिरित्यादि । ननु च यन्मासे दीयते कार्य्यं च तन्मासे भवति । मासाधारत्वात् तत्सत्तायाः । ततस्तत्र भव इत्यनेनैव (४।३।५३) सिद्धमिति किमतिदेशेन ? एवं तेन सत्यपि भवत्यर्थे कार्य्यदीयमानयोः कार्य्यतां दीयमानताञ्च कालान्तात् तैः प्रत्ययैरपि ख्यापयितुमतिदेशः । किञ्चानेन च तत्र भवानामपि न । तेन सति तस्मिंस्तदन्तविधेरिष्टत्वाद् द्वयोर्मासयोर्दीयते कार्य्यं वा द्वैमासिकमिति । अथापि कथञ्चिद् भवार्थेऽपि तदन्तविधिर्गृह्यत एवमपि द्विगोरिति ( ४।१।८८ ) लुक् स्यात् । ननु चात्रापि विधाने सत्यतिदेशादेव लुक् प्राप्नोति । वचनसामर्थ्यात् प्रत्ययमात्रस्यातिदेशो विज्ञास्यते । न सर्वकार्य्याणामित्यदोषः ।

## ६७ । व्युष्टादिभ्योऽण् ।

व्युष्टशब्दोऽयं कालशब्दः । तत्साहचर्य्यान्नित्यशब्दोऽपि कालशब्द एव गृह्यते । नाकाशादिवचनः । तेन तत्र सप्तम्यपवादः कालाध्वनोरत्यन्तसंयोग इति (२।३।५) द्वितीया भवति । तेन सप्तम्यधिकारेऽपि नित्यशब्दाद् द्वितीयासमर्थादेव प्रत्ययः । नित्यं दीयते नैत्य । सर्वकाले दीयत इत्यर्थः । अण्प्रकरण इत्यादि । यदेतत् कात्यायनेनोक्तमण्प्रकरणे ऽग्निपदादिभ्य उपसंख्यानमित्येतन्न वक्तव्यम् । कथं तर्ह्यण् स्यात् ? व्युष्टादिष्वेवाग्निपदादयः पठितव्याः । अथाण्ग्रहणं किमर्थं यावता भववदित्येतदिहानुवर्त्तते (५।१।९६) ? तेनैवात्राणपि भविष्यति । नैवं शक्यम् । एवं हि सति व्युष्टनित्यशब्दाभ्यां कालाट् ठञिति (४।३।११) ठञ् स्यात् । नैष दोषः । तत्र पुनरारम्भसामर्थ्याद् य ठञा बाधितः स एव भविष्यति । कः पुनरसौ ? अणेव । एवमपि तीर्थशब्दाद् हरजृदन्नाह्मणादि-( ४।३।७२ ) सूत्रेण ठग् विहित इति तत ठगेव स्यात् । ये चात्र प्रवेशनादयोऽन्तोदात्तास्तेभ्य ठञ् स्याद् बह्वचोऽन्तोदात्तात् ठञिति (४।३।६७) । तेभ्यो भवार्थे ठञो विहितत्वात् । तस्मादण्ग्रहणं कर्त्तव्यम् ।

९८। तेन यथाकथाचहस्ताभ्यां णयतौ।

यथासंख्यं नेष्यत इति। अल्पाच्तरस्य हस्तशब्दस्य परनिपातो लक्षण-व्यभिचारस्य वचनहेतुः। तृतीयार्थमात्रत्वात्र सम्भवतीति। तृतीयार्थस्य गम्यमानत्वात्। तथाहि यथाकथाच दत्तमित्युक्ते ऽनादरेण दत्तमिति गम्यते। नतु तृतीया समर्थविभक्तिरिति। यथाकथाचशब्दस्य वाक्यत्वात्। प्रत्ययस्तु वचनसामर्थ्याद् वाक्यादपि भवत्येव।

९९। सम्पादिनि।

गुणोत्कर्षः सम्पत्तिरिति। सम्पादिनीत्यत्र प्रकृतिभागस्यार्थमाचष्टे। पूर्वावस्थाया गुणातिरेको गुणोत्कर्षः। आवश्यके णिनिरिति। अवश्यं सम्पद्यत इत्यावश्यकाधमर्ण्ययो र्णिनिः (३।३।१७०)। विशेषतः शोभत इति। शोभनाख्यस्य गुणस्य पूर्वावस्थाया उत्कर्षादतिरिच्यमानत्वात्।

१००। कर्मवेषाद् यत्।

कर्म्मण्यमिति। ये चाभावकर्मणोरिति (६।४।१६७) प्रकृतिभावः।

१०१। तस्मै प्रभवति सन्तापादिभ्यः।

सक्तुमांसौदनाद् विगृहीतादपीति। अपिशब्दात् सङ्घातादपि। साक्तु-मांसौदनिकः। साक्तुकः। मांसिकः। औदनिकः।

१०२। योगाद् यच्च।

१०३। कर्मण उकञ्।

१०४। समयस्तदस्य प्राप्तम्।

अथ किमर्थं तदिति समर्थविभक्तिर्निर्दिश्यते? यावता समय इति निर्देशादेव सा दृश्यत इत्यत्राह समर्थविभक्तिनिर्देश उत्तरार्थ इति। ऋतोरणित्येवमादौ (५।१।१०५) प्रथमासमर्थाद् यथा स्यादिति। उत्तरार्थश्च क्रियमाणोऽत्रापि विस्पष्टार्थो भविष्यतीत्यत्रैव कृतः। नोत्तरत्र।

## १०५ । ऋतोरण् ।

वसन्तोऽस्य पुष्पादे ऋतुः प्राप्तः । स तस्य जनकत्वात् प्रयोजको भवतीति प्रयोजनमिति (५।१।१०९) ठञि प्राप्ते सत्ययमणारभ्यते ।

## १०६ । छन्दसि घस् ।

घसः सकारः सिति चेति (१।४।१६) पदसंज्ञार्थः । तेन पदत्वेन भत्वे निरस्त ऋत्विय इति । अत्रोर्गुण इति (६।४।१४६) गुणो न भवति ।

## १०७ । कालाद् यत् ।

## १०८ । प्रकृष्टे ठञ् ।

प्रकृष्टमिति । नपुंसके भावे क्तः । कालस्य दीर्घत्वमिह प्रकृष्टशब्देनोच्यते । अथ ठञ्ग्रहणं किमर्थम् ? यावता प्रकृत एव ठञ् । तत्र प्रकृष्टमित्येतावदेव वक्तव्यमित्याह ठञ्ग्रहणं विस्पष्टार्थमिति । असति हि ठञ्ग्रहणे यतोऽनन्तरत्वात् स एव विधीयत इति कस्यचिद् भ्रान्तिः स्यात् । तस्मान्मन्दबुद्धिं प्रवक्तारं प्रति विस्पष्टार्थं ग्रहणम् ।

## १०९ । प्रयोजनम् ।

प्रयोजयतीति प्रयोजनम् । कृत्यल्युटो बहुलमिति (३।३।११३) कर्त्तरि ल्युट् ।

## ११० । विशाखाषाढादण् मन्थदण्डयोः ।

ठञपवादो योगः । मन्थोऽवच्चारो विलोडनदण्डो वा । (G)

## १११ । अनुप्रवचनादिभ्यश्छः ।

विशिपूरीत्यादि । विश प्रवेशने । पूरी आप्यायने । पत्ल गतौ । रुह बीजजन्मनि । एताः प्रकृतयो यस्यानस्य युवोरनाकाविति (७।१।१) युस्थाने विहितस्यान स्तस्माद् विद्यमानपूर्वपदाच्छ उपसंख्येयः । केवलस्यानस्य सपूर्वपदत्वं न सम्भवतीति तस्य शब्दस्येदं विशेषणं विज्ञायते । गृहप्रवेशनं

(G) अवच्चारो नाम विलोडनदण्डस्यैवाधारभूतः काष्ठविशेषः ;

प्रयोजनं यस्य तत्र गृहप्रवेशनशब्दो विशिप्रकृत्यनन्तः। गृहशब्देन च स-पूर्वपदः। यदि तर्हि विश्यादिप्रकृत्यनन्ताच्छब्दाच्छ उपसंख्यायते ऽनुप्रवचनादिषु संवेशनारोहणादीनां पाठोऽनर्थकः। तस्यैव प्रपञ्चार्थत्वात्।

## ११२। समापनात् सपूर्वपदात्।

अथ पदग्रहणं किमर्थम्? सपूर्वादित्येवोच्येतेत्यत आह पदग्रहणमित्यादि। असति हि पदग्रहण ईषदसमासं समापनं बहुसमापनं तत् प्रयोजनमस्येति तत्रापि प्राप्नोति। भवति ह्ययं समापनशब्दः सपूर्वः। पदग्रहणे तु सति न भवति। बहुच्प्रत्ययस्यापदत्वात्।

## ११३। ऐकागारिकट् चौरे।

चौरे नियमार्थमिति। प्रकृतत्वाच्च ठञ एव। एवं ब्रुवता ठञन्तमेतन्निपात्यत इत्युक्तं भवति। ननु च टकारानुबन्ध एवमर्थमासज्यते ङीब् यथा स्यादिति। स चात्र ठञन्तत्वादेव सिद्धः। तत् किमर्थं टकार इत्यत आह टकार इत्यादि। असति हि टकारे यथा ङीब् भवति तथा ञित्स्वरोऽपि। आद्युदात्तत्वं स्यात्। कार्य्यावधारणार्थं ष्टकारः क्रियते। तेन ङीबेव भवति। न ञित्स्वरः। अपर इकट्प्रत्ययं वृद्धिञ्च निपातयन्तीति। तेषां ङीबर्थएव टकारः। एकशब्दोऽसहायार्थः। स चासहायवाची द्रष्टव्यः। असहायग्रहणं चौरस्य स्वार्थे। नतूपलक्षणं प्रयोजनम्।

## ११४। आकालिकडाद्यन्तवचने।

आदिर्जन्म। अन्तो विनाशः। तयोर्वचनमाद्यन्तवचनम्। तस्मिन् सत्येतन्निपातनम्। समानकालावाद्यन्तावस्येति। ननु चोत्पादनविनाशयोर-यौगपद्यात् समानकालत्वं न सम्भवति। नह्यनेन जन्मनाशयोरेककालता प्रतिपद्यते। किं तर्हि? विद्युदादेरनवस्थायित्वप्रदर्शनपरत्वादस्येत्यत आह उत्पादानन्तरं विनाशीत्यर्थ इति। आकालाट् ठंश्चेति। यदा ठं स्तदा ऽकालिका। यदा ठञ् तदा ऽकालिकी। आकालशब्दश्चायमाङ् मर्य्यादा-

भिविध्योरित्यव्ययीभावः (२।१।१८)। आ कालादाकालम्। कुगतिप्रादय (२।२।१८) इति तत्पुरुषो वा। आवृत्तः काल आकाल इति।

## ११५। तेन तुल्यं क्रिया चेद् वतिः।

तुल्यमिति। कर्मपदमेतत्। क्रियाविशेषणत्वात्। प्रतिपादितं हि प्राक् क्रियाविशेषणानां कर्मत्वं स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेनेति सूत्रे (२।१।३९)। ब्राह्मणेन तुल्यं वर्त्तते ब्राह्मणवदिति। का पुनरत्र क्रिया? ब्राह्मणेन तुल्यं वर्त्तते क्षत्रियादिगता ऽध्ययनादिका। ननु च तस्या ब्राह्मणनिष्ठयाऽध्ययनादि-क्रिययैव तुल्यता। न च तां ब्राह्मणशब्द आह। किं तर्हि? जातिं द्रव्यं वा। नच ताभ्यां क्रियया तुल्यत्वम्। स्वभावभेदात्। यत्र हि किञ्चित् सामान्यं कश्चिद् विशेषः स विषयस्तुल्यतायाः। इह त्वत्यन्तभेद एव। नैष दोषः। यद्यपि ब्राह्मणादिशब्दैः क्रिया नोच्यते तथाप्यभिधेयसम्बन्धेन प्रतीयते यथा गुड़ इत्युक्ते गुड़ेनानभिधीयमाना अपि माधुर्य्यादयः। तत्र ब्राह्मणादिशब्देन योऽर्थ उच्यते तेन तुल्यत्वं क्रियाया न सम्भवति। उच्यते चेदं वचनसामर्थ्यात्। यासावभिधेयेन ब्राह्मणेन क्रिया गम्यते तया तुल्यता विज्ञास्यते। ननु च तृतीयासमर्थविभक्तिवाच्यया क्रिययैव प्रत्ययार्थक्रियाया स्तुल्यता। तस्याश्च घञन्तोऽवकाशः। तैलपाकेन तुल्यो घृतपाक इत्यादि। नैषोऽस्त्यवकाशः। धात्वर्थो हि क्रिया। सा च पूर्वापरीभूता। अथवा ऽसत्त्वभूता। नच तस्यां घञादयो भवन्ति। क्व तर्हि? तस्यैव धात्वर्थस्य धर्मे सिद्धतायामेव। धात्वर्थस्यापि घञादिस्थाया भिद्यते। तत् कथं घञादीनामर्थः क्रियेति शक्यते वक्तुम्? नच तया घञादिवाच्यसिद्धतया द्रव्यगताया स्तुल्यता। नहि द्रव्यभूतेनासत्त्वभूतस्य वस्तुतुल्यतोपपद्यत इत्यतो नास्ति वचनस्यावकाशः। यदि तर्हि क्रिया घञादिभिर्नाभिधीयते कर्त्तुं गमनं भोक्तुं पाकः कारकस्य व्रजतीति तुमुण् ण्वुलौ क्रियायां क्रियार्थायामिति (३।३।१०) तुमुण्ण्वुलौ न प्राप्नुतः। नैष दोषः। यदत्र प्रकृतिरूपं तस्य क्रियैवार्थ इति तदाश्रयौ तुमुण्ण्वुलौ भविष्यतः। यथाख्यातपद उपपदे तस्य

ह्वि क्रिया कर्म्मादयश्चार्थाः। तत्र या क्रियार्था तामाश्रित्य तुमुण्ण्वुलौ भविष्यत इत्यलमतिप्रसङ्गेन।

## ११६। तत्र तस्येव।

अथ किमर्थमिवेत्युच्यते। न वत्यर्थे सादृश्ये भविष्यति। नैतदस्ति। नहि तुल्यग्रहणं शक्यमिहानुवर्त्तयितुम्। तद्धि क्रियाविशेषणत्वात् कर्म। तत्र यदीह तस्यानुवृत्तिः स्यात् तथाभूतस्यैव स्यात्। ततश्च कर्मण्येव तुल्ये प्रत्ययः स्यात्। तथाच मथुरायामिव मथुरावत् स्रुघ्ने प्रासाद इत्यादि न सिध्येत्। तस्मादिवेति वक्तव्यम्। अक्रियार्थश्चायमारम्भः।

## ११७। तदर्हम्।

अर्हतीत्यर्हः। क्रियाग्रहणमिहानुवर्त्तते। ततोऽस्यामेवार्हणक्रियायां कर्त्तृभूतायां प्रत्ययो विधीयत इति यत्रासौ प्रत्ययार्थत्वेन विवक्ष्यते तत्र वाक्यमेव भवति ब्राह्मणमर्हतीति।

## ११८। उपसर्गाच्छन्दसि धात्वर्थे।

उपसर्गाः प्रादयः। ते चैवमात्मकाः। यत्र क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाया विशेषका भवन्ति। आगच्छति प्रगच्छतीति। यत्र न प्रयुज्यते तत्र ससाधनक्रियावाचकाः सङ्कट उत्कट इति। क्रियावाची शब्दः प्रादीनां वत्यन्तानां प्रयोगे न प्रयुज्यते। तेन साधनो धात्वर्थः स्वार्थः। तेन साधने धात्वर्थे वर्त्तमानादुपसर्गात् प्रत्ययो विज्ञायत इत्याह ससाधने धात्वर्थ इति। यदि ह्येवमात्मका उपसर्गा धात्वर्थग्रहणं न कर्त्तव्यम्। सत्यमेतत्। तत् क्रियते विस्पष्टार्थम्। उद्वतो निवत इति। उच्छब्दान् निशब्दात् ससाधने धात्वर्थे वतिः। ननु च वतेरव्ययसंज्ञकत्वाद् विभक्तेर्लुक् प्राप्नोति। स कस्मान्न भवति। अव्ययसंज्ञाया अनित्यत्वात्। अनित्यत्वन्तु तस्याः सर्वमिदं काण्डं स्वरादावपि पठ्यत इत्यादिना ऽव्ययसंज्ञाप्रकरण एव प्रतिपादितम्।

## ११९। तस्य भावस्त्वतलौ।

भवतेरनेकार्थत्वाद् भावशब्दोऽयमभिप्रायादिष्वनेकेषु वर्त्तते। तत्र न ज्ञायते कोऽत्रार्थो भावशब्देन विवक्षित इत्यतस्तत्परिज्ञानार्थमाह भवतोऽ-

स्यादिति । यस्माद् गोत्वादेर्विशेषणत्वाद् विशिष्टे गवादौ गौरित्येवमादिकः शब्दो भवति गोत्वाकारवती च बुद्धि स्तेन योऽर्थो गवादेः शब्दस्य प्रवृत्तिनिमित्तं स भावशब्देनोच्यते । तथाचोक्तम् । यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेश-स्तदभिधाने त्वतलाविति । गुण इति विशेषणमिहोच्यते । द्रव्यं विशेष्यम् । यस्य विशेषणस्य भावाद्विद्यमानत्वाद् विशिष्टे शब्दस्य निवेशः प्रवृत्तिर्भवति तदभिधाने त्वतलादयः प्रत्यया भवन्ति । तत् पुनः शब्दानां प्रवृत्तिनिमित्त-मनेकप्रकारम् । जातिशब्दानाञ्जातिरश्वत्वमिति । गुणशब्दानां गुणः शुक्लत्व-मिति । क्रियाशब्दानां क्रिया पाचकत्वमिति । केचित्तु क्रियाकारकसम्बन्धं क्रियाशब्दानां प्रवृत्तिनिमित्तमिच्छन्ति । यदृच्छाशब्दानां संज्ञासंज्ञिसम्बन्धित्व-मिति संक्षेपेनैतदुक्तम् । विस्तरेण तु भाष्यादावुक्तमिति तत एवानुगन्तव्यम् । अथ नानात्वमित्यादौ कथं प्रत्ययो भवति ? कथङ्कारं न भवितव्यम् ? षष्ठीसमर्थात् प्रत्ययविधानात् । नानेत्येवमादीनाञ्चाव्ययानां षष्ठ्यर्थेनायोगात् । अयोगस्तु तेषामसत्त्ववाचित्वात् । नैष दोषः । ससत्त्वभूतोऽप्यर्थः शब्दान्तरेण प्रत्यवमृष्टः षष्ठ्यर्थेन प्रयुज्यते । नानेत्यस्य भाव इति । तच्च प्रत्यवमृष्टार्थं वृत्तिरेव गमयतीति नानुपपन्ना षष्ठीसमर्थता ।

## १२० । आ च त्वात् ।

प्रथिमिति । तुरिष्ठेमेयस्स्विति ( ६।४।१५५ ) टेरिति ( ६।४।१५५ ) टिलोपः । र ऋतोर्हलादेर्लघोरिति ( ६।३।१६१ ) ऋकारस्य रेफः । सर्वनाम-स्थाने चासम्बुद्धाविति ( ६।४।८ ) दीर्घः । पार्थवमिति । इगन्ताच्च लघुपूर्वादि-त्यण् (५।१।१३१) । अपवादैरित्यादि । इमनिच्प्रभृतीनपवादां स्त्वतलोर्व-क्ष्यति । तैः सह तयोः समावेशः । एकविषयता यथा स्यादित्येवमर्थमिदम् । ननु च स्वरितत्वादनुवर्त्तमानावनुवृत्तिसामर्थ्यादेवापवादविषयेऽपि भविष्यतः । नैतदस्ति । अस्ति ह्यनुवृत्तेः प्रयोजनम् । किम् ? गुणवचनब्राह्मणादिभ्यः कर्मणि चेति ( ५।१।१२४) कर्मण्यपि यथा स्याताम् । इतरथा हि भावे विधीयमानौ कर्मणि न स्याताम् । कर्मणि चेत्यादि । ननु चानुवृत्ति-सामर्थ्यादेव कर्मण्यपि भविष्यतः । नैतदस्ति । अस्ति ह्यन्यदनुवृत्तेः

प्रयोजनम्। किम्? अपवादविषयेऽपि यथा स्याताम्। तस्मिंस्त्वसति न स्याताम्। अस्मिंस्तु सत्येतदुभयमपि लभ्यते। चकार इत्यादि। यदि चकारो न क्रियेत ततोऽत्रैव प्रकरणे येऽपवादास्तैरेव समावेशः स्यात्। न नञ्स्नञ्भ्याम्। तयोरन्यत्र विहितत्वात्। चकारे त्वपवादसमुच्चयार्थे सति सर्वापवादविषये त्वतलौ लभ्येते। तेन स्त्रीपुंसाभ्यामपि सिद्धौ भवतः। यद्येवमन्येष्वर्थेषु सावकाशौ नञ्स्नञौ भावे न सिध्यतः। त्वतल्भ्यां बाध्यमानत्वात्। नैष दोषः। भवनादित्यवध्युपादानसामर्थ्याद् भावेऽपि भविष्यतः। इतरथा हि भावमेव विधित्वेनोपाददीत।

## १२१। न नञ्पूर्वात् तत्पुरुषादचतुरसङ्गतलवणवटबुधकतरसलसेभ्यः।

अधिकारोऽयम्। तेनोत्तरेषां भावप्रत्ययानां प्रतिषेधो विज्ञायते। न त्वतलोरिति मत्वाह इत उत्तरे ये भावप्रत्यया इत्यादि। ननु पृथ्वादिभ्य इमनिज् वेत्येवमादिभिर्योगैः (५।१।१२२) परिगणिताभ्य एव प्रकृतिभ्यः प्रत्ययो विधीयते। नच तत्र काचित् प्रकृति र्नञ्पूर्वा गृह्यते। नच तदन्तविधिरस्ति। ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात्। तस्मात् तत्र नञ्पूर्वात् प्राप्तिर्नास्तीति नास्यस्योपयोगः। सत्यम्। यत्र त्वन्तग्रहणं पत्यन्तपुरोहितादिभ्यो यगित्येवमादिषु (५।१।२८) योगेष्वस्ति यत्र च स्वरूपग्रहणं नास्ति योपधाद् गुरूपोत्तमाद् वुञित्येवमादिषु (५।१।१३२) तत्र नञ्पूर्वादपि प्राप्तिरस्तीति प्रतिषेधः क्रियते। अपतित्वमिति। नञ्समासे कृत उत्तरकालं पत्यन्ताद् भावविवक्षायां पत्यन्तेत्यादिना (५।१।१२८) यङ् न भवति। अपटुत्वमिति। इगन्तेत्यण् (५।१।१३१) न भवति। अरमणीयत्वमिति। योपधादित्यादिना (५।१।१३२) वुञ् न भवति। नास्य पटवः सन्तीत्यपटुरिति बहुव्रीहिरयम्। तेनास्मादिगन्तलक्षणोऽण् भवति। आपटवमिति। आचतुर्य्यमिति। ब्राह्मणादित्वात् ष्यञ्। ननु च नञ्समासा ब्राह्मणादिषु न पठ्यन्ते। तत् कुतस्तेन ष्यञ्? नैष दोषः। आकृतिगणो हि ब्राह्मणादिरिष्यते। अचतुरादिप्रतिषेध एवाकृतिग्रहणस्य ज्ञापकम्।

## १२२। पृथ्वादिभ्य इमनिज्वा।

पृथ्वादिषु य इगन्ता लघुपूर्वाः पृथुमृदुप्रभृतयस्तेषामणि प्राप्ते। ये गुणशब्दाः खण्डचण्ड इत्येवमादय स्तेषां ष्यञि। ये वयोवचना बालवत्स इत्येवमादयस्तेषां प्राणभृज्जातीत्यादिनाञि (५।१।१२९) सर्वेषामपवाद इमनिज् विधीयते। वावचनमित्यादि। आदिशब्देन ष्यञादीनामुपसंग्रहः। वाक्यार्थं तु वावचनं न भवति। महाविभाषयैव वाक्यस्य सिद्धत्वात्।

## १२३। वर्णदृढादिभ्यः ष्यञ् च।

बहुवचनं प्रत्येकमभिसम्बध्यते वर्णेभ्यो दृढादिभ्यश्चेति। तेन बहुवचननिर्देशाद् वर्णशब्देन वर्णवाचिनां ग्रहणमिति विज्ञायते। न स्वरूपस्य। स्वरूपग्रहणे तु वर्णशब्दमपि दृढादिषु एवाधीयीत। वर्णशब्दश्च गुणविशेषस्य वाचको न ब्राह्मणादीनाम्। कुतः? दृढादिभि र्गुणवचनैः साहचर्य्यात्। अतएवाह दृढादिभिः साहचर्य्याद् रूपविशेषा एव शुक्लादयः प्रत्ययमुत्पादयन्ति। नतु स्वरूपशब्दाः। नापि तत्पर्य्यायाः। कथम्? दृढादयो हि गुणा उपसर्जनं द्रव्ये वर्त्तन्ते। तत्साहचर्य्याद् वर्णशब्दा अपि तत्सदृशा एव गृह्यन्ते। न वर्णशब्दस्य तत्पर्य्यायाणां वा तादृशी वृत्तिरस्ति। गुणमात्रवचनत्वात्। वर्णदृढादीनां गुणवचनत्वादेव सिद्धे पुनर्वचनमिमनिजर्थम्। यद्येवं ष्यञ्ग्रहणमनर्थकम्। इमनिजेव विधेयः। स च विभाषयैव प्रकृतः। तदुच्यते। अवश्यं ष्यञ्ग्रहणमुत्तरार्थं कर्त्तव्यम्। तत्र वा क्रियत इह वेति नास्ति विशेषः। शुक्लिमेति। पूर्ववट्टिलोपः। द्रढिमेति। पूर्ववद् ऋकारस्य रभावः। औचिती याथाकामीति। षिद्गौरादिभ्यश्चेति (४।१।४१) ङीष्। हलस्तद्धितस्येति (६।४।१५०) यलोपः। वेर्यातलाभमतिमनःशारदानामिति पठ्यते। तस्यायमर्थः। विशब्दादुत्तरेषां यातादीनां प्रत्यया भवन्तीति। वियातत्वम्। वियातता। वियातिमा। वैयात्यम्। विलाभता। विलाभत्वम्। वैलाभ्यम्। विलाभिमा। विमतित्वम्। विमतिता। वैमत्यम्। विमतिमा। इगन्तादित्यण् (५।१।१३१)। वैमतम्। विमनस्त्वम्। विमनस्ता। विमनिमा। वैमनस्यम्। विशारदत्वम्। विशारदता। वैशारद्यम्। विशारदिमा।

समो मतिमनसोरिति। सम उत्तरयोर्मतिमनसोः प्रत्ययो भवति। संमतिता। संमतित्वम्। संमतिमा। सांमत्यम्। संमनस्त्वम्। संमनस्ता। संमनिमा। सांमनस्यम्।

## १२४। गुणवचनब्राह्मणादिभ्यः कर्मणि च।

तस्येदमिति (४।३।१२०) शैषिकेषु प्राप्तेषु कर्मणि ष्यञ्विधानम्। चकाराद् भावे च। कर्मशब्दः क्रियावचन इति साधनकर्मवचनशङ्कामपाकरोति। ये हि जड़ादिशब्दा गुणशब्दा गुणवचना ब्राह्मणादयश्च तेषां साधनकर्मणा सम्बन्धो न सम्भवति। क्रियावाचकत्वाभावात्। तस्मात् क्रियाशब्द एव कर्मशब्दः। ब्राह्मणादिराकृतिगण इति। अव्रतकृतत्वात्। आदिशब्दः प्रकार इति। एवं प्रकारेभ्यः ष्यञ् भवतीत्येवमर्थमादिशब्दः प्रकारवचनत्वं बोधयति। यद्येवं गुणवचनग्रहणं प्रातिपदिकेषु च ब्राह्मणादीनामनुक्रमणमनर्थकं स्यात्। नानर्थकम्। प्रपञ्चार्थं हि तत्। स्वार्थे विधानार्थञ्च। तत्र ब्राह्मणशब्दात् प्राणभृज्जातीति (५।१।१२९) जातिवचनत्वादञि प्राप्ते तद्बाधनार्थं ष्यञ् विधीयते। माणववाड़वाभ्यां गोत्रलक्षणे वुञि। अर्हतो नुम् चेति। अस्य नुमर्थः पाठः। आर्हन्त्यम्। चोरधूर्त्ताभ्यां मनोज्ञादित्वाद्वुञि प्राप्ते। आराधय विराधय अपराधय इत्येतेभ्योऽपत्यविवक्षायां जनपदशब्दात् क्षत्रियादञ् (४।१।१६८)। तस्य कम्बोजाल्लुगिति (४।१।१७५) लुक्। ततो गोत्रवुञि प्राप्ते पाठः। एकभावादीनामन्यभावपर्य्यन्तानां स्वार्थे विधानार्थम्। अक्षेत्रज्ञ-शब्दस्य न नञ्पूर्वादिति (५।१।१२१) प्रतिषेधे प्राप्ते। प्राग् बालिशशब्दात् कुशलादीनां युवादित्वादणि प्राप्ते। बालिशशब्दो वयोवचनः। तस्माद् वयोलक्षणे ऽञि प्राप्ते। अनीश्वरशब्दस्य न नञ्पूर्वादिति (५।१।१२१) प्रतिषेधे प्राप्ते। अलस इति बहुव्रीहिः ष्यञ मुत्पादयति। तत्पुरुषात् तु न नञ्पूर्वादिति (५।१।१२१) प्रतिषेधेन भवितव्यम्। तस्य प्रपञ्चार्थः पाठः। राजन्शब्दस्य पुरोहितादित्वाद् यकि प्राप्ते। संवादिन् संवेशिन् बहुभाषिन् शीर्षघातिन् समस्थ परमस्थ दुष्पुरुष इत्येवमादीनां नञ्पूर्वार्थः पाठः। गणपति अधिपति इत्येतयोः पत्यन्तलक्षणे यकि प्राप्ते। गडुलदायाद-

विग्रस्ति इत्येतेषां त्वतलो र्निवृत्त्यर्थः। शेषाणां प्रपञ्चार्थः। गुणवचना एको राशिः। ब्राह्मणादयो द्वितीयः। ताभ्यां भावे कर्मणि यथासंख्यं प्राप्नोति। तत् कस्मान्न भवति ? ब्राह्मणादिशब्दस्याल्पाच्तरस्य परनिपातात्। स हि लक्षणे निरपेक्षतां निर्देशस्य ज्ञापयन् यथासंख्यलक्षणानपेक्षतामपि बोधयति। तेन यथासंख्यं न भवति।

## १२५। स्तेनाद् यन्नलोपश्च।

## १२६। सख्युर्यः।

दूतवणिग्भ्याञ्चेत्यादि। दूतवणिग्भ्यां यो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। पूर्वसूत्रादिह चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। दूतवणिग्भ्याञ्चेत्यादि। दूतवणिग्भ्यामपि भवति।

## १२७। कपिज्ञात्योर्ढक्।

कपिशब्दादिगन्ताच्च लघुपूर्वादित्यणि (५।१।१३१) प्राप्त इदं विधीयते। यथासंख्यमित्यादि। तत्र गुणवचनब्राह्मणादिभ्य इत्यत्र (५।१।१२४) यथासंख्याभावः प्रतिपादितः। इहापि प्रतिपाद्यते। तत्रेदं प्रतिपादनम्। अत्र चकारोऽनुवर्त्तते। स चैकस्याः प्रकृते र्भावे कर्मणि च ढग्विधिं समुच्चिनोति। तेन यथासंख्यं न भवति। अन्यथा हि समुच्चयो नोपपद्यते। अस्वरितत्वाद्वा यथासंख्यं न भविष्यति। प्रतिपादितं हि पूर्वं स्वरितत्वेन यथासंख्यं भवतीति। नचेह यथासंख्यार्थं स्वरितत्वं प्रतिज्ञायते।

## १२८। पत्यन्तपुरोहितादिभ्यो यक्।

पत्यन्तात् पूर्ववदणि प्राप्ते। पुरोहितादिषु राजशब्दाद् ब्राह्मणादिपाठात् ष्यञि। शेषेभ्यस्त्वतलोर्यग् विधीयते। राजास इति। राजशब्दादसेऽसमासे यग् भवति राज्यमिति। समासे तु ब्राह्मणादित्वात् ष्यञेव भवति। आधिराज्यमिति। ननु च केवलो राजशब्दो ब्राह्मणादिषु पठ्यते। तत् कथमधिराजशब्दात् ? तदन्तविधिना। एतदेव ज्ञापकमस इति वचनेऽस्तीह प्रकरणे राजशब्देन तदन्तविधिरिति। इह पत्यन्तपुरोहितादी इति

द्वौ रागौ। अर्थावपि भावकर्मणी द्वावेवेति साम्याद् यथासंख्यं प्राप्नोति। तदस्वरितत्वात् पूर्ववन्न भवति।

## १२९। प्राणभृज्जातिवयोवचनोद्गातादिभ्योऽञ्।

प्राणभृतः प्राणिन उच्यन्ते। तेषां जातिः प्राणभृज्जातिरित्यर्थः। तद्वाचिनो यथासंभवं त्वतलादिष्वञ् विधीयते। प्राणभृद्ग्रहणात् तृणादिशब्देभ्यो न भवति तृणत्वं तृणतेति। जातिग्रहणाद् देवदत्तादिशब्देभ्यो न भवति देवदत्तत्वं देवदत्तता। यदिगन्तं लघुपूर्वञ्च तस्मात् परत्वादण् भवति तैत्तिरमिति। वयोवचनादपि यथायोगं त्वतलादिष्वेव प्राप्तेष्वञ्विधानम्। वचनग्रहणं स्वरूपविधिनिरासार्थम्। अन्यथा वयःशब्दादेव स्यात्। तत्रोद्गात्रादिषूद्गातृ उन्नेतृ अध्वर्यु इत्येतेषामृत्विग्वचनत्वाद् होत्राभ्यश्छ इति ( ५।१।१३५ ) च्छे प्राप्ते सत्यञर्थः पाठः। सुष्ठु दुष्ठु वधू इत्येतेषां लघुपूर्वलक्षणेऽणि प्राप्ते। सुभग मन्त्र इति। सुभगशब्दो मन्त्रविषये ऽञमुत्पादयति महते सौभगाय। सर्वे विधयश्छन्दसि विकल्प्यन्त इति हृद्भगसिन्ध्वन्त ( ७।३।१९ ) इत्युत्तरपदवृद्धिर्न भवति। मन्त्र इति किम्? सौभाग्यम्। ब्राह्मणादित्वात् ष्यञ्। शेषाणामिह पाठ स्त्वतलोः प्राप्तयोः।

## १३०। हायनान्तयुवादिभ्योऽण्।

हायनान्तात् त्वतलोः प्राप्तयोरण्विधानम्। ननु च तस्येदमित्यनेन (४।३।१२०) हायनान्तादण् सिद्धः। न सिध्यति। परत्वात् त्वतल्भ्यां बाध्यते आषाढ़हायनस्य भावः कर्म वा ऽषाढ़हायण इति। वृद्धाच्छः (४।२।११४) प्रसज्येत। तस्माद् युक्तं हायनान्तादण्विधानम्। यौवनमिति। अन्निति (६।४।१६७) प्रकृतिभावः। युवादिषु युवशब्दस्य वयोलक्षणं बाधित्वा मनोज्ञादित्वाद्वुञि प्राप्ते पाठः। स्थविरशब्दस्य वयोलक्षणेऽञि। होतृशब्दस्याप्युद्गात्रादित्वादञेव। पुरुषास इति। पुरुषशब्दादसमासेऽण् भवति पौरुषम्। अस इति किम्? राजपुरुषत्वम्। अस्य प्राणभृज्जात्यप्राप्ते (५।१।१२९) पाठः। कमण्डलुशब्दस्येगन्तत्वादेवाणि सिद्धे त्वतलोर्बाधनार्थः पाठः। हृदयास इति। हृदयशब्दादसमासेऽण् भवति हार्दम्। हृदयस्य हृल्लेखयदण्लासेष्विति

(६।३।५०) हृद्भावः। अस इति किम्? परमहृदयत्वम्। कुशलादीनां चैत्रस्रपर्यन्तानां ब्राह्मणादित्वात् ष्यञि प्राप्ते पाठः। शेषाणान्तु त्वतलौ। ननु च ग्रहणवता प्रातिपदिकेन तदन्तविधेरभावात् समासादण्प्राप्तिरेव नास्ति। तदपार्थकः पुरुषासे हृदयास इति च प्रतिषेधः। नापार्थकः। एषा हि विषयसप्तमी। समासे चिकीर्षिते विषयभूत एव पुरुषशब्दहृदयशब्दाविति। यदि प्रतिषेधो नोच्येत ततो नञ्समासस्य भावप्रत्ययस्य चाणो युगपत् प्रसङ्गे परत्वादणेव स्यात्। प्रतिषेधात्तु समास एव तावद्भवति। ततो यस्य भावप्रत्ययस्य निमित्तमस्ति स उत्पद्यते। कश्चासौ? त्वतलौ। अपुरुषत्वम्। अपुरुषता। अहृदयत्वम्। अहृदयता। इह हायणान्त एकराशिः। युवादिर्द्वितीयः। अर्थावपि द्वावेव भावकर्मणी। तेन सामर्थ्याद् यथासंख्यं प्राप्नोति। तदल्पाच्तरस्य युवादिशब्दस्य परनिपातलक्षणव्यभिचारचिह्नान्न भवति। अस्वरितत्वाद्वा।

## १२१। इगन्ताच्च लघुपूर्वात्।

इगन्तादिति। इक् अन्तो यस्येति बहुव्रीहिः। प्रातिपदिकमन्यपदार्थः। लघुपूर्वग्रहणेत्यादि। अथेगेव कस्मान्न विशेष्यते? तस्य बहुव्रीह्यर्थे गुणभूतत्वाद् विशेषणेन सम्बन्धस्य कर्त्तुमशक्यत्वात्। पूर्वशब्दोऽयं व्यवस्थाशब्दत्वादपरमपेक्षते। इह चापरस्यानिर्दिष्टत्वान् न ज्ञायते कुतो लघुः पूर्वः। तत्परिज्ञानाय पृच्छति कुतः पुनरसौ लघुः पूर्व इति। प्रत्यासत्तिन्यायमाश्रित्याह सन्निधानादित्यादि। सन्निधानं त्विह सूत्रयिकः। श्रुतत्वात्। तेनेति। अन्तभूतेन लघुपूर्वेणेकान्तग्रहणमतिरिच्यत इति। निष्फलत्वात्। यतो हि लघुपूर्वादित्युक्ते च प्रातिपदिकस्य तदन्तविधौ सति सामर्थ्यादेव तस्यान्तत्वं लभ्यत इत्यपार्थकमन्तग्रहणमस्मिन् व्याख्याने। पूर्वके तु विधाने ऽन्तग्रहणेऽसति लघुपूर्वेग्वत इत्येव विधिनिर्देशो विज्ञायते। ततश्चानन्तस्यापीको विधित्वं स्यात्। तदा लशुनलकुटप्रभृतिभ्योऽपि प्रत्ययप्रसङ्ग इत्येवमर्थमन्तग्रहणम्। कथं काव्यमिति। अन्यथा भवितव्यं कविशब्दस्य लघुपूर्वेगन्तत्वादित्यभिप्रायः।

## १३२। योपधाद् गुरूपोत्तमाद् वुञ्।

त्वतलादिषु प्राप्तेषु वुञ् विधीयते। उत्तमशब्दोऽयमिहाव्युत्पन्नम् प्रातिपदिकं गृह्यते। तत् स्वभावात् त्रिप्रभृतीनामन्त्यमाहेति मत्वाह त्रिप्रभृतीनामन्त्यमित्यादि। तमप्प्रत्ययान्तस्य तु ग्रहणे सत्यणिञोरनार्षयोरित्यादौ सूत्रे (४।१।७४) यो दोष उक्तः स इहापि तदनुसारेण वेदितव्यः। उत्तमस्य समीपमुपोत्तमम्। अव्ययं विभक्तिसमीपेत्यव्ययीभावः (२।१।६)॥

## १३३। द्वन्द्वमनोज्ञादिभ्यश्च।

द्वन्द्वात् त्वतलादिषु प्राप्तेषु वुञ् विधीयते। मनोज्ञादिषु यो गुणवचनस्तस्मात् ष्यञि। चौरधूर्त्तशब्दाभ्यामपि ब्राह्मणादित्वात् ष्यञेव। युवञ्शब्दाद् युवादित्वादणि। शेषेभ्यस्त्वतलोः। अमुष्यपुत्त्र इति। निपातनाद् विभक्तेरलुक्। इह द्वन्द्वमनोज्ञादी द्वौ राशी। प्रत्ययार्थावपि भावकर्मणी द्वावेवेति यथासंख्यं प्राप्नोति। तत् पूर्ववदस्वरितत्वान्न भवति। अथवा चकारोऽत्र समुच्चयार्थः क्रियते। तस्य चान्यत् समुच्चेतव्यं नास्तीति वुञ्विधिमेव प्रत्येकं भावकर्मणोः समुच्चिनोति। तेनैकस्माद्राशेर्भावे कर्मणि च वुञ् भवति। नतु यथासंख्यम्। अन्यथा हि समुच्चयो नोपपद्यते।

## १३४। गोत्रचरणाच् श्लाघात्याकारतदवेतेषु।

अपत्यनिमित्ता समाख्या गोत्राख्या। सा च प्रवराध्याये पठ्यते। या च वेदाध्ययनप्रयुक्तान् पुरुषानाचष्टे सा चरणशब्दस्याख्या। गोत्रञ्च चरणैः सहेति पारिभाषिकं गोत्रचरणयोर्जातित्वमिति प्राणभृज्जातीत्यादिनाऽञि (५।१।१२९) प्राप्ते वुञो विधानम्। इह गोत्रचरणवाचिनी द्वे प्रातिपदिके। अर्थावपि द्वावेव। तत्र यथासंख्यं प्राप्नोति। तत् पूर्ववदस्वरितत्वान्न भवति। अतएवाह प्रत्येकं भावकर्मणोरर्थयोरिति। श्लाघादिषु विषयभूतेष्विति। प्रत्ययार्थतां प्रत्ययार्थविशेषणताञ्च श्लाघादीनां निरस्यति। न तावत् प्रत्ययार्थता श्लाघादेर्युज्यते। भावकर्मणोः प्रत्ययार्थयोरधिकृतत्वात्। नापि प्रत्ययार्थविशेषणम्। ये भावकर्मणोः श्लाघादयस्ते भवत इति। तथाहि न भावः श्लाघादीनामन्यतमोऽपि भवितुमर्हति। शब्दप्रवृत्तिनिमित्तं भावः। न च

गोत्रचरणशब्दानां श्लाघादयः प्रवृत्तिनिमित्तं भवति । कर्मापि नैव श्लाघादिस्वभावं भवति । नहि गोत्रचरणानां श्लाघादयः कर्मतया रूढ़ा यथाग्ने श्लापादयः । क्रियारूपत्वात् तेषाम् । साध्यतया व्यवस्थितानां सत्त्वधर्मौ भावकर्मणी प्रतिविषयाभावे उपपद्येते । तस्माच् श्लाघादिषु साध्यतया भावकर्मणोः प्रत्ययार्थतया विषयभूतेषु वुञ् भवति । तदवेतस्तत्प्राप्त इति । इणोऽत्र गत्यर्थत्वात् । तज्ज्ञातो वेति । अवपूर्वस्येणो ज्ञानेऽपि वृत्तिसम्भवात् । तच्छब्देन चेह गोत्रचरणयोः सम्बन्धिनी भावकर्मणी प्रतिनिर्दिश्येते । गार्गिकयेति । आपत्यस्य च तद्धिते ऽनातीति (६।४।१५१) यलोपः ।

## १३५ । होत्राभ्यश्छः ।

त्वतलोः प्राप्तयोश्छो विधीयते ।

## १३६ । ब्रह्मणस्त्वः ।

नेति वक्तव्य इति । छप्रत्ययेऽप्यपवादे प्रतिषिद्धे त्वप्रत्ययः । तस्य भावस्त्वतलावित्येव (५।१।११९) सिध्यति । तस्मान्नेत्येव वक्तव्ये यदेतद्वचनं तत्त्वेन तलो बाधनं यथा स्यादित्येवमर्थम् । यदि नेत्युच्यते तदा छे प्रतिषिद्धे यथा त्वो भवति तथा तलपि स्यात् । त्ववचने तु तलो बाधा सिद्धा भवति ।

इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां पञ्चमाध्यायस्य
प्रथमः पादः समाप्तः ॥ ५।१ ॥

---

अथ

# काशिकाविवरणपञ्जिका।

## पञ्चमाध्यायस्य द्वितीयः पादः।

---

### १। धान्यानां भवने क्षेत्रे खञ्।

भवन्ति जायन्तेऽस्मिन्निति भवनमित्यधिकरणे ल्युट्। जायन्त उत्पद्यन्त इत्यर्थः। एतेनोत्पत्तिवचनो भवतिरत्र गृह्यते। न सत्तावचनः। तस्य हि ग्रहणे सत्यन्यत्र चोत्पन्नानां यत्र स्थापनं पश्चाद् यत्र स्थाप्यन्ते तत्रापि प्रसज्येत। यदि तर्ह्युत्पत्तिवचनो भवति गृह्यते क्षेत्रग्रहणमनर्थकं स्यात्। तत्र मुद्गानां भवनं कुसूल इत्यत्र मा भूदित्येवमर्थं क्रियते। नचोत्पत्तिवचनस्य भवते र्ग्रहणे सति कुसूले प्रसङ्गः। नह्यसौ मुद्गादीनामुत्पत्तेरधिकरणम्। किं तर्हि? सत्तायाः। नैतदस्ति। सति हि क्षेत्रग्रहणे भवतिरुत्पत्तिवचनो भवति। कथम्? क्षेत्रशब्दो ह्ययं धान्यानामुत्पत्त्याधारमाचष्टे। तेन तस्य ग्रहणे सति सत्तां प्रति न भूमिः क्षेत्रव्यपदेशमासादयतीति युक्तं तदुत्पत्तौ भवतिर्वर्त्तत इति। क्षेत्रग्रहणे त्वसति भवतिः सत्तावचनोऽपि गृह्यते। तथा कुसूलेऽपि प्रसज्येत। अपिच भवनशब्दो रूढ्या गृहवचनोऽप्यस्ति। सोऽपि क्षेत्रशब्देन निवर्त्त्यत इति। अथ कथं षष्ठी समर्थविभक्तिरुपादीयते? यावता तस्य भावस्त्वतलावित्यतः (५।१।११९) षष्ठीसमर्थविभक्तिरनुवर्त्तत इति तथैव सिद्धम्। एवं तर्ह्येतज् ज्ञापयति पूर्वे प्रत्यया नावश्यं षष्ठीसमर्थाद् भवन्तीति। तेन होत्राभ्यश्छ इति (५।१।१३५) होत्रायाः प्रथमासमर्थायाः स्वार्थे छः सिद्धो भवति होत्रैव होत्रीयमिति। एवञ्च चतुर्व्वर्णादिभ्यः प्रथमासमर्थेभ्यः स्वार्थे ष्यञ् सिद्धो भवति।

२ । व्रीहिशाल्योर्ढक् ।

३ । यवयवकषष्टिकाद् यत् ।

४ । विभाषा तिलमाषोमाभङ्गाणुभ्यः ।

खञि प्राप्ते वचनं पक्षे सोऽपि भवतीति । युक्तं यत् पक्षे तिलमाषाणुभ्यः खञ् भवतीति । तेषां धान्यत्वात् । उमाभङ्गयोस्त्वधान्यत्वात् खञ् पाक्षिको न युक्तः । यदेव हि तिलाश्च मे यवाश्च म इत्यादिषु वेदवाक्येषु (A) पठ्यते तदेव धान्यम् । यवादय एव मन्त्रे पठ्यन्ते । नोमाभङ्गे । यदि तयोरपि धान्यत्वं स्यात् ते अपि पठ्येयाताम् । ततोऽवगम्यते न तयोर्धान्यत्वम् । एवञ्च न खञस्ताभ्यां प्राप्तिरस्ति । यतः सोऽपि पक्षे स्यादित्येवाह उमाभङ्गयोरित्यादि । शणसप्तदशमुद्गानि धान्यानीति स्मृतिः (B) । तत्र शणादिषु मध्य उमाभङ्गे अपि धान्यत्वेन संख्यायेते इति तयोर्धान्यत्वमाश्रितमेव । यस्तु पुनर्वेदे तयोरपाठः स वैदिककर्मण्यनुपयोगात् । अतो न तत्रापाठादधान्यत्वमित्यभिप्रायः ।

५ । सर्वचर्मणः कृतः खखञौ ।

इह कृतः प्रत्ययार्थः । तत्र चर्मणः करणत्वं स्यात् । कर्तृत्वं वा । तत्र यदि करणत्वं तदा नियतं करणलक्षणया तृतीयया भवितव्यम् । अथ कर्तृत्वमेव न लोकेत्यादिना (२।३।६९) षष्ठ्यां प्रतिषिद्धायां कर्तृलक्षणा तृतीयैव । तस्मात् प्रत्ययार्थसामर्थ्यलभ्या तृतीया समर्थविभक्तिरिति मत्वाह तृतीयासमर्थादिति । स च सर्वचर्मण इति निर्देशः सर्वशब्दस्य चर्मशब्देन समासं कृत्वा कृतः । ततश्चर्मणैवास्य सम्बन्धो न ह्यन्यथा समास उपपद्यत इति यो मन्यते तं प्रत्याह सर्वशब्दश्चात्रेत्यादि । यद्येवमसामर्थ्यात् समासो न प्राप्नोतीत्यत आह तत्रायमित्यादि । अस्मादेव निपातनादित्यभिप्रायः । अथ चर्मणैवाभिसम्बन्धः कस्मान्न विज्ञायत इत्याह सर्वश्चर्मणा कृत इति । अत्र हि वाक्यार्थे तद्धितवृत्तिरिष्यते । तथा ह्ययमेव वाक्यार्थस्तद्धितानुगतः प्रतीयते । अस्मिंश्चार्थे

---

(A) चमकानुवाकरूपेषु । नच चमकानुवाको धान्यपरिगणनार्थः । अश्मादीनामधान्यानामपि तत्र पाठात् । कोद्रवादीनां धान्यानामप्यपाठात् ।

(B) स्मृतिराचार्य्यपारम्पर्य्योपदेशः शास्त्रकृतामाचार्य्याणां व्यवस्थेत्यर्थः ।

वाक्यार्थ एवं तद्धितवृत्तिर्लभ्यते यदि सर्वशब्दः कृतेन सम्बध्यते न चर्मणा। यदि सर्वशब्दश्चर्मणा संबध्यते सर्वचर्मणा इति षष्ठीसमासो वा स्यात् कर्मधारयो वा। तत्र षष्ठीसमासे तद्धितान्तात् सर्वसम्बन्धिना चर्मणा कृत इत्येषोऽर्थः प्रतीयते। कर्मधारये तु सर्वचर्मणा कृत इत्येषोऽर्थः। न चायं द्विप्रकारो यस्तद्धितान्तादवसीयते। अपि तु सर्वचर्मणा कृत इत्ययमेव। तस्मादशक्यः सर्वशब्दस्य चर्मणा सम्बन्धो विज्ञातुमिति कृतेनैव सम्बन्धो युक्तः।

## ६। यथामुखसम्मुखस्य दर्शनः खः।

दृश्यतेऽस्मिन्निति दर्शन इति। अधिकरणे ल्युट्। यथामुखमिति। यथासादृश्य (२।१ ७) इत्यव्ययीभावः। मुखस्य सदृशं यथामुखम्। किं पुनस्तत्। आदर्शाश्रयं प्रतिबिम्बम्। ननु चासादृश्य (२।१।७) इति प्रतिषेधान्नात्र समासेन भवितव्यमित्यत आह निपातनादित्यादि। समासश्चायं पूर्वपदार्थप्रधानः। पूर्वपदञ्चासत्त्ववचनमिति प्रथमासमर्थादेव प्रत्यय उपपद्यते। अथवा नाव्ययीभावादतोऽम् त्वपञ्चम्या (२।४।८३) इति ज्ञापकादव्ययीभावाद् द्वितीयादयो भवन्तीत्यतो द्वितीयासमर्थात् प्रत्यय उपपद्यते। यथामुखं दर्शनो यथामुखीन इति। मुखसदृशं प्रतिबिम्बं यत्रादर्शादौ दृश्यते सएव मुच्यते। सम्मुखीन इति। समं मुखं सम्मुखम्। समानाधिकरणसमासः। पूर्वपदान्तलोपश्च निपातनात्। सर्वस्य मुखस्य दर्शन इति। कर्मणि षष्ठी। यत्रादर्शादौ सर्वं मुखं दृश्यते स एवमुच्यते।

## ७। तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति।

अथ सूत्रे द्वितीयान्तप्रकृत्युच्चारणं किमर्थम्? तदिति द्वितीयासमर्थात् प्रत्ययो यथा स्यात्। अथवा पथ्यङ्गकर्मपत्रपात्रमिति नैवेयं द्वितीया। नहि व्याप्नोतिक्रियया पथ्यादयः संबध्यन्ते। किं तर्हि? सर्वादि। तस्मात् तस्यैव कर्मत्वम्। न पथ्यादीनां तदवयवानाम्। तत् कुतः? न सा द्वितीया। सुब्व्यत्ययेन पञ्चम्याः स्थाने प्रथमा लेषा। तस्मात् समाहारद्वन्द्वस्य नपुंसकलिङ्गत्वात्। अतोऽमित्यम्भावः (२।४।८३) कृतः। परिशिष्टमिति। सर्वादेः पथ्यङ्गकर्मपत्रपात्रमित्येतच्च। सर्वादेः प्रातिपदिकस्य पथ्यादयश्चादौ न भवन्ति। ततः सामर्थ्यात् तदन्तविधिर्विज्ञायत इत्याह पथ्यङ्गकर्मपत्र-

पात्रान्तादिति। सर्वपथीन इति। सर्वश्चासौ पन्थाश्चेति पूर्वकालेत्यादिना (२।१।४९) समासः। ऋक्पूरब्धूःपथामानक्ष इत्यकारः (५।४।७४) समासान्तस्ततः। ननु च समासान्ते कृते पथ्यन्तमेव न भवति। यदत्र पथ्यन्तं तदाश्रयो विधिर्भवतीत्यदोषः। ननु च व्यवधानान्न प्राप्नोति। अन्तग्रहणात् समासान्ताः समासग्रहणेन गृह्यन्त इति नास्ति व्यवधानम्।

## ८। आप्रपदं प्राप्नोति।

तयोरव्ययीभाव इति। आङ् मर्य्यादाभिविध्योरित्यनेन (२।१।१३)। शरीरेणासम्बद्धस्यापि पटस्य प्रमाणमाख्यातमिति। प्राप्तियोग्यतामुपादाय हि योग्योऽसावा प्रपदाच्छरीरं प्राप्तुम्। अथ व्याप्तिप्राप्त्योः को विशेषो येन व्याप्नोतीति कृते प्राप्नोतीत्युक्तम्? सम्बन्धमात्रं प्राप्तिः। सम्बन्धएव साकल्येन व्याप्तिरित्येव विशेषः।

## ९। अनुपदसर्व्वान्नायानयं बद्धाभक्षयतिनेयेषु।

अनुरायाम इत्यादि। यदायामे तदा यस्य चायाम इति(२।१।१६)समासः। यदा सादृश्ये तदा यथार्थे यदव्ययं तेनाव्ययं विभक्तीत्यादिना (२।१।६)। यथा पद मायतं तथा च बद्धोपानदनुपदीना। सादृश्ये यथानुपदं तथा बद्धाऽनुपदीना। पदप्रमाणेत्यर्थं इति। यदाप्यनु सादृश्ये तदाप्ययमर्थो वेदितव्यः। तुल्यप्रमाणतयैव सादृश्यम्। अयः प्रदक्षिणमिति। अयनमयो गमनमित्यर्थः। प्रदक्षिणं गमनमय इत्युच्यते। अनयः प्रसव्यमिति। अयविपरीतं प्रसव्यमनय इत्युच्यते। एवमवयवार्थं दर्शयित्वा समुदायार्थं दर्शयितुमाह प्रदक्षिणप्रसव्यगामिनामित्यादि। बहुवचनमयानयनिमित्तप्रदर्शनार्थम्। यदि शाराः प्रदक्षिणं प्रसव्यञ्च गच्छन्त्येवमयानयौ भवतः। नान्यथा। तत्रात्मीयाः शाराः प्रदक्षिणं गच्छन्ति। परकीयाः प्रसव्यम्। तेषामेवंगामिनां यानि स्थानानि तेषां यस्मिन् प्रदक्षिणप्रसव्यगमनात्मके गतिविशेषे सति परैर्विपक्षभूतैः शारैरसमाविष्टोऽनध्यासनमनाक्रमणं सोऽयानय इत्युच्यते। ननु प्रदक्षिणप्रसव्यगमनमात्रे स एवायम्। एवं रूपोऽयानयो यदा ससहायैः शारैः पदान्यधिष्ठीयन्ते तदा वेदितव्यः। ससहाया-

नामैव हि शाराणां पदानि परैर्न शक्यन्तेऽध्यासितुम् (C)। असहायानान्तु शक्यत एव। फलकशिरसि स्थित इति। यत्र फलकेऽक्षैर्दीव्यन्ति तस्य शिरोभूतं यत्र स्थानं कितवानां प्रसिद्धं तत्र स्थितः शारोऽयानयीन इत्युच्यते। तत्रैवायानयीनशब्दस्य रूढ़त्वात्। अपरे तु नेयो नेतव्यो न नीतस्ततः। तत्र शिरसि स्थित इत्यर्थानुपपत्तेः फलकशिरसि स्थाप्यत इत्यर्थं इति ग्रन्थेन भवितव्यमित्याहुः। नीतो वा नेयस्तदुपलक्षणत्वात्। भाविन्यावस्थयोक्तः। अयानयसंबद्धित्वेऽपि सर्वेषां विशेष्यादेव प्रत्ययोत्पत्तिरुक्तैव। सत्यपि द्वितीयाधिकारे पुनर्द्वितीयोच्चारणं दृष्टाद् द्वितीयान्ताद् यथा स्यादित्येवमर्थम्। तेन विशिष्टार्थनेयवचनादयानयशब्दाद् द्वितीयान्ताद् प्रत्ययो भवति। न नेयवचनमात्रात्। स एव विशिष्टो यो नयः प्रदक्षिणप्रसव्यगामीत्यादिना ग्रन्थेन दर्शितः। अथायानय इति कोऽयं शब्दः। यदि ह्ययं समाहारे द्वन्द्व स्तस्य नपुंसकत्वादयानयमिति भवितव्यम्। अथेतरेतरयोगे द्व्यर्थत्वादयानयाविति भवितव्यम्। नायं द्वन्द्वः। किं तर्हि? मयूरव्यंसकादित्वात् तत्पुरुषः। अयसहितोऽनयोऽयानय इति। अथ बह्वाभक्षयतिनेयेष्विति कथं तिङन्तस्य द्वन्द्वः? कः पुनराहायं द्वन्द्व इति? यदि न द्वन्द्वः कथं नेयेष्विति बहुवचनम्? सौत्रत्वान्निर्देशस्य। सुब्व्यत्ययेन वा च्छन्दस्येकवचनस्य स्थाने बहुवचनमुपपन्नम्। ननु च्छन्दसि सुब्व्यत्यय उक्तः। नेदं छन्दः। छन्दोवत् सूत्राणि भवन्तीत्यदोषः। अथवा द्वन्द्व एवायम्। नतु तिङन्तस्य। नहि भक्षयतिशब्दोऽयं तिङन्तः। किं तर्हि? तिङन्तप्रतिरूपको निपातस्तिङन्तेन समानार्थो यथास्तिक्षीरा ब्राह्मणीत्यत्रास्तिशब्दः।

१०। परोवरपरम्परपुत्रपौत्रमनुभवति।

कथं पुनरप्रत्ययसन्नियोगेन निपातनस्य विना प्रत्ययेन दर्शनमुपपद्यत इत्याह तच्छब्दान्तरमेव द्रष्टव्यमिति।

११। अवारपारात्यन्तानुकामं गामी।

गामीति। आवश्यकाधमर्ण्ययोर्णिनिरित्यावश्यकार्थे (३।३।१०७) णिनिः।

---

(C) "ससहायस्य शारस्य परैर्नाक्रम्यते पदम्। असहायस्तु शारेण परकीयेण बाध्यते" ॥१॥ इति

भविष्यति चायं काले गामिशब्दो वर्त्तते यदाह गमिष्यतीति गामी । सा च भविष्यति वृत्तिर्भविष्यति गम्यादय इति (३।३।३) वचनाल्लभ्यत इत्याह भविष्यतीत्यादि । अक्नेनो र्भविष्यदाधमर्ण्ययोरिति (२।३।७०) षष्ठीप्रतिषेध इति । तेन द्वितीयासमर्थतोपपद्यत इत्यभिप्रायः । कृद्योगा हि षष्ठी द्वितीयाया अपवादः । तेन षष्ठीप्रतिषेधे हि सति द्वितीययैव भवितव्यम् । अवारपारमिति । अवारस्य पारमिति षष्ठीसमासोऽयम् । वा च षष्ठ्याः पूर्वनिपातो वक्तव्यः । तेन पक्षे पारावारमित्यपि भवति । विगृह्यीतादपि भवति । विपरीताच्चेति । कथं पुनरधिकारादेव द्वितीयासमर्थविभक्तौ लब्धायामिहाधिकं द्वितीयोपादानं कृतम् ? एतेन तदधिकस्य विधिर्भवतीति सूचितम् । तेन विगृह्यीताद् विपरीताच्च प्रत्यय उपपद्यते । अत्यन्तमिति । अन्तस्याभावोऽत्ययो वेति । अव्ययं विभक्तीत्यादिना (२।१।६) ऽव्ययीभावः । अथवान्तमतिक्रान्तमिति कुगतीत्यादिना (२।२।१८) तत्पुरुषः । क्रियाविशेषणञ्चैतत् । भृशं गन्तेत्यर्थ इति । भृशार्थत्वेन लोकेऽत्यन्तशब्दस्य प्रसिद्धत्वात् । अनुकाममिति । कामसदृशमनुकामं कामानुरूपमित्यर्थः । यथार्थे ऽव्ययीभावः । इदमपि क्रियाविशेषणमेव ।

## १२ । समां समां विजायते ।

समां समामिति । नित्यवीप्सयोरिति (८।१।४) वीप्सायां द्विर्वचनम् । अत आह समां समामिति वीप्सेति । सुबन्तसमुदायः प्रकृतिरिति । प्रातिपदिकाधिकारे वचनसामर्थ्यात् । गर्भं धारयतीत्यर्थ इति । अनेकार्थत्वाद्धातूनाम् । पूर्वपदे सुपोऽलुग् वक्तव्य इति । तद्धित उत्पन्ने कृत्तद्धितसमासाश्चेति (१।२।४६) प्रातिपदिकसंज्ञायां सत्यां सुपो धातुप्रातिपदिकयोरिति (२।४।७१) सुब्लुक् प्राप्नोति। तस्य प्रतिषेधो वक्तव्यः। गर्भविमोचनेऽपि विजनिर्वर्त्तत इत्याहुरिति । तदेवं मन्यते । यदा गर्भधारणे वर्त्तते तदात्यन्तसंयोगे द्वितीयैवात्र । न सप्तमी । गर्भविमोचने विजनावुपपद्यते सप्तमी । यल्लोपमात्रमिति । नहि गर्भविमोचनेन सकला समा व्याप्यत इति मात्रशब्देन सर्वस्या विभक्तेर्लोपो न भवतीति दर्शयति । परिशिष्टस्येति । आम्शब्दस्य । अनुत्पत्ताविति ।

बह्वोर्भावो भूमा। पृथ्वादिभ्य इमनिजितीमनिच् (५।१।१२२)। बह्वोर्लोपो भू च बह्वोरिति (६।४।१५८) भूभाव इकारलोपश्च। गावो बह्वोऽस्य सन्तीति गोमान्। एकस्य द्वयोर्वा विद्यमानत्वेऽपि गोमानिति न व्यपदिश्यते। निन्दायाम्। ककुदावर्त्तीति। निष्कलत्वान्निन्दितः। प्रशंसायाम्। प्रशस्तं रूपं यस्यास्ति रूपवानित्युच्यते। नित्ययोगे। क्षीरमेषामस्तीति क्षीरिणो वृक्षाः। नित्यः क्षीरसम्बन्धो येषां त उच्यन्ते। अतिशायने। उदरिणी कन्येति। यस्या अतिशयेनोदरमस्ति सैवमुच्यते। संसर्गः। दण्डीति। दण्ड-संसर्ग उच्यते। तेनेह गृहस्थिते विद्यमानेऽपि दण्डे दण्डीति नाभिधीयते।

## ९५। रसादिभ्यश्च।

अन्यनिवृत्त्यर्थमिति। अन्यस्येनिप्रभृतेर्मत्वर्थीयस्य निवृत्तिरर्थः प्रयोजनं यस्य तत् तथोक्तम्। कथमित्यादि। रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम्। ततो रूपिणी कन्येत्यादि न सिध्यतीति भावः। प्रायिकमित्यादि। अन्यनिवृत्तेर्बाहुल्येनार्थः सोऽस्यास्तीति। प्रायिकमेव युक्तं भवतीति। बाहुल्येनास्यान्यनिवृत्तित्वेन रूपिणीत्यादौ क्वचिदन्योऽपि भवतीति कथं पुनरस्य प्रायिकत्वं लभ्यत इत्याह इतिकरण इत्यादि। इतिकरणश्चेह विवक्षार्थोऽनुवर्त्तते। तेन यत्र तु मतुबन्तादेव लोकस्य विवक्षा भवति तत्र तेनान्यनिवृत्तिः क्रियते। न सर्वत्र। अथवेत्यादि। परिहारान्तरम्। आदिशब्देन चक्षुरादीन्द्रियपरिग्रहः। गुणादिति गणे पठ्यते। नच गुणग्रहणं सर्वेषामेव रसादीनां विशेषणम्। तेन ये रसनादीन्द्रियग्राह्या स्तेषामेवायं पाठ इति गुणवचनान्तेभ्यो रसनादीन्द्रियग्राह्येभ्योऽन्यनिवृत्तिरनेन क्रियते। नान्येभ्यः। स्यादेतत्। रूपिणीत्यादावपीन्द्रियग्राह्या ये गुणास्तेभ्यो मत्वर्थीय उत्पन्न इत्याह रूपिणी रूपिक इत्यादि। रूपिणी रूपिक इत्यत्र शोभागुणो गम्यते। न चक्षुर्ग्राह्येण रूपेण। रसिको नट इत्यत्रापि भावगुणो गम्यते। नतु रसनेन्द्रियग्राह्येण गुणेन। भावाः शृङ्गारवीरबीभत्सादयो रचनाधर्माः। एकाच इति। एकाक्षरादिति। एकोऽज् यस्य तस्मान् मतुबेव भवतीति। धीमान्। स्ववानिति।

## ८६ । प्राणिस्थादातो लजन्यतरस्याम् ।

कर्णिकाल इति । कर्णिकादिशब्दोऽयं प्राण्यङ्गस्य वाचकः । नालङ्कारविशेषस्य । प्राण्यङ्गादेव हीष्यते । अत आह प्राण्यङ्गादिति वक्तव्यमिति । प्राण्यङ्गत्वादेवाकारान्तात्लज् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । इतिकरणो विवक्षार्थोऽनुवर्त्तते । तेन प्राण्यङ्गादेव भविष्यतीति । नान्यस्मात् । अनभिधानाद्वाऽप्राण्यङ्गान्न भविष्यतीति । ननु चैकाचो लचः प्रत्ययस्वरेणान्तोदात्तत्वं सिद्धम् । तत् किमर्थं च-ार इत्याह प्रत्ययस्वरेणेत्यादि । चूड़ालशब्दात् प्रथमैकवचनान्तात् परतोऽसिशब्दे व्यवस्थिते तस्य तिङ्ङतिङ इति (८।१।२८) निघातः । सोः ससजुषो रुरिति (८।२।६६) रुत्वम् । अतो रोरप्लुतादप्लुत (६।१।११३) इत्युत्वम् । आद्गुणः (६।१।८७) तस्य चैकादेश उदात्तेनोदात्त (८।२।५) इत्युदात्तत्वम् । एङः पदान्तादतीति (६।१।१०९) पररूपमेकादेशः । असति तु चकारे स्वरितो वानुदात्तेऽपदादाविति (८।२।६) स्वरितः स्यात् । अतस्तद्बाधनार्थं चकारः क्रियते ।

## ८७ । सिध्मादिभ्यश्च ।

यद्यन्यतरस्यांग्रहणेन लज् विकल्प्येत तेन पक्षे यथाप्राप्तमेव स्यादित्यकारान्तात् सिध्मादेरिनिठनौ स्याताम् । अत इमं दोषं परिहर्त्तुमाह अन्यतरस्यांग्रहणेनेत्यादि । अनेकार्थत्वान्निपातानामन्यतरस्यामिह समुच्चये वर्त्तते । तथाच वार्त्तिककारेणोक्तम् अन्यतरस्यामिति समुच्चय इति । मतुबिह स्वरितत्वात्सन्निहित इति स एव समुच्चीयते । ननु यथाप्राप्तं प्रत्ययान्तरमित्येके । अन्ये त्वाहुः । अन्यतरस्यांग्रहणं विकल्पार्थमेव । न चेनिठनावुभौ क्रियेते । तयोर्महाविभषयैव सिद्धत्वात् । तर्हि प्रत्ययान्तरं पक्षे विधीयते । तदपि न । यथाप्राप्तमापादयितुं सन्निहितप्रत्यासत्तेः मतुबेव । तदेवमन्यतरस्यांग्रहणे सति मतुबेव विकल्प्यत इत्यभिप्रायेणान्यतरस्यांग्रहणेन समुच्चीयत इत्युक्तमिति । ननु प्रत्ययो विकल्प्यत इति । ननु च लचो भावाभावौ क्रियेते इत्यर्थः । तस्मादित्यादि । यत एवमन्यतरस्यांग्रहणेन मतुप् समुच्चीयते नतु प्रत्ययो विकल्प्यते तस्माद् येऽत्रा-

कारान्ताः पठ्यन्ते तेभ्य इनिठनौ न भवतः। पार्ष्णिधमन्यो दीर्घश्चेति। पार्ष्णि धमनि इति शब्दाभ्यां लच् प्रत्ययो भवति। तयोश्च दीर्घः। पार्ष्णीलः। धमनीलः। वातदन्तबलललाटानामूङ्चेति। वातादीनां लज् भवति। तस्य च लच ऊङागमः। वातूलः। दन्तूलः। बलूलः। ललाटूलः। जटाघटाकलाः क्षेप इति। जटादयः प्रत्ययमुत्पादयन्ति क्षेपे गम्यमाने। जटालः। घटालः। कलालः। क्षेप इति किम्? जटावान्। क्षुद्रजन्तूपतापाच्चेति। क्षुद्रजन्तुर्नकुलादिः। उपतापो रोगः।

## ९८। वत्सांसाभ्यां कामबले।

कामवति बलवति चार्थे इति। मत्वन्स्वयोर्निर्देशेन कामबलशब्दावर्श आद्यकारान्तावुपात्ताविति दर्शयति। ननु च वत्सांसशब्दौ नैव कामबलयो र्वर्तेते। किं तर्हि? वयोविशेषे प्राण्यङ्गविशेषे च। तत् कथं ताभ्यां कामवान् बलवांश्चोच्यत इत्याह वृत्तिविषय इत्यादि। कथमेतज् ज्ञायत इत्याह न ह्यत्रेत्यादि। वत्सशब्दस्य वाक्ये यो वयोविशेषलक्षणोऽर्थः प्रसिद्धो-ऽंसशब्दस्य च यः प्राण्यङ्गलक्षणविषयः स यस्मादत्र वृत्तौ न विद्यते न ज्ञायत इत्यर्थः। अथवा न विद्यत इति नास्तीत्यर्थः। अनेन वाक्ये यौ तयोरर्थौ प्रसिद्धौ वयःप्राण्यङ्गविशेषात्मकौ तयोर्वृत्तावभावो दर्शितः। इदानीं यौ तयोरभिमतावर्थौ तयोर्भावं दर्शयितुमाह वत्सल इत्यादि। स्नेहवानिति। कामवानित्यर्थः। तदेवं यस्माद् वत्सांसशब्दयोर्वाक्ये वयःप्राण्यङ्गलक्षणोऽर्थो न विद्यते ततश्च वत्सलांसलशब्दाभ्यां यथोक्तः स्नेहवान् बलवांश्चोच्यते ततो ज्ञायते वत्सांसशब्दौ वृत्तिविषये कामबलयोर्वर्त्तमानौ तद्वति प्रत्ययमुत्पादयत इति। अन्यतरस्यांग्रहणं सर्वत्र चात्र प्रकरणे मतुप्समुच्चयार्थं वर्त्तते। ततो मतुपा भवितव्यमिति यो मन्यते तं प्रत्याह न चायमित्यादि। अनेनैव च हेतुना वाक्यमपि न भवतीति वेदितव्यम्। वाक्ये हि नैवायमर्थः सम्भवति।

## ९९। फेनादिलच्च।

## १००। लोमादिपामादिपिच्छादिभ्यः शनेलचः।

पामादिष्वङ्गादिति पठ्यते। तत्र कल्याणग्रहणमङ्गविशेषणम्। कल्या-

णानि शोभनान्यङ्गान्यस्याः सन्तीत्यङ्गना। कल्याण इति किम्? अङ्गवती। शाकीपलालीदद्रू ह्रस्वत्वञ्च। शाकादीनाञ्च प्रत्ययो भवति ह्रस्वत्वञ्च। शाकिनः। पलालिनः। दद्रुणः। महच्छाकं शाकी। महापलालं पलालीति केचित्। नानाजातीयानां शाकानां समाहारः शाकी। पलालानां समाहारः पलालीति। विष्वगित्यादि। विष्वक्शब्दान्नप्रत्ययो भवति। उत्तरपदलोपश्च। स चाकृतसन्धेः। अकृतयणादेशस्य। विष्वञ्चतीति विषुशब्द उपपदे ऽञ्चतेरृत्विगित्यादिना (२।३।५९) क्विन्। अनुनासिकलोपः। ततो विषु अच् इति स्थिते विष्वञ्चो यस्य सन्तीति नप्रत्ययः। अकृतयणादेशस्योत्तरपदलोपः। विषुण इति भवति। विषुणशब्दोऽयं निपात्यते। नानार्थे वर्त्तते। लक्ष्म्या अच्चेति। लक्ष्मीशब्दान्नप्रत्ययो भवति। अकारश्चान्तादेशः। लक्ष्मीरस्यास्तीति लक्ष्मणः। जटाघटेत्यादि। जटादिभ्यः क्षेपे गम्यमान इलच्प्रत्ययः। जटिलः। घटिलः। कलिलः। क्षेप इति किम्? जटावान्। घटावान्। कलावान्।

## १०१। प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः।

प्रज्ञाशब्दान्मतुपि पिच्छादिपाठादिलचि च प्राप्ते इतरेभ्यस्तु मतुपि णो विधीयते।

## १०२। तपःसहस्राभ्यां विनीनी।

अत्र सूत्रे द्वे प्रकृती उपात्ते। प्रत्ययार्थावपि द्वावेव प्रकृतावनुवर्त्तेते। तथाच वत्सांसाभ्यां कामबले (५।२।९८) सिकताशर्कराभ्याञ्चेत्येवमादिष्वपि (५।२।१०४) केषुचिद् योगेषु यथासंख्येन भवितव्यमिति यो मन्यते तं प्रत्याह प्रत्ययार्थयोस्त्विति। कस्मात् पुनरिष्यमाणमपि न भवति? वत्सांसाभ्यां कामबल (५।२।९८) इत्यत्रांसशब्दस्य परनिपातालक्षणव्यभिचारचिह्नात्। अंसशब्दस्य ह्यजाद्यदन्तमिति (२।२।३३) पूर्वनिपाते बलशब्दस्यापि लघ्वक्षरं पूर्वं निपततीत्यस्मिन् (२।२।३४, वा) प्राप्ते योऽयं परनिपातः स लक्षणान्तरनिरपेक्षतां दर्शयन्निह मतुप्प्रकरणे यथासंख्यं लक्षणस्य व्यभिचारयति। तेन प्रत्ययार्थयोः सर्वत्र मतुप्प्रकरणे यथासंख्यं न भवति।

प्रकरण इत्येतत् कुतः ? प्रकरणापेक्षत्वात् लक्षणव्यभिचारचिह्नस्य। एतदपि कुतः ? व्याख्यानात्। द्वयोर्लक्षणव्यभिचारचिह्नयोरुपादानाद् वा योगापेक्षतायां त्वन्यतरस्यैवोपादानं कुर्यात्। असन्तत्वादिति तपःशब्दाद-सन्तत्वादस्मायामेधास्रजो विनिरित्येवमादिना (५।२।१२१) विनिप्रत्यये सिद्धे सहस्रशब्दाच्चाकारान्तत्वादत इनिठना (५।२।११५) वितौनिप्रत्यये सिद्धे पुनरिदं विधानं वक्ष्यमाणेनाणा बाधा मा भूदित्येवमर्थम्। सहस्रात् त्वित्यादि। अत इनिठनाविति (५।२।११५) ठनपि प्राप्नोति। सोऽपि बाध्यते। एतेन सहस्रशब्दात् ठनो बाधनमिति पुनर्वचनमिति दर्शयति।

१०३। अण् च।

अण्प्रकरण इत्यादि। ज्योत्स्नादिराकृतिगणः। येभ्यो मतुबर्थेऽण् दृश्यते ते ज्योत्स्नादयो द्रष्टव्याः। उपसंख्यानशब्दश्चायं प्रतिपादने वर्त्तते। तत्रेदं प्रतिपादनम्। उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः। तेन ज्योत्स्नादि-भ्योऽपि भविष्यतीति। कौण्डल इति। कुण्डले योऽर्हति स एवमुच्यते। अन्यस्तु कुण्डलीत्येव भवति।

१०४। सिकताशर्कराभ्याञ्च।

अदेश इहोदाहरणमिति। देश उत्तरसूत्रेण लुबिलचो विधास्यमानत्वात्।

१०५। देशे लुबिलचौ च।

१०६। दन्त उन्नत उरच्।

अकारान्तत्वादिनिठनोः प्राप्तयोः। तुन्दादिषु (५।२।११७) स्वाङ्गादिति पाठादिलचि दन्तशब्दादुरज् विधीयते।

१०७। ऊषसुषिमुष्कमधो रः।

यथासम्भवं मतुपीनिठनोश्च प्राप्तयोरूषादिभ्यो रो विधीयते। मधुर इति। मधुशब्दोऽत्र रसविशेषे वर्त्तते। रप्रकरण इत्यादि। उपसंख्यान-शब्दः प्रतिपादने वर्त्तते। तत्रेदं प्रतिपादनम्। देशे लुबिलचौ चेत्यत (५।२।१०५) श्चकारोऽत्र वर्त्तते। स चानुक्तसमुच्चयार्थः। तेन मुखप्रभृतिभ्योऽपि

रो भवति । नगपाण्डुपांशुभ्यश्चेत्यादि । नगपांशुप्रभृतिभ्यश्च रो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानन्तु तामेव चकारस्यानुवृत्तिमाश्रित्य कर्त्तव्यम् ।

## १०८ । द्युद्रुभ्यां मः ।

द्यौश्च द्रुश्च द्युद्रू । ताभ्यां मतुपि प्राप्ते मो विधीयते । द्यौरस्यास्तीति द्युमः । दिव उदित्युत्त्वम् (६।१।१३१) । केचिद् द्युशब्दः प्रकृत्यन्तरमङ्गो नामधेयम् । तत इदं प्रत्ययविधानमित्याहुः । रूढ़िषु मतुप् पुनर्विकल्पग्रत इति । रूढ़िशब्दार्थस्य मतुपाऽनभिधानात् ।

## १०९ । केशाद्वोऽन्यतरस्याम् ।

इनिठनोः प्राप्तयोर्मतुपि चेदमारभ्यते । ननु च प्रकृतमन्यतरस्यांग्रहण-मस्त्येव । तत् किमर्थं पुनरिदं क्रियत इत्याह ननु च प्रकृतमित्यादि । इतिकरणो हेतौ । केशशब्दाद् यथा वप्रत्यय एवमन्येभ्योऽपि तथा वप्रत्ययो दृश्यते । तस्माद् वक्तव्यं व्याख्येयम् । तथा व्याख्यानं कर्त्तव्यं यथा-सावन्येभ्यो भवतीत्यर्थः । तत्रेदं व्याख्यानम् । इहापि स एव चकारोऽनुक्त-समुच्चयार्थोऽनुवर्त्तते । तेनान्येभ्योऽपि भवतीत्यर्थः । अर्णसो लोपश्चेति । अलोऽन्त्यस्येत्यन्त्यस्य (१।१।५२) वेदितव्यः । वक्तव्याविति । व्याख्येया-वित्यर्थः । व्याख्यानन्तु तद्धिता इत्यत्रैव (४।१।७६) कृतम् । रथीरभूद् मुद्गलानीति । रथशब्दादीप्रत्ययः । सुमङ्गलीरियं वधूरिति । ईकारस्योदा-हरणम् । मघवानिति च वनिपः । सर्वनामस्थाने चेति दीर्घः (६।४।८) । उद्वा चेति । उच्छब्दाद्वप्रत्ययः । अदन्तत्वाट् टाप् । उद्वती चेति । उच्छब्दादेव मतुप् । उगितश्चेति (४।१।६) ङीप् । झय इति (८।२।१०)वत्वम् ।

## ११० । गाण्डाजगात् संज्ञायाम् ।

ह्रस्वादपि भवतीति । कथं पुनर्दीर्घस्य ग्रहणे ह्रस्वादपि भवतीति । तत्र तुल्या हीत्यादि । यादृशी दीर्घस्येह संहिता ह्रस्वग्रहणेऽपि तादृश्येव दृश्यते । तस्माद् ह्रस्वस्यापि ग्रहणमिह न विरुध्यत इति भावः । तत्र चैतत् स्यात् । यद्यपि तुल्या संहिता तथापि कृतयणादेशोऽयमेक एव शब्द-

स्तस्य स्वरूप इत्यन्यतरस्य परिग्रहणेन भवितव्यम्। तत्र यदि दीर्घस्य ग्रहणं ह्रस्वान्न प्राप्नोति। अथ ह्रस्वस्य ग्रहणं दीर्घान्न प्राप्नोतीत्यत आह उभयथेति। उभयप्रकारं ह्याचार्य्येण प्रणीतं सूत्रम्। तस्मादुभयोरपि ग्रहणमित्यदोषः (H)। अथ संज्ञाग्रहणं किम्? यावतेतिकरणस्य चानुवृत्तेरसंज्ञायां न भविष्यति। यथा द्युद्रुभ्यां मप्रत्ययः (५।२।१०८)। एवं तर्हि तस्यैवेतिकरणस्य प्रपञ्चः संज्ञाग्रहणमिति द्रष्टव्यम्।

## १११। काण्डाण्डादीरन्नीरचौ।

इनिठनोरपवादोऽयम्।

## ११२। रजःकृष्यासुतिपरिषदो वलच्।

रजःशब्दादस्मायामेधास्रजो विनिरिति (५।२।१२१) विनौ प्राप्ते। इतरेभ्यस्तु मतुपि वलज् विधीयते। वलच्प्रकरणे इत्यादि। वप्रत्ययस्य व्याख्यानेनेदमपि व्याख्यातप्रायम्। अत्र वले इति (६।३।११७) दीर्घत्वं कस्मान्न भवति? वनगिर्य्योः संज्ञायामित्यतः (६।३।११७) संज्ञाग्रहणानुवृत्तेः।

## ११३। दन्तशिखात् संज्ञायाम्।

दन्तशब्दादिनिठनोः प्राप्तयोर्वलज् विधीयते। शिखाशब्दादिनिप्रत्ययो वक्ष्यते व्रीह्यादिभ्यश्चेत्यत्र (५।२।११६) शिखादिभ्य इनि वाच्य इति। अदेशार्थं शिखाग्रहणं शिखावला स्थूणेत्यत्र यथा स्यात्। देशे तु शिखाया वलजित्यनेनैव चातुरर्थिक एव सिद्धः। यद्येवमिदमेव वक्तव्यम्। किं तेन? नैतदस्ति। तदपि हि वक्तव्यमेव निर्वृत्तादिष्वर्थेषु यथा स्यात्। अत्रापि संज्ञाग्रहणं तस्यैवार्थस्यानुवादार्थम्। इतिकरणानुवृत्त्यैवाभिधेयनियमसिद्धेः।

## ११४। ज्योत्स्नातमिस्राशृङ्गिणोर्ज्जस्विन्नूर्जस्वलगोमिन्-मलिनमलीमसाः।

स्त्रीत्वमतन्त्रमिति। अप्रधानम्। अविवक्षितत्वात्। स्त्रीलिङ्गनिर्देशस्तु वैचित्र्यार्थः।

---

(H) एवञ्च गाण्डीवी कनकशिलानिभं भुजाभ्यामिति। अधिरोहति गाण्डिवं महेषाविति च भारविप्रयोगः।

## ११५ । अत इनिठनौ ।

अत इत्यकारस्तपरो गृह्यते । । अतएवाह अकारान्तादित्यादि । अथाच्छब्दस्य स्वरूपग्रहणं कस्मान्न विज्ञायते ऽच्छब्दात् प्रातिपदिकादिति ? अदित्ययुक्तं स्वरूपग्रहणं भवितुम् । स्वरूपग्रहणे हि रसादिभ्यो मतुपो विधानमनर्थकं स्यात् । स ह्यौनिठनोर्बाधनार्थं विधीयते । नचेह स्वरूप-ग्रहणे तेभ्यस्तौ प्रत्ययौ प्राप्नुत इति किं तद्विधानार्थेन मतुपो विधानेन ? तपरकरणं किम् ? अङ्गावान् । ननु च व्रीह्यादिषु मालादय आकारान्ताः पठ्यन्ते । ते च नियमार्था भविष्यन्ति । एतेभ्य एवाकारान्तेभ्य इति । नैतदस्ति । तुल्यजातीयस्यैव टाबन्तस्यैवं नियमः स्यात् । डाप्चाबन्ताभ्यां स्यातामेवेतीनिठनौ । तस्मादकारस्तपरः कर्त्तव्यः । कार्य्यीति । क्षत इनिः । तण्डुली तण्डुलिक इति जातेरिनिठनौ ।

## ११६ । व्रीह्यादिभ्यश्च ।

शिखादिभ्य इत्यादि । उभयत्रादिशब्दः प्रकारे । शिष्टप्रयोगे येभ्य इनिरेव दृश्यते ते शिखादयो द्रष्टव्याः । ते हि तेभ्यष्ठनं विहितवन्तः । एष तु विषयविभाग इतिकरणानुवृत्तेरेव गृह्यते । वाच्य इत्यस्य तु व्याख्येय इत्यर्थः । यवखदादिष्विति विषयसप्तमी । एवं तर्हीत्यादि । तुन्दादिषु व्रीहिशब्दस्य स्वरूपग्रहणे सतीह तस्य ग्रहणमनर्थकं ज्ञायत इति सामर्थ्यात् तत्र व्रीहिग्रहणेनार्थग्रहणं विज्ञायते । अर्थग्रहणे सति यदिष्टं सिध्यति तद् दर्शयितुमाह शालयोऽस्य सन्ति शालिक इत्यादि । शीर्षान्नञ इति । नञ उत्तरस्य शीर्षन्नित्येतस्य प्रत्ययो भवति । निपातनाच्छिरसः शीर्षभावः । अशीर्षी । अशीर्षिकः । अन्ये तु शीर्षन्निति शब्दान्तरं पठन्ति । तस्य तु पाठो भाषायामपि यथा स्यादित्येवमर्थः । अन्यथा शीर्षंश्छन्दसीति (६।१।६०) विधानात् भाषायामशीर्षिकः अशीर्षवानिति न स्यात् ।

## ११७ । तुन्दादिभ्य इलच्च ।

यथासम्भवं मतुबादिषु प्राप्तेष्विदमारभ्यते । चकारादिनिठनौ मतुप् चेति । एतेन प्रत्ययचतुष्टयं तुन्दादिभ्यो भवतीति दर्शयति । अतएव

पिच्छादिषु तुन्दादयो न पठिताः। पिच्छादिभ्य इलज्मतुपावेव भवतः। तुन्दादिभ्यस्त्विनिठनावपि। स्वाङ्गाद्विवृद्धाविति। स्वाङ्गाद्विवृद्धौ वर्त्तमानात् प्रत्ययो भवति। वृद्धौ महान्तौ कर्णावस्य स्तः। कर्णिलः। कर्णिकः। कर्णी। कर्णवान्।

## ११८। एकगोपूर्वाट् ठञ् नित्यम्।

मतुवादिषु प्राप्तेषु ठञ् विधीयते। स च समानाधिकरणतत्पुरुषादेकपूर्वाद् भवति। नतु सर्वत एकपूर्वात्। एतच्चेतिकरणानुवृत्तेर्लभ्यते। एकञ्च तच्छतञ्चेकशतम्। तदस्यास्तीत्यैकशतिकः। षष्ठीतत्पुरुष एकशतवान्। कथमित्यादि। यद्यत (५।२।११५) इत्येतदनुवर्त्तते गोशकटीशब्दान्न सिध्यति। तस्यानकारान्तत्वादिति भावः। ततो भविष्यतीति। तदन्ताद् भविष्यतीत्यभिप्रायः। एषोऽर्थः। एकगोपूर्वाददन्तात् प्रातिपदिकाट् ठञ् विधीयत इति सामर्थ्याल्लभ्यते। अथवा ततो हेतोर्भविष्यतीत्यदोषः। अवश्यञ्चेत्यादि। असत्यां ह्यत इत्यनुवृत्तौ वन्दोपतापगर्ह्यादिषु (५।२।१२८) योगेषु (५।२।११५) चित्रकललाटिकादिशब्देभ्योऽपि प्रत्ययः स्यात्। नित्यग्रहणमित्यादि। असति हि नित्यग्रहणेऽन्यतरस्यांग्रहणं मतुप्समुच्चयार्थं सर्वत्रानुवर्त्तत इति मतुबपि स्यात्। तस्माद् बाधनार्थं नित्यग्रहणम्। कथमेकद्रव्यवत्त्वादिति? यदि नित्यग्रहणं मतुब्बाधनार्थमेवं नह्येकद्रव्यवत्त्वादित्यत्रैकपूर्वाद् द्रव्यशब्दान् मतुप् सिध्यतीति मन्यते। एकेनेत्यादि। एकशब्दस्य द्रव्यवत्त्वादित्यनेन सुप्सुपेति समासं कृत्वा साधुत्वमस्य प्रतिपादनीयमित्यर्थः।

## ११९। शतसहस्रान्ताच्च निष्कात्।

## १२०। रूपादाहतप्रशंसयोर्यप्।

तदाहतमुच्यत इति। आहतमाहननं ताड़नमित्यर्थः। अतो निष्पन्नं पुरुषादिरूपम्। तदपि कार्य्ये कारणोपचारादाहतमित्युच्यते। यप्प्रकरण इति। यप्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यमिति। अनेनास्य तु तुल्यत्वात् तद्वदेव व्याख्यानं कर्त्तव्यम्। चकारस्त्विह शतसहस्रान्ताच्च निष्कादित्यतो (५।२।११९) नुवर्त्तते।



## १२१ । अस्मायामेधास्रजो विनिः ।

यशस्वी । तपस्वी । पयस्वी । तसौ मत्वर्थे इति (१।४।१९) भत्वम् । अतो भत्वाज् जश्त्वं न भवति । जश्त्वेन सकारस्य दकारः प्राप्नोति । स न भवति ।

## १२२ । बहुलं छन्दसि ।

इयोभयद्दयानीत्यादि । अवधारणमिह द्रष्टव्यम् । इयादीन्येव दीर्घत्वं प्रयोजयन्ति । नेतराणि । स्वत एव दीर्घत्वात् । तदेतत् सर्वं बहुलग्रहणेन सम्पद्यत इति । वक्तव्यशब्दस्तु व्याख्याने वर्त्तत इत्यभिप्रायः ।

## १२३ । ऊर्णाया युस् ।

ऊर्णायुरिति । पदत्वेन भसंज्ञाभावाद् यस्येति (६।४।१४८) लोपो न भवति ।

## १२४ । वाचो ग्मिनिः ।

अथ मिनिरेव कस्मान्नोच्यते ? जश्त्वे कृते वाग्ग्मीति (I) सिध्यति । ननु च यरोऽनुनासिकेऽनुनासिको (८।४।४५) वेत्यनुनासिकः प्राप्नोति । नैष दोषः । व्यवस्थितविभाषा विज्ञास्यते । एवं तर्हि गकारमधिकं कुर्व्वन्नेतत् सूचयति ग्मिनिरयमिति । यः सम्यग् बहु भाषते तत्रापि वक्ष्यमाणावाल-जाटचौ बाधित्वा ग्मिनिरेव भवति । एवं ह्यधिकं भवति यद्यपवादविषयेऽपि क्वचिद्भवति । नान्यथा । एवञ्चालजाटचौ कुत्सितं यो बहु भाषते तत्रैव पारिशेष्याद् भवत इति वेदितव्यम् ।

## १२५ । आलजाटचौ बहुभाषिणि ।

कुत्सित इति । वक्तव्यशब्दस्तु व्याख्याने वर्त्तत इत्यभिप्रायः । वक्तव्यमिति । कुत्सितं यो बहु भाषते तत्रालजाटचौ भवत इत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानं पूर्वसूत्र एव कृतम् ।

## १२६ । स्वामिन्नैश्वर्य्ये ।

एकाच इति रसादिषु पाठान्मतुपि प्राप्त इदमारभ्यते । ऐश्वर्य्यवाचिन

---

(I) चकारस्य कुत्वजश्त्वाभ्यां वाग्ग्मीत्यत्र गकारद्वयम् ।

इति। धनवचनोऽयं स्वशब्द ऐश्वर्य्यवाची। तथाच धनयोगादैश्वर्य्यं तदुच्यते। स्ववानिति। आत्मादावर्थान्तरे स्वशब्दो वर्त्तते।

१२७। अर्शआदिभ्योऽच्।

यथासम्भवं मतुबादिष्वच् विधीयते। आकृतिगणश्चायमिति। अवृत्कृतत्वात्। आदिशब्दश्चायं प्रकारे। स्वाङ्गाद्धीनादिति। हीनस्वाङ्गवृत्तेः प्रातिपदिकादज् भवति। खञ्जः पादोऽस्तीति खञ्जः। काणश्चक्षुरस्तीति काणः। वर्णादिति। वर्णवाचिभ्यः शुक्लादिभ्योऽज् भवति। शुक्लोऽस्यास्तीति शुक्लम्। ननु च शुक्लशब्दो गुणवचनः। तत्राभेदोपचारेणाप्येतत् सिध्यति। एवं तर्हि द्रव्यवृत्तेरपि वर्णवाचिनः प्रातिपदिकाद् यथा स्यादित्येवमर्थं वर्णग्रहणं कृतम्। शुक्लगुणयुक्ताः प्रासादाः शुक्लाः। तेऽस्मिन् सन्ति शुक्लं नगरम्। प्रत्ययस्वरेणैवान्तोदात्तत्वे सिद्धे चकारोऽर्शोऽस्यास्तीति स्वरितो वानुदात्ते ऽपदादाविति (८।२।६) स्वरितबाधनार्थः।

१२८। द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः।

तद्विषयेभ्य इति। तच्छब्देनोपतापगर्हावेव परामृश्येते। ते उपतापगर्हे विषयो येषामिति बहुव्रीहिः। प्राणिस्थवाचिनां सर्वेषामेव द्वन्द्वादीनामिदं विशेषणम्। प्राण्यङ्गान्नेष्यत इति। कथं पुनरिष्यमाणोऽपि न भवति। चकारानुवृत्तेः सिद्धे प्रत्यय इति। अत इनिठनावित्यनेनैव (५।२।११२)। ठनादिबाधनार्थं इति। इनिरेव यथा स्यात्। ठनादिर्मा भूदित्येवमर्थं पुनर्वचनम्। आदिशब्देन मतुब् गृह्यते। इत उत्तरे योगा नियमार्था वेदितव्याः।

१२९। वातातिसाराभ्यां कुक् च।

वातातिसाराभ्यामिति। यद्यपि पञ्चमी तथाप्यर्थाद् विभक्तिविपरिणामो भवति। आगमसम्बन्धे षष्ठीभावेन विपरिणम्यते। अतएवाह तत्सन्नियोगेन च तयोः कुगागम इति। अथ प्रत्ययस्यैवागमः कस्मान्न भवति? कुगागमवता प्रत्ययेनार्थस्यानभिधानात्। स्वरूपं न सिध्यतीति च। पिशाचाच्चेति वक्तव्यमिति। पिशाचशब्दादिनिप्रत्ययो भवतीत्येतदर्थरूपं

व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। बहुलं छन्दसीत्यतो (५।२।१२२) बहुलग्रहणमनुवर्त्तते। तेन पिशाचशब्दादपि भविष्यति।

## १३०। वयसि पूरणात्।

वयसि द्योत्य इति। कथं पुनर्वयो द्योत्यते? यदि पञ्चमादयः शब्दाः काले वर्त्तमानाः प्रत्ययमुत्पादयन्ति। अतएव तेषां काले वृत्तिं दर्शयितुमाह पञ्चमो मासोऽस्यास्तीति। सिद्धे सतीत्यादि। पूरणप्रत्ययानामकारान्तत्वादिनिः सिद्ध एव। तस्मिन् सिद्धे पुनरिदं वचनं नियमार्थं ज्ञायत इति। इनिरेव भवतीति नियमस्य स्वरूपं दर्शयति।

## १३१। सुखादिभ्यश्च।

इनिप्रत्ययो नियम्यत इति। पूर्ववन्नियमो वेदितव्यः। तदिहेत्यादि। यस्मिन् व्रीह्यादिषु मालाशब्दः पठ्यते तस्माद् यदिह क्षेपे मालाशब्दस्य पुनर्वचनं तन् मतुपो बाधनार्थम्। नतु ठनः। सुखादिभ्य इति नोच्यत इति। अनेनैव निवर्त्तितत्वात्। मालाशब्दो हि शिखादिषु। तत्रान्तर्भाविनः क्षेपादन्यत्रेनिर्भवत्येव। शिखादित्वान्मतुप् च। मतुपस्तस्यान्यतरस्यांग्रहणेन समुच्चितत्वात्। माली। मालावानिति।

## १३२। धर्मशीलवर्णान्ताच्च।

## १३३। हस्ताज् जातौ।

हस्तेन हस्तमात्रं प्रतीयते। नतु जातिः। पुरुषशब्दप्रयोगात् पुरुषजातिर्गम्यते।

## १३४। वर्णाद् ब्रह्मचारिणि।

समुदायेन चेद् ब्रह्मचारी भण्यत इति। एतेन समुदायोपाधित्वं ब्रह्मचारिणो दर्शयति। विद्याग्रहणार्थं यदोपनीयते ततः सेवितव्यो यो नियमविशेष स्तद् ब्रह्म। तच्चरति ब्रह्मचारी। आवश्यके णिनिः। तच्च नियमविशेषचरणे ब्राह्मणादीनामेव त्रयाणां वर्णानामधिकारः। न शूद्रस्येत्याह ब्रह्मचारीति त्रैवर्णिकोऽभिप्रेत इति। त्रिषु वर्णेषु भवस्तत्रान्तर्भूतत्वात् त्रैवर्णिकः। किं पुनः कारणं स एवाभिप्रेत इत्याह सहीत्यादि।

## १३५। पुष्करादिभ्यो देशे।

इह कस्मान्न भवति पुष्कराणि पद्मान्यस्मिन् देशे सन्तीति? इतिकरणानुवृत्तेः। अर्थाच्चासन्निहित इति। असन्निहितग्रहणे तस्य चास्तित्वेन विरोधः। यदि ह्यसन्निहितोऽर्थो न नाम विद्यते। यदि विद्यते कथमसन्निहितः? तस्माद् विशेषणोपादानादस्तीत्येतद् विशेषणमुत्सृज्यासन्निधानोपाधिकादर्थात् प्रत्ययो विधीयते। अभिधानशक्तिस्वाभाव्याच्च। अर्थीति। अभिलाषवानेवोच्यते। न सर्वोऽसन्निहितोऽर्थः प्रत्ययान्तेन तद्विमर्शादसन्निहितवान्। अतः प्रत्ययो वक्तव्यः। न वक्तव्यः। कथं पुनरनुच्यमानो लभ्यते। बहुलं छन्दसीत्यतो (५।२।१२२) बहुलग्रहणेन यथा ऽष्टामेखलाद्वयोभयहृदयादीनां (५।२।१२२, वा) दीर्घश्चेत्येवमादिकं कार्य्यं सम्पाद्यते तथेदमपि। तदन्ताच्चेत्यादि। असन्निहितमित्यनुवर्त्तते। असन्निहितोपाधिकादर्थादिनिप्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानन्तु कृतप्रायम्।

## १३६। बलादिभ्यो मतुबन्यतरस्याम्।

यद्यन्यतरस्यांग्रहणेन प्रत्ययो विकल्प्यते बलादिभ्यो मतुब्विकल्पो भवतीति ततो मतुपा मुक्ते यथाप्राप्तमिनिठनावपि स्याताम्। इनिरेव चेष्यते। स कथमिनिरेव लभ्यते? यद्यन्यतरस्यांग्रहणेनेनिः समुच्चीयते। न मतुबिति विकल्पेनेत्येवं चेतसि कृत्वाह अन्यतरस्यांग्रहणेनेत्यादि। ननु यदीनिठनौ द्वावपि स्यातां सूत्रारम्भोऽनर्थकः स्यात्। विनाप्यनेन प्रत्ययस्य सिद्धत्वात्। तस्मान्मतुपोऽपि विकल्पस्थानेन दोषः। नैतदस्ति। आरम्भसामर्थ्यादिनिठनोरन्यतरो भवतीत्ययमोऽर्थो लभ्यते। नत्विनिरेव। तस्मादिनिसमुच्चयार्थमेवान्यतरस्यांग्रहणं कर्त्तव्यम्।

## १३७। संज्ञायां मन्माभ्याम्।

प्रथिमिनी। दामिनीति। प्रथिमिन् दामिन् इतीयताभ्यामिनिः। न स्तद्धित इति (६।४।१४४) टिलोपः। ऋन्नेभ्यो ङीबिति (४।१।५) ङीप्। अत्रापि संज्ञाग्रहणमितिकरणस्यैव प्रपञ्चः।

## १३८ । कंशंभ्यां बभयुस्तितुतयसः ।

उदकसुखयोर्वाचकाविति । यथासंख्यं कमितुदकस्य वाचकः शमिति सुखस्य । शंयुरिति । मोऽनुस्वारः (८।३।२३) । तस्य वा पदान्तस्येति (८।४।४६) परसवर्णः । मस्यानुनासिको यकारः । तेनानुस्वारपरसवर्णौ सिद्धौ भवत इति । तयोः पदाधिकारे विधानात् । यदि पुनः पदसंज्ञा न स्यात् ततस्तस्यामसत्यां पदनिबन्धनयोरनुस्वारपरसवर्णयोरभावात् कम्युः शम्युरित्यनिष्टं रूपं सम्पद्यते ।

## १३९ । तुन्दिवलिवटेर्भः ।

तुन्दिशब्दात् तुन्दादिषु स्वाङ्गाद्विवृद्धादिति पाठादिलचीनिठनोर्मतुपि प्राप्ते वलेः पामादिपाठान्ने मतुपि वटेर्मतुप्येव भो विधीयते ।

## १४० । अहंशुभमोर्युस् ।

अहमिति । शब्दान्तरमिति । अस्मदस्त्वाहौ साविति (७।२।९४) त्यदाद्यत्वे च (७।२।१०२) कृते यच्छब्दरूपं सम्पद्यते तस्मादन्य एवाहमव्युत्पन्नः शब्दः । ननु तदित्येवं शब्दान्यत्वं दर्शयित्वार्थान्तरं दर्शयितुमाह अहङ्कारे वर्त्तत इति । अहंयुः शुभंयुरिति । पूर्ववदनुस्वारपरसवर्णौ ।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिविरचितायां
काशिकाविवरणपञ्जिकायां पञ्चमस्याध्यायस्य
द्वितीयः पादः समाप्तः ॥५।२॥

---

अथ

# काशिकाविवरणपञ्जिका।

## पञ्चमोऽध्यायः।

### तृतीयः पादः।

१। प्राग्दिशो विभक्तिः।

विभक्तिसंज्ञास्ते वेदितव्या इति। विभक्तिरित्येष शब्दः संज्ञा येषां ते तथोक्ताः। ननुच विभक्तिशब्दः सुप्तिङां संज्ञा। संज्ञा च प्रदेशवाक्येषूच्चारिता संज्ञिनं प्रत्याययतीति सुप्तिङामेव संज्ञात्वं प्राप्नोति। न विभक्तिशब्दस्य स्वाभिधेये गुणीभूतस्य। नैष दोषः। एवं सति सुप्तिङां विभक्तिसंज्ञाविधानमनर्थकं स्यात्। यथा वृद्धिशब्दः स्वाभिधेये लौकिकेऽर्थे गुणीभूतोऽप्यादैच् प्रति संज्ञात्वमनुभवति तथा विभक्तिशब्दोऽपि तसिलादीन् प्रति संज्ञात्वेन वेदितव्यः। अथ तत्रैव कस्मान्नोच्यते सुपो विभक्तिश्च प्राग्दिशश्चेति। एवं सति पुनर्विभक्तिग्रहणं कर्त्तव्यं न भवति। नैवं शक्यम्। एवं हि न्यासे सति कुत आरभ्य प्राग्दिशीया इति न ज्ञायते। किञ्च दिगादिभ्यो यत् (४।३।५४) तेनैकदिगिति (४।३।११२) चानेकं शास्त्रे दिग्ग्रहणमित्यवधिरपि संदिह्येत। किंसर्वनामबहुभ्य (५।३।२) इत्येवमादेश्च कार्य्यस्यावधिदर्शनार्थं पुनरिह प्राग्दिश इति वाच्यमेव स्यात्। तस्माद् यथान्यासमेव साधु। ततो यत इति। अष्टन आ विभक्ताविव्यनुवर्त्तमाने (७।२।८४) त्यदादीनाम (७।२।१०२) इत्यत्वम्। न विभक्तौ तुस्मा (१।३।४) इति सकारस्येत्संज्ञाप्रतिषेधः। तद्धितश्चासर्वविभक्तिरित्यव्ययत्वाद् (१।१।३८) विभक्ते र्लुक्। कुत इति। कु तिहोरिति (७।२।१०४) किमः कुभावः। त्यदादिविषय इति। त्यदादयोऽत्र

विभक्तिनिबन्धनाः। तत इति। त्यदादिविधेरत्वस्योदाहरणम्। इहेति। इदमो विभक्तिस्वरस्य। इदमः सप्तम्यन्तादिदमो ह इति (५।३।११) हप्रत्ययः। इदम इश्‌ितीशादेशः (५।३।३२)। ऊडिदंपदाद्यप्पुम्रैद्युभ्य इति (६।१।१७१) इदमः परस्योदात्तत्वं विभक्तित्वे सति सिद्धं भवति। अत्र तु प्रत्ययस्वरेणैव सिद्धमाद्युदात्तत्वम्। तस्माच्चोदाहरणदिगियम् प्रदर्शिता। इदन्त्वत्रोदाहरणं युक्तम्। इत इति। इदमस्तसिल्। पूर्ववदिश्। अत्र ह्यसति विभक्तित्वे लिति प्रत्ययात् पूर्वपदाद्युदात्तत्वं स्यात्। तस्मिंस्तूडिदमित्यादिनेदमः (६।२।१७१) परस्य तस आद्युदात्तत्वं सिद्धं भवति। ननु च सत्यपि विभक्तित्वे परत्वाल्लित्स्वरेण भवितव्यम्। नैष दोषः। लितीत्यत्र (६।१।१९३) ह्यूडिदमित्यादिकं (६।१।१७१) सूत्रमनुवर्त्तिष्यते लित्स्वरबाधनार्थम्। नन्वेवमपि नैव विभक्तेरुदात्तत्वं सिध्यति। तत्र हि सावेकाचस्तृतीयादिर्विभक्तिरित्यत (६।१।१६८) स्तृतीयादिग्रहणमनुवर्त्तते। न च तसिलादयस्तृतीयादिग्रहणेन गृह्यन्ते। तृतीयैकवचनमारभ्या पञ्चमाध्यायपरिसमाप्तेर्यावान् प्रत्ययो विभक्तिसंज्ञः सर्वोऽसौ तृतीयादिः। अतः परमित्यादि। सामर्थ्यं हि नाम सम्बन्धार्थता। सा च प्रतियोगिनमपेक्षतएव येन सहैकार्थीभावो भवति तस्मिन् प्रतियोगिनि सति। नान्यथा। प्राथम्यमपि प्रतियोग्यपेक्षमेव। द्वितीयं हि प्रतियोगिनमपेक्ष्य प्रथममित्युच्यते। इत उत्तरं प्रत्ययाः प्रकृत्यर्थ एव भवन्तीति न तद्विधौ द्वितीयस्य प्रतियोगिनः सम्भवः। तदभावात् सामर्थ्यप्राथम्ययोरपि नास्त्येव सम्भवः। तयोः प्रतियोग्यपेक्षत्वात्। यतश्चैतदेवं ततः सामर्थ्याधिकारः प्रथमग्रहणञ्च नोपयुज्यत इति द्वयमपि निवृत्तम्। यद्येवं वावचनस्यापि निवृत्तिः प्राप्नोति। एकयोगनिर्दिष्टत्वादित्यत आह वावचनं तु वर्त्तत एवेति। तस्य स्वरितत्वादिति भावः। तेन विकल्पेनेत्यादि। तेनोत्तरसूत्रे वाग्रहणानुवृत्तेः फलं दर्शयति।

## २। किंसर्वनामबहुभ्योऽद्व्यादिभ्यः।

कुत्रेति। सप्तम्यास्त्रल्। पूर्ववत् कुभावः। प्रकृतिपरिसंख्यानमिति। प्रकृतिपरिगणनम्। वैयाकरणपाश इति। याप्ये पाशप् (५।३।४७)।

अयश्चावधिः परो वक्ष्यत इत्यन्याभ्योऽपि प्रकृतिभ्यो भवति। सर्वनामत्वादेव सिद्ध इति। सर्वनामत्वं किमः सर्वादिषु पाठात्। किमो ग्रहणमित्यादि। किंशब्दोऽयं द्व्यादिषु पठ्यत इति तस्य द्व्यादिभ्य इति पर्युदासः क्रियते। तस्मात् सर्वनाम्नोऽपि स्वशब्देनोपादानम्। यद्येवं द्विशब्दात् पूर्वं किंशब्दः पठितव्यः। एवं हि तस्य पृथग्ग्रहणं न कर्त्तव्यमेव भवति। सत्यमेतत्। न सूत्रकारस्येह गणपाठ इति नासावुपालम्भमर्हति। अपि च त्यदादीनां यद् यत् परं तत् तच्छिष्यत इति किमः सर्वैरेव त्यदादिभिः सह विवक्षायां शेष इष्यते। त्वञ्च कश्च कौ। भवांश्च कश्च कौ। स चैवं पाठे न सिध्यतीति यथान्यासमेवास्तु। बहुग्रहणे संख्याग्रहणमिति। कथमिह सर्वनामसंज्ञया सर्वादयः संज्ञिनो निर्दिश्यन्ते। तस्मात् तैः सह निर्देशाद् बहुशब्दस्यापि बहुगणादि-(१।१।२३) सूत्रेण यस्य संख्यासंज्ञा विहिता तस्यैव संज्ञिनो ग्रहणं विज्ञायते। बह्वोः सूपादिति। अत्र वैपुल्यवाची बहुशब्दः।

## ३। इदम इश्।

शकारः सर्वादेशार्थ इति। असति हि तस्मिन्नलोऽन्त्यस्य (१।१।५२) स्यात्। ततश्चेद्रूपस्य हलि लोपे (७।२।११३) कृत आद्गुणे(६।१।८७)चैत एहेत्यनिष्टं रूपं स्यात्। ननु (३।१।८७) चेदमस्त्यदाद्यत्वे (७।२।१०२) कृते ऽतो गुणे (६।१।९७) पररूपत्वे चेद्रूपलोपे चान्त्यस्याप्यादेश इत इहेति सिध्यत्येव। सिध्येद् यदि प्राक् त्यदाद्यत्वं लभ्येत। ननु तल्लभ्यम्। इत्वमेव हि तावदन्तरङ्गं स्यात्। इत्वं हि तसिलादिप्रत्ययमात्रमपेक्षत इत्यन्तरङ्गम्। त्यदाद्यत्वमङ्गसंज्ञां परस्य प्रत्ययस्य विभक्तित्वञ्चापेक्षत इति बहिरङ्गम्। तस्माच्छकारः कर्त्तव्यः।

## ४। एतेतौ रथोः।

रथोरिति। वर्णयोरिदं ग्रहणम्। तत्र यस्मिन् विधि स्तदादावल्ग्रहण इति (१।१।७२, वा) रेफादौ थकारादौ च कार्य्यं विज्ञायत इत्याह रेफादावित्यादि। रेफस्याकार उच्चारणार्थ इति कथं ज्ञायते? इदमः परस्य प्राग्दिशीयस्याकारवतो रेफस्याभावात्।

## ५। एतदोऽश्। (A)

शकारः सर्वादेशार्थ इति। ननु चान्त्यस्य स भवन् यदि तावदकृते त्यदाद्यत्वे भवति ततो दकारस्य भवन्ननर्थकः प्रसज्येत। त्यदाद्यत्वेनापि हि तस्याकारो लभ्यत एव। अथ त्यदाद्यत्वे कृते ऽकारस्य स्थाने भवन्ननर्थक एव प्रसज्यते। नह्यकारस्याकारवचने प्रयोजनमस्ति। कृतवांश्च। तत्र वचनादसत्यपि शकारे सर्वादेशो भविष्यति। नैतदस्ति। अस्ति ह्यकारस्याकारवचने प्रयोजनम्। किम्? अतोऽत्रेत्यत्र यो ऽन्यः प्राप्नोति स मा भूदिति। कः पुनरसौ? लिति प्रत्ययात् पूर्वस्योदात्तः। तस्माच्छकारः कर्त्तव्यः। थमुः पुनरुपसंख्येय इति। तस्याविद्यमानत्वात्। उपसंख्येय इति प्रतिपाद्य इत्यर्थः। तत्रेदं प्रतिपादनम्। एत एव थकारादावादेश-वचनं ज्ञापयति भवत्येतदस्थमुरिति। कुतो नु खल्वेतद्? ज्ञापकात्। थमुर्भविष्यति। न पुनर्यएवासौ प्रकारवचने थालित्यविशेषविहित (५।३।२३) स्थकारादि स्तस्मिन्नेवादेशः स्यात्। नैष दोषः। इदम स्थकारादिविशेष इष्यते। एत इत्यत्रापि हीदम इत्यनुवर्त्तते। तच्च नादेशविधानार्थम्। आदेशस्य पूर्वमेव विहितत्वात्। तस्मात् प्रत्ययविशेषणं विज्ञायते। तत्र एतेन थकारादिं विशेषयिष्याम इदम इत्येवं यो विहित इदम्शब्देनैव यो विहित स्थकारादिरिति। थमुरेव चैवं विहितः। न थालिति युक्तमुक्त-मादेशवचनं ज्ञापयति भवत्येवैतदस्थमुरिति।

## ६। सर्वस्य सोऽन्यतरस्यां दि।

दीति। दकारादियं सप्तमी। तत्र दकारमात्रस्य प्राग्दिशीयस्या-भावाद् यस्मिन् विधिस्तदादावल्ग्रहण इत्यतो (१।१।७२, वा) दकारादौ विधिर्ज्ञायत इत्याह प्राग्दिशीये दकारावित्यादि। सर्वदा व्राह्मणीति। आतोऽनुपसर्गे कः (३।२।३)। ततष्टाप्।

## ७। पञ्चम्यास्तसिल्।

तसिल् प्रत्ययो भवतीति। आदेशा एवामी तसिलादयः। पञ्चम्या

(A) भाष्ये त्वेतदोऽन्नित्येव सूत्रस्य पाठः। अन्निति च नकारान्त आदेशः।

दीनां स्थाने कस्मान्न क्रियन्ते ? एवं हि विभक्तिसंज्ञा न कर्त्तव्या भवति। अशक्या एत आदेशाः कर्त्तुम्। आदेशत्वे ह्येषामव्ययात् त्यपि (४।२।१०४) ततस्त्यो यतस्त्य इत्यत्र सुपो धातुप्रातिपदिकयोरिति (२।४।७१) लुक्। लभन्ते हि स्थानिवद्भावेन सुबादेशाः सुबाश्रयं कार्य्यम्। तत इति। अनुदात्तौ सुप्पिताविल्यनुदात्तः (३।१४)। कुत इति। घेर्ङितीति गुणः (७।३।१०२)। एतर्हीति सुपि चेति (७।३।१०३) दीर्घः। तत्रेति। बहुवचने (७।१।१५) झल्येदित्येत्वम्। कुत्रेति। अच्च घेरित्यौत्त्वम् (७।३।११९)। ततस्तत्रेति। ङसिङ्योः स्मात्स्मिनाविति (७।१।१५) स्मात्स्मिनौ। तस्मान् नादेशा अमी क्रियन्ते। यद्येवं तस् ङपच्चय इत्यस्मात् तस्यन्नित्यत्र धातुरूपस्य पञ्चम्याः परस्य तसेश्चेति (५।३।८) तसिलादेशः प्राप्नोति। नैष दोषः। स्वार्थिकविज्ञानान्न भविष्यति। स्वार्थिका ह्येते तसिलादयः। तन्मध्ये तसिलादेशो विधीयमानस्तथा विज्ञायते यथा स्वार्थे क्रियमाणः स्वार्थिकत्वं नातिक्रामति। अपादाने चाहीयरुहोरित्यनेन (५।४।४५) विहितस्तस्य स्वार्थिकस्य स्थाने भवंस्तसिलपि स्वार्थिक एव भवति। धातुस्तु प्रातिपदिकादर्थान्तरे वर्त्तत इति तदादेशो भवंस्तसिल् स्वार्थिको न भवति।

## ८। तसेश्च।

कुत आगत इति। अपादाने चाहीयरुहोरिति (५।४।४५) परत्वात् तसौ कृते तस्यानेन तसिल्। ननु च कृतेऽपि तसिलि तदेव रूपम्। तत् किमर्थमादिश्यत इत्याह तसे स्तसिल्वचनमित्यादि।

## ९। पर्य्यभिभ्याञ्च।

सर्वोभयार्थे वर्त्तमानाभ्यामिष्यत इति। तेनेह न भवति। परिषिञ्चति। अभियातीति। अत्र चानभिधानं हेतुः। अथवा सर्वस्येत्यादेः (५।१।६) सूत्रादन्यतरस्यांग्रहणमनुवर्त्तते। सा च व्यवस्थित विभाषा। तेन सर्वोभयार्थ एव वर्त्तमानाभ्यां भवति। नान्यत्र।

## १०। सप्तम्यास्त्रल्।

## ११। इदमो हः।

## १२ । किमोऽत् ।

क्वेति । क्वातीति (७।२।१०) किमः क्वादेशः । न विभक्तौ तुस्मा इति (१।३।४) प्रतिषेधस्येदमस्थमुरित्युकारेणातिव्यत्वस्य (५।३।२४) ज्ञापितत्वादित्संज्ञा तकारस्य । दानीमस्तु प्रतिषेधान्नास्तीत्संज्ञा । प्रयोजनाभावाच्च ।

## १३ । वा ह च च्छन्दसि ।

## १४ । इतराभ्योऽपि दृश्यन्ते ।

पञ्चमीसप्तम्यपेक्षमितरत्वमिति । तदनन्तरमितरशब्दस्य ज्ञातत्वात् । अथ दृशिग्रहणं किमर्थम् ? यावतेतराभ्योऽपीत्येतावतैव सिद्धमित्याह दृशिग्रहणमित्यादि । प्रायिको विधिर्यथा स्यादित्येवमर्थं दृशिग्रहणम् । तस्मिंस्तु सति शिष्टप्रयोगेऽनुगम्यमाने यत्र दृश्यते तत्र भवति नान्यत्रेत्येषोऽर्थो लभ्यते । तेन प्रायिकत्वं विधेः सिध्यति । तेनेत्यादि । दृशिग्रहणे तु सति यत्रेतराभ्यः शिष्टप्रयोगो दृश्यते ताभ्य एव तसिलादिभिर्भवितव्यम् । भवदादियोग एवेतराभ्यो दृश्यन्ते । तेनेतरत्रैव तद्विधानम् । यदि ह्यन्येभ्योऽपि तसिलादयो भवन्ति पूर्वं पञ्चमीसप्तमीभ्यां विधानमनर्थकम् । नैतदस्ति । नियोगतो हि ताभ्यामिष्यते । इतराभ्यो भवदादियोगे । एतच्च पूर्वस्मिन् विधावस्मिंश्च सत्युभयं लभ्यत इति कुत आनर्थक्यम् ?

## १५ । सर्वैकान्यकिंयत्तदः काले दा ।

सप्तम्या इत्यनुवर्त्तत इति । तस्याः स्वरितत्वात् । नत्वितराभ्य इति । तद्विपर्य्ययात् । त्रलादेरपवाद इति । यथासम्भवम् । तत्र किम्शब्दात् किमोऽदिति (५।३।१२) प्राप्तस्यात्प्रत्ययस्यापवादः । केषाञ्चिन्मतेन त्रलोऽपि । तच्छब्दादपि तयोर्दाहिंलौ च च्छन्दसीति । शेषेभ्यस्तु त्रलः । कदेति । किमः कादेशः ।

## १६ । इदमो हिंल् ।

हस्यापवाद इति । इदमो ह इति (५।३।११) प्राप्तस्य । लकारः स्वरार्थ इति । लिति प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात् । ननु च यथेत इत्यतो-

ङिदमित्यादिना (६।१।१७१) विभक्तिस्वरो भवति तथेहापि तेनैव भवितव्यम्। नैतदस्ति। तथाहि युक्तमित इत्यत्र यद् विभक्तिस्वरो भवतीति। तसिलो लित्त्वस्य परितोऽभित इत्यत्र चरितार्थत्वात्। अस्य तु र्हिलो लित्करणमकृतार्थम्। तद् यदि विभक्तिस्वरेण बाध्येत तस्यानर्थक्यं स्यात्। तस्माल्लित्स्वर एव भवति।

## १७। अधुना।

## १८। दानीं च।

दानीञ्चेति। योगविभाग उत्तरार्थः। तदो दा चेत्यत्र (५।३।१९) दानीमेव यथा स्यात्। पूर्वसूत्रविहितः प्रत्ययो मा भूदिति।

## १९। तदो दा च।

अनर्थकमिति। वैचित्र्यार्थम्। अन्यस्याभावादनर्थकं वैचित्र्येण सार्थकमेव। विहितत्वादिति। सर्वैकान्येत्यादिना (५।३।१५)।

## २०। तयोर्दार्हिलौ च च्छन्दसि।

इदा। इदम इश् (५।३।३)। तथा वर्णव्यत्ययेन दकारस्य धकारः। इदानीं तदानीमिति। दानींप्रत्ययस्योदाहरणम्।

## २१। अनद्यतने र्हिलन्यतरस्याम्।

तसिलादिषु प्राप्तेषु र्हिल्प्रत्ययो विधीयते। कर्हीति। किमः कः (७।२।१०३)। कदा यदा तदेति। सर्वैकान्यकिंयत्तदः काले दा (५।३।१५)।

## २२। सद्यःपरुत्परार्य्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः।

समानेऽहनि सद्य इति। निमित्तनिमित्तिनोः समाने साधारणेऽहनि निपातनमेतत्। तद्यथा सद्यः प्राणहरणं मर्मणि ताड़नमिति। यस्मिन्नेवाहनि मर्मणि ताड़नं तस्मिन्नेवाहनि प्राणहरणमित्यर्थः। उदारी चेति। उच्च आरिश्चेति उदारी। परस्मादेद्यवीति। परशब्दादेद्यविप्रत्ययो भवत्यहन्यभिधेये।

## २३ । प्रकारवचने थाल् ।

सामान्यस्य भेदको विशेषः प्रकार इति । यथा ब्राह्मण इति सामान्यम् । तस्य विशेषा माठरादयः प्रकारा इति । ईदृशमेव लक्षणमिति । तत् पुनः प्रकारवचने जातीयरित्येतत् (५।३।६९) । स तु स्वभावादित्यादिना तुल्यलक्षणविहितयोर्विशेषं दर्शयति । अतएव विषयभेदाद् विशेषविहितेनापि थाला सामान्यविहितो जातीयर् न बाध्यते । तेन किञ्जातीय इत्यादि सिद्धं भवति ।

## २४ । इदमस्थमुः ।

## २५ । किमश्च ।

योगविभाग उत्तरार्थः । था हेतौ चेति (५।३।२६) वक्ष्यति । स किम एव यथा स्यात् । इदमो मा भूदिति ।

## २६ । था हेतौ च च्छन्दसि ।

## २७ । दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ।

दिग्देशकालेषु वर्त्तमानेभ्य इति । कथं पुनर्ये दिशां शब्दा स्ते देशे काले वर्त्तन्ते ? स्वभावात् । यथैव हि ते दिशि स्वभावादेव वर्त्तन्ते न हेत्वन्तरात् तथा देशकालयोरपि । यद्येवं त्रिषु वर्त्तमानाः कथं दिशा व्यपदिश्यन्ते दिक्शब्देभ्य इति ? कथन्तर्हि व्यपदेष्टव्यम् ? दिग्देशकालशब्देभ्य इति ? नैतदस्ति । एवं हि व्यपदेशस्यैतत् फलमैन्द्र्यां दिशि निवसतीत्यत्र मा भूदिति । एतच्चास्यतसेनापि लभ्यत इत्यनेनैव व्यपदेशो युक्तो येन व्यपदेशाल्लघु सूत्रं भवति । दिशा च व्यपदेशे लघु भवति दिक्शब्दस्याख्याच्तरत्वादिति दिशां तेन व्यपदेशः । एवमपि दिक्शब्दस्य दिशि वृत्तेः विशेषणमयुक्तम् । अवश्यं हि दिक्शब्दो दिशि वर्त्तते । तत्रैवं कर्त्तव्यं देशकालयोरिति । नैतदस्ति । एवं ह्युच्यमाने सत्युपलक्षणमेव हि दिक्शब्दः स्यात् । प्रत्ययस्तु देशकालवृत्तिभ्य एव स्यात् ।

न दिग्वृत्तिभ्यः। दिग्ग्रहणे तु तेभ्योऽपि भवति। इह तिस्रो विभक्तयः। त्रयश्चार्था दिगादयः। तत्र साम्याद् यथासंख्येन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तामपाकर्त्तुमाह यथासंख्यमत्र नेष्यत इति। तत् कथमिहैकवचननिर्देशे कर्त्तव्ये बहुवचननिर्देशः? प्रत्येकं दिगादिवृत्तेर्बहुल-विभक्त्यन्तात् प्रत्ययः कर्त्तव्य इति सूचनार्थः। एवञ्चायं बहुलविभक्त्यन्तात् प्रत्ययः कृतो भवति यदि दिग्वृत्तेरपि सप्तमीपञ्चमीप्रथमान्तादेव भवति। देशवृत्तेरपि कालवृत्तेरपि। अथवा था हेतौ (५।३।२६) चेत्यतश्चकारोऽनु-वर्त्तते। स च श्रुतिमेव समुच्चिनोति। तेन दिगादिवृत्तेः प्रत्येकं सप्तमी-पञ्चमीप्रथमान्तात् प्रत्ययो भवति। न यथासंख्यम्। यथासंख्ये हि समुच्चयो विरुध्येत। अथवा स्वरितत्वे सति यथासंख्यं भवतीत्युक्तम्। न चेह यथा-संख्यार्थं स्वरितत्वं प्रतिज्ञायते। तेन यथासंख्यं न भविष्यति। पुरस्ताद-धस्तादिति। पूर्वाधरशब्दाभ्यामस्तातिः। अस्ताति चेति (५।३।४०) वक्ष्यमाणेन यथासंख्यं पुर् अध इत्येतौ पूर्वाधरशब्दयोरादेशौ। ऐन्द्र्यां दिशि वसतीति। ऐन्द्रीशब्दः सामान्येनेन्द्रसम्बन्धिवस्तुमात्रमाचष्टे। दिक्शब्दसन्निधौ तु दिशि वर्त्तते। तेन दिक्शब्द इति लोके न प्रसिद्ध इति न भवत्यतः प्रत्ययः। पूर्वं ग्रामं गत इति पूर्वशब्दोऽत्र ग्रामस्य देशात्मकत्वाद् देशे वर्त्तते। नत्वत्र सप्तम्या-दिविभक्त्यन्तः। किं तु द्वितीयान्तः। पूर्वस्मिन् गुरौ वसतीति। पूर्वशब्दोऽत्र दिगाद्युपलक्षिते गुरौ वर्त्तते। न दिगादिषु।

## २८। दक्षिणोत्तराभ्यामतसुच्।

अकारो विशेषणार्थ इति। यद्यत्राकारो न क्रियते तदा षष्ठी तसर्थं प्रत्ययेनेति (२।३।३०) सूत्रं कर्त्तव्यम्। एवञ्च सति तसिलोऽपि ग्रहणं स्यात्। ततश्च ततो हेतुनेत्यत्रापि तृतीयां बाधित्वा षष्ठी स्यात्। तस्मादकारो विशेषणार्थः कर्त्तव्यः। अथ यदा दक्षिणोत्तरशब्दौ दिशि वर्त्तेते तदा टाप्-श्रवणं मा भूदित्येवमर्थोऽकारः कस्मान्न भवति? सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति (२।२।२६, वा) पुंवद्वचनेनैव टापो निवर्त्तितत्वात्। ननु चासत्यकारे प्रत्ययस्वरेण सिद्धत्वाच् चकारोऽपि नैव कर्त्तव्यः। तत्रैकानुबन्धग्रहणे तु न

इत्यनुबन्धकस्येति तसिलो ग्रहणं न भविष्यति। एवमपि प्रतियोगे पञ्चम्या स्तसिः (५।४।४४)। तेनैकदिक् (४।३।११२)। तसिश्चेत्यन्यतरग्रहणं (४।३।११३) स्यात्। तस्माद् विशेषणार्थश्चकारः कर्त्तव्यः।

२९। विभाषा परावराभ्याम्।

३०। अञ्चेर्लुक्।

दिक्शब्दादित्यधिकारात् केवलस्य चाञ्चतेरदिक्शब्दत्वादञ्चेरित्यचूत्तर पदस्य निर्देशोऽयम् विज्ञायते। अतएवाह अञ्चत्यन्तेभ्य इति। दिक्शब्देभ्य इति। प्राग् वसतीति। प्रपूर्वादञ्चतेर् ऋत्विगित्यादिना (३।२।५९) सूत्रेण क्विन्। अञ्चतेश्चोपसंख्यानमिति (४।४।१०८) ङीप्। अच इत्यल्लोपः (६।४।१०८)। चाविति दीर्घः (६।३।१३८)। प्राची इति स्थिते ऽस्तातिः। तस्य लुक्। क्विन्प्रत्ययस्य कुरिति कुत्वम् (८।२।६२)। प्रत्यगिति। प्रतीची-शब्दात् प्रत्ययः। स तु पूर्ववदुपपाद्यः।

३१। उपर्य्युपरिष्टात्।

रिल्रिष्टातिलौ च प्रत्ययौ निपात्येते इति। अस्तातेरपवादौ।

३२। पश्चात्।

आतिश्च प्रत्यय इति। अयमप्यस्तातेरपवादः। दक्षिणपश्चादुत्तर-पश्चादिति। दक्षिणापरस्यां दिशि वसतीति दक्षिणपश्चात्। एव मुत्तरपश्चात्। अर्द्धोत्तरपदस्य चेति। अपरस्येति सम्बध्यते। विनापि पूर्वपदेन पश्चाद्भावो वक्तव्य इति। अपरस्यार्द्धोत्तरपदस्येति प्रकृतेन सम्बन्धनीयम्। अत्र सर्वत्र वक्तव्यशब्दो व्याख्याने वर्त्तते। तत्रेदं व्याख्यानम्। उत्तरसूत्रात् सिंहाव-लोकितेन चकारोऽत्रावतिष्ठते। स चानुक्तसमुच्चयार्थः। तेन दिक्पूर्वपदस्या-परशब्दस्य पश्चाद्भाव इत्येवमादिकं कार्य्यं सिद्धं भवति।

३३। पश्च पश्चा चच्छन्दसि।

३४। उत्तराधरदक्षिणादातिः।

उत्तरदक्षिणाभ्यां दक्षिणोत्तराभ्यामतसुच् (५।३।२८)। एनबन्यतरस्यामदूरे-ऽपञ्चम्याः (५।३।३५)। दक्षिणादाच्। आहि च दूरे। उत्तराच्चे-(५।३।३६-८)

त्वेभिर्योगैरतसुजादिषु प्राप्तेष्वधरादप्यस्तातावातिर्विधीयते। तस्यास्ताति र्बाध्यत एव। अतसुजादयस्तु वचनात् पक्षे भवन्त्येव। अत्र च यद्यप्युत्तरादीनां सप्तम्यादीनाञ्च विभक्तीनां दिगादीनाञ्चोपाधीनां त्रित्वं तथापि यथासंख्यं न भवति। कुतः? तदर्थस्य स्वरितत्वस्याप्रतिज्ञानात्। लघूत्तरस्याधरशब्दस्यापूर्वनिपातात्लक्षणव्यभिचारचिह्नाद्वास्य लक्षणान्तरनिरपेक्षतां दर्शयन् यथासंख्यलक्षणमिह नापेक्ष्यत इति सूचयति। तेन विभक्तिभि स्तावद् यथासंख्यं न भवति। उपाधिभिस्तु दक्षिणशब्दस्य कालवृत्त्यसम्भवाच्च।

## ३५। एनबन्यतरस्यामदूरेऽपञ्चम्याः।

अदूरे चेदवधिमानवधेर्भवतीति। कथं पुनरेवं विशेषो लभ्यते? यावता सूत्रेऽवधिशब्दो न श्रूयते। नाप्यवधिमान्। दिक्शब्दानामवध्यपेक्षा प्रवृत्तिर्भवति। अवधिमानप्यवधि मपेक्ष्य भवतीति सामर्थ्यादनुक्तोऽप्येष विशेषो लभ्यत इति। अधस्ताद् वसतीति। अस्ताति चेति (५।३।४०) वक्ष्यमाणेनास्तातौ परतोऽधरशब्दस्यादेशः। प्रागसेरिति। असिपुरधवश्चैषामिति (५।३।३९) वक्ष्यमाणः। केचिद् दिक्शब्दमात्रात् प्रत्ययं मन्यन्त इति तेषां मतेन पूर्वेण वसतीत्याद्यपि भवति। यदि दिक्शब्दमात्रात् प्रत्ययो भवतीत्यञ्चत्यन्तादपि स्यात्। भवतु। अञ्चेर्लुगिति (५।३।३०) लुग् भविष्यति। नैतदस्ति। मध्येऽपवादाः पूर्वान् विधीन् बाधन्त (प,६१) इत्यस्तातेरेवातानेन लुक्। नान्यस्य। एवं तर्ह्यन्यतरस्यामिति व्यवस्थितविभाषेयम्। तेनाञ्चत्यन्तान्न भविष्यति। पकार एनपा द्वितीयेति (२।३।३१) विशेषणार्थः स्वरार्थश्च।

## ३६। दक्षिणादाच्।

चकारो विशेषणार्थ इति। असति हि तस्मिन् पश्चाशब्द आकारान्तो निपातित इति तेनापि योगे पञ्चमी स्यात्। स्वरार्थस्तु चकारो नोपपद्यते। प्रत्ययस्वरेणैव सिद्धत्वात्।

## ३७। आहि च दूरे।

## ३८। उत्तराच्च।

आजाही प्रत्ययौ भवत इति। ननु चानन्तर्यादाहिरेव प्राप्नोति। न।

चकारोऽत्र क्रियते। स हि व्यवहितमप्याचं समुच्चिनोति। तेनाजपि भविष्यतीति।

## ३९। पूर्वाधरावराणामसि पुरधवश्चैषाम्।

पूर्वादस्ताती प्राप्ते ऽस्तातावपरादपि विभाषातस्तूचीदमारभ्यते। अथैषामिति किमर्थमिदमुच्यते? यावता येयं पूर्वादिषु षष्ठी सैव प्रत्ययं विधाय स्थाने षष्ठी विज्ञायते। सम्बन्धभेदाच्च षष्ठ्यर्थभेदः। सत्यमेतत्। तथापि सुखप्रतिपत्त्यर्थमेषामित्युक्तम्।

## ४०। अस्ताति च।

ननु चासिना बाधितत्वात् पूर्वादिभ्योऽस्तातिना न भवितव्यमित्याह इदमेवेत्यादि। गतार्थम्।

## ४१। विभाषाऽवरस्य।

## ४२। संख्याया विधार्थे धा।

प्रकारवचने च जातीयरिति। तस्यायमपवादः। विधा प्रकार इत्युक्तः प्रकारवचने थालित्यत्र (५।३।२३)। स च द्रव्यगुणविषयोऽप्यस्ति। तत्र यदि सोऽपि गृह्येत द्रव्यगुणयोर्लिङ्गसंख्याभ्यां योगाद्वा प्रत्ययान्तमलिङ्गमसंख्यञ्च न स्यात्। एवञ्च तस्याव्ययत्वं न स्यात्। तच्चेष्टम्। तथाहि धाप्रत्ययोऽव्ययेषु पठ्यते तसिलादिस्तद्धित एधाच्पर्य्यन्त इति। क्रियाविषये तु तस्मिन् गृह्यमाणे न दोषः। क्रियायाः सर्व्वदा लिङ्गसंख्याभ्यामयोगादित्येतच् चेतसि कृत्वाह स चेत्यादि। क्रियाधातुवाच्यो विक्लेदनादिरर्थः। स च विषयोऽस्य स तथोक्तः। कथं पुनः सामान्योक्तौ विशेषस्य ग्रहणं लभ्यते? अर्थग्रहणस्य ह्येतदेव प्रयोजनम् प्रकारविशेषणं यथा स्यादिति। अन्यथा हि विधायामित्येवं हि ब्रूयात्। यदि तर्हि प्रकारः क्रियाविषयो गृह्यते नवधा द्रव्यं नवधा गुण इत्यत्र न प्राप्नोति। नैष दोषः। अत्रापि क्रियाध्याहर्त्तव्या। नवधा द्रव्यं नवधा गुण उपपाद्य विगृह्यते चेति।

## ४३। अधिकरणविचाले च।

## ४४। एकाद्धो ध्यमुञन्यतरस्याम्।

ऐकध्यं कुर्विति। अधिकरणविचाल उदाहरणम्। ऐकध्यं भुङ्क्त इति। विधार्थे। अत्र धाग्रहणमनुवर्त्तते। न च तत्र विध्यर्था वृत्तिर्युक्ता। पूर्वमेव विहितत्वात्। तस्मादनुवृत्तिसामर्थ्यात् स्थानित्वं धाप्रत्ययस्य विज्ञायत इत्याह प्रकरणादेव लब्ध इति। धाप्रत्ययस्य स्थानिवत्त्व इति शेषः। किं पुनः कारण-मसति धाग्रहणे विधार्थे विहितस्य न भवतीत्याह अनन्तरस्यैव हीत्यादि। असति हि पुनर्धाग्रहणेऽनन्तरस्य विधिर्वा भवति प्रतिषेधो (प,३) वेत्यधिकरण-विचालार्थे यो विहितस्तस्यैव स्यात्। नतु विधार्थे यो विहितस्तस्य। पुनर्धा-ग्रहणे तु सति धामात्रस्यादेशः सिद्धो भवति।

## ४५। द्वित्र्योश्च धमुञ्।

द्वैधानीति। ननु च स्वार्थिकाः प्रकृतिधर्माननुवर्त्तन्त इति लिङ्ग-संख्याभ्यामत्र न भवितव्यम्। नैष दोषः। अतिवर्त्तन्ते हि कदाचित् स्वार्थिकाः प्रकृतिधर्मान् यथा चत्वार एव वर्णाश्चातुर्वर्ण्यमिति।

## ४६। एधाच्च।

## ४७। याप्ये पाशप्।

याप्यशब्दोऽयं गमयितव्ये वर्त्तते ग्रामान्तरात् याप्य इति। अत्यशक्य-प्रतीकारे याप्यो रोग इति। अस्ति कुत्सिते याप्योऽयमिति। कुत्सित इति गम्यते। पाशप्रत्ययान्तात् कुत्सित एव प्रतीयत इति तदभिधायिन एव याप्य-शब्दस्येदं ग्रहणं युक्तम्। अतएवाह याप्यः कुत्सित इत्युच्यत इति। याप्यन्ते ऽपनीयन्ते तस्माद् गुणा इति याप्यः। कृत्यल्युटो बहुलमित्यपादाने (३।३।११३) कृत्यः। तत्र कस्मान्न भवतीति? यद्यप्यसौ व्याकरणे प्रवीण स्तथापि दुःशील-त्वाद् भवितव्यमेव तत्रेत्यभिप्रायः। अस्येत्यादि। गुणो विशेषणम्। द्रव्यं विशेष्यम्। तत्र द्रव्ये यद्यपि बहवो गुणाः सन्ति तथापि यस्य गुणस्य भावे द्रव्ये शब्दो निविशते वर्त्तते प्रत्यासत्तेस्तस्यैव कुत्सायां शब्देन भवितव्यम्। नतु वैयाकरणस्य दुःशीलत्वं प्रवृत्तिनिमित्तम्। किं तर्हि? व्याकरणस्य परिज्ञान-मध्ययनं वा। नचेह दुःशीलत्वेन भवितव्यं प्रत्ययेन।

४८ । पूरणाद् भागे तीयादन् ।

पूरणप्रत्ययो यस्तीय इति । तस्य पूरणे डडिति (१।२।४८) पूरणाधिकारे विहितत्वात् । पूरणाभिधेयत्वाद्वा । उपचारेण प्रत्ययोऽपि तीयः पूरण इत्युच्यते । भाग इत्यंश इत्यर्थः । किमर्थं पुनरिदम् ? यावता कृतेऽप्यनि रूपं तदेवे-त्याह स्वरार्थं वचनमिति । विभागे नित्स्वरेणाद्युदात्तं यथा स्यात् । पूरण-ग्रहणमुत्तरार्थमिति । उत्तरत्र पूरणप्रत्ययान्तात् प्रत्ययो यथा स्यात् । तस्य च व्यवच्छेदाय क्रियमाणं पूरणमिहाप्यर्थवत् स्यात् । स च नास्तीति नेहार्थता तस्योपपद्यते । ननु च मुखपार्श्वतसोरीयः (४।३।६०,वा) पार्श्वतीय इत्यपूरणोऽपि सोऽस्तीत्यत आह मुखतीयादिरनर्थक इति । अर्थवद्ग्रहण-परिभाषया (प, १५) । अर्थवानिह तीयो गृह्यते । न च मुखतीयादिरर्थवान् । अतो सत्यपि पूरणग्रहणे तस्य ग्रहणं न भविष्यतीति भावः ।

४९ । प्रागेकादशभ्योऽच्छन्दसि ।

५० । षष्ठाष्टमाभ्यां ञ च ।

यथासंख्ये हि षष्ठादन्यथा प्राप्तश्चेत्यन् । न च पूर्वेणैव सिद्ध इति षष्ठ-ग्रहणमनर्थकं स्यात् । तस्मादुभाभ्यामुभयं भवति ।

५१ । मानपश्वङ्गयोः कन्लुकौ च ।

चकाराद् यथाप्राप्तश्चेति ।

५२ । एकादाकिनिच्चासहाये ।

आकिनिचः कनो वा लुग् विज्ञायत इति । प्रत्यासत्तेः । नतु प्रकरणान्तर-विहितस्य । विप्रकर्षात् । स चेत्यादि । यदि नित्यः स्यात् तद्विधानमनर्थकं स्यात् । तस्माद् विधानसामर्थ्यात् पक्षे भवति । किं पुनः कारणमसहाय-ग्रहणम् ? संख्याशब्दनिरासार्थं क्रियत इत्याह तदुपादाने हीत्यादि । असत्य-सहायग्रहणे संख्यावाचिनोऽप्येकशब्दस्य ग्रहणं स्यात् । तस्मिंस्तु सति द्विबह्वोर्न स्यात् । नहि द्वयोर्बहुषु वा चैकत्वसंख्या विद्यते । असहायता तु शतस्यापि भवति । तुल्यजातीयान्यस्याभावात् । शतमसहायमिति । तेनासहायार्थस्य ग्रहणे द्विबह्वोरपि प्रत्ययः सिध्यति । अथ कस्मादाकिनिज् विधीयते ? न

अकानिजित्येवोच्येत। अत्रापि सवर्णदीर्घत्वेनेष्टं सिध्यत्येव। न सिध्यति। अतो गुणे (६।१।८७) पररूपत्वं यस्येति (६।४।१४८) लोपश्च प्राप्नोति। अकारोच्चारणसामर्थ्यान्न भविष्यति। नैतदस्ति। अस्ति ह्यकारोच्चारणस्य प्रयोजनम्। किम्? भसंज्ञायामन्यः पदसंज्ञानिबन्धनोऽवग्रहो मा भूदिति। तस्मादाकिनिजेव विधेयः।

## ५३। भूतपूर्वे चरट्।

किमर्थं पुनरेतौ समानार्थौ शब्दावुपदिश्येते? नान्यतर एवोपदिश्येत। नैवं शक्यम्। इह ह्यतिक्रान्तकालविशिष्टेऽर्थे वर्त्तमानात् प्रत्ययग्रहणमिष्यते। स चातिक्रान्तः कालोऽन्यतरोक्तौ नैव गृह्यते। तथाहि भूतशब्दो वर्त्तमानेऽप्यर्थे वर्त्तते यथा भूतवानिति। पूर्वशब्दस्तु दिग्देशयोरपि। तस्मादन्यतरोक्तावतिक्रान्तकालो न प्रतीयते। अतएवाह भूतपूर्वशब्दोऽतिक्रान्तकालवचन इति। अथ चकारस्य चुटू इतीत्संज्ञा (१।३।७) कस्मान्न भवति? अनित्यत्वात् तस्य विधेः। अनित्यत्वन्तु तत्रैव प्रतिपादितम्।

## ५४। षष्ठ्या रूप्य च।

इह षष्ठ्यन्तं यत् तद् विशेषणं परार्थत्वादप्रधानम्। इतरत् पुनस्तेनैवोपक्रियमाणत्वाद् विशेष्यं प्रधानम्। प्रधानेन च कार्य्यसंप्रत्यय इति यथा षष्ठ्यन्तात् प्रत्ययविधाने संप्रति षष्ठ्यन्तप्रतियोगिनि प्रधाने प्रत्ययो विज्ञायते न प्रकृत्यर्थे तथा भूतपूर्वग्रहणं तस्यैव ज्ञायते न प्रकृत्यर्थस्येत्येतदालोच्याह षष्ठ्यन्तादित्यादि। प्रत्ययार्थस्तु षष्ठ्यन्तस्य यः प्रतियोगी स वेदितव्यः।

## ५५। अतिशायने तमबिष्ठनौ।

अतिशायनमिति लुग्रट्। यद्यपि शेतिः केवलः स्वप्ने वर्त्तते तथाप्यतिपूर्वस्य प्रकर्षे वृत्तिः। अतएवाह प्रकर्ष इति। ननु चातिशयनमिति भवितव्यमित्याह निपातनाद्दीर्घत्वमिति। निपातनं त्वतिशायनशब्दस्य कथम्? साधुत्वं विज्ञायत इत्येवमर्थम्। प्रकृतिविशेषणञ्चैतदिति। प्रत्ययाशङ्कां निराकरोति। प्रकृत्यर्थविशेषणं स्वार्थिकानां द्योत्यं भवतीति न वाच्यम्। तस्य प्रकृतिवाच्यत्वात्। पटिष्ठः। लघिष्ठ इति। तुरिष्ठेमेयःसु इति (६।४।१५४)

टिलोपः । गरिष्ठ इति । प्रियस्थिरस्फिरोरुबहुलगुर्वित्यादिना (६।४।१४७) गुरुशब्दस्य गरादेशः। प्रकर्षप्रत्ययान्तादपरेण प्रत्ययेन न भवितव्यम् । एकेनैव प्रत्ययस्य द्योतितत्वादिति यो मन्यते तं प्रत्याह यदा चेति । यत्र प्रथमे प्रकर्षयातिशायनिको विहितस्तत्र तेनैव द्योतितत्वाद् द्वितीयो मा भूत् प्रकर्षप्रत्ययः । प्रकर्षान्तरत्व आतिशायनप्रत्ययान्ताद् युक्तमेवापरेणातिशायिकेन प्रत्ययेन भवितुम् । तदद्योतितत्वादिति भावः । इष्ठनि परतः प्रशस्यस्य श्रः (६।१।८७) । पूर्वेण सह्वाद् गुणः (६।१।८७) । इष्ठन्प्रत्ययान्तात् तमप्-प्रकर्षप्रत्ययः । अत्र प्रतियोग्यपेक्षो यः प्रकर्षः पूर्वस्मात् प्रकर्षात् स प्रकर्ष इष्ठन्-प्रत्ययेन द्योतितः । ननु च नास्यातिशायिकस्य विधायकं वाक्यमस्ति येन तस्मिन् विहिते तदन्तादपरः प्रकर्ष आतिशायनिको विधीयते । इदमेव ह्येकं वाक्यम् । तत्रानेनैव विधीयमाने प्रकर्षप्रत्यये तदन्तायाः प्रकृतेरसम्भव इत्ययुक्त आतिशायिकादपरस्यातिशायिकस्य भावः । नैष दोषः । इह विधीयमानप्रत्ययभेदाद् द्वे एते वाक्ये । तत्रैकेनेष्ठन् विधीयते ? अपरेण तु तदन्तात् तमप् ।

## ५६ । तिङश्च ।

पचतितमामिति । किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे इत्याम् (५।४।११) । गुणवचन इत्यादि । इष्ठनोऽनुदाहरणे हेतुः । अजादी गुणवचनादेवेति (५।३।५८) नियम इति । तत एव तेन भवितव्यम् । न च तिङन्तो गुणवचनः। अतो नासावुदाह्रियते ।

## ५७ । द्विवचनविभज्योपपदे तरबीयसुनौ ।

द्वयोरर्थयोर्वचनं द्विवचनमिति । एतेनान्वर्थस्य द्विवचनस्य ग्रहणं न पारिभाषिकस्येति दर्शयति । यदि हि पारिभाषिकं द्विवचनं गृह्येत्-तास्माकञ्च देवदत्तस्य देवदत्तोऽभिरूपतर इत्यत्र प्रत्ययो न स्यात् । पारि-भाषिकस्य द्विवचनस्याभावात् । अन्वर्थस्य तु ग्रहणे सति भवति द्व्यर्थतोप-पदस्य । तथाहि अस्माकमित्यनेनैकोऽर्थ उच्यते । एकस्मिन्नेवार्थेऽस्मदो द्वयोश्चेति (१।२।५९) बहुवचनस्य विधानात् । देवदत्तस्येत्यनेनापि द्वितीयोऽर्थं

उच्यत इति। भवत्येव तदन्वर्थं द्विवचनमुपपदम्। तदेवमन्वर्थस्य ग्रहणे सर्वत्र सिध्यतीति तस्येदं ग्रहणं युक्तमिति मन्यते। विभक्तव्य इति। पृथक् कर्त्तव्य इत्यर्थः। यः पुनरतिशय्यमानस्तस्योपपदत्वम्। नातिशयितुः। ततः प्रत्ययविधानात्। ननु च ऋहलोर्ण्यदिति ण्यति ( ३।१।१२४ ) कृते विभाज्य इति भवितव्यम्। कथं विभज्य इति निर्देश उपपद्यत इत्याह निपातनाद् यद् भवतीति। इह द्वे उपपदे। एवं प्रकृती च। प्रत्ययावपि द्वा एव। ततश्च यथासंख्येन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तन्निरासार्थमाह यथासंख्यमित्यादि। कस्मात् पुनरिष्यमाणमपि न भवति ? विभज्यशब्दस्याल्पाच्तरस्यापूर्वनिपातात्लक्षणस्य व्यभिचारचिह्नात्। स हि लक्षणान्तरनिरपेक्षतां दर्शयन् यथासंख्यलक्षणमपीह नापेक्षतेति सूचयति। पटीयानिति। पूर्ववट्टिलोपः। अत्वसन्तस्य चाधातोरिति ( ६।४।१४ ) दीर्घः। हल्ङ्यादिसंयोगान्तलोपौ ( ६।१।६८,८।२।२३ )। माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इति। पञ्चमी विभक्त इत्यनेन (२।३।४२) पञ्चमी। पाटलिपुत्रकेभ्य इत्येतदत्र विभज्योपपदम्। पाटलिपुत्रका हि माथुरेभ्यो विभज्यन्ते पृथक् क्रियन्ते। ननु चैतदपि द्विवचनोपपद इत्येव सिद्धम्। अस्ति ह्यत्र द्विवचनमुपपदम्। तथाहि माथुराणामेको राशिः। अपरः पाटलिपुत्रकाणाम्। तौ च द्विवचनेनोच्येते। तस्माद् विभज्यग्रहण-मनर्थकम्। नैतदस्ति। यद्यप्यत्र राश्यपेक्षा द्व्यर्थतास्ति तथापि नासौ शब्देनोपादीयते। किं तर्हि ? अवयवभेदः। अतएव माथुराः पाटलिपुत्रकेभ्य इति बहुवचनम्। इह राश्यपेक्षापि द्व्यर्थता नास्तीति साङ्काश्यकेभ्यः पाटलिपुत्रकेभ्यश्च माथुराः सुकुमारतरा इति। तस्माद् विभज्यग्रहणमपि कर्त्तव्यम्।

## ५८। अजादी गुणवचनादेव।

पाचकतर इति। कर्तृशक्तिमतो द्रव्यस्याभिधानाद् द्रव्यवचनोऽयं पाचक-शब्दः। अथैवकारः किमर्थः ? यावता सिद्धे विधिरारभ्यमाणो विनापि तेन नियमार्थो भवतीत्याह एवकार इत्यादि। असति ह्येवकारे विपरीत-

मवधारणं विज्ञायतेऽजादीएव गुणवचनादिति। ततश्च यत एवकार स्ततोऽन्यत्रावधारणमिति प्रकृतिनियमः स्यात्। एवञ्च गुणवचनस्याजाद्योर्नियतत्वात् ततस्तरबादि न स्यात्। एवकारे तु प्रकृत्यनन्तरमुच्चार्य्यमाणे सति प्रत्ययार्थनियमोऽयं भवति न प्रकृतिनियम इति पटुतरः पटुतम इति सिद्धम् भवति। एतयोरपि सिद्ध्यर्थं गुणवचनादीष्ठन्नीयसुनाविति सूत्रं न कृतम्। तदा विध्यर्थत्वादेतौ तरप्तमपोरपवादत्वाद् बाधकाविति तयोरभावे पटुतरः पटुतम इति न सिध्येत्।

## ५९। तुश्छन्दसि।

करिष्ठ इति। कर्तृशब्दात् तृन्नन्तादिष्ठन्। तुरिष्ठेमेयःस्विति (६।४।१५४) तृशब्दलोपः। दोहीयसीति। दोग्धृशब्दात् तृन्नन्तादीयसुन्। तृशब्दस्य लोपे कृते निमित्ताभावाद् घत्वादिर्निवर्त्तते। उगितश्चेति (४।१।६) ङीप्।

## ६०। प्रशस्यस्य श्रः।

ननु चाजादी इति प्रथमान्तम्। तत् कथमजाद्योः परत आदेशो लभ्यत इत्याह अजादी इति। तद्विषय इति। स प्रशस्यशब्दो विषयो यस्य स तद्विषयः। अजादी गुणवचनादेवेत्यनेन (५।३।५८) यो नियमः स तद्विषये न प्रवर्त्तत इति दर्शयति। एवमुत्तरेष्वपीति वृद्धस्य चेत्येवमादिषु (५।३।६२)। अयमनयोः श्रेयानिति द्विवचनोपपदे ईयसुन्। अयमस्मात् श्रेयानिति विभज्योपपदे। पूर्वत्र निर्धारणे षष्ठी (२।३।४१)। उत्तरत्र पञ्चमी विभक्त इति (२।३।४२) पञ्चमी।

## ६१। ज्य च।

योगविभागो यथासंख्यनिवृत्त्यर्थः। उत्तरार्थश्च। उत्तरत्र वृद्धशब्दस्य ज्यादेशएव यथा स्यात्। श्रादेशो मा भूदिति।

## ६२। वृद्धस्य च।

वृद्धशब्दस्येति। वृद्ध इत्येतस्य शब्दस्येत्यर्थः। एतेन वृद्धस्येति स्वरूपग्रहणं दर्शयति। ननु च वृद्धशब्दस्य संज्ञा कृता वृद्धिर्यस्याचामादि स्तद् (१।१।७३) वृद्धमिति। अतस्तत्प्रत्यायितस्यैव संज्ञिनो ग्रहणं न स्वरूपस्य। स्वं रूपं

## ४४। प्रतियोगे पञ्चम्यास्तसिः।

प्रद्युम्नो वासुदेवतः प्रतीति। प्रतिनिधिप्रतिदाने च यस्मादिति (२।३।११) पञ्चमी। ततस्तसिः। तसेरिकारो सुखसुखार्थः। ननु च सकारस्येत्संज्ञा मा भूदित्येवमर्थः स्यात्। नैतदस्ति। प्रयोजनाभावादेव हि तस्येत्संज्ञा न भविष्यति। आद्यादिभ्य उपसंख्यानमिति। आद्यादिभ्यस्तसेरुपसंख्यानमिति प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्। उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः। तेन आद्यादिभ्यस्तसिर्भविष्यतीति। अनुक्तसमुच्चयार्थत्वे चकारस्य तस्यादित उदात्तमर्धह्रस्वमिति निर्देशः (१।२।३२)।

## ४५। अपादाने चाहीयरुहोः।

ग्रामादागच्छतीति। ध्रुवमपायेऽपादानमित्यपादानसंज्ञा (१ ४ २४)। चौरेभ्यो बिभेतीति। भीत्रार्थानां भयहेतुरिति (१।४।२५)। अध्ययनात् पराजयत इति पराजेरसोढ़ (१।४।२६) इति। सार्थाद्धीयत इति। ओहाक् त्यागे। लः कर्म्मण्यात्मनेपदम्। यक्। घुमास्थादिसूत्रेणेत्त्वम् (६।४।६६)। ननु चाकर्त्तृकं कर्म नास्ति। कर्त्तुरीप्सिततमं कर्मेति (१।४।७८) वचनात्। सार्थश्चात्र न कर्म। किं तर्हि? अपादानम्। नैष दोषः। कर्मसंज्ञायां हि कर्त्तृग्रहणं स्वातन्त्र्योपलक्षणार्थम्। कुत एतत्? क्रियाविशेषणत्वात्। कर्त्तरि च द्वयमस्ति। स्वातन्त्र्यं कर्त्तृसंज्ञा च। तत्र संज्ञायाः क्रियाविशेषणत्वं नोपपद्यते। यद्धि तस्याः कारणं तेनैव सा युक्ता विशेषयितुम्। न च तस्याः कर्त्तृसंज्ञा कारणम्। किं तर्हि? स्वातन्त्र्यम्। तस्य कर्त्तृस्वरूपत्वात्। भवति क्रियां प्रति यदा कारणभावः कर्म्मणा च नैव क्रिया विशिष्यते तदायमर्थो भवति स्वातन्त्र्यस्य क्रियाया यदीप्सिततमं तत्कर्मसंज्ञं भवतीति। सार्थस्यापि देवदत्तेन तस्याभिधानम्। तस्य तस्मिंस्त्वसत्यपादानमपि न स्यादेव। तस्माद्देवदत्तः कर्म। जहातेरेव सार्थस्यापादानेन भवितव्यम्। तत्रापादानस्यापि सतः सार्थस्य हानक्रियायां यत् स्वातन्त्र्यं तत्क्रियाविवक्षयैव देवदत्तस्य कर्मसंज्ञा भवति। अथ किमर्थं यक्ता निर्देशः क्रियते? न हाकहोरित्येवोच्येतेत्यत आह विकारनिर्देश इत्यादि।

विक्रियते तस्मिन् रूपमिति विकारः । स पुनरिह यगेव । हीयेति । तत्र हि घुमास्थादिसूत्रेणेकारस्य (६।४।६६) विधानाद् विक्रियते जहाति रूपम् । अथवा विकृतिर्विकारः । तेन विकारेण निर्देशः । कथं नाम ? जहातेः प्रतिपत्तिर्यथा स्यात् । जिहीतेर्मा भूदित्येवमर्थम् (F) । अन्यथा हि जिहीतेरपि ग्रहणं स्यात् । विकारनिर्देशे तु यस्येदं रूपं तस्यैव ग्रहणं भवतीति न भवतीत्येष प्रसङ्गः । भूमिम उज्जिहीत इति । जिहीतेरिहाग्रहणात् तत्सम्बन्धिनोऽपादानाद् भवत्येव । हाङो ङित्त्वादात्मनेपदम् । भृञामिदित्य भ्यासस्येत्त्वम् (७।४।७६) । ई हल्यघोरिति धातोरीत्त्वम् (६।४।११३) । कथं मन्त्रो हीनः स्वरतो वर्णतो वेति ? यदाह जहातेः प्रतिषेधः क्रियते । ततस्तस्मिन्न प्राप्नोतीत्यभिप्रायः । नैषा पञ्चमीति । पञ्चम्या अविहितत्वात् । उपचारेण तसिः । नैषा पञ्चमीत्युक्तम् । किं तर्हि ? तृतीया । अत्रापि तृतीयाया विहितत्वात् । तृतीयेत्युक्तस्तसिः । तेनैतत् सूचयति । नायमिहस्तसिरनेन सूत्रेण पञ्चम्या विहितः । किं तर्हि ? अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयाया इत्यनुवर्त्तमाने (५।४।४६) हीयमानपापयोगाच्चेति (५।४।४७) तृतीयाया इति । सा च तृतीया हेतौ करणे वा द्रष्टव्या । (G)

## ४६ । अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयायाः ।

अतिक्रम्येति । अनेनातिशब्दोऽत्रातिक्रमे वर्त्तत इति दर्शयति । अचलनमव्यथनमिति । व्यथ भयचलनयोरिति पठ्यते । तस्येह चलने वृत्तिमाचष्टे । वृत्तेनेति हेतौ करणे वा तृतीया ।

## ४७ । हीयमानपापयोगाच्च ।

वृत्तेन हीयते । वृत्ततः पाप इत्यत्र वृत्तस्य हीयमानेन पापेन च योगे तृतीया हेतौ करणे वा । क्षेपविवक्षायामिदमुदाहरणं कस्मान्न भवतीत्याह- क्षेपस्य चेत्यादि ।

---

(F) जिहीतेरिति तिङन्तानुकरणं बोध्यम् । श्तिपो ङित्त्वाभावाज्जिहातेरिति हि स्यात् । काशिकायाञ्च जिहीतेरित्येव प्रयोगः ।

(G) येन स्वरेण वर्णेन वा विवक्षितादर्थाद्धीन इत्यर्थः सम्पद्यते ।

४८। षष्ठ्या व्याश्रये।

४९। रोगाच्चापनयने।

प्रवाहिकात इति। प्रवाहिकाशब्दात् प्रतीकारापेक्षया षष्ठी। ततस्तसिः।

५०। अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः।

कारणस्य विकाररूपेणाभूतस्येति। कारणं प्रकृतिस्तस्यैवोत्तरमवस्थान्तरं विकारः। तेन विकाररूपेणाभूतस्याजातस्येत्यर्थः। कुतः पुनरयं मभूततद्-भावविशेषो लभ्यते? अभूतग्रहणादिह हि भावो जन्म सत्ता वा। यदि हि सत्ता भावः स्याद् भवस्तिभ्यामेव सम्बन्धः स्यात्। न करोतिना। नहि यत् क्रियते सा सत्ता। धातुत्रयोपादाने च सति यस्मिन्नर्थे गृह्यमाणे त्रिभिरपि धातुभिर्योगोऽस्ति स एवाश्रयितुं युक्तः। स च जन्मैव। न सत्ता। तद्ग्रहणादेव विशेषो लभ्यते। तदात्मना भाव इति तच्छब्देन विकारः परामृश्यते। स एव विकारः। आत्मा स्वभावः। तेन विकारात्मा ऽभूततद्भावः। अपितु लब्धसत्ताकस्यैव कारणस्य प्रागप्रतिपन्नविकारस्यो-त्तरकालविकारभूमावाविरभूततद्भाव इत्युक्तं भवति। तेन यत्र प्रकृति र्न विवक्ष्यते तत्र प्रत्ययो न भवति यथा शुक्लं करोतीति प्रत्युदाहरणं। नहि प्रकृतावत्र विवक्षितायामेवंविधोऽभूततद्भावो गम्यते। तच्छब्देन प्रकृति-विकारयोरभेदविवक्षा प्रतिपाद्यते। तेन यत्र प्रकृतिर्विकाररूपमापद्यमाना तस्मादभिन्ना विवक्ष्यते तत्रैव प्रत्ययो भवति। नतु यत्र कारणतः कार्य्यस्य भेदो विवक्ष्यते। यत्र तु भेदो यथा पटं करोतीति न तत्र। सम्पद्यतेः कर्त्ता सम्पद्य-कर्त्तेति। कथं पुनस्तिङन्तेन समासः? कथञ्च तिङो लोपः? सौत्रत्वा-न्निर्देशस्य। सत्त्वात् सर्वमिदमुपपद्यते। अथवा संपूर्वात् पदेरत एव निपात-नाद् यत्प्रत्ययः। तदन्तस्यायं विशेषणसमासः। तत् तिङन्तस्य वृत्तिकरणे त्वर्थप्रदर्शनमात्रं कृतम्। न पुनरेतद् विग्रहवाक्यम्। सम्पत्तिरिति वक्तव्ये सम्पद्यकर्त्तरीत्युक्तं वैचित्र्यार्थम्। शुक्लीकरोतीति। अस्य च्वावितीत्त्वे (७।४।३२) च्वाविति (७।४।२६) दीर्घत्वम्। च्व्यन्तस्याव्ययत्वात् सोर्लोपः। नात्र प्रकृतिर्विवक्षितेति। विकारमात्रस्य विवक्षितत्वात्। यत्र च प्रकृतिर्न

विवक्ष्यते नात्राभूततद्भावो गम्यत इति न भवति प्रत्ययः । अभूततद्भावे सामर्थ्याल् लब्धमेवेत्यादि । यो हि ह्यविकाररूपेण भूतो विकारात्मना भवति स नियोगतस्तेन रूपेण सम्पद्यमानः सम्पद्यकर्त्ता भवतीत्येतत् सामर्थ्यात्-स्वरूपान्तरेण सम्पद्यते । तत् कर्त्तृसंज्ञकमेव भवतीति नायं नियोगत इत्यभि-प्रायेणाह कारकान्तरसम्पत्तौ मा भूदिति । अदेवगृह इत्यादि । अत्र देवगृहस्य देवताराधनत्वेनाभूतस्य प्रागुत्तरकालं देवताधेयसम्बन्धेन तदात्मकत्वमापद्यमानस्य भवत्ययमभूततद्भावः । स त्वधिकरणस्य । न कर्त्तुः । तथाहि तद्रूपान्तरमापद्यमानमपि न कर्त्तृसंज्ञम् । किं तर्हि ? अधिकरणसंज्ञमेव । अन्यथा सप्तमी न स्यात् । च्वाविकार उच्चारणार्थः । चकारः प्रकृतेरन्तोदात्तार्थः । वकारस्य वेरपृक्तस्येति (६।१।६७) लोपः ।

## ५१ । अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ।

अत्र विशेषणसम्बन्धादित्यादि । अभूततद्भावादीनि सर्वाणि विशेषणा-नीह पूर्वसूत्रादनुवर्त्तन्ते । तस्मात् सर्वविशेषणसम्बन्धात् पूर्वेणैवारुःप्रभृ-तिभ्यः प्रत्ययः सिद्ध इति नासौ विधीयते । लोपमात्रं तु न प्राप्नोति । अतस्तदर्थं वचनम् । यदि पुनरनेनैव प्रत्ययविधिः स्याद् दुर्मनीकरोती-त्यादौ प्रत्ययो न स्यात् । ग्रहणवता प्रातिपदिकेन तदन्तविधेः प्रतिषेधात् । पूर्वेण तु तदन्तादपि भवति । तत्र ग्रहणवत्प्रातिपदिकस्याभावात् । उन्मनीकरोत्येवमादौ बहुव्रीहेः प्रत्ययः ।

## ५२ । विभाषा साति कार्त्स्न्ये ।

विभाषाग्रहणं च्वेः प्रापक मिति । समुच्चयार्थत्वात् । समुच्चयार्थत्वं त्वनेकार्थत्वान्निपातस्य । यद्येवं चकारएव कस्मान्नोक्तः । वैचित्र्यात् सूत्र-कृतेः । अथ प्रत्ययविकल्पार्थमेवेति विभाषाग्रहणं कस्मान्न भवतीत्याह प्रत्ययविकल्पस्त्वित्यादि ।

## ५३ । अभिविधौ सम्पदा च ।

स तु कृभ्वस्तिभिरेव योगे भवतीति । कृभ्वस्तिभिरित्येव योग इत्यनेन सम्बन्धस्येव तस्येहानुवृत्तेः । अभिविधेः कार्त्स्न्यस्य चावश्यं विशेषेण भवि-

तव्यम् । अन्यथा सूत्रद्वयारम्भो निष्फलः स्यात् । एकेनैव सिद्धत्वात् । स च विशेषो न ज्ञायत इत्यतस्तत् पृच्छति अथाभिविधेरित्यादि । यथास्यां सेनायामित्यादि । अथ शेषाणां शस्त्राणामेकदेशेन ह्यात्मना सम्बन्धमात्रं विवक्षितम् । न सर्वात्मना विकाररूपापत्तिः । वर्षासु सर्वं लवण मुदकसात् सम्पद्यत इति । अत्रापि सर्वासां लवणव्यक्तीना मेकदेशेनोदकात्मताविकारेण सम्बन्धमात्रं विवक्षितम् । न त्वेकस्य सर्वात्मना विकाररूपापत्तिः । कार्त्स्न्य इत्यादि । यत्र ह्येकस्यापि द्रव्यस्य सर्वात्मना विकाररूपापत्तिर्न त्वेकदेशेन तत्र कार्त्स्न्यं भवति । तत्र यदि पूर्वो योगो नारभ्येत यत्रैकद्रव्यविशेष-विषयं कार्त्स्न्यं तत्र प्रत्यययोगो न स्यात् । अभिविधेरभावात् । अथायं नारभ्येत यत्र सर्वाः प्रकृतय एकदेशेन विकार मापद्यन्ते तत्र न स्यात् । तस्मादुभयमारब्धव्यम् ।

## ५४ । तदधीनवचने ।

तदधीनं तदायत्तमिति । तस्यायत्तं तदायत्तम् । तच्छब्देन स्वामि-सामान्यमुच्यते । अधीनशब्देनापीशितव्यसामान्यम् । अनन्तरोक्तमेवार्थं विस्पष्टीकर्त्तुमाह तत्स्वामिकमित्यर्थः । स स्वामी यस्य तत् तत्स्वामिकम् । अत्राप्यन्यपदार्थप्रधानत्वाद् बहुव्रीहिः । ईशितव्यस्य चान्यपदार्थत्वात् तस्य प्रधानभावः । स्वामिन स्तु तदुपलक्षणत्वाद् गुणभावः । स्वामिसामान्य मित्यादि । स्वामिसामान्यमीश्वरसामान्यमीशितव्यसामान्यमित्येतदुभयं तदधी-नशब्देनोच्यते । कथं कृत्वा ? इहाधिरीश्वर (१।४।९७) इत्यधिशब्दस्य कर्म-प्रवचनीयसंज्ञा । तेन योगे यस्मादधिकं यस्य चेश्वरेति (२।३।९) च सप्तमी । स चेश्वर ईशितव्यापेक्षित इति सामर्थ्यादीशितव्याभिधानमधिशब्देन योगे भवति । अधिशब्दश्चायं शौण्डादिषु पठ्यते । तत्र सप्तमी शौण्डैरिति (२।१।४०) समासे कृते पूर्वपदस्य स्वामिसामान्यमर्थो भवति । उत्तरपदस्य चेशितव्य-सामान्यम् । अषड्क्षादिसूत्रेण (५।४।७) खप्रत्यये कृते स एवायमर्थो भवति । तस्य तत्स्वामिकत्वादित्येवञ्च कृत्वा । स्वामिसामान्य मीशितव्यसामान्यं तदधीनशब्देनोच्यते । तत्र स्वामिसामान्यं प्रकृत्यर्थः । ईशितव्यसामान्यं तु प्रत्ययार्थं इत्यत आह स्वामिविशेषवाचिन इत्यादि ।

## ५५। दिये वा च।

राजसाद् भवति राजमिति। पूर्वेण सातिरेव भवति।

## ५६। देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्।

अथ बहुलग्रहणं किमर्थम्? यावता विभाषा साति कार्त्स्न्ये (५।४।५२) इत्यत्र विभाषाग्रहणमनुवर्त्तिष्यत एव। विकल्पेन प्रत्ययो भविष्यतीत्याह बहुलग्रहणादन्यत्रापि लभ्यत इति। तस्माद्विभाषायां प्रकृतायां यद्बहुलवचनं कृतं तदन्यत्रापि यथा स्यादित्यभिप्रायः।

## ५७। अव्यक्तानुकरणाद् द्व्यजवरार्द्धादनितौ डाच्।

अव्यक्तस्यानुकरणमव्यक्तानुकरणमिति। यद्यप्यनुकरणे वर्णविशेषो रूपेण न प्रकाशते तथापि ध्वनेः समानतया तन्मात्रसादृश्येन स त्वनुक्रियत इति तस्याप्यनुकरणमित्युच्यते। द्व्यच् अवरमर्द्धं यस्येत्यर्द्धशब्दो नपुंसकलिङ्ग एव। यस्येत्यादि। यस्यापकर्षे क्रियमाणे सुष्ठूनं द्व्यजर्द्धं भवति तस्मात् प्रत्ययो भवति। यस्य न ततोऽपि न्यूनतरमेकाज् भवति। यद्यकृते द्विर्वचने यस्य द्व्यजवरार्द्धता ततो डाज् भवतीति ज्ञायते ततः पटदित्यादेर्न स्यात्। नह्यत्र द्व्यजवरमर्द्धम् भवतीत्येतच्चेतसि कृत्वाह यस्य चेत्यादि। नन्वेवं सति डाचि परभूते तदाश्रये द्विर्वचने कृते द्व्यजवरार्द्धता भवति तस्याञ्च सत्यां डाजितीतरेतराश्रयः प्रसजति। इतरेतराश्रयाणि कार्य्याणि शास्त्रे न प्रकल्पन्त इत्याह डाचि बहुलमित्यादि। यद्येषा परसप्तमी स्यात् स्यादेष दोषः। न चैषा परसप्तमी। किं तर्हि? विषयसप्तमी। पटपटाकरोतीति। पटच्छब्दाड् डाचि विवक्षिते विषयभूते बुद्धिस्थेऽनुत्पन्न एव पूर्वं तावद्द्विर्वचनम् पटच्छब्दस्य क्रियते। तस्मिन् कृते द्व्यजवरार्द्धतायामुपजातायां डाचि टिलोपः। नित्यमाम्रेडिते डाचीति (५।४।५७) पूर्व्वस्य तकारस्य पररूपत्वम्। दमदमाकरोतीति। दमच्छब्दस्य पूर्ववद्द्विर्वचनम्। ततो डाच्। द्दषत्करोतीति। अत्रापि द्विर्वचने कृते द्व्यजवरार्द्धता भवतीति। नाव्यक्तस्येदमनुकरणम्। श्रत्करोतीति। भवत्येतदव्यक्तानुकरणम्। न द्व्यजवरार्द्धम्। कृतेऽपि ह्यत्र द्विर्वचन एकाजवरमर्द्धं सम्पद्यते। खरटखरटा करोतीति। खरटदित्ये-

तस्यानुकरणस्यात पटदित्येतस्यानुकरणस्येव पूर्ववद् द्विर्वचनम्। ततो डाच्। यदि द्व्यजर्द्धादित्येतावदुच्येतेह प्रत्ययो न स्यात्। न ह्यत्र द्व्यजर्द्धतास्ति। अवरग्रहणे तु सतीहापि भवति। तत्र हि द्वचोऽर्द्धाद् यस्य नूनतरमर्द्धं तत एव प्रत्ययेन भवितव्यम्। अन्यतस्तु सर्वतो भवितव्यमेव। अन्यथाऽवरग्रहणमनर्थक एवेति द्व्यजर्द्धादित्येवं ब्रूयात्। पटिति करोतीति। अव्यक्तानुकरणस्यात इताविल्यच्छब्दस्य (६।१।९८) पररूपत्वम्। यद्यत्र डाच् स्यात् तस्य डाजन्तस्य परमिति शब्दमुच्चार्य्यं करोतिरनन्तरः स्यादिति। न च तत्परम्। तच्चानिष्टम्। अथ चकारः किमर्थः? यावतान्तोदात्तत्वं कृत्त्वादस्य प्रत्ययस्वरेणैव सिद्धमित्यत आह चकार इत्यादि। पटपटा असि इति स्थिते तिङ्ङतिङ (८।१।२८) इत्यसिशब्दस्य निघाते कृते स्वरितो वानुदात्ते पदादाविति (८।२।६) स्वरित एकादेशः प्राप्नोति। न च स्वरित इष्यते। तदर्थं चकारः। स्वार्थिको विज्ञेय इति। व्यतिरिक्तस्यार्थस्याभावात्। केन पुनः स्वार्थिको यकारः? अनेनैव निपातनेन।

## ५८। कृञो द्वितीयतृतीयशम्बबीजात् कृषौ।

ननु कृभ्वस्तियोग इत्यतः करोतिरनुवर्त्तते। तत् किमर्थं कृञ्ग्रहणमित्याह कृञ्ग्रहणमित्यादि। धातुत्रयं प्रकृतम्। तत्रासति कृञ्ग्रहणे यथा कृञो योगो भवति तथा भ्वस्त्योरपि स्यात्। तस्मात् कृञो ग्रहणं भ्वस्तिनिवृत्त्यर्थम्।

## ५९। संख्यायाश्च गुणान्तायाः।

संख्याया इति सामीप्यसम्बन्धे षष्ठी। गुणान्ताया इति प्रत्ययविधौ संख्यावाचिनः शब्दस्येत्यनेन संख्याशब्दस्य षष्ठ्यन्ततां दर्शयति। अन्तशब्दोऽवयववचनोऽप्यस्ति। तस्येह ग्रहणे संख्याशब्देन सम्बन्धो न स्यात्। नहि संख्याशब्दस्य गुणशब्दोऽवयव उपपद्यत इति मत्वा सामीप्यवचनोऽयमन्तशब्द इति दर्शयन्नाह गुणशब्दोऽन्ते समीप इति। यत्रेति। अनेन प्रकृतिर्निर्दिश्यते। सेत्यादि। सा प्रकृतिः संख्या गुणान्तेनाभिधीयत इत्यर्थः। गुणशब्दोऽन्ते यस्य स तथोक्तः। तादृशादित्यादिना तथाभूतात् संख्याशब्दात् सामीप्यवर्त्ति-

गुणशब्दादित्यर्थः । ननु च सामीप्यवचनान्तशब्दे संख्यायाः पूर्वः परो वा गुण इति विशेषो नावधार्य्यते । तथाच यत्राप्यसौ पूर्वस्तत्रापि स्यात् । नैष दोषः । सामीप्येऽयं वर्त्तमानो नियतदेशमेव पराश्रयं वा यत् सामीप्यं तदाचष्टे । न सामीप्यमात्रम् । यथावयवे वर्त्तमानो नावयवमात्रमभिधत्ते । किं तर्हि ? विशिष्टदेशमेवावयवम् । द्विगुणं विलेखनं करोतीति ।

६० । समयाच्च यापनायाम् ।

६१ । सपत्रनिष्पत्रादतिव्यथने ।

सह पत्रेण सपत्रः । निर्गतं पत्रं यस्मान्निष्पत्रः । अतिपीड़नमतिबाधनम् ।

६२ । निष्कुलान्निष्कोषणे ।

निष्कुलं करोतीति । निर्दिष्टं कुलं यस्येति स निष्कुलः । कुलशब्दोऽत्र बन्धुषु वर्त्तते ।

६३ । सुखप्रियादानुलोम्ये ।

आराध्यचित्तानुवर्त्तनमिति । आराध्याः स्वाम्यादयः । तेषामभिमतकरणेनानभिमतवर्ज्जनेन वा यच्चित्तस्यानुवर्त्तनमाराधनमानुलोम्यं तत्र प्राणिधर्म्म एव वेदितव्यम् ।

६४ । दुःखात् प्रातिलोम्ये ।

स्वाम्यादेश्चित्तपीड़नमिति । स्वाम्यादेरनभिमतानुष्ठानेनाभिमताननुष्ठानेन वा चित्तस्य पीड़नं दुःखं प्रातिलोम्यम् । तदपि प्राणिधर्म्म एव ।

६५ । शूलात् पाके ।

शूलाकरोति मांसमिति । पचतीत्यर्थः ।

६६ । सत्यादशपथे ।

६७ । मद्रात् परिवापणे ।

मद्राकरोतीति । मङ्गलशब्दपूर्वं मुण्डनं करोतीत्यर्थः । भद्राचेति वक्तव्य-

मिति। भद्रशब्दाच्च डाज् भवतीत्येतदर्थंरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। समयाच्च यापनायामित्यत (५।४।६०) श्चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन भद्रादपि भविष्यतीति।

## ६८। समासान्ताः।

समासान्ता इत्ययमधिकार इति वक्ष्यमाणेन बहुव्रीहौ संख्येये डजबहुगणादित्यादिना (५।४।७३) बहुव्रीह्यादित्वेन समासविशेषाद् विधास्यन्ते। यत्रापि बहुव्रीह्यादिग्रहणं नास्ति तत्र संघातः प्रकृतित्वेन निर्दिश्यते। यथाच् प्रत्यन्ववपूर्वात् सामलोम्न इति(५।४।७५)। ततश्च सामर्थ्यादेव समासान्ताः प्रत्यया विज्ञास्यन्ते। तत् किं समासग्रहणेन? यत्रैतदुभयं नास्ति यथा ऋक्पूरब्धूःपथामानक्ष इति(५।४।७४) तदर्थं समासान्तग्रहणं क्रियते। अन्तशब्दोऽयं सामीप्यवचनोऽप्यस्ति। यदि तस्येह ग्रहणं स्यात् प्रत्ययपरत्वेनैव डजादीनां सामीप्यस्य सिद्धत्वादन्तशब्दोऽनर्थकः स्यादिति मत्वाह अवयववचनोऽयमन्तशब्दो गृह्यत इति दर्शयन्नाह अवयव इति। अस्य पर्य्यायेण वृत्तिं कर्त्तुमाह एकदेशा इति। एकदेशशब्दमिहाश्रयता प्राक्समासविधेः समासार्थादुत्तरपदात् वक्ष्यमाणाः प्रत्यया भवन्ति। पश्चात् समास इत्युक्तम् भवति। एवं हि ते समासस्यैकदेशा भवन्ति यदि प्राक् समासवृत्तेः स्यात्। समासान्तान् कृत्वा पश्चात् तदन्तेन समासः क्रियते। एवञ्च तैः सह समाससंज्ञा भवतीत्युपपद्यते डजादीनां समासावयवत्वम्। अतश्चैतदेवं विज्ञेयम्। योऽभिमन्यते समासे कृते डजादिभिर्भवितव्यमिति तस्य न कपीत्यत्र (७।४।१४) यद् वक्ष्यति वृत्तिकारः समासार्थे ह्युत्तरपदे कपि कृते पश्चात् समासेन भवितव्यमिति तद्विरुध्यते। ननु च समासार्थादुत्तरपदाड् डजादिषु कृतेषु पश्चात् तदन्तेन समासः क्रियत इत्यस्मिन्नपि पक्षे समानो दोषः। यतः पथो विभाषेत्येवमादिषु (५।४।७२) नञः परो यः पथिन्शब्दस् तदन्तात् तत्पुरुषाद्विभाषा समासान्तो भवतीत्येवमादयो निर्देशा विरुध्यत एव। नैतदस्ति। तदविरोधस्य ड्याप्प्रातिपदिकादित्यत्र (४।१।१) प्रतिपादितत्वात्। तद्ग्रहणेन गृह्यन्त इति। तच्छब्देन समासः प्रत्यवमृश्यते। समासावयवत्वे सति तेषामपि तद्ग्रहणेन प्रवेशो भवति। अतस्ते

समासग्रहणेन गृह्यन्त इति। अथ समासावयवत्वे प्रत्ययस्य किं प्रयोजनमित्याह प्रयोजनमित्यादि। अधिराजमुपराजमिति। यथाक्रमं विभक्त्यर्थे सामीप्येऽव्ययीभावः। अव्ययीभावे शरत्प्रभृतिभ्यः (५।४।१०७)। अनश्चेति (५।४।१०८) टजन्तस्याव्ययीभावग्रहणेन ग्रहणान्नाव्ययीभावादतोऽम् त्वपञ्चम्या इति (२।४।८४) विभक्तेर्लुगमन्तभावश्च भवति। द्वे पुरी समाहृते इति तद्धितार्थोत्तरपदसमाहारे चेति (२।१।५१) समासः। स च संख्यापूर्वो द्विगुरिति (२।१।५२) द्विगुसंज्ञः। ऋक् पूरब् धूः पथामि (५।४।७४) त्यकारप्रत्ययान्तस्य द्विगुग्रहणेन ग्रहणादकारान्ताद् द्विगोरिति (४।१।२१) ङीप् सिद्धो भवति। कोशनिषदिनीति। कोशश्च निषच्चेति समाहारद्वन्द्वः। द्वन्द्वाच्चुदषहान्तात् समाहार इति (५।४।१०६) टच्। तस्य द्वन्द्वग्रहणेन ग्रहणात् कोशनिषदमस्या अस्तीति द्वन्द्वोपतापगर्ह्यात् (५।२।१२८) प्राणिस्थादिनिर्भवति। ऋन्नेभ्यो ङीबिति (४।१।५) ङीप्। स्रक्त्वचिनीति। पूर्वेण तुल्यम्। विधुरः प्रधुर इति। विगतो धुरः प्रगतो धुर इति कुगतिप्रादय इति (२।२।१८) प्रादितत्पुरुषसमासः। पूर्ववदकारस्येह तत्पुरुषग्रहणेन ग्रहणात् तत्पुरुषे तुल्यार्थतृतीयेत्यादिना (६।२।२) पूर्वपदप्रकृतिस्वरः सिद्धो भवति। पूर्वपदं पुनरत्र निपात आद्युदात्तः। असति तु समासान्तत्वे प्रत्ययस्वरेणान्तोदात्तता स्यात्। उच्चैर्धुरी नीचैर्धुर इति। उच्चैर्धूरस्येति। नीचैर्धूरस्येति बहुव्रीहिः। पूर्ववदकारप्रत्ययः। तस्य बहुव्रीहिग्रहणेन ग्रहणाद् (६।२।१) बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदप्रकृतिस्वरो भवति। पूर्वपदप्रकृतिस्वरस्त्विहान्तोदात्तः। सनुतरुच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् पृथगित्येते सनुतर्प्रभृतयोऽन्तोदात्ताः। स्वरादिषु पाठात्।

## ६९। न पूजनात्।

सुराजातिराजेति। शोभनो राजा। अतिशयितः राजेति विगृह्य कुगतिप्रादय इति (२।२।१८) समासः। सुगोरिति पूर्ववत् समासः। अत्र गोरतद्धितलुकीति (५।४।९२) टच् प्राप्नोति। अस्माद्वचनान्न भवति। परमराजः। परमगव इति। सन्महदित्यादिना (२।१।६१) समासः। सुसक्थ इति। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षजिति (५।४।९३) षच्।

## ७०। किमः क्षेपे।

किंराजेति। निन्दितो राजेति विगृह्य किं क्षेप इति (२।१।६४) समासः। किंराज इत्यत्र प्रश्ने किंशब्दः। न क्षेपे। षष्ठीसमासः। ननु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति (प, ११४) प्रतिपदोक्तो यः किमः समासः किं क्षेप इत्यनेन (२।१।६४) विहितः स एव ग्रहीष्यत इति क्षेपग्रहणमनर्थकम्। एवं तर्हि क्षेपग्रहणेनैतदेव ज्ञापयति। इयं परिभाषा नावतिष्ठत इति। तेन बहुव्रीहावपि प्रतिषेधः सिद्धो भवति। निन्दिता धूरस्य किन्धुरं शकटम्। निर्धुरं शकटमिति।

## ७१। नञस्तत्पुरुषात्।

अराजेति। तत्पुरुषोऽयम्। अनृचो माणवकः। अधुरं शकटमिति। द्वावपि बहुव्रीही। पूर्ववदकारः।

## ७२। पथो विभाषा।

अपथमित्यत्र पूर्ववदकारः। अपथं नपुंसकमिति ( २।४।३० ) नपुंसकलिङ्गता।

## ७३। बहुव्रीहौ संख्येये डजबहुगणात्।

बहुव्रीहाविति सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमी। संख्ययाव्ययासन्नेत्यादिना (२।२।२५) यो बहुव्रीहिस् तस्येदं ग्रहणमिति। तस्यैव संख्येये वृत्तिः। यस्तर्हि वार्थे वर्त्तते द्वित्राः पञ्चषा इति यश्च सुजर्थे द्विदशा स्त्रिदशा इति तत्र न प्राप्नोति। नैष दोषः। तावपि संख्येये वर्त्तत एव। संख्येयतयैव वार्थस्य सुजर्थस्य चाभिधानात्। दशानाञ्च समीप उपदशाः। विंशतेः समीपे उपविंशाः। ति विंशतेर्डितीति तिलोपः (६।४।१४२)। द्वयोरप्यकारयोरतो गुणे (६।१।९७) पररूपत्वम्। दशानामासन्ना आसन्नदशाः। दशानामदूरा अदूरदशाः। दशानामधिका अधिकदशाः। द्वौ वा त्रयो वा द्वित्राः। पञ्च वा षड् वा पञ्चषाः। सर्वत्र संख्ययाव्ययासन्नेत्यादिना (२।२।२४) बहुव्रीहिः। चित्रगुरिति। गोस्त्रियोरुपसर्जनस्येति (१।२।४८) ह्रस्वः। ननु च नञिवयुक्त-

न्यायेन बहुगणप्रतिषेधात् तत्सदृशविज्ञानेन संख्योत्तरपद एव बहुव्रीहि विंज्ञास्यते । एवञ्च चित्रगुप्रभृतिषु प्राप्तिरेव नास्तीति किं संख्येयग्रहणेन ? स्यादेतदेवं यदि बहुशब्दः संख्येयपदमेव स्यात् । स च वैपुल्यवचनोऽप्यस्ति । तेनासति संख्येयग्रहणे संख्योत्तरपदग्रहणं न स्यात् । उपबहवः । उपगणा इति । पूर्ववद् बहुव्रीहिः । अत्रेत्यादि । उपगणा इत्यत्र सत्यसति वा डचि रूपं प्रति विशेषो नास्तीति । स्वरे तु विद्यते । डचि हि सत्यन्तोदात्तत्वं स्यात् । तस्मिन्नसति पूर्वपदप्रकृतिभावेनाद्युदात्तं भवति । संख्याया इत्यादि उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्पुरुषस्य संख्यावाचि यदुत्तरपदं ततो डचः प्रतिपादनं कर्त्तव्यमित्यर्थः । तत्रेदं प्रतिपादनम् । संख्यायाश्च गुणान्ताया (५।४।५९) इत्यतश्चकारोऽनुवर्त्तते । स चानुक्तसमुच्चयार्थः । तेन संख्यायास्तत्पुरुषस्य डज् भविष्यतीति । निस्त्रिंशाद्यर्थमिति । आदिशब्दः प्रकारे । निस्त्रिंशा इति । कुगतिप्रादय इति (२।२।१८) तत्पुरुषः । डचश्चित्करणमन्तोदात्तार्थम् । अन्यथा हि प्रत्ययस्य समासैकदेशत्वात् प्रत्ययस्वरो बहुव्रीहिस्वरेण बाध्यते ।

## ७४ । ऋक्पूरब्धूःपथामानक्षे ।

सामर्थ्यादिति । यस्य येन सम्बन्धोऽस्ति तत् तस्य विशेषणं भवति । धुर एव चाक्षेण सम्बन्धोऽस्ति । नेतरेषाम् । अतः सामर्थ्यात् तस्यैवानक्ष इत्येतद् विशेषणं विज्ञायते । न ऋगादीनाम् । अनक्ष इति च षष्ठ्यर्थे सप्तमी सुब्व्यत्ययेन । अतएवाह अनक्षसम्बन्धिनीत्यादि । अक्षेण सम्बन्धोऽवयवावयविलक्षणः सोऽस्या अस्तीत्यक्षसम्बन्धिनी । सा धूर्यस्यां तस्या न भवति । अथैवं कस्मान्न विज्ञायते ? अक्षे ऽभिधेये न भवतीति । अशक्यमेवं विज्ञातुम् । एवं हि विज्ञायमान इहैव प्रतिषेधः स्याद् दृढा धूरस्याक्षस्य दृढधूरक्ष इति । इह तु न स्यात् । अक्षस्य धूरक्षधूरिति । एवं तर्हि विज्ञायते । अक्षे पूर्वपदे न भवतीति । एवमप्यशक्यं विज्ञातुम् । तथाह्येवं विज्ञायमान इहैव प्रतिषेधः स्यादक्षधूरिति । इह तु न स्यात् । दृढधूरक्ष इति । यथा वृत्तिकारेण व्याख्यातं तथोऽभयत्रापि भवति । अक्ष-

सम्बन्धिनी या धू स्तदन्तत्वात् समासस्य। अर्द्धर्च इति। ऋचोऽर्द्धमित्यर्धं नपुंसकमिति (२।२।२) समासः। अर्द्धर्चाः पुंसि चेति (२।४।३१) नपुंसकलिङ्गता च। बह्वृच इति। बह्व ऋचोऽस्य सन्तीति बहुव्रीहिः। ललाटपुरमिति। षष्ठीतत्पुरुषोऽयम्। अथवा ललाटं पूरिवेत्युपमितं व्याघ्रादिभिरित्यादिना (२।१।५६) समासः। नान्दीपुरमिति। षष्ठीसमासः। यद्यप्यकारान्तेन पुरशब्देन समासे कृत एतत् सिध्यति तथापि व्यञ्जनान्तेन पूःशब्देन यदि समासः क्रियते तदा व्यञ्जनान्तस्य श्रवणं मा भूदित्येवमर्थं पुरोग्रहणम्। द्वीपमिति। अन्तरीपमिति। समीपमिति। द्विर्गता आपोऽस्मिन्नन्तर्गता आपोऽस्मिन् सङ्गता आपोऽस्मिन्निति बहुव्रीहिः। द्व्यन्तरुपसर्गेभ्योऽप ईदितीत्त्वम् (६।३।९७)। राजधुरेति। षष्ठीसमासः। महाधुर इति बहुव्रीहिः। आन्महत इत्यात्त्वम् (६।३।४६)। स्त्रियाः पुंवदित्यादिना (६।३।३४) पुंवद्भावः। स्थलपथः। जलपथ इति। षष्ठीसमासः। सप्तमीति (२।१।४०) योगविभागात् सप्तमीसमासो वा। ऋगन्तस्य यो बहुव्रीहिर्नञ्पूर्वपदस्तस्य माणव एवाभिधेये प्रत्यय इष्यते। यो बहुपूर्वपदो बहुव्रीहि ऋगन्तस् तस्य चरणाख्यायामेवेष्यत इति दर्शयति। अनृचो माणवको ज्ञेय इत्यादि। एतच्च पथो विभाषेत्यतो (५।४।७२) विभाषाग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वञ्चोपलभ्यमिति वेदितव्यम्। अनृक्कः। बह्वृक्क इति। शेषाद्विभाषेति कप्। चोः कुरिति कुत्वं (८।२।३०) चकारस्य ककारः।

## ७५। अच् प्रत्यन्ववपूर्वात् सामलोम्नः।

प्रतिसाममिति। प्रतिगतं साम प्रतिसामम्। प्रादिसमासः। प्रतिगतं वा सामास्येति बहुव्रीहिः। गतशब्दो गतार्थत्वाद् वृत्तौ न प्रयुज्यते। अथवा साम प्रतीति यथार्थे ऽव्ययं विभक्तीत्यादिना (२।१।६) ऽव्ययीभावः। अनुगतं सामेत्यनुसामम्। प्रादिसमासः। अनुगतं सामानेनेति बहुव्रीहि र्वा। अवसाममिति। पूर्वेण तुल्यम्। अनुलोममित्यादौ पूर्वेण तुल्यम्। अनुलोममित्यादि। पूर्ववत् प्रादिसमासादयो वेदितव्याः। कृष्णोदक्पाण्डुपूर्वाया इत्यादि। कृष्णोदक्पाण्डुशब्दाः पूर्वे यस्या भूमे स्तस्या अच्प्रत्ययः स्मृतः।

कृष्णा भूमिरस्मिन् देशे कृष्णभूमो देशः । उदीची भूमिरस्मिन् देश उदग्भूमः । पाण्डुभूमिरस्मिन् पाण्डुभूमः । गोदावर्य्याश्च नद्याश्चाच्प्रत्ययः स्मृतः । ते चेन्नदीगोदावर्य्यौ संख्याया उत्तरे भवतः । पञ्चानां गोदावरीणां समाहारः । नदीभिश्चेति (२।१।२०) समाहारेऽव्ययीभावः । पञ्चगोदावरम् । पञ्चनदम् । भूमेरपीत्यादि । न केवलं नदीगोदावरीभ्यामपि तु भूमेरपि संख्यापूर्वाया इष्यते । द्विभूम इत्यादौ सर्वत्र बहुव्रीहिः । तदित्यादि । एतत् कृष्णभूमाद्यपि योगविभागं कृत्वा ऽचार्य्याः साधयन्ति ।

## ७६ । अक्ष्णोऽदर्शनात् ।

अदर्शनादिति प्रतिषेधः क्रियते । कवराक्षं गवाक्षमिति रूढ़िशब्दावेतौ । नातावयवार्थे ऽभिनिवेशः कार्य्यः । कवराक्षं गवाक्षमिति न सिध्यतीत्यभिप्रायः । स्यादेतत् । दर्शनप्रतिषेधात् सिद्धमेतत् । दृश्यतेऽनेनेति । न दर्शनम् । नच कवराक्षेण दृश्यते । नापि गवाक्षेणेत्यत आह तेनापीत्यादि । दर्शनशब्दोऽयं चक्षुषि प्राय्यङ्गे प्रसिद्धः । तथाहि दर्शनं प्रयुङ्क्ते । चक्षुर्ग्राह्यमपि । तस्मात् प्रसिद्धिवशेन चक्षुष्पर्य्यायो दर्शनशब्दः । स इहाश्रीयते ।

## ७७ । अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ।

समासे व्यवस्थापीत्यादि । समासव्यवस्था समासनियमः । क्वचिद् बहुव्रीहिरेव क्वचिद् द्वन्द्व इत्येवमादिका निपातनादेव वेदितव्या । व्यवस्थाभेदस्यान्यस्याभावात् । अपिशब्दादन्यदपि टिलोपादि कार्य्यं निपातनादेव वेदितव्यम् । सप्तम्यर्थद्दृत्तयोरित्यादिना हि सप्तम्यर्थद्दृत्तयोरव्यययोराधेयप्रधानयोः समासो विद्यते । तस्मान्निपातनादेव च भवतीति वेदितव्यम् । अपिशब्दात् समासोपि निपातनादेव । अहर्दिवमिति । रोऽसुपीति (८।२।६९) नकारस्य रेफः । ननु चेत्यादि । अर्थगत्यर्थो हि शब्दप्रयोगः ।

पर्य्यायाणाच्चैकेनैवार्थस्योक्तत्वात् द्वितीयस्य प्रयोगो न सम्भवति। अहर्दिवाशब्दौ पर्य्यायौ। तत् कथमनयोर्द्वन्द्वः ? न कथञ्चिदिति भावः। वीप्साद्योतनार्थमुक्तस्यापि प्रयोगो न विरुध्यत इति मन्यमान आह वीप्सायामित्यादि। चार्थे उत्पद्यमानो द्वन्द्वो वीप्सायां न प्राप्नोतीत्यतो निपात्यते। एकोऽव्ययीभावः। साकल्यमिति। अव्ययं विभक्तीत्यादिना (२।१।६)। सरजसमिति। अव्ययीभावे चाकाल इति (६।३।८१) सहस्य सभावः। निःश्रेयसमिति। प्रादिसमासः। निश्श्रेयस्कमिति। निश्चितं श्रेयोऽनेनेति बहुव्रीहिः। शेषाद्विभाषेति (५।४।१५४) कप्। ऋग्यजुरुन्मुग्ध इति। य उन्मुग्धत्वादृचो यजूंषि मन्यते स ऋग्यजुरिति बहुव्रीहिणोच्यते। ततोव्ययीभाव इति। अव्ययं विभक्तीत्यादिना (२।१।६)। सामीप्ये टिलोपाभाव इत्यादि। उपशुन इत्यत्र न स्तद्धित इति (६।४।१४४) टिलोपाभावो निपातनादेव। श्वयुवमघोनामतद्धित इति (६।४।१३३) तद्धितादन्यत्र संप्रसारणमुच्यमानं तद्धिते न प्राप्नोतीति तदेव निपातनादेव भवतीति। चतुरोऽच्प्रकरण इत्यादि। त्रिशब्दादुपशब्दात् परो यश्चतुरशब्दस्तस्मादच उपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः। तत् पूर्व्वमेव योगविभागमाश्रित्य कर्त्तव्यम्। त्रयो वा चत्वारो वा त्रिचतुरा इति। चतुर्णां समीप उपचतुराः। संख्ययाव्ययासन्नेत्यादिना (२।२।२५) बहुव्रीहिः। तत्र बहुव्रीहौ संख्येये डजबहुगणादिति (५।४।७३) डचि प्राप्तेऽच् विधीयते।

## ७८। ब्रह्महस्तिभ्यां वर्चसः।

ब्रह्मवर्चसम्। हस्तिवर्चसमिति। षष्ठीसमासौ। वर्चःशब्दोऽयं दीप्तिवचनः। पल्यराजशब्दाभ्याञ्चेति वक्तव्यम्। पल्यशब्दाद्राजशब्दाच्च परो यो वर्चस्शब्दस्तस्माच्चाज्भवतीत्येवमर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानञ्चास्य पूर्व्वमेव योगविभागमाश्रित्य कर्त्तव्यम्।

## ७९। अवसमन्धेभ्यस्तमसः।

अवतमसमिति। अवहीनं तमसा। अवहीनं वा तम इति प्रादिसमासो वायम्। एवं सन्नतं तमसा। सन्नतं तमः। सन्तमसम्। अन्धं

करोतीति णिच् । तदन्तात् पचाद्यच् । अन्धयतीत्यन्धम् । अन्धञ्च तत् तमश्चेति अन्धतमसम् । यदन्धं तमः करोतीति तदेवमुच्यते ।

## ८० । श्वसो वसीयःश्रेयसः ।

श्वोवसीयम् । श्वःश्रेयसमिति । श्वो वसीयः श्वः श्रेय इति विगृह्य मयूरव्यंसकादित्वात् समासः । स्वभावाच्चेत्यादि । यद्यपि श्वःशब्दोऽन्यत्र कालविशेषे वर्त्तते तथापीह समास उत्तरपदार्थस्य प्रशंसां स्तुतिमाशीर्विषयां प्रतिपादयति । कुतः ? स्वभावात् । शब्दानां ह्यर्थाभिधानं स्वाभाविकम् । तत्र स्वभाव एवात्र हेतुः । श्वोवसीयसमित्यस्यैवायं पर्य्याय इति । अस्येत्यनेन च श्वःश्रेयसमित्येष शब्दो निर्दिश्यते ।

## ८१ । अन्ववतप्ताद्रहसः ।

अनुरहसमिति । रहःशब्दोऽयमप्रकाशे वर्त्तते । अनुगतं रहसा ऽनुगतं रह इति वा प्रादिसमासः । अनुगतं रहोऽस्मिन्निति बहुव्रीहि र्वा । अवरहसमिति । अवहीनं रहसा ऽवहीनं रह इति वा प्रादिसमासः । अवहीनं वा रहोऽस्मिन्निति बहुव्रीहिः । तप्तञ्च तद्रहश्चेति तप्तरहसम् । विशेषणसमासः । यदुत्पन्नं रहो लोके न केनचिदवगम्यते तत् तप्तरहसमित्युच्यते । तप्तमिव तप्तम् । यथैव ह्यग्निना तप्तं न केनचिदवगम्यते तथेदमिति ।

## ८२ । प्रतेरुरसः सप्तमीस्थात् ।

सप्तमीस्थादिति । सप्तम्यां तिष्ठतीति सप्तमीस्थः । सुपि स्थ इति (३।२।४) कप्रत्ययः । यश्च सप्तम्यर्थे वर्त्तते । एवं स सप्तमीस्थो भवतीत्याह सप्तम्यर्थे वर्त्तत इति । प्रतिगतमुरः प्रत्युर इति । अत्यादयः क्रान्ताद्यर्थे द्वितीययेति (२।२।१८, वा) समासः ।

## ८३ । अनुगवमायामे ।

आयामे ऽभिधेये । आयामो दैर्घ्यम् । मत्वर्थीयाकारान्तश्चायम् । आयामि चेत्यभिधेय इत्यर्थः । अन्यथानुगवं यानमिति सामानाधिकरण्यं न स्यात् । यानमायामः । अनुगवं यानमिति । गावो यथा तथा यानमायाम-

मित्यर्थः। गवां पश्चादिति। अव्ययं विभक्तीत्यादिनाव्ययीभावः (२।१।६)। पश्चादर्थे च। पूर्ववद् गोशब्दस्य ह्रस्वः। अनुशब्दात् प्रत्यये विधातव्ये यदनुगवमिति निपातनं तत्प्रसिद्ध्युपसंग्रहार्थम्। तेन यद् गवा वाह्यं गोभिश्च तुल्यायामं तत्रैव भवति। नान्यत्र।

## ८४। द्विस्तावा त्रिस्तावा वेदिः।

टिलोपस्तावतीशब्दस्य। यस्येति लोपे कृते (६।४।१४८) तावच्छब्दस्य टिलोपो निपात्यते। समासश्चेति द्वित्रिशब्दयोर् निपात्यते। सापेक्षं तु यावतीशब्दापेक्षत्वात्। यावत् प्रकृताविल्यादिना निपातनस्य फलं दर्शयति। प्रकृतिविकृतिशब्दौ कार्य्यविशेषवचनौ। कर्मविशेषे हि कश्चिद् यागाख्यः प्रकृतिशब्देनोच्यते। कश्चिद्विकृतिशब्देन।

## ८५। उपसर्गादध्वनः।

प्राध्वमिति। प्रादिसमासः। तत्र प्राध्वमित्यत्यादयः क्रान्ताद्यर्थे द्वितीययेति (२।२।१८,वा) समासः। निष्क्रान्त मध्वन इति। निरादयः क्रान्ताद्यर्थे पञ्चम्येति (२।२।१८, वा)। अत्यध्वमिति। प्राध्वमित्यनेन तुल्यमेतत्। उपसर्गश्चात्र न गत्युपलक्षणम्। कुतएतत्? क्रियायोगाभावात्।

## ८६। तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः।

मात्रचो लोप इति। प्रमाणे द्वयसजित्यादिना विहितस्य। निरङ्गुलमिति। निरध्वमित्यनेन तुल्यमेतत्। अत्यङ्गुलमिति। एतदप्यत्यध्वमित्यनेन तुल्यम्। पञ्चाङ्गुलिरिति बहुव्रीहिः।

## ८७। अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः।

अहर्ग्रहणं द्वन्द्वार्थमिति। इष्टिरियम्। न तत्पुरुषार्थम्। मुख्यार्थे तत्पुरुषस्यासम्भवात्। द्वन्द्वार्थे पदार्थे प्रत्याश्रयः। तथाहि यद्यहर्गुणा रात्रिरहःशब्देनोच्यते रात्रिगुणं वाह्नो रात्रिशब्देन गौण्या कल्पनया तदाहश्च रात्रिश्चेति समानाधिकरणस्तत्पुरुषः सम्भवत्येव। तस्मादिष्टिरियम्। एतावदुक्तं स्याद् द्वन्द्व इष्यत इति। अत्र च ज्ञापकं हेमन्तशिशिरावहोरात्रे च च्छन्द-

सीति (२।४।२८) । द्वन्द्वे समासान्तस्य रात्रिशब्दस्य निपातनम् । अहोरात्र इति । रात्राह्नाहाः पुंसीति (२।४।२९) पुंलिङ्गता । अहन्निति (८।२।६८) रूपरात्रिरथन्तरेषूपसंख्यानमिति (८।२।६८, वा) नकारस्य रुत्वाद् गुणः । सर्वरात्र इति । पूर्वकालैकसर्वेत्यादिना (२।१।४९) समानाधिकरणस्तत्-पुरुषः । द्विरात्र इति । तद्धितार्थोत्तरपदेत्यादिना (२।१।५१) समाहारे द्विगुः । द्विगुश्चेति (२।१।२३) तत्पुरुषसंज्ञा । अतिरात्र इति । अत्यध्व-मित्यनेन तुल्यमेतत् । नीरात्र इति । रो रिति (८।३।१४) रेफलोपः । ढ्रलोपे पूर्वदीर्घः (६।३।१११) ।

## ८८ । अह्नोऽह्न एतेभ्यः ।

राजाहःसखिभ्यष्टजिति (५।४।९१) टच्प्रत्ययं वक्ष्यतीति । अथ प्रकृत एवाचि कस्मादादेशो न विज्ञायते ? अशक्यस्तत्रायं विज्ञातुम् । नह्यहः-शब्दान्तात् तत्पुरुषात् केनचिदज्विहितः । तत् कथमादेशस्य निमित्तं स्यात् । अथाजिति (५।४।७५) योगविभागेनाज्विधीयते ? एवमप्येतद् वचनमनर्थकं स्यात् । अचि कृते ऽल्लोप (६।४।१३४) इत्यनेनाह्नादेशस्य सिद्धत्वात् । न च टिलोपः प्राप्नोतीति मन्तव्यम् । अह्नष्टखोरेवेति (६।४।१४५) नियमात् । तस्मादच्येव टिलोपापवादोऽयम् । आदेशोऽयमयुक्तः । किं पुनस्तत् सामर्थ्यम् ? यतोऽहःशब्दः पूर्वत्वेन नाश्रीयत इत्याह नह्यहःशब्दादित्यादि । द्व्यह्न इति । द्वयोरह्नोर्भव इति तद्धितार्थ इत्यादिना (२।२।५१) समासः । तत्र भव इत्यण् (४।३।५३) । तस्य द्विगोर्लुगनपत्य इति (४।१।८८) लुक् । अत्यह्न इति । अत्यध्ववत् समासः । निरह्न इति । अत्रापि निरध्ववत् समासः । सर्वाह्न इति विशेषणसमासः । प्रतिषेधं वक्ष्यतीति । उत्तमैकाभ्याञ्चेति (५।४।९०) ।

## ८९ । न संख्यादेः समाहारे ।

द्व्यह इति । अह्नष्टखोरेवेति (६।४।१४५) टिलोपः ।

## ९० । उत्तमैकाभ्याञ्च ।

पुण्याहमिति । विशेषणमित्यादिना (२।१।५७) समासः । एकाह इति ।

अत्रापि पूर्वकालैकेत्यादिना (२।१।४९)। कथं पुनरुत्तमैकाभ्यामित्युच्यमाने पुण्यशब्दात् प्रतिषेधो लभ्यत इत्यत आह उत्तमशब्दोऽन्त्यवचन इत्यादि। अहः-सर्वैकदेशेत्यादौ (५।४।८७) सूत्रे पुण्यशब्दस्यान्ते निर्दिष्टत्वात्। अन्त्य इति। उत्तमशब्दोऽपि प्रतिषेधेर्थं इहान्त्यवचन उपात्तः। तस्मात् पुण्यशब्दमाचष्टे। अथ पुण्यग्रहणमेव कस्मान्न कृतम्। लघु ह्येवं सूत्रं भवतीत्याह पुण्यग्रहणमेवे-त्यादि। वैचित्र्यं हि सूत्रकृतेरिष्यते। तच्चोत्तमग्रहणे सति सम्पद्यते। यस्माद् वैचित्र्यार्थमुत्तमग्रहणं कृतम्। न पुण्यग्रहणम्। केचिदित्यादि। पुण्यग्रहणे कर्त्तव्ये यदुत्तमग्रहणं कृतं तत् प्रयोजनमुत्तमशब्दस्यापि संख्यातस्य प्रतिषेध-प्रतिपत्तिर्यथा स्यादित्येवं केचिद्वर्णयन्ति। भवति तत्सामीप्यात् ताच्छब्द्यम्। गङ्गायां घोष इत्यादि। तस्माच्छक्त उत्तमशब्दः सामीप्यादुपोत्तमशब्दमभि-धातुमिति तेषामभिप्रायः। तेनेत्यादिना प्रतिषेधस्योपोत्तमशब्दप्रतिपत्तेः फलं दर्शयति।

## ९१। राजाहःसखिभ्यष्टच्।

परमाहः। उत्तमाहः। सन्महदित्यादिना (२।१।६१) कर्मधारयः। मद्र-राज इति षष्ठीतत्पुरुषः। कथं पुनाराजशब्दग्रहणे राज्ञीशब्दस्य प्राप्नोतीत्यत आह लिङ्गविशिष्टपरिभाषयेत्यादि। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येषा (प,७२) लिङ्गविशिष्टपरिभाषा। लघ्वक्षरस्येति सवर्णदीर्घो ऽर्थः प्रयोजनं यस्य प्रथमप्रयोगस्य स तथोक्तः। अत्र लघ्वक्षरं पूर्वं निपततीति सख्युरज्ञो वा पूर्वनिपाते प्राप्ते योऽहःशब्दस्य परनिपातः स राजशब्दस्य सवर्ण-दीर्घार्थः। प्रयोगस्तु क्वचिन्नैतज्ज्ञापयति। अकारवत एव राजशब्दाट्टज् भवति। ईकारान्तान्न। ईकारस्याकारेण सवर्णदीर्घान्तस्यासम्भवात्।

## ९२। गोरतद्धितलुकि।

पञ्चगवमिति। तद्धितार्थेति (२।१।५१) समाहारे द्विगुः। पञ्चगुरित्यत्रापि तद्धितार्थे। राजगवमिति। षष्ठीसमासः। सुपो धातुप्रातिपदिकयोरिति (२।४।७१) सुपो लुक्। राजगवीयतीति। सुप आत्मनः क्यच्। (३।१।८) सुब्-लुक्। क्यचि चेतीत्त्वम् (७।४।३३)। अस्त्यत्र लुक। स तु सुपः। न तद्धितस्य।

परव्यत्ययेनात्र पञ्चम्यर्थे सप्तमी । कुत एतत् ? पञ्चम्यन्तेन गोशब्देन सामानाधिकरण्यात् ।

९३ । अग्राख्यायामुरसः ।

स चेदुरःशब्दोऽग्रस्याख्या भवतीत्यनेन दर्शितम् । अश्वोरसमिति षष्ठीसमासः । अश्वानां प्रधानमित्यर्थः । हस्त्युरसम् । रथोरसमिति ।

९४ । अनोश्मायःसरसाञ्जातिसंज्ञयोः ।

उपानसमिति । उपगतमन इति प्रादिसमासः । महानसमिति । महदन इति सन्महदित्यादिना (२।१।६१) कर्मधारयसमासः । अमृताश्मः पिण्डाश्म इति विशेषणसमासौ । एवं कालायसं लोहितायसमिति । मण्डूकसरसं जलसरसमिति । षष्ठीसमासौ । सदन इति महानसवत् समासः ।

९५ । ग्रामकौटाभ्याञ्च तक्ष्णः ।

बहूनां साधारण इत्यर्थं इति । ग्रामशब्दस्य जनपदसमुदाये वृत्तेः । कौटतक्षेति । पूर्ववत् समासः ।

९६ । अतेः शुनः ।

अतिश्व इति । प्रादिसमासः ।

९७ । उपमानादप्राणिषु ।

आकर्षश्व इति । अत्र श्वा उपमानम् । अश्वा (H) लोष्ट इति । अत्राश्वशब्दोऽप्राणिनि लोष्टे वर्त्तते । नतूपमानम् । वानरश्वेति । उपमितं व्याघ्रादिभिरिति (२।१।५६) समासः । अत्र प्राणिनि वानरश्वेति शब्दो वर्त्तते ।

९८ । उत्तरमृगपूर्वाच्च सक्थ्नः ।

उत्तरसक्थमिति । उत्तरं सक्थ्न इति । पूर्वापरादिसूत्रेण (२।१।५८) समासः । अथवोत्तरं सक्थीति विशेषणसमासः । मृगसक्थमिति षष्ठीसमासः । पूर्वसक्थमिति । उत्तरसक्थमित्यनेन तुल्यमेतत् । फलकसक्थमिति विशेषणमित्यादिना (२।१।५७) समासः ।

(H) अश्वेति तु नञस्तत्पुरुषादित्यनेन (५।४।७१) समासान्तामर्हमिदं पदम् । तस्मान्निःश्वा लोष्ट इति प्रत्युदाहर्त्तव्यम् ।

## ९९। नावो द्विगुः।

द्विनावम्। त्रिनावमिति। तद्धितार्थोत्तरपदेत्यादिना (२।१।५) द्विगुः। द्विनावधन इति। द्वे नावौ धनं यस्येति बहुव्रीहौ कृते पूर्वयोः पदयो स्तेनैव सूत्रेणोत्तरपदे द्विगुः। पञ्चनावप्रियमिति। पूर्वेण तुल्यमेतत्। द्विनावरूप्यम्। द्विनावमयमिति। तेनैव सूत्रेन तद्धितार्थे द्विगुः। पूर्ववद्रूप्यमयटौ। राजनौरिति। षष्ठीसमासः। पञ्चनौरिति। आर्हीयस्य ठकोऽध्यर्धपूर्वेत्यादिना (५।१।२८) लुक्।

## १००। अर्द्धाच्च।

अर्धनावमिति। ननु च परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति (२।४।२६) स्त्रीलिङ्गेनात्र भवितव्यमिति। अत आह परवल्लिङ्गं न भवतीत्यादि।

## १०१। खार्य्याः प्राचाम्।

द्विखारीति। त्रिखारीति। पूर्ववदुपसर्जनह्रस्वः। क्वचिदर्धखारीति पाठः। अत्रैचोरुपसर्जनह्रस्वत्वे कृते सर्वतोऽक्तिन्नर्थादित्येक इति (४।१।४५,वा ) बह्वादिपाठान् ङीष्।

## १०२। द्वित्रिभ्यामञ्जलेः।

द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिरिति। पूर्ववदार्हीयस्य लुक्। द्व्यञ्जलिप्रिय इति। पूर्ववदुत्तरपदे द्विगुः।

## १०३। अन्नसन्तान्नपुंसकाच्छन्दसि।

हस्तिचर्म इत्यादयः षष्ठीसमासाः। सुत्रामाणमिति। शोभनस्त्रामा इति प्रादिसमासः। अन्येषामपि दृश्यत इति (६।३।१३७) पूर्वपदस्य दीर्घः। द्वितीयैकवचनम्। सर्वनामस्थाने (६।४।८) चेत्यादिनोपधादीर्घत्वम्। अट्कुप्वाङित्यादिना (८।४।२) णत्वम्। अनेहसमिति। अनेहःशब्दात् पुंलिङ्गात् षष्ठीबहुवचनम्। वावचनमित्यनुवर्त्तत इति शेषः। वावचनशब्देनेह प्राग्ग्रहणं विवक्षितम्। तेन विकल्पा उच्यन्ते। प्रत्याय्यते प्रत्ययोऽनेनेति कृत्वा। तदेतदुक्तं भवति। खार्य्याः प्राचामित्यतः (५।४।१०१) प्राग्ग्रहणमनुवर्त्तत इति।

प्रागग्रहणानुवृत्तौ तु यदिष्टं सिध्यति तद्दर्शयति। ब्रह्मसाम इति। देवच्छन्द इति। उभयत्र षष्ठीसमासः।

## १०४। ब्रह्मणो जानपदाख्यायाम्।

जानपदाख्यायामिति। भावप्रधानोऽत्र जानपदशब्दः। अतएव वृत्तावाह समासेन चेद् ब्रह्मणो जानपदत्वमाख्यायत इति। भवति हि भावप्रत्ययमन्तरेणापि भावप्रधानो निर्देशः। यथा द्व्येकयोर्द्विवचनैकवचने इति (१।४।२२)। कथं पुनर्ब्रह्मणो जानपदत्वं शक्यं विशेषयितुम्? यावतैकमिह ब्रह्मग्रहणम्? तेन च समासो विशेषितः। नैतदस्ति। तन्त्रेण द्वौ ब्रह्मशब्दावुच्चारितौ। तत्रैकेन समासो विशिष्यते। अपरेण जानपदत्वम्। यस्य तत्पुरुषस्य जनपदशब्दः पूर्वपदम्। पूर्ववत् समासः।

## १०५। कुमहद्भ्यामन्यतरस्याम्।

## १०६। द्वन्द्वाच्चुदषहान्तात् समाहारे।

वाक् च त्वक् च वाक्त्वचम्। स्रुक् च त्वक् च स्रुक्त्वचम्। श्रीश्च स्रक् च श्रीस्रजम्। वाक् च ऊर्क् च वागूर्जम्। समिच्च दृषच्च समिद्दृषदम्। सम्पच्च विपच्च सम्पद्विपदम्। वाक् च त्विट् च वाक्त्विषम्। वाक् च विप्रुट् च वाग्विप्रुषम्। छत्रञ्च उपानच्चच्छत्रोपानहम्। धेनुश्च गोधुक् च धेनुगोदुहम्। पञ्चवागिति। समाहारे द्विगुः। वाक्समिदिति। धकारान्तोऽयम्। धकारस्य झलां जशोऽन्त इति (८।२।३९) जश्त्वं दकारः। वावसान इति (८।४।५६) चर्त्वं तकारः।

## १०७। अव्ययीभावे शरत्प्रभृतिभ्यः।

उपशरदमिति सामीप्येऽव्ययीभावः। शरद आभिमुख्ये प्रतिशरदम्। लक्षणेनाभिप्रती आभिमुख्य इत्यव्ययीभावः (२।१।१४)। उपविपाशम्। प्रतिविपाशमिति। पूर्ववत्। अत्र ये झयन्ताः पठ्यन्ते तेषां किमर्थं ग्रहणम्? यावता झय इति (५।४।१११) वक्ष्यमाणेन तदन्तात् प्रत्ययः सिध्यतीत्यत आह ये त्वत्रेत्यादि। यद्यत्र ते न पठ्येरंस्ततो झय इति (५।४।१११) विकल्पेन

टच् प्रसज्येत। तस्मान्नित्यं यथा स्यादिति। एवमर्थं झयन्तानां पृथग्ग्रहणम्। जराया जरसश्चेति। जराशब्दात् टच् भवत्यव्ययीभावे जरसादेशश्च। जरायाः समीपमुपजरसमिति। प्रतिपरसमनुभ्योऽक्ष्ण इति। अक्षिशब्दात् प्रति पर सम् अनु इत्येतेभ्यः परस्मात् टच् भवति। प्रत्यक्षम्। परोक्षम्। परोक्षे लिङिति (३।२।११५) निपातनादुत्त्वम्। समक्षम्। अन्वक्षम्।

१०८। अनश्च।

उपराजम्। प्रतिराजमिति। उपशरदं प्रतिशरदमितिवदव्ययीभावः। अध्यात्ममिति। आत्मन्यधीति विभक्त्यर्थे। प्रत्यात्ममिति पूर्ववदाभिमुख्ये।

१०९। नपुंसकादन्यतरस्याम्।

११०। नदीपौर्णमास्याग्रहायणीभ्यः।

नदीग्रहणेन स्वरूपं गृह्यते। न संज्ञा। यदि संज्ञा गृह्येत पौर्णमास्याग्रहायणीग्रहणं न कुर्य्यात्। ननु च नियमार्थमेतत् स्यात्। ईकारान्तस्यापि नद्योः पौर्णमास्याग्रहायण्योरेव भवतीति। नैतदस्ति। यद्येतत् प्रयोजनं स्यात् पौर्णमास्याग्रहायणीत्येवं ब्रूयात्। तस्मात् स्वरूपग्रहणमिति। उपनदीति। गोस्त्रियोरुपसर्जनस्येति (१।२।४८) ह्रस्वः।

१११। झयः।

११२। गिरेश्च सेनकस्य।

अन्तर्गिरमिति। गिरेरन्तरिति विभक्त्यर्थेऽव्ययीभावः। अन्तःशब्दो हि सप्तम्यर्थवृत्तित्वाद् विभक्त्यर्थे वर्त्तते। विकल्पार्थमेव सेनकग्रहणं कस्मान्न भवतीत्याह विकल्पोऽनुवर्त्तत एवेति। विकल्पार्थत्वात्। विकल्पप्रते वानेन सः। अन्यतरस्याग्रहणं विकल्प इत्युक्तम्। तदिह नपुंसकादन्यतरस्यामित्यतोऽनुवर्त्तते (५।४।१०९)। तस्मात् तेनैव विकल्पस्य सिद्धत्वात् पूजार्थमेव सेनकग्रहणमुक्तम्। न विकल्पार्थम्। ननु च विभाषयोर्द्वयोर्मध्ये नित्या विधयो भवन्तीति पूर्वस्य विधेर्नित्यतां सम्पादयितुं विकल्पार्थमेव सेनकग्रहणं स्यात्। नैतदस्ति। यदि हि पूर्वो विधिर्नित्यः स्याज् झयन्तानां शरत्प्रभृतिषु पाठो-

ऽनर्थकः स्यात् । ऋच इत्यनेनैव (५।४।१११) सिद्धत्वात् । तस्मान्न विकल्पार्थं सेनकग्रहणम् । पूजार्थमेव ।

## ११३ । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ।

अद्रवं मूर्त्तिमदित्यादिना पारिभाषिकं यत् स्वाङ्गं तदिह गृह्यते । दुःश्लिष्टविभक्तीति । दुःखेन कष्टेन श्लिष्टाः सम्बद्धा विभक्तयो येषु तानि दुःश्लिष्टविभक्तीनि । तथाच प्रत्ययसम्बन्धेन षष्ठ्या भवितव्यम् । यथा तत्पुरुषस्याङ्गुलेरिति (५।४।८६) । सक्थ्यक्षिग्रहणेन चेह तदन्तया बहुव्रीहेर्विशेषयितुमिष्टत्वात् । बहुव्रीहौ यद् विभक्तिवचनं ततोऽपि तेनैव भवितुं युक्तम् । इह तु बहुव्रीहौ सप्तम्येकवचनम् । सक्थ्यक्षिशब्दाभ्यां तु षष्ठीद्विवचनं सप्तमीद्विवचनं वा । स्वाङ्गग्रहणं सक्थ्यक्ष्णोरिह समानाधिकरणं विशेषणम् । ततश्च सक्थ्यक्षिशब्दाभ्यां या विभक्तिस्तद्विभक्तिकं समानाधिकरणविशेषणमुपपद्यते । एवंविधविभक्तिभिः पदैः कश्चिद् दुःखेन कृच्छ्रेण युक्तो यामाश्रित्य विभक्तिमेवार्थं प्रतिपद्यते । तस्मात् तानि दुःश्लिष्टविभक्तीनि । किमर्थं पुनस्तानि पदानि कृतानि ? वैचित्र्यार्थम् । दीर्घसक्थि शकटम् । स्थूलाक्षिरिक्षुरिति (1) । अत्र सक्थ्यक्षिशब्दौ स्वाङ्गं न भवतः । शकटस्य कश्चिदवयवस्तथेक्षोश्च तथाभिधीयते । नतु तत्राद्रवं मूर्त्तिमदित्यादिकं स्वाङ्गलक्षणमस्ति । ननु च टचापि प्रकृतेन सर्वमेतत् सिध्यति । तत् किमर्थं षजिति प्रत्ययान्तरमुपात्तमित्याह टचि प्रकृत इत्यादि । दीर्घसक्थी स्त्री । टचि ङीबनुदात्तः स्यात् । षचि तु सति षिद्गौरादिभ्यश्चेति (४।१।४१) ङीषुदात्तः सिद्धो भवति । ननु च ङीप्यनुदात्त उदात्तनिवृत्तिस्वरेणोदात्त एव भवति । अतः स्वरार्थमपि नैव प्रत्ययान्तरमुपादेयमित्याह सक्थ्यञ्चाक्रान्तादिति । विभाषोत्पुच्छ इत्यतो (६ २।१९६) विभाषेत्यनुवर्त्तमाने सक्थ्यञ्चाक्रान्तादिति (६।२।१९८) विकल्पेनोत्तरपदस्यान्तोदात्तत्वं विधीयते । यस्मिन् पक्ष उदात्तं भवति तत्र ङीपि परतो यस्येति (६।४।१४८) चेत्यकारस्योदात्तस्य लोपे

(1) स्थूलाक्षिरिक्षुरित्यत्र लक्ष्णोऽदर्शनादिति (५।४।७६) भवितव्यमचा । समासान्तविधेरनित्यत्वान्नेति समाधेयम् । एवञ्च षजपि नेति चेत् स्थूलाक्षा वेणुयष्टिः सूक्ष्माक्षा वेणुयष्टिरिति टापि अजेव प्रत्युदाहार्य्य इत्येके ।

कृते ऽनुदात्तस्य च यत्रोदात्तलोप इति (६।१।१६१) ङीप्युदात्तत्वेन भवितव्यम्। अतो नास्ति ङीपि विरोधः। यस्मिन् पक्ष उदात्तं न सम्भवति तस्मिन् ङीपि सत्युदात्तनिवृत्तिस्वरो नास्ति। उदात्तस्वाश्रीयते। ङीषि तु सति सर्वत्रोदात्तः सिद्धो भवति। ङीष्प्रत्ययस्वरेणान्तोदात्तत्वात्।

## ११४। अङ्गुलेर्दारुणि।

द्व्यङ्गुलमिति। द्वे अङ्गुली यस्य तद्। दारुणि समासार्थे मुख्याभिरङ्गुलिभिः सम्बन्धस्तत्र नोपपद्यते। तस्मात् सामर्थ्याद् द्व्यङ्गुलीसदृशेषु दार्ववयवेष्वङ्गुलिशब्दो वर्त्तमानः समास आश्रीयत इति मत्वाह अङ्गुलिसदृशावयवमित्यादि। ननु च द्वे अङ्गुली प्रमाणमस्य दारुण इत्यादौ मुख्याभिरङ्गुलिभिः सम्बन्धः। तत्र मुख्याङ्गुलिभिः सम्बन्ध इति मुख्ये सम्भवति। अतो गौणस्य ग्रहणमयुक्तमित्याह यस्य त्वित्यादि। बहुव्रीहिग्रहणानुवृत्तेरिह बहुव्रीहेः प्रत्ययो विधीयते। द्वे अङ्गुली प्रमाणमस्येत्येकार्थविवक्षायां तद्धितार्थे तत्पुरुषः कर्त्तव्यः। तस्मिंस्तु कृते तत्पुरुषस्याङ्गुलेः संख्याव्ययादेरित्यचा (५।४।८६) भवितव्यमेव। यत्र गौणोऽङ्गुलिशब्दः स एव सामर्थ्यादेव योगस्य विषय इत्युक्तं भवति।

## ११५। द्वित्रिभ्यां ष मूर्ध्नः।

अथ किमर्थं षः प्रत्ययान्तरं विधीयते? न प्रकृतः षजेव विधीयते। विकल्पेनान्तोदात्तत्वं यथा स्यात्। विभाषोत्पुच्छ (६।२।१९६) इत्यतो विभाषेत्यनुवर्त्तमाने द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ (६।२।१९७) इति नकारान्तस्य मूर्धन्शब्दस्य निर्देशाद् द्वित्रिभ्यामुत्तरो यत्र नकारान्तो मूर्धन्शब्दस्तत्र बहुव्रीहेरन्तोदात्तत्वं पाक्षिकं विधीयते। अन्यथा ऽकारान्तमूर्धन्शब्द उत्तरपदोदात्तत्वं विधीयते। कृतसमासान्तमेव निर्दिशेत्। तत्र यदि षच्प्रत्ययो विधीयते ततः पाक्षिकमन्तोदात्तत्वं बाधित्वा चित्करणसामर्थ्यान्नित्यमन्तोदात्तत्वं स्यात्। विभाषान्तोदात्तवचनस्य तु-यत्र समासान्तो नास्ति सोऽवकाशः। अस्मिंस्तु प्रत्ययान्तरसमासान्ते कृते विकल्पेनान्तोदात्तत्वं सिध्यति। ननु च नकारान्तनिर्देशान् नकारान्त एव हि मूर्धन्शब्दः। उत्तरपदे विभाषा-

न्तोदात्तेन भवितव्यम् । तत् कथं समासान्ताट् भवेत् । नैष दोषः । वक्ष्यति यत्रापि समासान्तः क्रियते तत्रापि बहुव्रीहिकार्य्यत्वात् तदेकदेशत्वाच्च समासान्तोदात्तत्वं भवत्येवेति । अथ किमर्थं बहुव्रीहौ द्वित्रिभ्यामुत्तरो मूर्धन्-शब्दो नकारान्तः सम्भवति ? यावता नित्यं समासान्तेन भवितव्यम् । नहि सूत्रे विभाषाग्रहणमस्ति । नैष दोषः । स एव हि नकारान्तनिर्देशो ज्ञापयति विकल्पेन समासान्तो न भवतीति ।

## ११६ । अप् पूरणीप्रमाण्योः ।

पूरणप्रत्ययान्त इति । तस्य पूरणे (५।२।४८) डड़ित्येवमादिना प्रकरणेन ये पूरणार्थे विहितास्ते तत्साहचर्य्यात् पूरणशब्देनोच्यन्ते । पूरणप्रत्ययोऽन्ते येषां ते पूरणप्रत्ययान्ताः । अपि प्रधानपूरणीग्रहणमिति । अपि प्रत्यये विधातव्ये प्रधाना या पूरणी तस्या ग्रहणं कर्त्तव्यम् । तत एव प्रयोगो यथा स्यात् । अन्यतो मा भूत् । क्व पुनरस्याः प्राधान्यमित्यत आह यत्रेत्यादि । यत्राभि-धेयत्वेनान्यपदार्थेन पूरण्यनुप्रविशति न केवलं वर्त्तिपदार्थस्यैव (J) समासा-वयवभूतस्य पदार्थस् तत्र पूरण्याः प्राधान्यम् । यथा कल्याणीपञ्चमा रात्रय इति । अत्र हि न केवलमवयवेन विग्रहः क्रियते रात्रयएव प्रत्ययेना-ख्यायन्ते । सहपञ्चमीकाः । सह पञ्चम्या समुदितो ऽन्यपदार्थः । नतु ताभिरारब्धमर्थान्तरम् । यथा कल्याणपञ्चमीकः पक्ष इति । अभिन्नावयवः समासार्थः । किं तर्हि ? तदर्थारब्धः समुदायः पक्षाख्यः । पूरणी तु समासावयवभूता नाभिधीयत इति । अन्यपदार्थेनानुप्रवेशादप्राधान्य-मिह तस्याः । पुंवद्भावप्रतिषेधोऽपीत्यादि । न केवलमिहाप्यपि तु स्त्रियाः पुंवद्भाषित पुंस्कादनूङित्यादिना (६।३।३४) सूत्रेण पुंवद्भावप्रतिषेधोऽपी-त्यादि । न केवलमिहाप्यपि तु स्त्रियामिति प्रधानपूरण्येव गृह्यते । इह त्वित्यादि । अप्प्रत्ययः पुंवद्भावप्रतिषेधः कल्याणपञ्चमीकः पक्ष इत्यत्र न भवति । शेषाद्विभाषेति (५।४।१५४) कप् । नेतुरित्यादि । उपसंख्यान-शब्दस्य प्रतिपादनमर्थः । नक्षत्रे यो नेतृशब्दो वर्त्तते तदन्ताट् बहुव्रीहेरपः

(J) समासावयवभूतं पदं वर्त्तिपदम् । तस्यार्थो वर्त्तिपदार्थ इति ।

प्रतिपादनं कर्त्तव्यमित्यर्थः । प्रतिपादनन्तूत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थतामाश्रित्य कर्त्तव्यम् । देवदत्तनेटकः । नद्यृतश्चेति (५।४।१५३) कप् । छन्दसीत्यादि । मासादित्यादि । भृत्यर्थे यो विहितः प्रत्ययः स भृतिसाहचर्य्याद् भृतिरित्युच्यते । भृतिः प्रत्ययो यस्य तद् । भृतिप्रत्ययम् पूर्वपदं यस्य बहुव्रीहेः स भृतिपूर्वपदः । तस्मात् मासशब्दात् ठञो विधिः । चित्करणं बहुव्रीहिस्वरबाधनार्थम् । पञ्चास्य मासस्य भृतयः सोऽस्यांशवस्नभृतय इति (५।१।५६) संख्याया अतिशदन्तायाः कन् (५।१।२२) । पञ्चकः । पञ्चको मासोऽस्य पञ्चकमासिकः । अपः पित्करणं यत्र बहुव्रीहावुत्तरपदान्तोदात्तत्वमारभ्यते तत्र तद्बाधनार्थम् । शोभना पञ्चमी आसां रात्रीणां सुपञ्चमाः । अविद्यमाना पञ्चमी आसां रात्रीणामपञ्चमा इत्यत्र ह्यसति पित्करणे नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं (६।२।१७२) स्यात् ।

## ११७ । अन्तर्बहिर्भ्याञ्च लोम्नः ।

## ११८ । अच् नासिकायाः संज्ञायां नसञ्चास्थूलात् ।

संज्ञायामिति । समुदायोपाधिरित्येतेन यदि प्रकृतिप्रत्ययसमुदायः कस्यचित् संज्ञा भवत्येवं प्रत्ययो भवति नान्यथेति दर्शयति । द्रुणस इति । पूर्वपदात् संज्ञायामग इति (८।४।३) णत्वम् । वर्ध्रे भवा च स्त्री वार्ध्री । सा नासिका यस्य स वार्ध्रीणस इति । वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकार इति (६।३ ३९) पुंवद्भावप्रतिषेधः । गौरिव नासिकास्य गोनसः । अचश्चित्करणं बहुव्रीहिस्वरबाधनार्थम् । खरणाः खुरणा इति । अत्वसन्तस्य चाधातोरिति (६।४।१४) दीर्घः । शितिर्नासिकास्य शितिनाः । अहिरिव नासिकास्याहिनाः । अर्चेव (K) नासिकास्या अर्चनाः । ङ्यापोः संज्ञाच्छन्दसोर्बहुलमिति (६।३।६३) ह्रस्वः ।

## ११९ । उपसर्गाच्च ।

उपसर्गग्रहणं प्राद्युपलक्षणार्थम् । नासिकां प्रति क्रियायोगाभावात् ।

---

(K) अर्चा प्रतिमित्यर्थः ।

वेर्ग्रोवक्तव्य इति । विशब्दात् परस्य नासिकाया ग्रशब्द आदेशो भवतीति वक्तव्यम् । विग्रः । प्रत्ययोऽजेव । (L)

**१२० । सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपद-प्रोष्ठपदाः ।**

टिलोपादिकमित्यादिशब्देन सुशब्दस्य कर्मविशेषणं गृह्यते । शोभनं प्रातरस्येति । शोभनमित्येतदिह कर्मणो विशेषणम् । शोभनं प्रातःकाले कर्मास्येत्यर्थः । एवमुत्तरत्रापि शोभनमित्येतत् कर्मणो विशेषणं वेदितव्यम् ।

**१२१ । नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ।**

अकारान्तोऽपि हलशब्दोऽस्ति । तत्र यदा तेन समासस् तदा हल इति भविष्यति । यदा त्विकारान्तेन तदा हलि रिति । तदनर्थकं हलग्रहणम् । नानर्थकम् । भिन्नार्थत्वात् । तेन यो महद्धलंहलिस् तस्मिन् विषये विवक्षिते ऽहल इति न सिध्यति । अहल इति यदाकारान्तेन समासः क्रियते । पूर्ववत् प्रकृतिभावेनाद्युदात्तत्वं चेष्यते । शेषाद्विभाषेति (५।४।१५४) कप् प्रसज्येत । तस्माद् युक्तं हलिग्रहणम् ।

**१२२ । नित्यमसिच् प्रजामेधयोः ।**

एवं तर्हि नित्यग्रहणेनान्यत्रापि सूच्यत इति । ग्रन्थाधिक्यादर्थाधिक्यम् भवतीति कृत्वा । असिचश्चित्करणं दुष्प्रजा दुर्मेधा इत्यन्तोदात्तत्वं यथा स्यात् । अप्रजाः सुप्रजा इत्यादौ तु नार्थश्चित्करणेन । नञ्सुभ्यामित्यने-(६।२।१७२) नैवोत्तरपदान्तोदात्तत्वस्य सिद्धत्वात् ।

**१२३ । बहुप्रजाश्छन्दसि ।**

**१२४ । धर्मादनिच् केवलात् ।**

असमस्त इति । असमासः क्रियत इत्यर्थः । परमस्वधर्म इति ।

---

(L) यदाहं नाथ नायास्य विनसा हतबान्धवेति भट्टिप्रयोगे तु विगतया नासिकयोपलक्षितेति व्याख्येय-मिति भट्टोजिः । मैत्रेयस्त्वाह "केचिन्नासिकापर्य्याये नसाशब्दमिच्छन्ति । तथाच वराहमिहिरपुरुषप्रकाशे नसाशब्दः प्रयुक्तः । भट्टिकाव्येऽपि विनसा हतबान्धवेति दृश्यते । नचासावुपसर्गाच्चेति (५।४।११९) नसादेशे सिध्यति । वेर्ग्रो वक्तव्य इति ग्रादेशेन बाधितत्वा"दिति (धातुप्रदीपे ) ।

स्वश्चासौ धर्मश्चेति स्वधर्मः। परमश्चासौ स्वधर्मश्चेति परमस्वधर्मः। यद्येवमित्यादि। यदि केवलग्रहणेन धर्मो विशेष्यते परमस्वधर्मश्चेति न। परमस्वधर्मेति स्यात्। केवलात् पूर्वपदादिति। धर्मस्य असहायात् पूर्वपदादित्यर्थः। न पदसमुदायादिति। परमो धर्म इति प्रकृतेन सम्बन्धः। अत्र व्याख्याने त्रिपदे बहुव्रीहौ न भवति प्रसङ्गः। पदसमुदायाद्धि परमो धर्मशब्दो न केवलात् पूर्वपदात्। अनिचश्चित्करणं पूर्वपदप्रकृतिस्वरं बाधित्वा ऽन्तोदात्तत्वमेव यथा स्यात्।

## १२५। जम्भा सुहरिततृणसोमेभ्यः।

जम्भवचनेन तृणमिव जम्भोऽस्य सोम इव जम्भोऽस्येति विग्रहीतव्यमिति। ननु तृणं जम्भोऽस्य सोमो जम्भोऽस्येत्येवं विग्रहीतव्यम्। नहि तृणं जम्भो न च सोमः। अभ्यवहार्य्यवचने तु तृणं जम्भोऽस्य सोमो जम्भोऽस्येत्येवमेव विग्रहः कार्य्यः। तृणसोमयोरभ्यवहार्य्यत्वात्।

## १२६। दक्षिणेर्मा लुब्धयोगे। १२७। इच् कर्मव्यतीहारे।

तत्र तेनेदमिति सरूप इत्ययं (२।२।२७) बहुव्रीहिरिष्टव्यत इति। अस्यैव कर्मव्यतिहारे वृत्तेः। केशाकेशि। अन्येषामपि दृश्यत इति (६।३।१३७) दीर्घः। तिष्ठद्गुप्रभृतिष्विच्प्रत्ययस्य पाठादव्ययीभावसंज्ञा। अव्ययीभावश्च समासोऽव्ययसंज्ञो भवतीति। तेन सुब्लुग् भवतीति भावः। इचश्चित्करणं विशेषणार्थम्। यदि ह्यत्र चकारो न क्रियते तदा तिष्ठद्गुप्रभृतिष्वपीकारमात्रं पठ्यते। तदेकारमात्रस्यापि ग्रहणं स्यात्।

## १२८। द्विदण्ड्यादिभ्यश्च।

द्विदण्ड्यादिभ्य इति तादर्थ्ये एषा चतुर्थीत्यादि। द्विदण्ड्यादयो हि प्रातिपदिकेष्विच्प्रत्ययान्ता एव पठ्यन्त इति। तेभ्यः पुनरिज् विधातुं न शक्यते। विधीयमानोऽपि निष्प्रयोजनं स्यात्। तस्मान्नेयं पञ्चमी। किं तर्हि? तादर्थ्ये चतुर्थी। द्विदण्ड्याद्यर्थमिच् प्रत्ययो भवतीत्यनेन तादर्थ्यं दर्शयति। अस्यैवार्थं विस्पष्टीकर्त्तुमाह तत् तथा भवतीत्यादि। एवं ब्रुवाणेन द्विदण्ड्यादिभ्यः प्रत्ययो भवति न द्विदण्ड्यादिभ्य इत्युक्तम्। एवं ते सिध्यन्ति। नान्यथा। अथ किमर्थं समुदायानां निपातनशुद्धा एव प्रकृतीः

प्रातिपदिकेषु पठित्वा ततः प्रत्ययो विधीयत इत्यत आह समुदायनिपातनं चेत्यादि । प्रातिपदिकेषु प्रकृतीः पठित्वा ताभ्यः प्रत्ययमात्रं विधीयते । ततो नियमः स्यात् । समुदायनिपातनाद् यत्रार्थे विशेषे ते प्रसिद्धास्तत्रैव विशेष्यन्ते । तत्रैव भवन्तीत्यर्थः । द्विदण्डि प्रहरतीति । द्वौ दण्डौ यस्मिन् प्रहरणे । इह न भवतीति । द्विदण्डीत्येतच्छब्दरूपमत्रार्थे साधुर्न भवतीत्यर्थः । बहुव्रीह्यधिकारेऽपीत्यादि । अत्रापि समुदायनिपातनमित्ययमेव हेतुः । असति हि समुदायनिपातने बहुव्रीह्यधिकारात् तत्पुरुषान्न क्वचित् प्रत्यय-विधानं स्यात् । समुदायनिपातनात् तु क्वचित् तत्पुरुषादपि भवति । यदा प्रत्ययस्य लोपो भवत्यव्ययीभावसंज्ञा तदा न प्राप्नोतीत्यत आह प्रत्ययस्य लक्षणेनेत्यादि ।

## १२९ । प्रसंभ्यां जानुनोर्ज्ञुः ।

जानुशब्दस्यादेशो भवतीति । कथं पुनर्ज्ञायत आदेशोऽयं न प्रत्यय इति ? यदि प्रत्ययः स्याज् जानुन इत्येकवचनेनैव निर्देशं कुर्यात् । षष्ठी-द्विवचनेनैव निर्देशः कृतः । तस्मादादेशोऽयं न प्रत्यय इति विज्ञायते । षष्ठी-द्विवचनेन निर्देशोऽसन्देहार्थः कृतः स्थानषष्ठीत्वमसन्दिग्धं यथा विज्ञायेतेति । जानुन इत्युच्यमाने संदेहः स्यात् किमियं षष्ठ्युत पञ्चमीति ।

## १३० । ऊर्ध्वाद्विभाषा । १३१ । ऊधसोऽनङ् ।

अनङादेशोऽयं भवतीति । कथं पुनर्विज्ञायत आदेशोऽयं न प्रत्यय इति ? यद्येष प्रत्ययः स्यान् ङित्करणमनर्थकं स्यात् । आदेशे ह्यस्मिन्नन्त्यादेशार्थं ङित्त्वमर्थवद् भवति । तस्माद् ङित्त्वादेवायमादेशो भवतीति विज्ञायते । कुण्डोध्नीति । अनङि कृते ऽतो गुणे (६।१।९७) पररूपत्वम् । बहुव्रीहेरूधसो ङीषिति (४।१।२५) ङीष् । अल्लोपोऽनः (६।४।१३४) । स्त्रीग्रहणं कर्त्तव्य-मिति । स्त्री गम्यते येनाभिधेयनित्यत्वेन ततः स्त्रीग्रहणं कर्त्तव्यम् । एतदुक्तं भवति । तथा व्याख्यानं कर्त्तव्यं यथा स्त्रियामभिधेयायामनङ् भवतीति । तत्रेदं व्याख्यानम् । ऊर्ध्वाद् विभाषेत्यतो (५।४।१३०) विभाषाग्रहणमनुवर्त्तते । सा च व्यवस्थितविभाषा । तेन स्त्रियामेव भवति । नान्यत्रेति । अनङो-ऽकारादित्वमुत्तरार्थम् । इह विनापि तेन सिध्यत्येव ।

## १३२। धनुषश्च।

शार्ङ्गधन्वेति। अनङि कृते यणादेशः। सर्वनामस्थाने चेति(६।४।८)दीर्घः।

## १३३। वा संज्ञायाम्। १३४। जायाया निङ्।

निङादेशो भवतीति। आदेशत्वमस्य पूर्ववद् ङित्त्वादेव विज्ञायते। युवजानिरिति। लोपो व्योर्वलीति (६।१।६६) यलोपः। स्त्रियाः पुंवदिति (६।३।३४) पुंवद्भावः।

## १३५। गन्धस्येदुत्पूतिसुसुरभिभ्यः।

इकार आदेशो भवतीति। कथं पुनर्ज्ञायत आदेशोऽयं न प्रत्यय इति? गन्धस्येति षष्ठ्या निर्देशात्। यदि हि प्रत्ययः स्यादसन्दिग्धार्थं गन्धादिति पञ्चम्या निर्देशं कुर्यात्। षष्ठ्या तु निर्देशः। तस्मादादेशोऽयमिति विज्ञायते। गन्धस्येत्त्व इत्यादि। गन्धो द्विविधः। गुणो गन्धः। सोऽन्यपदार्थस्यैकान्तो न भवति। यस्तु शोभनो गन्धोऽस्येति सुगन्ध आपणिक इति तत्र द्रव्यगन्धो गन्धशब्देनोच्यते। तच्चापणिकस्यैकदेशो भवति। तत्र गुणगन्धे यथा स्याद् द्रव्यगन्धे मा भूदित्येवमर्थं गन्धस्येत्त्वे विधेये तदेकान्तग्रहणं कर्त्तव्यम्। तदित्यनेन बहुव्रीह्यर्थः सामर्थ्यान्निर्दिश्यते। तस्यैकान्त एकदेशो वा धर्मोऽवयवः। तदेकान्तः संगृह्यते। येन तदेकान्तग्रहणं कर्त्तव्यम्। एतदुक्तं भवति। तादृशं व्याख्यानं कर्त्तव्यं येनेत्त्वविधाविह गन्धोऽन्यपदार्थस्यैकदेशात् तत आश्रयितव्य इति। तत्रेदं व्याख्यानम्। वा संज्ञायामित्यतो (५।४।१३३) वाग्रहणमनुवर्त्तते। सा च व्यवस्थितविभाषा। तेन यत्र गन्धोऽन्यपदार्थस्यैकदेशभूतस्तत्रैवेत्त्वं भवति नान्यत्रेति। अथवास्त्ययं गन्धशब्दो द्रव्यवचनो गन्धान् विक्रीणीत इति। अस्ति गुणवचनो यथा गन्धवती पृथिवी। तत्र गुणवचनस्येदं ग्रहणम्। न द्रव्यवचनस्य। तस्माद् द्रव्यवचनो बहुवचनान्त एव द्रव्ये वर्त्तते गन्धान् विक्रीणीते गन्धाः पण्यमस्येति। इह गन्धस्येत्येकवचनेनैव निर्देशः। तस्मादवसीयते गुणवचनस्येदं ग्रहणमिति। गुणवचनस्य तु ग्रहणे तत्र गुणो गन्धोऽन्यपदास्यैकदेशो भवति। तेन तदेकान्तभूतस्यैव गन्धस्येत्त्वं भवति।

## १३६ । अल्पाख्यायाम् । १३७ । उपमानाच्च ।

## १३८ । पादस्य लोपोऽहस्त्यादिभ्यः ।

लोपो भवति समासान्त इति । किं पुनः स्यात् । समासान्तो न स्यात् । आदेः परस्येत्यादेरेव (१।१।५४) स्यात् । समासान्तत्वे सत्यन्तशब्दोऽयं नियतदेशमेवावयवमाचष्ट इत्यन्तस्यैव भवति । एवञ्च समासान्तो भवति यद्यन्तस्य भवति नान्यथा । ननु च लोपस्याभावरूपत्वात् समासान्तो नोपपद्यत इत्याह स्थानिद्वारेणेत्यादि । स्थानिनोऽकारस्य समासान्तत्वादुपचारेण लोपोऽपि समासान्त उच्यत इति दर्शयति ।

## १३९ । कुम्भपदीषु च ।

कुम्भपदीप्रभृतयः कृतपादलोपाः समुदाया एव पठ्यन्त इति । यद्येवं कथमिदं नेतव्यमित्याह तत्रैवमित्यादि । तत्र तेषु कुम्भपदीप्रभृतिषु कृतपादलोपेषु पठितेष्वेवं व्याख्येयमित्यर्थः । कुम्भपद्यादिविषय इति विषयग्रहणेन कुम्भपदीष्विति विषयसप्तम्येवेति दर्शयति । यथा कुम्भपद्यादयः सिध्यन्तीति । यत्तदोर्नित्यसम्बन्धात् तथेत्यनुच्यमानमपि प्रतीयते । तदायमर्थः । पादस्य तथा लोपो भवति कुम्भपद्यादिविषये यथा कुम्भपद्यादयः सम्भवन्तीति । किमर्थं पुनः समुदाया एव पठ्यन्ते ? न कुम्भपदादीञ् शब्दान् प्रातिपदिकेषु पठित्वा तेभ्यः परस्य पादशब्दस्य लोपो विधीयेतेत्याह समुदायपाठस्य चेत्यादि । यदि कुम्भादिभ्यः परस्य पादस्य स लोप उच्येत कृतपादलोपाः समुदाया एव न पठेरन्निति नियमो न लभ्येत । तत स्त्रिष्वपि लिङ्गेषु स्युः । स्त्रियामेव चेष्यन्ते । समुदायपाठे सति स्त्रियां ङीप्प्रत्यय एव विषयभूते भवति । नान्यदेति । कुम्भपदीति । पादोऽन्यतरस्यामिति (४।१।८) ङीपि विषयभूते पादस्य लोपः । ततो ङीप् । तस्मिन् पादः पदिति (६।४।१३०) पद्भावः । यत्रेहोपमानपूर्वमिति । कुम्भपदी जालपदीत्येवमादि । संख्यापूर्वपदञ्चेति । एकपदी शतपदीत्येवमादि । तस्य सिद्ध इति । उपमानपूर्वस्य पूर्वेणैव सिद्धे संख्यापूर्वस्य तूत्तरेण । अष्टापदीत्यस्मिन् पठ्यते । तत्र निपातनं दीर्घत्वार्थम् । अष्टनः संज्ञायामिति (६।३।१२५) वा ।

## १४० । संख्यासुपूर्वस्य ।

अनुपमानार्थमिदम् ।

## १४१ । वयसि दन्तस्य दतृ ।

द्विदन्निति । ऋकारस्योगित्कार्य्यार्थत्वादुगिदचामिति (७।१।७०) नुम् । हल्ङ्यादि (६।१।६८) संयोगान्तलोपौ (८।२।२३) । सुदन्ती दाक्षिणात्य इति । शोभनत्वमिह गम्यते । न वयः ।

## १४२ । छन्दसि च ।

अवयोऽर्थमसंख्यापूर्वपदार्थञ्च वचनम् । उभयतोदत इति शसन्तमेतत् ।

## १४३ । स्त्रियां संज्ञायाम् ।

अच्छन्दोऽर्थमेतत् । अय इव दन्ता अस्या अयोदती । उगितश्चेति (४।१।६) ङीप् । समदन्तीति । नासिकोदरेत्यादिना (४।१।५५) ङीष् ।

## १४४ । विभाषा श्यावारोकाभ्याम् ।

स्त्रियामिति निवृत्तम् । रोको रोचनं दीप्तिः । रुच दीप्तौ । भावे घञ् । चजोः कुघिण्ण्यतोरिति (७।३।५२) कुत्वम् । अविद्यमानो रोकोऽस्येत्यरोक-शब्दस्य व्युत्पत्तिं हृदि कृत्वा तस्यार्थं दर्शयितु माह अरोको निर्दीप्तिरिति ।

## १४५ । अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ।

## १४६ । ककुदस्यावस्थायां लोपः ।

कालादिकृतेति । आदिशब्देनाहारादयो गृह्यन्ते ।

## १४७ । त्रिककुत् पर्वते ।

अनवस्थार्थमिदं । पर्वतेऽन्यपदार्थे मुख्यं ककुदं न संभवति । उच्यते चेदं त्रिककुत् पर्व्वत इति । तत्र सामर्थ्यात् ककुदाकारे पर्वतशिखरे सादृश्यात् ककुदशब्दो वर्त्तते । तस्येदं ग्रहणं विज्ञायते । अत एवाह ककुदाकारमित्यादि । यद्येवमिदमिति । यस्य कस्यचित् पर्वतस्य त्रीणि ककुदाकाराणि शृङ्गाणि तस्य सर्व्वस्य त्रिककुदभिधानं प्राप्नोति । अत आह नचेत्यादि । उच्यत इति प्रकृतेन सम्बन्धः । संज्ञैषेत्यादि । एतेन यस्यैषा

संज्ञा विकाकुच्छब्देनोच्यत इति तद् दर्शयति। एतच्च निपातनात् स्त्रियां संज्ञायामित्यतः (५।४।१४३) संज्ञाग्रहणानुवृत्तेर्लभ्यते। ननु चाभिधेयनियमोऽपि तत एव लभ्यत इति पर्वतग्रहणं न कर्त्तव्यम्। नैतदस्ति। शैलीय माचार्य्यस्य यत् प्रसिद्धेष्वपि नित्यतरेष्वभिधेयनिमित्तमाचष्टे यथा पुष्यसिद्ध्यौ नक्षत्र इति (३।१।११६)। किं पुनर्यत्र प्रसिद्धिर्नास्ति। सा तु लौकिकी।

## १४८। उद्विभ्यां काकुदस्य।

उत्काकुत्। विकाकुदिति। अन्त्यस्य लोपे कृते वावसान इति (८।४।५६) चर्त्वम्। ननु चादेः परस्येत्यादि (१।१।५४) लोपेन भवितव्यम्। तत् कथमन्त्यस्य भवति? अन्त्यवचनो ह्यवयववचनोऽपि। स नियतदेशावयवमाचष्ट इत्युक्तम्। तत्र यद्यादेः स्यात् समासान्तता नोपपद्यते।

## १४९। पूर्णाद्विभाषा।

## १५०। सुहृद्दुर्हृदौ मित्रामित्रयोः।

## १५१। उरःप्रभृतिभ्यः कप्।

शेषाद्विभाषेति (५।४।५४) कपि सिद्धे नित्यार्थं वचनम्। प्रियसर्पिष्क इति। इणः ष इति (८।३।३९) विसर्जनीयस्य षकारः। अवमुक्ते उपानहौ येन सोऽवमुक्तोपानत्क इति। नहो ध इति (८।२।३४) विहितस्य धकारस्य झलां जशोऽन्त इति (८।२।३९) जश्त्वं दकारः। तस्य खरि चेति (८।४।५५) चर्त्वं तकारः। किं पुनरेतद् विभक्त्यन्तानां पाठे प्रयोजनमित्याह तत्रेत्यादि। तत्रेत्यनेन विभक्त्यन्तानां पाठः प्रत्यवमृश्यते। अर्थान्नञ इति। नञ्परो योऽर्थशब्दस्तदन्ताद्बहुव्रीहेः कब् भवति। नास्त्यर्थोऽस्येत्यनर्थकः।

## १५२। इनः स्त्रियाम्।

इदमपि पूर्ववत् कपि सिद्धे नित्यार्थमेव। बहुदण्डिकेति। नलोपः प्रातिपदिकान्तस्येति (८।२।७) नलोपः।

## १५३। नद्यृतश्च। १५४। शेषाद् विभाषा।

शेषः कबपेक्षो वा स्याद् यस्माद् बहुव्रीहेः कम् न विहितः स शेष इति? समासान्तापेक्षो वा यस्माद् बहुव्रीहेः समासान्तो न विहितः स शेष

इति ? तत्र यदि कबपेक्षः शेषः स्यादन्टचो व्याघ्रपात् सुगन्धिरित्यत्रापि स्यात्। नह्यतः केनचित् कब् विहित इति कबपेक्षे शेषे दोषं दृष्ट्वा समासान्तापेक्षया शेष इति दर्शयन्नाह यस्माद् बहुव्रीहेः समासान्तो न भवति स शेष इति। कथं ज्ञायते समासान्तापेक्षः शेष इति ? शेषग्रहणात्। तत्र यदि कबपेक्षः शेषः स्याच् शेषग्रहणमनर्थकं स्यात्। आरम्भसामर्थ्यादेव हि शेषविषय एव विकल्पो भविष्यति। अन्यथा यदि यतोऽपि पूर्वैर्विधिवाक्यैः कब् विहित स्ततोऽप्यनेन विभाषा विधीयते विधिवाक्यानामानर्थक्यमापद्येत। तस्माच्छेषग्रहणात् समासान्तापेक्षः शेषो विज्ञायते। बहुखट्वक इति। आपोऽन्यतरस्यामिति (७।४।१५) ह्रस्वः। बहुखट्व इत्यत्रापि गोस्त्रियोरुपसर्जनस्येति (१।२।४८)। कथमित्यादि। यदि समासान्तापेक्षः शेषोऽन्टक्कं साम बह्वृक्कं सूक्तमित्यत्र कम् न सिध्यतीत्यभिप्रायः। विशेषे स इष्यत इति। स ह्यकारः समासान्तो विशेषे माणवे चरणाख्यायाञ्चेष्यत इति। तत्राकारो विहितः। न चापि तत्रैव विशेषे कब् विहितः। किं तर्हि ? विषयान्तरे। सामनि सूक्ते च। तत्र बहुव्रीहेः समासान्तापेक्षः शेषः। तेन च प्रियपथः प्रियधुर इति ऋक्पूरब्धूरित्यादिना (५।४।७४) ऽकारः समासान्तः। अथ किमर्थं शेषग्रहणम् ? यावता याभ्यः प्रकृतिभ्यः समासान्ता विहितास् ताभ्यस्त एव बाधका भविष्यन्ति। नैतदस्ति। निरवकाशा हि विधयो बाधका भविष्यन्ति। सावकाशाश्च समासान्ताः। कोऽवकाशः ? प्रतिपदोपात्तप्रकृतयो याभ्यः समासान्ता अर्थविशेषे समासविशेषं प्रति प्रतिपदमुपादाय विहिताः सोऽवकाशः। विशेषप्रकृतिभ्यः प्रसङ्गे सत्युभयप्राप्तौ परत्वात् कप्रत्ययः स्यात्। तस्माच्छेषग्रहणं कर्त्तव्यम्।

## १५५। न संज्ञायाम्।　　　　१५६। ईयसश्च।

सर्व्वा प्राप्तिः प्रतिषिध्यत इति। नन्वनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति (प,६२) शेषलक्षणस्यैव कपः प्रतिषेधः प्राप्नोति। नैष दोषः। कबत्रानुवर्त्तते। न शेषादिति। तेनायं कम्मात्रस्य प्रतिषेधो भविष्यति। बहवः श्रेयांस इति। द्विवचनविभज्योपपदेत्यादिनेयसुन् (५।३।५७)। प्रशस्यस्य श्र इति

(५।३।६०) अः। ह्रस्वत्वमपि न भवतीति। गोस्त्रियोरुपसर्जनस्येति ह्रस्वं (१।२।४८) प्राप्नोति। तदपि न भवति। कस्मान्न भवतीत्याह ईयसो बहुव्रीहेरित्यादिना। नात्र पुंवद्वचनेन स्त्रीप्रत्ययस्य निवृत्तिरभिप्रेता। किं तर्हि? ह्रस्वत्वप्रकरणात् तदभावः। एतदुक्तं भवति। यथा पुंवद्भावे सतीकारस्य ह्रस्वो न भवत्येवमीयसः परस्य स्त्रीप्रत्ययस्यापि न भवति।

## १५७। वन्दिते भ्रातुः।

नद्यृतश्चेति (५।४।१५३) प्राप्तस्य कपोऽयं प्रतिषेधः। वदि अभिवादनस्तुत्योरिति। यद्यपि वदिरभिवादने वर्त्तते तथापीह स्तुतावेव वर्त्तमान आश्रीयते। अतएवाह वन्दिते स्तुत इति।

## १५८। ऋतश्छन्दसि।

अयमपि पूर्ववत् प्राप्तस्य कपः प्रतिषेधः।

## १५९। नाड़ीतन्त्र्योः स्वाङ्गे।

अयमपि नद्यृतश्चेति (५।४।१५३) प्राप्तस्य कपः प्रतिषेधः। स्वाङ्गमिह पारिभाषिकं गृह्यते। बहुनाड़िरिति। पूर्ववदुपसर्जनह्रस्वत्वम्। बहुतन्त्रीरिति। अत्र ह्रस्वत्वं न भवति। कुतः स्त्रियाः प्रतिषेधो वक्तव्य इति (१।२।४८,वा) वचनात्। तथाचोक्तम् (M) स्त्रीग्रहणं स्वरयिष्यति।

## १६०। निष्प्रवाणिश्च। (N)

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां पञ्चमस्याध्यायस्य
चतुर्थः पादः समाप्तः ॥ ५।४ ॥
समाप्तोऽयं पञ्चमोऽध्यायः ॥ ५ ॥

---

(M) गोस्त्रियोरित्यत्र (१।२।४८) भाष्ये।

(N) In preparing the press Copy of the fifth Adhyaya of the Nyasa, the editor had chiefly the MS. (ख) at his disposal. For some accounts of this MS., See notes on p. 331 and p. 1061, vol I.

अथ

# काशिकाविवरणपञ्जिका ।

## षष्ठाध्यायस्य

## प्रथमः पादः ।

———:*:———

### १ । एकाचो द्वे प्रथमस्य ।

इह केचित् स्वार्था एव विधयो भवन्ति । न परार्थाः । तद्यथाण् कुटिलिकाया इति ( ४।४।१८ ) कुटिलिकाशब्दादण् विधीयमानः स्वार्थो भवति । केचित् पुनः स्वार्थाः परार्थाश्च । तद्यथा पदरुजविशस्पृशो घञिति ( ३।३।१६ ) पदादिभ्यो घञ् विधीयमानः स्वार्थो भवति । स्वरितलिङ्गासङ्गादुत्तरेषु योगेष्वनुवर्त्तमानः परार्थश्च । केचित् पुनः परार्था एवाधिकारा भवन्ति । न स्वार्थाः । यथा समर्थानां प्रथमाद्वेति ( ४।१।८२ ) । तत् किमयं स्वार्थ एव ? अथोभयार्थ एवाधिकार उत परार्थ एवेति सन्देहापनयनाय परार्थतामेवास्य दर्शयितुमाह एकाच इति चेत्यादि । एतद् ग्रहणकं वाक्यमस्य चेत उत्तरमित्यादि विवरणम् । सिंहावलोकितन्यायेन पूर्वत्राप्यधिकाराणामनुवृत्तिर्भवति । अतस्तन्निवृत्त्यर्थमित उत्तरमित्युक्तम् । प्रागित्यनेनाधिकाराणामवधिं दर्शयति । इतस्त्ववधेरुत्तरत्रानुवृत्तिस्स्वरितत्वाद् विज्ञेया । कस्य पुनरेकाचो द्वे भवत इत्येवं यद् वेदितव्यमित्यत आह वक्ष्यतीत्यादि । धातोरितिरेकाच इत्यनेन समानाधिकरणा षष्ठी स्यात् ? व्यधिकरणा वा ? तत्र यद्येषा धातोरेव समानाधिकरणा षष्ठी स्यात् तदा पचादीनामेव द्विर्वचनं स्यात् । न जागर्त्यादीनाम् । नहि तत्रैकाच इति मन्यमानो नैषैकाच इति समानाधिकरणा षष्ठी धातोरेकाच इत्यपित्व-

वयवयोगा धातोर्योऽवयव एकाच इति दर्शयितुमाह धातोरवयवस्येति। जजागारेत्यत्र जागिरित्येतद् द्विरुच्यते। पपाचेत्यत्र पच्छब्दः। पूर्वञ्चाचो ञ्णितीति (७।२।११६) वृद्धिः। उत्तरत्र अत उपधाया (७।२।११६) इति। इयायेति। इण् गतौ। अचो ञ्णितीति (७।२।११६) वृद्धौ कृतायां द्विर्वचनेऽचीति (१।१।५९) स्थानिवद्भावादिकारो द्विरुच्यते। आयादेशः। अभ्यासस्यासवर्णे इतीयङ् (६।४।७८)। आरेति। ऋ गतौ। ऋ इत्येतस्य द्विर्वचनम्। उरदित्यत्त्वम् (७।४।६६)। रपरत्वम्। अत आदेरिति (७।४।७०) दीर्घः। सवर्णदीर्घत्वञ्च। एकाच इति तत्पुरुषोऽयं वा स्यादेकश्चासावच्चेति एकाच्। बहुव्रीहिर्वा ? एकोऽज् यस्येति ? तत्र यद्ययं तत्पुरुषः स्यादिणादीनामेव द्विरुक्तिः स्यात्। इयाय। आरेत्येवमादौ। पचादीनान्तु पपाचेत्यादौ न स्यात्। तेषामज्झल्समुदायात्मकत्वादित्येतन् मनसि कृत्वाह एकाच इति बहुव्रीहिनिर्देशोऽयमिति। बहुव्रीहिणा विवक्षितस्यार्थस्य निर्देशः कथनम्। बहुव्रीहेर्निर्देशः कथनमुच्चारणं वा बहुव्रीहिनिर्देशः। कुतः पुनरेतदवसितम् बहुव्रीहेर्निर्देशोऽयमिति ? हलादिःशेषः (७।४।६०) शर्पूर्वाः खय (७।४।६१) इत्येवमादिलिङ्गात्। ननु च तत्पुरुषस्यापि लिङ्गमस्ति। दीर्घ इणः कितीतीणोऽभ्यासस्य (७।४।६९) दीर्घविधानम्। नैतदस्ति। बहुव्रीहावपि ह्यस्मिन् व्यपदेशिवद्भावादिणो द्विर्वचनेऽभ्यासस्य दीर्घविधानमुपपद्यत एव। नतु तत्पुरुषेऽस्मिन् हलादिशेषादिकार्य्यमुपपद्यते। पचादीनामज्झल्समुदायानां द्विर्वचनानुपपत्तेः। तस्माद् बहुव्रीहेरेव लिङ्गमस्ति। न तत्पुरुषस्येति बहुव्रीहिनिर्देश एवायम्। यद्येवं बहुव्रीहेरेवान्यपदार्थप्रधानत्वादुपलक्षणविनिर्मुक्तस्य शुद्धस्यैवान्यपदार्थस्य बहुव्रीहिणाभिधानादचावयवेन य उपलक्षितोऽन्यपदार्थस्तस्यैवानच्कस्य द्विर्वचनम् प्राप्नोति। नतूपलक्षणभूतस्यापि। नह्युपलक्षणं कार्य्योपयोगि भवति। तथाहि यथा चित्रगुरानीयतामित्युक्ते यस्य चित्रा गावः सन्ति स एवानीयते। नतूपलक्षणभूता गावोऽपि। अतएव तस्य निरासाय तद्गुणसंविज्ञानोऽयं बहुव्रीहिरिति दर्शयन्नाह तत्रेत्यादि। समुदायः समासार्थ इति। सह तेनोपलक्षणभूतेनाचावयवेन समुदाय एवान्यपदार्थ इत्यर्थः। अभ्यन्तरस्येति तदन्तर्भूत इत्यर्थः।

चशब्दोऽवधारणे। अभ्यन्तर एवेत्यर्थः। इतिकरणो हेतौ। यस्मात् समुदाये समासार्थेऽवयवोऽभ्यन्तरो भवति तस्मात् साच्कस्यैव द्विर्वचनं भवति। लोकेऽपि क्वचिदुपलक्षणस्य समासेऽन्तर्भावात् कार्य्योपयोगित्वं दृष्टमेव। यथा शुक्लवाससमानयेत्युक्ते सहैव शुक्लेन वाससानीयते। पजित्यत्र येनैवाचा समुदाय एकाच् तेनैव तदवयवोऽप्यच्छब्दः पशब्दश्चेति। ततश्चावयवानामपि प्रत्येकं द्विर्वचनं प्राप्नोति। यथा येनैव हस्तेनावयवेन बाहुर्हस्तवान् भवति तेनैव देवदत्तोऽपि हस्तवान् भवति तथा पचतौ धातौ येनैवाकारेण पच्छब्दः समुदाय एकाच् तेनैव तदवयवोऽप्यच्छब्दः पशब्दश्चेति। ततश्चावयवानामपि प्रत्येकं द्विर्वचनं प्राप्नोत्येव। द्विर्वचनञ्च कार्यिण एकाचः। सामान्येन निर्देशात्। एवञ्च समुदायस्य तदवयवानाञ्चैकाचां पृथग् द्विर्वचने कृतेऽनिष्टं रूपं स्यात्। अत एतद् द्वैथमपाकर्त्तुमाह तत्रेत्यादि। तेषु समुदायेष्वेकाच्सु मध्ये पृथगवयवैकाचो न द्विरुच्यन्ते। किं तर्हि? समुदायैकाजेव। अवयवैकाजिति कर्मधारयः। समुदायैकाजित्ययमपि कर्मधारय एव। कुतः पुनरयं सामान्याभिधाने विशेषो लभ्यत इत्यत आह तथाह्रीत्यादि। यद्यपि समुदायोऽवयवश्चैकाच् तथापि यस्य द्विर्वचने कृते सर्व्वेषामनुग्रहो भवति तस्यैव द्विर्वचनं युक्तम्। एवं हि शास्त्रहानिर्न भवति। सर्वेषामेव शास्त्रविहितकार्य्यस्य निष्पत्तेः। अयमेवानुग्रहो या शास्त्रविहितकार्य्यस्य निष्पत्तिः। समुदायस्यैव द्विर्वचने कृते सर्वेषामनुग्रहो भवति। यथा वृक्षः प्रचलन् सहावयवैः प्रचलति तथैकयैव शास्त्रप्रवृत्त्या समुदायो द्विरुच्यमानः सहावयवैर्द्विरुच्यते। नहि विनावयवैः समुदायो द्विर्वक्तुं शक्यते। तस्य तदात्मकत्वात्। अवयवानां तु द्विर्वचनं नैकया प्रवृत्त्या सर्वेषां कर्त्तुं शक्यते। न तद्द्विरुक्तौ सर्वेषामनुग्रहो भवति। कथम्? सर्वेषां हि तेषा मेकाज्व्यपदेश एकोऽजिति साधारणो हेतुः। तत्र यदा येनाचैकोऽवयव एकाजिति व्यपदिश्यते तदा तेनैव तस्याचिक्षत्वान् न शक्यतेऽपर एकाजिति व्यपदेष्टुम्। ततश्चैकस्य द्विर्वचने विधित्सिते तदेदानीं तेनाचा य एकाच् कश्चिदवयवस्तस्यैव द्विर्वचनं स्यात्। नेतरस्य। अनच्कत्वात्। अत्रैतत् स्यात्। एकाच इति सर्वेषां षष्ठ्या निर्दिष्टत्वात् सर्वेषा-

मेव तेषां द्विर्वचनं कर्त्तव्यम्। न च तद् युगपत् सम्भवति। अत एकस्य तावत् क्रियते। एकस्मिन् कृते पुनः प्रवृत्त्यन्तरेणापरस्यापि करिष्यत इतीरतच्च न। यस्य ह्यवयवस्य पूर्वं द्विर्वचनं कृतं तेनैव सहाचो द्विरुक्तत्वान् न युज्यते पुनस्तस्यावयवान्तरेण द्विर्वचनं कर्त्तुम्। अकृतद्विरुक्तस्य हि द्विर्वचनं क्रियते। न द्विरुक्तस्य। अन्यथा ह्यनवस्था स्यात्। अनभ्यासस्येति (६।१।२) वचनाच्चायुक्तमेवैकस्मिन्नवयवे द्विरुक्तेऽपरस्य द्विर्वचनं कर्त्तुम्। अतो नावयवद्विर्वचने सर्वेषामनुग्रहः सम्भवति। तत्र यस्य द्विर्वचनं न सम्भवति तस्य शास्त्रहानिः स्यात्। तदयुक्तमवयवानां प्रत्येकं द्विर्वचनम्। अथैषां युगपदवयवानां द्विर्वचनन्न सम्भवतीति प्रयोगान्तरे पर्य्यायेण करिष्यते पूर्वोक्तदोषपरिहारार्थम्। एवमपि यदा पचेरच्शब्दस्य द्विर्वचनं स्यात् तदा पपाचेतेत्रवमादि न सिध्येत्। किञ्च णिजिर् शौचपोषणयोरित्यस्माल्लट् झि। शप्। तस्य जुहोत्यादित्वात् श्लुः। श्लाविति (६।१।१०) द्विर्वचनम्। तत्र यदि निशब्दमात्रस्य द्विर्वचनं क्रियते तदा निजां त्रयाणामिति (७।४।७५) गुणः। अत्रेदानीमदभ्यस्तादित्यदादेश (७।१।४) इष्यते नेनिजतीति रूपं यथा स्यादित्येवमर्थम्। स च न प्राप्नोति। जकारेण व्यवहितत्वात्। नहि जकारस्याभ्यस्तसंज्ञा। किं तर्हि? निशब्दस्य। द्विरुक्तत्वात्। जकारस्य चाद्विरुक्तत्वात्। अनेनिजुरिति। अत्र लङादेशस्य झेः सिजभ्यस्तविदिभ्यश्चेति (३।४।१०९) जुस् न प्राप्नोति पूर्वस्मादेव हेतोः। नेनिजदित्यत्र नाभ्यस्ताच्छतुरिति (७।१।७८) नुम्प्रतिषेधो न स्यात्। अतएव हेतोः। न च शक्यते वक्तुं वचनसामर्थ्याद् व्यवधानेऽपि भविष्यतीति। यदा समुदायस्य द्विर्वचनं तदा वचनस्य सावकाशत्वात्। यदा णिद्विकारसहितस्य जकारस्य द्विर्वचनं तदा नेनिजतीत्यादिकं रूपमेव न स्यात्। तस्मादयुक्तमवयवानां द्विर्वचनम्। अतः समुदाय एव द्विर्वक्तव्यः। अथ पपाचेत्यत्र कथं द्विर्वचनम्? यावतैकाचो द्वे प्रथमस्येत्युच्यते। नचात्रैकाचः प्रथमव्यपदेशोऽस्ति। प्रथमशब्दो ह्यप्रथमापेक्षो भवति। सम्बन्धिशब्दत्वात्। सतुस्वनेकेषु यस्मात् पूर्वो नास्ति स प्रथमः। यः पुनरेक एव नासौ प्रथमव्यपदेशं लभते। एकश्चात्रैकाच्। तेनात्र द्विर्वचनं न स्यात्। जजागारेत्यादावेव स्यात्। इयायारेत्यत्रापि कथं

द्विर्वचनम् ? यावतैकाचस्तदुच्यते। न चैकाच्त्वमस्ति। अजव्यतिरिक्तस्यानच एकाज्व्यपदेशहेतोरभावादित्यत आह पपाचेत्यादि। एकसंख्याव्यवच्छिन्न-स्वरसम्बन्धहेतुको व्यपदेशः। स यस्यास्ति स व्यपदेशी। जागर्त्त्यादिषु धातुषु जागित्येवमादिः। तेन तुल्यं वर्त्तत (५।१।११५) इति व्यपदेशिवत्। तस्य भावो व्यपदेशिवद्भावः। एकाच्त्वमपीत्यपिशब्दाद् द्वितीयत्वमपीति। ततोऽनेन जजागारेत्यत्र यथा वास्तवे प्रथमत्वे जागृइत्येतस्य प्रथमस्यैकाचो द्विर्वचनं भवति तथा परमार्थतो सत्यपि प्रथमत्वे प्रथमस्यैकाचा द्विर्वचनं भवति। व्यपदेशिवद्भावेन। पपाचेत्यत्र पच्छब्दस्य। इयायारेत्यत्राप्यसति वास्तव एकाच्त्वे द्वितीयत्वे च व्यपदेशिवद्भावेन द्विर्वचनं भवति। यथाटिटि-षतीत्यत्र वस्तुत एवैकाचो द्वितीयस्य टिशब्दस्येति। नचैतद् वक्तव्यम्। यस्मादप्रथमस्यापि पज् इत्येवंप्रकारस्य व्यपदेशिवद्भावेन द्विर्वचनं भवतीति। अत्र लिट्यभ्यासस्योभयेषामिति वचनं (६।१।१७) ज्ञापकम्। असत्यपि वास्तव एकाच्त्वे द्वितीयत्वे च पुनर्व्यपदेशिवद्भावेन चेण्प्रभृतीनां द्विर्वचनं भवतीति। अत्राभ्यासस्य दीर्घविधानार्थं दीर्घ इणः कितीति ( ६। ।६८ ) वचनं ज्ञापकम्। इह दशभ्यः संख्याः संख्येये वर्त्तन्ते। नतु संख्यानमात्र इति द्विशब्दोऽत्र संख्येये वर्त्तते। तच्च संख्येयं शब्दरूपं वा स्यादुच्चारणं वा ? तत्र यदि शब्दरूपं संख्येयं स्यात् तदा द्वे इत्यनेन द्विशब्दरूपे भाव्यमानतया निर्दिश्येते इति। अत एकाच इत्यस्य च स्थाने योगलक्षणः सम्बन्धो भवति। अतः स्थाने द्विर्वचनमित्येष पक्षो भवति। तदेकाच इति स्थान-षष्ठी जायते। अथ पुनरुच्चारणं संख्येयं तदा स्थान्यादेशसम्बन्धो न भवति। उच्चारणं नाम शब्दानुगतो धर्म्मः। यद्यसावादेशो विधीयते तदा निवृत्ति-धर्म्मा स्थानी भवतीति शब्दस्य स्थानिनो निवृत्त्या भवितव्यम्। ततश्चोच्चारण मपि न स्यात्। तस्य तद्धर्मत्वात्। तस्मादुच्चारणे संख्येये स्थाने द्विर्वचनं न सम्भवतीति द्विष्प्रयोगो द्विर्वचनमित्येष पक्षो भवतीति। तदेकाच इति कर्तृकर्म्मणोः कृतीति (२।३।६५) कर्मणि षष्ठी। स ह्येकाजुच्चारणक्रियया व्याप्तुमिष्टतमत्वात् कर्म भवति। तत्र यदि स्थाने द्विर्वचनमित्येष पक्ष आश्रीयेत तदा जिघांसतीति हन्तेः कुत्वं न स्यात्। समुदायस्य हि सन्नन्तस्य

समुदायः सन्नन्त आदेशः । तत्र कृत एतन्नास्ति । अयं प्रत्यय इयं प्रकृतिरिति सन्दिग्धत्वात् प्रकृतिप्रत्ययस्य हन्तिर्नेष्टो भवतीत्यभ्यासाच्चेति (७।३।५५) कुत्वं हन्ति हकारस्य न स्यादितीमं स्थाने द्विर्वचनपक्षे दोषं दृष्ट्वा द्विष्प्रयोगो द्विर्वचनमिति पक्षमाश्रित्याह द्विष्प्रयोगश्चेत्यादि । चकारोऽवधारणे । द्विष्प्रयोग एवेत्यर्थः । न स्थाने द्विष्प्रयोग इत्यर्थः । अथ द्विष्प्रयोगद्विर्वचने कथमयं दोषो न भवतीत्याह आवृत्तिसंख्या हीत्यादि । पुनः पुनरुच्चारणमावृत्तिः ! तत् पुनः संख्याव्यवस्थितस्यैव धातोर्विधीयते । तेनेत्यादि । यस्मादावृत्तिः संख्याव्यवस्थितस्यैव धातोर्विधीयते तेन स एव शब्दो व्यवस्थित एव द्विरुच्चार्यते । नतु तस्य स्थाने शब्दान्तरं विधीयत इति कुतः पुनः पूर्वोक्तदोषावसरप्रसङ्गः ? यदि तर्हि द्विष्प्रयोगो द्विर्वचनमितिएष पक्ष आश्रीयत एवञ्च सति वस्वेकाजाद् (७।२।६७) घसामित्यत्रादिवान् आशिवान् पेचिवान् शेकिवान् इत्युदाहृत्य यद्वक्ष्यति धात्वभ्यासयोरेकादेशे कृत एत्वाभ्यासलोपयोः कृतयोः कृतद्विर्वचना एत एकाचो न भवन्तीति तन्न युज्यते । अकृतेऽपि धात्वभ्यासयोरेकादेशे ऽकृतयोरपि चैत्वाभ्यासलोपयोः कृतद्विर्वचनानामप्येषामेकाच्त्वात् । स्थाने द्विर्वचने हि शब्दान्तर मेवानेकाजादिश्यत इति स्यादेषां कृतद्विर्वचनानामनेकाच्त्वम् । नतु द्विष्प्रयोगपक्षे । तत्र हि स एव शब्दो द्विरुच्चार्य्यते । न चासौ शतकृत्वोऽप्युच्चार्य्यमाण एकाच्त्वं जहाति । किं पुनर्द्विरुच्यमानः । यदपि नियमस्य व्यवच्छेद्यं दर्शयितुं बिभिदानित्यादि तत्रोपन्यसिष्यति तदप्ययुक्तमेव । भिदिप्रभृतीनामिव यथोक्तादेव हेतोः कृतद्विर्वचनानामप्येकाच्त्वात् । यदप्यादुग्रहणमनेकाजर्थमित्यभिधास्यति तदप्ययुक्तमेव । ततएव हेतोराकारान्तानां कृतद्विर्वचनानामप्यनेकाच्त्वानुपपत्तेः । तस्मात् स्थाने द्विर्वचनपक्षोऽप्यङ्गीकर्त्तव्यः । एवं तर्ह्यन्यथा व्याख्यायते । इह पक्षद्वयं पूर्वोक्तं सम्भवति । तत्र किं द्विष्प्रयोगो द्विर्वचनमित्येष पक्ष आश्रीयत उत स्थाने द्विर्वचनपक्ष इति प्रश्नावसर इदमाह द्विष्प्रयोगश्च द्विर्वचनमिति । चकारः स्थाने द्विर्वचनमित्यमुमर्थं द्योतयति । ननु च षष्ठीस्थाने योगेति (१।१।४९) वचनात् स्थाने द्विर्वचनपक्षे नात्र भवितुं युक्तं तत् । कथं द्विष्प्रयोगपक्षोऽप्युपपद्यत इत्यत आह आवृत्तिसंख्या होत्यादि । यदि शब्दान्तरं तस्य स्थाने विधीयते

तदा स्थान्यादेशसम्बन्धे प्रतिस्थाने द्विर्वचनमितीष पक्षो जायत इत्युक्तम् । यदा त्वावृत्तिसंख्या विधीयते तदेतरः पक्षो भवतीति । एतदपि प्रतिपादितम् प्राक् । तस्मात् द्विष्प्रयोगपक्षो यदाङ्गीकर्त्तुमिष्यते तदावृत्तिसंख्या द्वे इति विधीयते । तेन स एव शब्दो द्विरुच्चार्य्यते । नतु शब्दान्तरं तस्य स्थाने विधीयते । तस्माद् द्विष्प्रयोगद्विर्वनपक्षोऽप्यङ्गीकर्त्तव्यः । अथ कथं स्थाने द्विर्वचनमित्येषोऽपि पक्ष आश्रीयते ? यावता जिघांसतीत्यत्र हन्तेर्हकारस्य कुत्वं न प्राप्नोतीत्युक्तम् । नैष दोषः । उच्यते चेदमभ्यासाच्च हन्तेः कुत्वं भवतीति । न च तस्य स्थाने शब्दान्तर एवादेशे कृते हन्तिरस्ति । तत्र वचनसामर्थ्यादादेशेऽदेशे हन्तिस्वरूपके (A) हन्तिशब्दो विज्ञास्यते । अन्ये त्वनयोः पक्षयोर्दोषा य आशङ्क्यन्ते ते भाष्य एवोत्क्षिप्य प्रतिक्षिप्ताः । इह त्वतिविस्तरग्रन्थभयान्न लिख्यन्ते ।

## २ । अजादेर्द्वितीयस्य ।

प्रथमद्विर्वचनापवादोऽयमिति । ननु चैकाचो द्वे प्रथमस्येत्यनेन (६।१।१) प्रथमस्यैकाचो द्विर्वचनं विधीयते । अजादेर्द्वितीयस्येत्यनेन तु द्वितीयस्य । तत् कथमन्यस्योच्यमानमिदमन्यस्य बाधकं स्यात् ? सति खलु सम्भवे बाधकं भवति । अस्ति च सम्भवो यदुभयं स्यात् । स्यादेतत् । धातोरित्येषा षष्ठी । तस्या द्वितीयेनैकाचा प्रथमेन च सम्बन्धो नोपपद्यते । अतो नास्त्युभयसम्भव इति । एतच्च नास्ति । अन्यद्धि वाक्यम् प्रथमद्विर्वचनस्य विधायकम् । अन्यच्च द्वितीयद्विर्वचनस्य । तत्र वाक्यभेदे च सति किमिति सम्बन्धो नोपपद्यते ? तस्मात् कृतेऽपि द्वितीयद्विर्वचने प्रथमद्विर्वचनं सम्भवत्येवेत्ययुक्तं बाधनम् । नैष दोषः । इह द्वीपमन्तरीपमित्यत्र द्व्यन्तरुपसर्गेभ्योऽपईदितीत्त्व (६।३।९७) मलोऽन्त्यस्येत्य (१।१।५२) नेनान्तस्यालः प्राप्तमादेः परस्येत्यनेनादे (१।१।५४) र्विधीयते । तत्र यथा सत्यपि सम्भवेऽनन्त्यविकारोऽन्त्यविकारं बाधते तथा द्वितीयद्विर्वचनं प्रथमद्विर्वचनं बाधिष्यते । यदि तर्हि प्रथमस्यैकाचो द्विर्वचनमनेन बाध्यते

(A) हन्तिप्रतिरूपक इति महीसूरपुस्तके पाठः ।

व्यञ्जनस्यापि प्रथमद्विर्वचनसम्बन्धिनो द्विर्वचनं बाध्येत । तद् यथाभूतस्यैव प्रसङ्गस्तथाभूतस्यैव द्विर्वचननिवृत्तिर्भवति । किम्भूतस्य च प्रथमद्विर्वचनस्य प्रसङ्गः ? सव्यञ्जनस्य । तत्र यथा प्रथमस्यैकाचो द्विर्वचनं न भवतेऽव-मेकाज्व्यपदेशिनो व्यञ्जनस्यापि न स्यात् । नैष दोषः । यदयं नन्द्राः संयोगादय इति ( ६।१।३ ) प्रतिषेधं शास्ति तज्ज्ञापयति व्यञ्जनस्य द्विर्वचननिवृत्तिर्न भवतीति । अन्यथा हि नदराणां द्विर्वचनप्रतिषेधोऽनर्थकः स्यात् । प्राप्त्यभावात् । अटिटिषति । अशिशिषतीति । अटेरशेश्च सनीटि कृते टिष्शब्दः शिष्शब्दश्च द्विरुच्यते । अरिरिषतीति । अर्त्तेः सनिड्-गुणरपरत्वेषु कृतेषु रिष्शब्दो द्विरुच्यते । स्थानिवद्भावः प्राप्नोतीति । सन्यङोरित्यनेन ( ६।१।९ ) सन्नन्तस्य द्विर्वचनमुच्यते । इट् च सन्भक्तः । तस्मादसौ द्विर्वचनस्य निमित्तमित्यभिप्रायः । स्थानिवद्भावे च सति रेफरहित-स्येषो द्विर्वचने कृते सवर्णदीर्घत्वे चारीषतीत्यनिष्टं रूपं स्यात् । कार्यीति । द्विरुक्तिरेव कार्य्यम् । तदस्यास्तीति कार्यी । स्यादेतत् । यद्यप्यसौ कार्यी तथापि कार्य्यं प्रति निमित्तमेवेत्याह नचेत्यादि । कथं पुनर्ज्ञायत एतत् कार्यी निमित्तत्वेनाश्रीयते इति ? अत आह तथाहीत्यादि । तथाहीति यस्मादित्यर्थे । इतिकरणः प्रकारे । यस्मात् क्ङिन्निमित्तयोः गुणवृद्ध्योः क्ङिति चेति ( १।१।५ ) प्रतिषेधो विधीयमानः शयितेत्येवंप्रकारविषये न भवति ततो ज्ञायते नहि कार्यी निमित्तत्वेनाश्रीयत इति । यदि ह्याश्रीयेत तदा शीङो ङित्त्वात् तन्निमित्ताच्च गुणवृद्ध्योः क्ङिति चेति (१।१।८) विधीयमानः शयितेत्यत्र गुणः प्रतिषेधश्च स्यात् । शायक इत्यत्र वृद्धिः प्रतिषेधश्च । ननु च येन विना यन्न भवति तत् तस्य निमित्तम् । यथा वृष्टेर्मेघः । यथाच प्रत्ययेन विना गुणवृद्धी न भवतस्तथा कार्यिणापि । तत् कथं शीङो गुण-वृद्धिप्रतिषेधो नेह भवतीत्यत आह नहि कार्यिण इत्यादि । अत्राश्रीयत इत्यध्याहार्य्यम् । सत्यम् । कार्य्यपि शीङ्निमित्तम् । तस्य गुणं प्रति वृद्धिञ्च प्रति यस्मान्निमित्तभावो नाश्रीयते तेन शयितेत्यादौ गुणवृद्धिप्रतिषेधो न भवति । गुणग्रहणमुपलक्षणार्थं वृत्तौ द्रष्टव्यम् । इतिकरणोऽनन्तरोऽस्य प्रतिविधानस्य स्वरूपं दर्शयति । कथं पुनर्ज्ञायते नहि कार्यी निमित्तत्वेना-

श्रीयत इति ? दीधीवेवीटामिति ( १।१।६ ) दीधीवेव्योर्गुणप्रतिषेधात्। यदि हि कार्यी निमित्तत्वेनाश्रीयेत दीधीवेव्योर्ङित्वात् क्विन्निमित्तत्वाच्च गुणवृद्ध्योः क्ङिति चेति ( १।१।५ ) प्रतिषेधः सिद्ध एवेति तयोर्गुण-प्रतिषेधोऽनर्थकः स्यात्। अत्र केचिदजादेरिति कर्मधारयात् पञ्चमी-मिच्छन्तीति। अच्चासावादिश्चेत्यजादिः। तस्मादजादेरिति। एवं वर्णयन्तः कर्मधारयात् पञ्चमीमिच्छन्ति। यदि तर्हि कर्मधारयादियं पञ्चमी तेषां द्वितीयग्रहणमनर्थकम्। यस्मात् तृतीयस्य प्राप्तिरेव नास्ति। येषां बहुव्रीहेरियं षष्ठ्यभिमता तेषामक्रियमाणे द्वितीयग्रहणे तृतीयस्यापि द्विर्वचनं प्राप्नोतीति तन्निवृत्त्यर्थं युक्तं द्वितीयग्रहणम्। येषाञ्च कर्मधारयादियं पञ्चम्यभिमता तेषां द्वितीयग्रहणमनर्थकम्। तस्मादित्युत्तरस्येत्यनेनानन्तरस्यैव ( १।१।६७ ) द्वितीयस्य भविष्यति। न तृतीयस्य। व्यवहितत्वादित्यत आह तेषामित्यादि।

## ३। नन्द्राः संयोगादयः।

तदन्तर्भावादिति। अवयवानां समुदायाभ्यन्तरत्वात् तदन्तर्भावः। अवयवभूता इति। आदिशब्दस्य नियतदेशावयववाचित्वाद् विशिष्टदेशावयव-भूता इत्येषोऽर्थो वेदितव्यः। उन्दिदिषतीति। उन्दी क्लेदने। सनीटि च कृते दिष्शब्दस्य द्विर्वचनम्। अड्डिडिषतीति। अड्ड अभियोग इत्यत्र यः संयोगः स दकारादिः। तस्य ष्टुत्वेन दकारस्य डकारः। ष्टुत्वञ्च द्विर्वचनेऽसिद्धम्। तेन सनीटि कृते दिष्शब्दो द्विरुच्यते। ततः ष्टुत्वम्। अर्चिचिषतीति। अर्च पूजायाम्। चिष्शब्दस्य द्विर्वचनम्। ईचिक्षिषत इति। ईक्ष दर्शने। सनीटि च कृते क्षिष्शब्दस्य द्विर्वचनम्। हलादिः शेषः (७।४।६०)। कुहोश्चुरिति (७।४।६२) चुत्वम्। प्राणिणिषतीति। श्वस प्राणने। अन च। प्रपूर्वः। दिद्रासतीति। द्रा कुत्सितायाङ्गतौ। केचिदजादेरित्यादि। तेषां मतेनाजादेरुत्तरे ये नकारादयः संयोगादिभूतास्ते न द्विरुच्यन्त इति सूत्रार्थः। किं पुनस्तदनुवर्त्तनस्य प्रयोजनमित्यत आह तस्येत्यादि। दकारस्तु द्विरुच्यत एवेति कर्मधारयपञ्चम्यन्तानुवृत्तौ हि

तस्मादि- (१।१।६७) तुरुत्तरस्यैतदनन्तराणामेव नकारादीनां द्विर्वचनप्रतिषेधेन भवितव्यम्। निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात्। दकारस्तत्र यद्यपि रेफ-दकारयोर्यः संयोगस्तदादिभूतस्तथापि नकारेण व्यवहितः। तस्माद्दकारो-ऽपि द्विरुच्यत एव। इन्द्रिद्रीयिषतीति। इन्द्रशब्दात् क्यचि कृते क्यचि (७।४।३३) चेतीत्त्वम्। क्यजन्तात् सन्। इट्। अतो लोप (६।४।१४८) इत्यकारलोपः। उब्जिजिषतीति। उब्ज आर्जवे। यदा बकारोपध उब्जिरुप-दिश्यत इति। प्रतिषेधस्य विषयं दर्शयति। इह केचिद्बकारोपधमिमं धातुं पठन्ति। उब्जितेत्येवमादिरूपं (B) यथा स्यात्। केचिच्च दकारोपधमभ्युद्गः समुद्ग इति यथा स्यात्। तत्र यदा बकारोपध उब्जिरुपदिश्यते तदायं प्रतिषेधो वक्तव्यः। दकारोपधोपदेशे तु न वक्तव्यः। नन्द्रा इत्यनेनैव (६।१।३) सिद्धत्वात्। बत्वन्तु तदा दकारस्य विधातव्यमिति। उब्जिता उब्जिजिषतीति यथा स्यात्। तदपि बत्वमकुत्वविषये विधातव्यम्। अन्यथाऽभ्युद्गः समुद्गः इति न सिध्येत्। दकारोपधस्यैव युक्तः पाठः। बत्वमात्रं वक्तव्यम्। तदपि न वक्तव्यम्। तत्र भुजन्युब्जौ पाण्युपतापयोरिति (७।३।६२) निपातनादेव सिद्धमिदं लभ्यते। नचाभ्युद्गः समुद्ग इत्यत्रापि प्रसज्येत। अकुत्वविषयत्वान् निपातनस्य। यत्र कुत्वं नास्ति तत्रैव बत्वं विज्ञायते। ननु कुत्वविषये। यकारपरस्येत्यादि। यकारः परो यस्मात् तस्य प्रतिषेधो न स्यादित्येतदर्थ-रूपं व्याख्येयमित्यर्थः। तत्र केश्चिदेवं व्याख्यायते। बहिरङ्गो रेफः। गुणोऽर्त्ति-संयोगाद्योः (७।४।२९)। यङि चेति (७।४।३०) गुणोऽङ्गस्य विधीयमानो यङि भवति बहिरङ्गः। तदाश्रितो रेफोऽपि बहिरङ्ग एव। ततश्च सोऽन्तरङ्गे प्रतिषेधे-ऽसिद्धः। तस्मात् तस्य द्विर्वचनप्रतिषेधो न भवतीति। यद्येव मिन्दिदिष-तीति नुमोऽपि प्रतिषेधो न प्राप्नोतीति। नैष दोषः। वक्ष्यति ह्येतत्। नुम्विधावुपदेशिवद्वचनमिति। नैयायिकास्त्वन्यथा वर्णयन्ति नन्द्राः संयोग-दय इति। तैः किमुक्तम्? संयोगात् पूर्वे नकारादयो न द्विरुच्यन्ते स चेद् भवति यकारान्तः संयोग इति। तेनारार्यत इत्यत्र संयोगस्य यकारान्तत्वात् प्रतिषेधो न भवतीति। अरार्यत इति। यङि चेति (७।४।३०) गुणे रपरत्वे च

(B) उब्जिजिषतीत्येवमादीति मड्सूरपुस्तके पाठः।

यँशब्दस्य द्विर्वचनम् । हलादिशेषः । दीर्घोऽकित इति (७।४।८३) दीर्घः । ननु चार्त्तेरहलादित्वाद् यङा न भवितव्यम् । स हि धातोरेकाच (३।१।२२) इत्यादिना हलादेरेव धातोर्विधीयत इत्याह अर्त्तेरित्यादि । व्यञ्जनस्येति । ईर्ष्यतेर्व्यञ्जनं यदेकाच् तस्य द्विर्वचनं कर्त्तव्यम् । तच्च व्यञ्जनं यकारः । तस्येटि कृते साच्कस्यैव द्विर्वचनं कर्त्तव्यम् । एकाच इति । सनः । स हीटि कृते तृतीय एकाज् भवति । तस्य द्विर्वचने कृते सन्यत (७।४।७९) इतीत्त्वम् । पूर्वं पूर्वंमिणमाश्रित्य सर्वसकाराणां षत्वम् । कण्डूयियिषतीति । असूयियिषतीति । कण्डूञ् । असूञिति कण्ड्वादिषु पठ्यते । ततः कण्ड्वादिभ्यो यक् (३।१।२७) । वा नामधातूनामिति । सुब्धातुर्नामधातुरभिधीयते । अश्वीयियिषतीति । अश्वशब्दात् क्यजन्तात् सनीटि च कृते यिष्शब्दस्य द्विर्वचनम् । अशिश्वीयिषतीति । श्वीशब्दस्य द्विर्वचनम् । कुत्वम् । हलादिशेषः । यथेष्टमिति । प्रथमादीनामन्यतरस्य यस्येष्यते तस्य कर्त्तव्यमिति ।

## ४ । पूर्वोऽभ्यासः ।

अभ्यासशब्दोऽयमावृत्तिवचनो लोके प्रसिद्ध एव । सा चावृत्तिः प्रथमस्य नास्तीत्यभ्यासप्रदेशेषु परस्य ग्रहणे प्राप्ते पूर्वस्य ग्रहणं यथा स्यादित्येवमर्थं तस्याभ्याससंज्ञा विधीयते । पूर्वशब्दोऽवयववचनः । यथा पूर्वं कायस्य पशोरिति । अवयवाश्चावयविनो भवन्ति । स चेह यद्यपि न निर्दिश्यते तथापि द्वे (६।१।१) इत्यनुवृत्तेस्तद्वाच्यस्यैवार्थस्य पूर्वो विज्ञायत इत्याह द्वे इति यदनुवर्त्तत इत्यादि । ननु च द्वे इति प्रथमान्तमनुवर्त्तते । षष्ठ्यन्तेन चेहार्थः । न ह्यन्यथा पूर्वशब्देन सम्बन्धः शक्यते दर्शयितुमित्यत आह तदर्थादित्यादि । अर्थाद्विभक्तिविपरिणामो भवतीति । तदिह षष्ठ्यन्तं जायत इत्यर्थः । अथ पुनरत्रावयवावयविलक्षणा षष्ठी भवति यथा वृक्षस्य शाखेति ? एवमपि यदि द्वे इत्यनुवृत्तेर्द्वयो र्यः पूर्वस्तस्याभ्याससंज्ञा विधीयते तदा सर्वस्य द्वे (८।१।१) इत्यत्रापि प्रकरणे ये द्वे विहिते तयोर्यः पूर्वस्तस्याप्यभ्याससंज्ञा प्राप्नोतीत्यत आह तत्रेत्यादि । पूर्वोऽवयव इति । पूर्वशब्दो व्यवस्थावचनोऽप्यस्ति । अतस्तद्व्यवच्छेदार्थमवयवग्रहणम् । पपाचेत्यत्राभ्याससंज्ञायां सत्यां कुहोः चुः इत्यभ्यासस्य

(७।४।५९) ह्रस्वत्वम् । हलादिशेषः । प्रकृतिचरां प्रकृतिचरो भवन्तीति चर्त्वम् । पिपक्षतीति । सन्यत (७।४।७९) इतीत्त्वम् । पापच्यत इति दीर्घोऽकित इति (७।४।८३) दीर्घत्वम् । जुहोतीति पूर्ववद्धकारस्य चुत्वम् । तस्याभ्यासे चर्त्त्वं इति (८।४।५४) जकारः । अपीपचदिति । पचेर्ण्यन्तात् चुङ्यङ् णिलोपः । णौ चङ्युपधाया (७।४।१) ह्रस्वः । द्विर्वचनम् । सन्वल्लघुनीतीत्वम् (७।४.९३) । दीर्घो लघोरिति (७।४।९४) दीर्घः । सर्वाण्यभ्याससंज्ञायाः प्रयोजनान्येतानि ।

## ५ । उभे अभ्यस्तम् ।

इह उभेग्रहणं संज्ञिनिर्देशार्थं क्रियते । स च संज्ञिनिर्देशो द्वे (६।१।१) इत्यनुवृत्तेरन्तरेणाप्युभेग्रहणं प्रकल्पत एव । तत् किमर्थं द्वे इत्यनुवर्त्तमान उभेग्रहणं क्रियत इत्यत आह द्वे इत्यनुवर्त्तमान इत्यादि । यद्युभेग्रहणं न क्रियेत तदा प्रत्येकमभ्यस्तसंज्ञा प्रवर्त्तते । प्रत्येकमपि हि तयोः प्रवर्त्तमानासौ प्रवृत्तैव भवति । तथाहि द्वावानीयेयातामित्युक्ते प्रत्येकमप्यानयनेन तावानीतौ भवतः । तस्मात् समुदाये संज्ञायाः प्रवृत्तिर्यथा स्यादेकैकस्य मा भूदित्येवमर्थमुभेग्रहणम् । समुदिते इति । सहिते समुदायभूते इत्यर्थः । ननु च यत्राभ्यासः श्रूयते तत्रैव यथा स्याद् यत्र तु न श्रूयते तत्र मा भूद् । ईप्सन्ति ईप्सन् ऐप्सन्नित्यादौ विषये मा भूदितेयवमर्थमुभेग्रहणं स्यात् ? नैतदस्ति । अभ्यासग्रहणं ह्यनुवर्त्तते । तत्रैवमभिसम्बन्धः क्रियते । द्वे अभ्यस्तसंज्ञे भवतः । अभ्यासश्चेदस्तीति । एवञ्च सति विनाप्युभेग्रहणं यत्राभ्यासः श्रूयते तत्रैव भविष्यति । नान्यत्र । तस्माद्वृत्तिकारोपदर्शितमेवोभेग्रहणस्य प्रयोजनं युक्तम् । ददतीति । ददातेर्लट् । झि । शप् । जुहोत्यादिभ्यः (२।४।७५) श्लुः । श्लाविति (६।१।१०) द्विर्वचनम् । अत्राभ्यस्तसंज्ञायां सत्यां श्नाभ्यस्तयोरात (६।४।११२) इत्याकारलोपः । अदभ्यस्तादिति (७।१।४) झेरदादेशः । दधात्विति । लोट् । एरुरितुरुत्त्वम् (३।४।८६) । समुदाय उदात्तत्वं यथा स्यादिति । उभेग्रहणे ह्यसति प्रत्येकमभ्यस्तसंज्ञा स्यात् । तस्मादभ्यस्तानामादिरित्याद्युदात्तमपि (६।१।१८९) प्रत्येकं स्यात् । अथाप्यनुदात्तं पदमेक-

वर्जमिति (६।१।१५८) नास्ति यौगपद्यसम्भवः। एवमपि पर्य्यायेण स्यात् ? तस्मादभ्यस्तानामादिरितित्रतत् कार्य्यं (६।१।१८९) समुदाये यथा स्यात् प्रतित्रकं पर्य्यायेण वा मा भूदितित्रवमर्थमुभेग्रहणम्।

## ६। जक्षित्यादयः षट्।

जक्षित्यादय इतित्रष निर्देशो जक्षेः श्तिबन्तस्यादिशब्देन बहुव्रीहावपि कृते भवति द्वन्द्वेऽपि। यदा जक्षेरनजन्तस्येत्यादिशब्दस्य च द्वन्द्वः क्रियते वाक्येऽपि यदानयोरनन्तरोक्तयोरुभयोरपि प्रयोगो भवति तदा तत्र बहुव्रीहौ गृह्यमाणे यदि तद्गुणसंविज्ञानोऽयं बहुव्रीहिराश्रीयेत तदा वेवीङो ग्रहणं न स्यात्। अथातद्गुणसंविज्ञानोऽयं तदा जक्षेर्न स्यादितीमं बहुव्रीहेराश्रयणे दोषं दृष्ट्वेतरयोः पक्षयोरन्यतरमाश्रित्याह जक्षित्ययं धातुरित्यादयश्चेत्यादि। अत्रेति-शब्दोऽतिक्रान्तप्रत्यवमर्शी। जक्षित्ययं धातुरनन्तरमतिक्रान्त इति स एव तेन प्रत्यवमृश्यते। इति रादिर्येषां त इत्यादयो जक्षादय इत्यर्थः। ते पुनर्जागृ-प्रभृतयो वेवीङ्पर्य्यन्ताः (C)। सेयं सप्तानां धातूनामभ्यस्तसंज्ञेति। जक्षितेित्रत-दुपलक्षितानां जागर्त्तिप्रभृतीनां षण्णां जक्षितिरित्येतस्य च सप्तमस्य। तेभ्यः पृथग्निर्दिष्टस्य। ननु च दीध्यते वेव्यत इत्यत्रादादेश आत्मनेपदेष्वनत इत्यनेनैव (७।१।५) सिद्धः। शेषञ्चाभ्यस्तकार्य्यमाकारलोपादिकम्। तच्च दीधीवेव्यो र्न सम्भवतित्रव। तत्राकारलोपस्तावदाकारस्याभावान्न सम्भवति। जुस्भावोऽपि झेरभावात्। नुम्प्रतिषेधोऽपि ङित्त्वादात्मनेपदित्वाच्छतुः। तत् किमर्थमनयोरभ्यस्तसंज्ञा विधीयत इत्याह दीध्यते वेव्यत इत्यादि। दीध्यदिति च शतरीत्यादिना प्रयोजनान्तरमपि दर्शयति। आत्मनेपदित्वा-दनयोर्व्यत्ययेन विना शता न सम्भवतीति व्यत्ययग्रहणम्।

## ७। तुजादीनां दीर्घोऽभ्यासस्य।

आदिशब्दोऽयमस्त्येव व्यवस्थायाम्। अस्ति च प्रकारे। तत्र यदि व्यवस्थायां वर्त्तमानो गृह्येत तदा तुज पिज हिंसायामित्यत आरभ्य ये पठितास्तेषामेव ग्रहणं स्यात्। एवञ्च सौत्राणां गणान्तरपठितानाञ्च दीर्घो

(C) जक्षिजागृदरिद्राणां चकासेः शासेरिव च। दीधीवेव्योश्च सप्तानां जक्षित्यादावुपग्रहः॥ १॥

न स्यादितिप्रतदालोच्याह तुजादीनामित्यादि । प्रकार आदिशब्द इति । स च प्रकारोऽनिर्दिष्टत्वान्न ज्ञायत इति पृच्छति कश्च प्रकार इति । तुजो दीर्घत्वमित्यादिना प्रकारार्थत्वं दर्शयति । ये तथाभूता इति । अनन्तरोक्त-प्रकारमापन्ना इत्यर्थः । दीर्घः साधुर्भवतीति । एतेन सत एव दीर्घस्य साधुत्वमात्रमनेन क्रियते । नत्वपूर्वो दीर्घ इति दर्शयति । तूतुजान इति । लिट् । एतच्च प्रकारवाचिन आदिशब्दस्य परिग्रहाल्लभ्यते । तस्य कानच् । मामहान इति । मह पूजायाम् । शेषं पूर्ववत् । दाधान इति । डुधाञ् धारणपोषणयोः । मीमायेति । डुमिञ् प्रक्षेपणे । लिट् । णल् । दाधारेति । धृञ् धारणे । तूतावेति । तु इति सौत्रो धातुः । तुरुस्तुशम्यम (७।३।९५) इत्यादिसूत्रे पठितत्वात् । दीर्घश्चैषामित्यादिना यस्य सत एव साधुत्वमनेन क्रियते स च दीर्घश्छन्दस्येव दृश्यते । न भाषायाम् । तत्रापि च्छन्दसि विषये प्रत्ययविशेषे कानजादौ । न प्रत्ययमात्रे । ततोऽन्यत्र न भवतीति । यथोक्ताद् विषयादन्यत्र न भवतीत्यर्थः । तुजेश्छन्दसि कानचि दृष्टः । ततोऽन्यत्र भाषायां छन्दस्यपि णलादौ प्रत्ययान्तरे न भवति । डुमिञ् छन्दसि णलि दृष्टः । ततोऽन्यत्र भाषायां छन्दस्यपि कानजादौ प्रत्ययान्तरे न भवति । यच्चैवं तेनास्यान्यत्राव्यापारः । सत एव दीर्घस्य साधुत्वमात्रमनेन विधीयते । नचान्यत्र दीर्घोऽस्ति यस्यानेन विधीयते साधुत्वम् । एतच्च प्रकारवाचिन आदिशब्दाल्लभ्यत इति । तुतोजेति भाषायां प्रयोगः । यदि तर्हि च्छन्दसि सत एव दीर्घस्य साधुत्वमनेन विधीयते व्यत्ययो बहुलमित्यनेन (३।१।८५) सुब्व्यत्ययस्य विहितत्वादपार्थकमेतत् । नापार्थकम् । तस्यैव प्रपञ्चार्थत्वात् ।

## ८ । लिटि धातोरनभ्यासस्य ।

एकाचो द्वे प्रथमस्येति (६।१।१) । अजादेर्द्वितीयस्येति (६।१।२) चानुवर्त्तते । धातोरित्यवयवयोगा षष्ठी । सामानाधिकरण्ये हि प्रथमस्य द्वितीयस्येति च सम्बन्धो नोपपद्यते । अनभ्यासस्येति च प्रतिषेधाच्च। सामानाधिकरण्ये हि प्रतिषेधोऽनर्थकः स्यात् । नह्यभ्यासवानेकाज् धातुः सम्भवति । यथायोगमिति । हलादेः प्रथमस्यैकाचोऽवयवस्याजादेस्तु द्वितीयस्येत्येष यथायोगार्थः । प्रोर्णुना-

वेति। ऊर्णुञ् आच्छादने। अजादेर्द्वितीयस्येति (६।१।२) नुशब्दस्य द्विर्वचनम्। रेफस्य तु नन्द्रा इति (६।१।३) प्रतिषेधान्न भवति। ननु चोर्णोतेरिजादित्वादिजादेश्च गुरुमतोऽनृच्छ (३।१।३६) इत्यामि कृत आम इति (२।४।८१) लेर्लुक्। कृञ्चानुप्रयुज्यते लिटीति (३।१।४०) कृञो लिट्परस्यानुप्रयोगः। ततश्च प्रोर्णुवाञ्चकारेति भविष्यति। तत् कथं प्रोर्णुनावेति। अत आह वाच्य ऊर्णोरित्यादि। नुवद्भावेन यथा नौते राम् न भवति तथोर्णोतेरपीति दर्शयति। विशृण्विर इति। श्रु श्रवणे लिटस्तझयोरेशिरेजितीरेच् (३।४।८१)। छन्दस्युभयथेति (३।४।११७) लिटः सार्वधातुकत्वम्। ततः श्रुवः शृचेति (३।१।७४) श्नुः शृभावश्च। हुश्नुवोः (६।४।८७) सार्वधातुक इति यणादेशः। सुषुविरे इति। षुञ् अभिषवे। धातुग्रहणादिह विकरणस्य द्विर्वचनं न भवति। यस्तत्र धातुस्तस्य विकरणेन व्यवहितत्वान्न भवतीत्येके। छान्दसत्वादित्यपरे। सर्वे विधयश्छन्दसि विकल्प्यन्त इति। एतच्च व्यत्ययो (३।१।८५) बहुलमितरस्माद्बहुलग्रहणाल्लभ्यते। एवञ्च कृत्वा द्विर्वचनप्रकरणे छन्दसि वेत्येतन्न कर्त्तव्यं भवति। नोनावेति। नु स्तुतौ। यङ्। द्विर्वचनम्। गुणो यङ्लुकोरिति (७।४।८२) गुणः। नोनूय इति स्थिते यङोऽचि चेति (२।४।७४) यङो लुक्। लिट्। अमन्त्र इति (३।१।३५) निषेधादाम्न भवति। संमिमिक्षुरिति। मिह सेचने। अतः सम्पूर्वात् सन्। हो ढ इति (८।२।३१) ढत्वम्। षढोः कः सीति (८।२।४२) कत्वम्। एकाच इत्यादिनेट्प्रतिषेधः (७।२।१०)। हलन्ताच्चेति (१।२।१०) कित्त्वादगुणः। द्विर्वचनम्। षत्वम्। संमिमिक्ष इति स्थिते लिट्। अमन्त्र इति (३।१।३५) प्रतिषेधादाम् न भवति। झि। तस्य उस्। अतो लोपः। जागारेति। लिट्। दातीति। श्लुः। वेति वचनात् पक्षे जजागार ददातीत्यपि भवति।

## ९। सन्यङोः।

सन्यङोरिति सप्तम्यन्तमिदं वा स्यात् षष्ठ्यन्तं वा ? तत्र यदि सप्तम्यन्तं स्यात् तदायमर्थः स्यात् सन्यङोः परत इति। ततश्चेटः सन्भक्तत्वात् सन्ग्रहणेन ग्रहणात् सनश्चेह द्विर्वचननिमित्तत्वात् निमित्तस्य च कार्यिणो-

ऽयोगादिटो द्विर्वचनं न स्यात् । ततश्चाटिटिषतीत्यादि न सिध्येत् । षष्ठ्यन्ते त्वस्मिन् प्रत्ययग्रहणपरिभाषया तदन्त उपस्थापिते सत्ययमर्थो जायते । सन्नन्तस्य यङन्तस्य च यः प्रथम एकाज् द्वितीयो वा । तेनेटो द्विर्वचनं भवतीति । तथा चाटिटिषतीत्यादि सिध्यतीत्येतदालोच्याह सन्यङोरिति षष्ठ्यन्तमेतदिति । अत्र च ज्ञापको योगविभाग इति । यदि हि सन्-यङोरिति सप्तम्यन्तं स्याच् श्लुसन्यङ इत्येकमेव योगं कुर्य्यात् । ननु चासत्यपि प्रयोजने ज्ञापकमस्ति । अस्ति चेह योगविभागस्य प्रयोजनम् । किं तत् ? सामर्थ्याद् यथासंख्यं यथा स्यात् सनि प्रथमस्य यङि द्वितीयस्येति । नैत दस्ति । यदि ह्यत्र यथासंख्यमभिप्रेतं स्यात् तदा नीग्वञ्चित्यादिना (७।४।८४) वञ्चुप्रभृतीनामभ्यासस्य यङ्लुको नीगागमविधानं नोपपद्यते । यथासंख्ये हि सति यदेषां द्विर्वचनं नास्तीति नीगागमं न विदध्यात् । तस्माद् योग-विभागात् षष्ठ्यन्तमेतदित्यवसीयते । अटाट्यत इति । यङ्विधौ सूचिसूत्रि-मूत्र्यट्यर्त्यशूर्णोतीनामुपसंख्यानमिति (३।१।२२, वा) यङ् । प्रोर्णोनूयत इति । अकृत्सार्वधातुकयोरिति (७।४।२५) दीर्घः । जुगुप्सिषत इति । गुपे र्गुप्ति-ज्किद्भ्यः सन्निति (३।१।५) सन् । तदन्ताद् धातोः कर्मणः समानकर्तृकादि-त्यादिनेच्छायां (३।१।७) पुनः सन् । लोलूयिषत इति । यङन्तात् सन् ।

## १० । श्लौ ।

श्लौ परत इति । ननु च प्रत्ययादर्शनं श्लुः । तच्चाभावरूपम् । नचाभावे पौर्वापर्य्यमस्ति । तदयुक्तमुक्तं श्लौ परत इति । स्थानिनः परत्वात् तस्यापि तद्द्वारेण पौर्वापर्य्यमौपचारिकं गृहीत्वैव युक्तमुक्तमित्यदोषः ।

## ११ । चङि ।

अपीपचदित्यादि । पचादिभ्यो ण्यन्तेभ्यो लुङ् । अडागमः । च्लि । णिश्रीत्यादिना (३।१।४८) चेश्चङ् । अत्रेदानीं द्विर्वचनं प्राप्नोति णिलोपश्च । द्वयोरपि कृताकृतप्रसङ्गित्वान्नित्यत्वम् । ततश्चोभयोस्तुल्यबलत्वात् परत्वाण्णि-लोपः । आटिटदिति । अत्रापि णिलोपे कृते णिलोपस्य स्थानिवत्त्वाद्द्विर्वचनम् भवत्येव । स्थानिवद्भावस्तु द्विर्वचनेऽचीत्यनेन (१।१।५९) । णिलोपोऽपि नित्यः ।

अकृतेऽपि द्विर्वचने तेन भवितव्यम्। कृतेऽपि। नच शब्दान्तरप्राप्तिः। द्विष्प्रयोगो द्विर्वचनं भवतीति कृत्वा स्थाने द्विर्वचनं त्वत्र न स्वीक्रियते। लघ्व्यानुरोधात्। ततश्चोभयोस्तुल्यबलयोः परत्वाण्णिलोपः। तत्र कृते द्विर्वचनं प्राप्नोतुरपधाङ्कस्वश्च। तयोरपि कृताकृतप्रसङ्गित्वान्नित्यत्वम्। द्विर्वचनमपि ह्यकृते ङ्कस्वत्वे प्राप्नोति। कृतेऽपि। न च शब्दान्तरप्राप्तिः। एकदेशविकृतमनन्यवद्भवतीति ( प, ३८ ) वचनात्। ङ्कस्वत्वमपि कृते द्विर्वचने प्राप्नोत्यकृतेऽपि। न च शब्दान्तरप्राप्तिः। स एव शब्दो द्विरुच्यत इति कृत्वा। स्थाने द्विर्वचनं त्वत्र नाश्रीयते। लघ्व्यानुरोधात्। ततोभयोस्तुल्यबलयोः परत्वाद्द ङ्कस्वत्वम्। ततो द्विर्वचनेन सन्वल्लघुनीति (७।४।९४) सन्वद्भावादित्वम्। दीर्घो लघोरिति (७।४।९४) दीर्घ इत्येतानि कार्य्याणि कर्त्तव्यानि। अतएवाह वृत्तौ पचादीनामित्यादि। किं पुनः कारणं तथा शास्त्रप्रवृत्तिः क्रियते यथैषां कार्य्याणामयं प्रवृत्तिक्रमो भवतीत्याह तथा चेत्यादि। ङ्कस्वस्य स्थानिवद्भावान् न प्रतिषिध्यत इति। तस्याभावादिति भावः। हेतौ चेयं पञ्चमी। यथा तदशिष्यं संज्ञाप्रमाणत्वादिति (१।२।५३)। अत्र हि सन्वल्लघुनीत्यादिना (७।४।९४) लघुनि धात्वचरे परे सन्वद्भावो विधीयमानो ङ्कस्वस्य स्थानिवद्भावाद्धेतोः प्रतिषिध्यते तस्मिन् सति लघुता निवर्त्तत इति कृत्वा। स चास्मिन् क्रमे सति स्थानिवद्भावो न सम्भवतीति सन्वद्भावो न प्रतिषिध्यते। प्रतिबन्धहेतोरभावात्। कथं पुनरस्मिन् क्रमे सति कार्य्याणां स्थानिवद्भावो न सम्भवतीत्याह यो ह्यनादिष्टादित्यादि। अचः परस्मिन् पूर्वविधावित्यत्र (१।१।५७) यो ह्यनादिष्टादचः पूर्वस्तस्य विधिम् प्रति स्थानिवद्भावो भवतीत्येष सूत्रार्थो व्यवस्थितः। न चास्मिन् क्रमे सत्यत्राभ्यासोऽनादिष्टादचः पूर्वो भवति। किं तर्हि? आदिष्टादेव। तेन तस्य विधौ कर्त्तव्ये ङ्कस्वस्य स्थानिवद्भावो न भवतीति लघुत्वन्न निवर्त्तते। ततश्च सन्वदित्यादिना लघुनिमित्तकः सन्वद्भावो (७।४।९३) विधीयमानो न व्याहन्यते। यदि पुनर्द्विर्वचनं कृत्वा ङ्कस्वादि कार्य्यं विधीयते ततोऽनादिष्टादचः पूर्वोऽभ्यासः स्यात्। ततश्च तस्य विधौ कर्त्तव्ये ङ्कस्वस्य स्थानिवद्भावः स्यादेव। एवं दीर्घञ्चेति (१।४।१२) लब्धस्वभावया गुरुसंज्ञया लघुसंज्ञायां निरस्तायां सन्वद्भावोऽन्यत्र सावकाश

इह न स्यात् । कः पुनस्तस्यावकाशः ? अशीशमदित्यादि । अत्रहि णौ परभूते प्रागेव मितां ह्रस्वो (६।४।९२) विधीयते । यदि तर्ह्ययं कार्य्यक्रम आटिटदित्यत्र णिलोपे कृते द्वितीयस्यैकाचष्टिशब्दस्य द्विर्वचनं न प्राप्नोति । तदभावादित्यत आह आटिटदित्यत्र द्विर्वचनेऽचीत्यादि । अथ किमर्थमेतानि त्रीणि सूत्राणि पृथक् क्रियन्ते ? लिटि धातोरनभ्यासस्य (६।१।३) सनि (६।१।१०) चङीति (६।१।११) । न लिट्सनुचङ्क्षु इत्येक एव योगः क्रियताम् । तत्राप्ययमर्थः । पुनःपुनर्विभक्तिर्नोच्चारयितव्या । लिटि सनि च द्विर्वचनम् । तदनित्यमिति ज्ञापनार्थम् पृथग् योगकरणम् । तेन यो जागार तमृचः कामयन्ते । दाति प्रियाणि । धाति प्रियाणीत्यत्र न भवति द्विर्वचनम् । ततश्च द्विर्वचनप्रकरणे छन्दसि वेत्येतन्न (६।१।८, वा )कर्त्तव्यं भवति ।

## १२ । दाश्वान् साह्वान् मीढ्वांश्च ।

अविशेषेण निपात्यन्त इति । विशेषानुपादानात् । अनिट्त्वञ्चेति । वस्वेकाजाद्घसा(७।२।६७)मितीट् प्राप्नोति । अतस्तदभावो निपात्यते । ननु च कृतद्विर्वचनानामेकाचामिड् विधास्यते । अयञ्चाकृतद्विर्वचनमेकाज् भवति । अकृतद्विर्वचनत्वात् । तदयुक्तमनिट्त्वनिपातनम् । नैतदस्ति । लिटि हि श्रूयमाणैकाजुपलक्षणार्थं तत्र कृतद्विर्वचनग्रहणं कृतम् । अस्ति चात्र लिटि श्रूयमाणैकाच्त्वमिति कात्रायुक्तता ? परस्मैपदमिति । सहेरात्मनेपदित्वात् परस्मैपदं न प्राप्नोतीत्यतस्तन्निपात्यते । किं पुनः सामर्थ्यमित्याह हलादिशेष इत्यादि । यदि हलादिशेषः स्यादेवञ्च सत्यामाकारादेशमेव कुर्यात् । नहि हलादिशेषे सत्यागमस्यादेशस्य वा विशेषोऽस्ति । णिलुक् चेति । णेरनिटीति (६।४।५१) णिलोपे सिद्धे लुग्वचनं प्रत्ययलक्षणेनोपधावृद्धिर्मा भूदित्येवमर्थम् । लोपे हि सति प्रत्ययलक्षणेनोपधावृद्धिः स्यात् । लुकि तु न लुमताङ्गस्येति (१।१।६३) प्रतिषेधान्न भवति ।

## १३ । ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ।

संप्रसारणमिति यणस्थानिकस्येक एषा संज्ञा विहिता । वाक्यार्थस्य च । इग् यण इति (१।१।४५) योऽयं वाक्यार्थः स्थान्यादेशसम्बन्धलक्षणस्तस्य तत्र

चेदमुक्तमनुवादे वर्ण उपतिष्ठते विधौ तु वाक्यार्थ इति। विधिश्चाय मतो वाक्यार्थस्यैवोपस्थानमित्याह यण: स्थान इत्यादि। ततश्चापि विहित इति। यङश्चाबित्यनेन (४।१।७४)। इभ्यापुत्र इति। इभमर्हतीति दण्डादिभ्यो (५।१।६६) यः। क्षत्रियापुत्र इति। क्षत्रस्यापत्यमिति क्षत्राद् घ इति (४।१।१३८) घ:। ष्यङ इति प्रत्ययग्रहणमिदम्। तत्र प्रत्ययग्रहणपरिभाषाया उपस्थानाद् यस्मात् स विहितस्तदादेस्तदन्तस्येति तदादितदन्तग्रहणयिहैव स्यात् कारीषगन्धीपुत्र इति। इह तु न स्यात् परमकारीषगन्धीपुत्र इति। कारीषगन्धशब्दाद्धि ष्यङ् विहितः। न परमकारीषगन्धशब्दात्। अत इदं द्वैध्यमपाकर्त्तुमाह ष्यङिति स्त्रीप्रत्यय-ग्रहणमिति। स्त्रियां(४।१।३)मित्यधिकृत्य विहितत्वात्। स्त्रीत्वं स्थानिवद्भावेन च प्रत्ययत्वं ष्यङ:। नहि तस्यान्यथा स्त्रीप्रत्ययत्वमुपपद्यते। आदेशपक्षस्य च तत्राश्रितत्वात्। यदि स्त्रीप्रत्ययग्रहणमेतत् ततश्च किमिति ? तदादि-नियमो न भवति यतोऽधिकस्याप्यत्र ग्रहणं स्यात्। अतिप्रसङ्गो वा। असति हि नियमे यथेह भवति परमकारीषगन्धीपुत्र इति तथेहापि स्याद् अतिकारीषगन्ध्यापुत्र इत्यत आह न स्त्रीप्रत्यये चेत्यादि। प्रत्ययग्रहण-परिभाषाया न स्त्रीप्रत्यये चानुपसर्जन इत्ययमपवादः कृत:। तेन यत्रानुप-सर्जन: स्त्रीप्रत्ययस्तत्रैषा प्रत्ययग्रहणपरिभाषा न प्रवर्त्तते इति तदादिनियमो नास्ति। तेन परमकारीषगन्धीपुत्र इत्यत्र भवत्येव। अत्र हि परमा चासौ कारीषगन्ध्या चेति सन्महदित्यादिना (२।१।६१) समास:। स्त्रीप्रत्ययस्य प्राधान्यम्। स्त्रिया: पुंवदित्यादिना (६।३।३४) पुंवद्भाव:। यत्र तूपसर्जनं स्त्रीप्रत्ययस्तत्रानुपसर्जन इति वचनादुपतिष्ठत एवैषा परिभाषा। तेन भवत्येवात्र तदादिनियम:। तेनेह न भवति। अतिकारीषगन्ध्यापुत्र इति। अत्र हि कारीषगन्ध्यामतिक्रान्त इति प्रादिसमास:। अत्र योऽसावतिक्रान्त: स प्रधानम्। कारीषगन्ध्या तूपसर्जनम्। अतएव गोस्त्रियोरुपसर्जनस्येति (१।२।४८) ह्रस्वो भवति। पुत्रपत्यो: संप्रसारणे तदादावतिप्रसङ्ग:। इहापि प्राप्नोति कारीषगन्ध्यापुत्रकुलमिति। तथाहि पुत्रपत्योरिति सप्तमी कार्यिण आनन्तर्य्यमाचष्टे। एतश्च ष्यङयोस्तदादौ

चाविशिष्टम्। अथापि कथञ्चित् तदादौ न स्यादेवमपि येन विधिस्तदन्तस्येति (१।१।७२) तदन्ते ऽतिप्रसङ्ग इहापि प्राप्नोति। कारीषगन्ध्यापरमपुत्त्र इति। विधिविधानविधिभाजां त्रयाणां सन्निधाने तदन्तविधिर्भवति। ते चेह सन्ति। विधिः संप्रसारणम्। विधिभाक् ष्यङ्। विधानं पतिपुत्त्रशब्दौ। इह च तत्पुरुषेणाव्यभिचारात् सन्निधापितं यदुत्तरपदं तत् पुत्त्रपतिशब्दाभ्यां विशिष्यते। विशेषणेन च तदन्तविधिर्भवतीति पुत्त्रशब्दान्ते पतिशब्दान्ते चोत्तरपदे संप्रसारणं भवतीति कस्यचिद् भ्रान्तिः स्यात्। अतस्तान्निराकर्त्तुमाह पुत्त्रपत्योरित्यादि। एवं मन्यते। तत्पुरुषोऽत्र पुत्त्रपत्योः ष्यङश्चाधिकरणभूतको निर्दिश्यमानस्तत्पुरुषावयवत्वं पुत्त्रपत्योः ख्यापयति। तद्यथा वृक्षे शाखेति। वृक्षः शाखाया अधिकरणत्वेन निर्दिश्यमानः शाखाया वृक्षावयवत्वं बोधयति। तत्र प्रत्यासत्तेः। यत्र तत्पुरुषे ष्यङ् कार्य्यभागवयवः स्थितस् तस्यैव तत्पुरुषस्य यावयवौ पुत्रपतौ तयोरेव ग्रहणम्। ननु पुत्त्रपत्यादावुत्तरपदे यौ पुत्रपतिशब्दौ तौ तस्यैव ष्यङः पूर्वपदस्य तत्पुरुषस्यावयवौ। अपि तु तत्पुरुषस्यान्तरस्यापि पुत्त्रकुलशब्दस्य पतिकुलशब्दस्य च। तस्मात् तदादौ तावन् न भवत्यतिप्रसङ्गः। तदन्तेऽपि न भवत्येव। यस्मादिह पुत्त्रपतिग्रहणं यच्च तत्पुरुषेण सन्निधापितमुत्तरपदं तयोर्विशेषणविशेष्यभावं प्रति कामचारः। तत्र यदीहोत्तरपदं पुत्त्रपतिशब्दाभ्यां विशिष्येत तदा स्यात् तदन्तविधिः। विशेषणेन तदन्तविधिर्भवतीति कृत्वा। न चेह ताभ्यां तद्विशिष्यते। अपि तु तावेव तेन। ततश्च तदन्तविधेरभावात् केवलयोरेविदं विशेषणं भवतीति कुतस्तदन्तेऽतिप्रसङ्गः? ननु च यद्युत्तरपदेन पुत्रपती विशिष्येते तेन तयोस्तदन्तता विज्ञायते। ततश्चोत्तरपदपदान्तयोरेव ग्रहणं स्यात्। न केवलयोः। एवञ्च तदादावतिप्रसङ्गः। नैतदस्ति। नहि पुत्रपतिशब्दावुत्तरपदान्तौ सम्भवतः। यस्मादयमन्तशब्दोऽवयववचनः। न च पुत्त्रपतिशब्दयोरुत्तरपदमवयवः। किं तर्हि? समासस्य। न च तौ समासौ। तस्मान्नैवं विज्ञायत उत्तरपदान्तयोः पुत्त्रपतिशब्दयोरिति। किं तर्हि? पुत्रपत्योरेवोत्तरपदयोः केवलयोरिति। येन विधिस्तदन्तस्येति (१।१।७२) तदन्तविधिनात्र ष्यङन्तस्य संप्रसारणं

विज्ञायते। ततश्च वाराहीपुत्र इत्यत्र वकारस्यापि संप्रसारणं प्राप्नोतीत्यत आह ष्यङन्ते चेत्यादि। तत्रैव कारणमाह निर्दिश्यमानस्येत्यादि। संप्रसारण-ग्रहणमुत्तरार्थम्। अतो हीकारग्रहणेनापि सिध्यत्येव। ताश्चोत्तरार्थतां तत्रैव दर्शयिष्यामः। तामेवोत्तरार्थतां सूचयन्नाह संप्रसारणमितप्रादि।

## १४। बन्धुनि बहुव्रीहौ।

बन्धुनीति नपुंसकनिर्देश इत्यादि। बन्धुनीति शब्दरूपापेक्षया नपुंसक-लिङ्गेन निर्देशः कृत इत्यर्थः। किं पुनः कारणमेवं व्याख्यायत इत्याह पुंलिङ्गाभिधेयोऽयमित्यादि। ननु बन्धाविति पुंलिङ्गेनैव निर्देशः कस्मान्न कृतः? पर्य्यायेषु मा भूत्। एवं हि क्रियमाणे ऽर्थप्रधानोऽयं निर्देश इत्यादिः स्यात्। ततश्च पर्य्यायेष्वपि प्रसज्येत। अर्थप्रधाने हि निर्देशे स्वरूपपरिभाषा नोपतिष्ठत इत्युक्तम्। मातजित्यादि। ननु च मातजिति शब्दरूपं नास्त्येव। नह्यस्य स्वतन्त्रस्य क्वचित् प्रयोगो लभ्यते। कथं तत्र संप्रसारणं कर्त्तुं शक्यमित्यत आह अस्मादेवेत्यादि। तत्रेत्यादि। यदि च बहुव्रीहौ प्रकृत्या पूर्वपदमिति (६।२।१) बहुव्रीहिस्वरः स्यात् चित्करण-मनर्थकं स्यात्। तस्मान्मा भूत् तस्यानर्थक्यमिति चित्करणसामर्थ्याद् बहु-व्रीहिस्वरं चित इत्यन्तोदात्तत्वं (६।१।१६३) विधीयमानं बाधते। ननु च मातृशब्दो बहुव्रीहावुत्तरपदं न सम्भवत्येव। नद्यृतश्चेति (५।४।१५४) नित्यं कपा भवितव्यम्। तत् कथं तत्रोत्तरपदे बहुव्रीहौ ष्यङः संप्रसारणमुपपद्यत इत्याह मातृमातृकयोश्चेत्यादि। यदि च नित्यं कप् स्यान् मातृमातृकयोर्भेदे-नोपादानं न कुर्य्यात्। कृतञ्च। तस्माद् भेदेनोपादानात् कब् विकल्पेन क्रियते। न केवलं मातजादेश इत्यपिशब्दस्यार्थः।

## १५। वचिस्वपियजादीनां किति।

आदिशब्दोऽयं यजिनैव सम्बध्यत इति। न वच्यादिभिः प्रत्येकम्। यदि हि प्रत्येकमभिसम्बन्धोऽभिमतः स्याद् वच भाषण इत्यधीत्य ञिष्वप् शय इत्यधीयताम्। तत्र वच्यादीनामित्येवं स्वपेरपि सिध्यतीति पृथगुपादानं न कर्त्तव्यं जायते। नन्वेवं रुदश्च पञ्चभ्य (७।३।९८) इत्यत्र स्वपेर्ग्रहणं न स्यात्।

नैष दोषः। शक्यते हि रुदादीनामादौ स्वपिमधीत्य स्वपश्च पञ्चभ्य इत्येवं सूत्रं प्रणेतुम्। तस्माद् युक्तमुक्तं यजिनैव सम्बध्यत इति। वचेः स्वपिना साहचर्य्याद् धातुनिर्देशार्थं इकारो न विशेषणार्थः। तेन च ब्रूआदेशस्यैव ग्रहणं भवतीतत्राह वच भाषणे। ब्रुवो वचिरिति (२।४।५३) चेति। उक्तमिति। संप्रसारणाच्चेति (६।१।१०८) परपूर्वत्वम्। इष्टमिति। व्रश्चादिना (८।२।३६) षत्वम्। ततः ष्टुत्वम्। ऊढ इति। हो ढ इति (८।२।३१) ढत्वम्। ष्टुना (८।४।४१) ष्टुरिति ष्टुत्वम्। ढो ढे लोप इति (८।३।१३) ढकार लोपः। ढ्रलोपे पूर्वस्य दीर्घोऽण इति (६।३।१११) दीर्घत्वम्। उषितमिति। शासिवसिघसीनाञ्चेति (८।३।६०) षत्वम्। संवीत आहूतः शून इति। हल इति (६।४।२) दीर्घः। शून इत्यत्वोदितश्चेति (८।२।४४) निष्ठानत्वम्। अथेह कस्मान्न भवति? वाचमिच्छति वाचा तरतीति ठक्। वाच्यति वाचिक इति। यद्यपि वचेः क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घो ऽसंप्रसारणञ्चेति (३।२।१७८, वा) दीर्घः कृतस्तथाप्येकदेशविकृतमनन्यवद्भवती- (प, ३८) त्यस्ति प्राप्तिरित्याह धातोरितत्रादि। यत्र धातुः सामान्यवाचिना धातुशब्देन नोपादीयतेऽपितु स्वशब्देनैव तत्र तत्प्रतत्रये धातोरित्येवं यो विहितः प्रतत्रयस्तत्रैव कार्य्यं विज्ञायते। एतच्च भ्रौणहत्येति निपातनं कुर्वन् ज्ञापयति। तद्धितत्वार्थं निपातनम्। यदि च धातोः स्वरूपग्रहणे तत्प्रतत्रये एव कार्य्यं न विज्ञायेत तत्वं निपातनमनर्थकं स्यात्। हनस्तोऽचिण्णलोरि (७।३।३२) त्यनेनैव तत्वस्य सिद्धत्वात्। वाच्यति वाचिक इतत्र यद्यपि क्विबन्ता धातुत्वं न जहतीति (प, ७८) तथापि धातोरित्येवं नासौ प्रतत्रयो विहितः। तथाह्येकत्र सुप इत्येवं प्रतत्रयो विहितः सुप आत्मनः क्यजिति (३।१।८)। इतरत्र च प्रातिपदिकात्। इत्येवं ङ्याप्प्रातिपदिकाधिकारात् (४।१।१)। तस्मादिह वचेः स्वरूपग्रहणात् तत्प्रत्यय एव कार्य्यसंविज्ञानं न भवति।

## १६। ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्ज-तीनां ङिति च।

गृहीतमिति। ग्रहोऽलिटीति (७।२।३७) दीर्घः। जरीगृह्यत इति।

यङि संप्रसारणं द्विर्वचनम्। रीगृदुपधस्येति (७।४।९०) रीगागमः। वयिरयमस्त्येवात्मनेपदी। अय वय गतौ। अस्ति च परस्मैपदी वेञो वयिरिति (२।४।४१)। तत्र यङादिभिरनात्मनेपदिभिः साहचर्य्यादनात्मनेपदी गृह्यत इत्याह वयिर्लिटीत्यादि। तस्माच्च परस्य लिटोऽसंयोगाल्लिट् किदिति (१।२।४) कित्त्वेन भवितव्यमित्यत आह तस्येत्यादि। यद्येवमिति। यदि वेञादेशस्य वयेर्ग्रहणमित्यर्थः। यजादिषु वेञ् पठ्यत इति। ततश्च पूर्वसूत्रेणैव तस्य स्थानिवद्भावात् संप्रसारणं सिद्धमित्यभिप्रायः। नैवं शक्यमिति। विज्ञातुमिति शेषः। नानयोपपत्त्या वयिग्रहणमनर्थकं शक्यं विज्ञातुमित्यर्थः। किं कारणमित्याह लिटि तस्येत्यादि। स्यादेतत्। विधिप्रतिषेधयोर्विरोधादेकत्र विधिरेव भविष्यति न प्रतिषेध इत्यत आह अत्र यथैवेत्यादि। यदि विरोधादेकत्वासम्भवः पर्य्यायोऽस्तु। ननु द्वयोरन्यत्र चरितार्थत्वादेकेनैव भवितव्यम्। नापरेणेत्येषोऽर्थो लभ्यत इति भावः। नैष दोष इति। कथं नैष दोष इत्यत आह लिटीत्यादि। लिटि वयो य इति (६।१।३८) यकारस्य संप्रसारणप्रतिषेधो लिङ्गं विधौ वेञोग्रहणेन वयिग्रहणम् भवतीत्यस्यार्थस्य। असति विधौग्रहणे प्राप्तेरसम्भवात् प्रतिषेधोऽनर्थकः स्यात्। वेञ इत्यत्र प्रतिषेधे वयेर्ग्रहणं न भवतीति। अत्राप्येतदेव प्रतिषेधवचनं लिङ्गं सति हि वेञ् ग्रहणे वेञ इत्यनेनैव प्रतिषेधस्य सिद्धत्वात् पुनर्लिटि वयो य (६।१।३८) इति प्रतिषेधोऽनर्थकः स्यात्। तदेतस्माल्लिङ्गाद् वयेर्विधौग्रहणं प्रतिषेधे चाग्रहणमित्यनुमास्यते। सत्यमेतदिति। अनन्तरोक्तमर्थमभ्यनुजानाति। यदि सत्यमेतत् तर्हि किमर्थं वयिग्रहणमित्याह एष एवेत्यादि। तेन स्पष्टीकरणार्थं वयिग्रहणमित्याचष्टे। विध्यतीति। दिवादित्वाच्छ्यन्। उष्ट इति। वसन्तमेतत्। अदादित्वाच्छपो लुक्। व्रश्चादिसूत्रेण (८।२।३६) षत्वम्। ष्टुत्वम्। विचतीति। तुदादित्वाच्छः। व्रकण इति पूर्ववन्नत्वम्। स्कोरिति (८।२।२९) सलोपः। झलादिर्निष्ठा न भवतीति तेनात्र षत्वं न भवतीति भावः। झलादौ हि तद् विधीयते। झलो झलीत्यतो (८।२।२६) झल्ग्रहणानुवृत्तेः। कुत्वे तु कर्त्तव्ये तदसिद्ध मेवेति। नहि यथा षत्वादौ निष्ठादेशस्य सिद्धत्वमुच्यते तथा कुत्वेऽपि। तेन तत् प्रवर्त्तत एव। वश्चतीति।

पूर्ववच्छः । वरीवृश्च्यत इति । रीग्टल्वत इति वक्तव्यमिति (७।४।९०, वा) रीगागमः । वृष्ट इति । पूर्ववत् षत्वम् । यजयाचेत्यादिना (३।३।९०) नङि विहिते प्रश्न इत्यत्र संप्रसारणं कस्मान्न भवतीत्यत आह नङित्यादि । भृष्ट इति । पूर्ववत् षत्वम् । भृज्जतीति । पूर्ववच्छः । बरीभृज्यत इति । पूर्ववद् रीक् । सकारस्येत्यादि । ननु स्कोः संयोगाद्योरन्ते चेति (८।२।२९) तस्य लोपेन भवितव्यम् । नैतदस्ति । झलि पदान्ते च स उच्यत इति ।

## १७ । लिट्यभ्यासस्योभयेषाम् ।

उवयिथेति । क्रादिनियमादिट् प्राप्त उपदेशेऽत्वत इति (७।२।६२) प्रतिषिद्धः । ऋतो भारद्वाजस्येति (७।२।६३) नियमात् पुनर्भवति । ग्रहेर-विशेष इति । यस्मात् सति संप्रसारणे हलादिशेषेण रेफनिवृत्तौ जग्राहेति ग्रहेर्यद्रूपं भवति सत्यपि संप्रसारण उरत्वरपरत्वहलादिशेषेष्वपि कृतेषु तदेव भवति । जिज्याविति । आत औ णलः (७।१।३४) । जिज्यिथेति । आतो लोप इटि चेत्याकारलोपः (६।४।६४) । वृश्चतेः सत्यसति वा योगे नास्ति विशेष इति । यद्यन्यार्थो योग आरभ्यते न वृश्चत्यर्थस्ततो वृश्चत्यर्थमेतद्वचनं न भवतीति सत्यप्येतस्मिन्नन्यार्थवचने वृश्चतेरभ्यासस्य नैव संप्रसारणेन भवितव्यम् । नह्यसति तदर्थे वचने केनचित् प्रकारेण संप्रसारण-मुपपद्यत इत्यभिप्रायः । ततश्चासत्यस्मिन् योगे वव्रश्चेति यद्रूपं भवति सत्यपि तदेवेति नास्ति वृश्चतेर्विशेषः । एतच्च वृत्तिकारमतेनोक्तम् (D) । भाष्यकारमतेन त्वाह योगारम्भ इत्यादि । तस्यायमभिप्रायः । सति वचनेऽन्यार्थे क्रियमाणे तस्य वृश्चत्यर्थतापि भवति । वृश्चतेरपि ग्रह्यादिष्वन्तर्भावात् । एतच्च तदर्थोऽप्ययं योगारम्भ इति तदभ्यासस्यापि संप्रसारणेन भवितव्यमिति । तुशब्दो वृत्तिकारमताद्विशेषं दर्शयति । यदि संप्रसारणमकृत्वेत्यादि । ननु

(D) Who is this वृत्तिकार ? The commentator is speaking of the काशिकाकार as putting in the opinions of both the वृत्तिकार and the भाष्यकार. Hence this वृत्तिकार is not clearly the काशिकाकार। According to हरदत्त, he appears to be the वार्त्तिककार ; though it is said that there was another वृत्तिकार called कुणि or चूर्णि ? It is also clear that भर्तृहरि the भागवृत्तिकार is not meant here.

दर्शयति । यदि संप्रसारणमकृत्वेत्यादि । ननु चोभयग्रहणस्य प्रयोजनं वक्ष्यति हलादिशेषं परमपि बाधित्वा संप्रसारणमेव यथा स्यादिति । तत् कुतोऽस्य पक्षस्य सम्भवः ? उभयग्रहणरहिते योगे सतीत्यभिप्रायः । अथ रेफस्येत्यादि । उभयग्रहणसहिते योगे सतीति भावः । उरत्वस्य स्थानिवद्भावादिति । केन पुनः स्थानिवद्भावः । अचः परस्मिन् पूर्वविधा इति ( १।१।५८ ) । कः पुनरसौ ? प्रत्ययो ऽचः परो यन्निमित्तमोरत्वं स्यात् । अङ्गस्य योऽभ्यास इति विज्ञायमाने सामर्थ्यात् प्रत्यय आश्रितो भवति । विना तेनाङ्गव्यपदेशाभावात् । वृत्तिकारमतं चैषितव्यम् । अन्यथा तत्रोभयग्रहणाभावाद् हलादिशेषेण प्रागेव संप्रसारणाद् रेफे निवर्त्तिते वकारस्य संप्रसारणं स्यात् । ततश्च उवश्चेत्यनिष्टं रूपं स्यात् । पृच्छतिभृज्जत्योरविशेष इति । ग्रहेरिव वेदितव्यः । अकिदर्थमित्यादि । किं पुनः कारणमकिदर्थमिदं व्याख्येयमित्यत आह कितीत्यादि । यस्मात् किति परत्वात् संप्रसारणे कृते कृतसम्प्रसारणस्य पुनः प्रसङ्गविज्ञानाद् द्विर्वचने कृतेऽन्तरेणाप्येतद्वचनमूचतुरित्यादि सिद्ध्यत्येव । तस्मान्नेदं किदर्थम् । अपित्वकिदर्थमेवेति । अथ किमर्थमुभयेषामित्युच्यते ? यावता स्वरितलिङ्गासङ्गादेवोभयेषामित्यस्यानुवृत्तिर्भविष्यति ? न चानुवृत्तौ सत्यां ङिति वच्यादीनामपि संप्रसारणं प्राप्नोतीत्येतच्च नाशङ्कनीयम् । यदि वच्यादीनामपि ङिति संप्रसारणं स्याद् योगविभागोऽनर्थकः स्यात् । मण्डूकप्लुतिन्यायेन वा वच्यादीनामनुवृत्तिर्भविष्यति । तत् कुतोऽस्य दोषस्यावसर इत्याह अधिकारादेवेत्यादि । अधिकारादेवोभयग्रहणे सिद्धे पुनरुभयेषांग्रहणात् पुनः श्रुतिर्भवति । तस्याश्चैतदेव प्रयोजनम् । यत्र संप्रसारणञ्चान्यच्च प्राप्नोति तत्र संप्रसारणमेव यथा स्यात् । मा भूदन्यदिति । तेन विव्याध विव्यधिथेत्यत्र हलादिशेषं परमपि बाधित्वा संप्रसारणमेव भवति । अन्यथात्र परत्वात् प्राक् प्रवर्त्तमानेन हलादिशेषेण यकारस्य निवृत्तौ कृतायां वकारस्य संप्रसारणमापद्येत । ततश्चोव्याधोव्यधिथेत्यनिष्टं रूपं स्यात् ।

## १८ । स्वापेश्चङि ।

स्वापेरिति । आप्लृ व्याप्तावित्यस्यापि सुपूर्वस्यैका निर्देशः सम्भवति ।

अतस्तद्ग्रहणाशङ्कानिराकरणायाह स्वपेर्ण्यन्तस्य ग्रहणमिति। ण्यन्तस्य ग्रहणं चङ्ग्रहणाद् विज्ञायते। नह्यण्यन्ताच् चङ् सम्भवति। असूषुपदिति। हेतुमति चेति (३।१।२६) णिच्। द्विर्वचनात् पूर्वमत्र संप्रसारणमिति। परत्वात्। स्वाप्यत इति। कर्मणि लकारः। सार्वधातुके यक् (३।१।६७)। स्वापितमिति। निष्ठायां सेटीति (६।४।५२) णिलोपः। ननु च ग्रह्यादिसूत्रात् (६।१।१६) ङितीत्यनुवर्त्तते। न च स्वापेश्चङोऽन्यो ङिदस्ति। तत्र सामर्थ्याच्चङ्येव भविष्यतीति न कर्त्तव्यमेव चङ्ग्रहणमित्यत आह ङितीति। केवलमित्यादि। ग्रह्यादिसूत्रे (६।१।१६) ह्युभयं सन्निहितं किद्ग्रहणं ङिद्ग्रहणञ्च। तत्रोभयोरविशेषेण सन्निधाने ङिद्ग्रहणमेवानुवर्त्तते। न किद्ग्रहणमिति मन्दधिया दुर्बोधम्। अतः सुखप्रतिपत्तये मन्दबुद्धे चङ्ग्रहणं क्रियत इति भावः।

## १९। स्वपिस्यमिव्येञां यङि।

स्वप्नगिति। स्वपितृषो र्नजिङ् (३।२।१७२)।

## २०। न वशः।

## २१। चायः की।

अथ किमर्थं दीर्घोच्चारणं यावता ह्रस्वादेशेऽप्यकृत्सार्वधातुकयोरिति (७।४।२५) दीर्घत्वेन चेकीयत इति सिध्यत्येवेत्याह दीर्घोच्चारणमित्यादि। कथं पुनर्यङि चेत्युच्यमान (७।४।३०) आदेशो यङ्लुकि स्यात्? प्रत्ययलक्षणेन स्यात्। अथापि न लुमताङ्गस्येति (१।१।६३) प्रत्ययलक्षणं प्रतिषिध्यते? एवमप्यस्मादेव दीर्घोच्चारणाद् यङ्लुकि भवतीति विज्ञायते। अन्यथा तदपार्थकं स्यात्? चेकीत इति। तसन्तमेतत्। यङोऽचि चेति (२।४।७४) यङो लुक्।

## २२। स्फायः स्फी निष्ठायाम्।

स्फातिरिति। स्त्रियां क्तिन् (३।३।९४)। वलि यलोपः (६।१।६६)। स्फातीभवतीति। स्फायते र्निष्ठान्ताच्वौ क्तेऽस्य च्वाविति ईत्त्वे (७।४।३२) सतीदं रूपं

भवतीति मन्यमानो यश्चोदयेदथ कथं स्फातीभवतीत्येतद्रूपं यावताऽत्रापि निष्ठायामस्मिन्नादेशे स्फीतीभवतीत्येवं भवितव्यमिति तं प्रत्याह स्फातीभवतीत्येतदपीत्यादि। एतदपि स्फातिशब्दात् क्तिन्नन्ताच्वौ क्ते च्वौ चेति (७।३।२६) दीर्घत्वे च क्तिन्नन्तस्यैव रूपम्। अतो न भवत्येष दोषप्रसङ्गः।

## २३। स्त्यः प्रपूर्वस्य।

सामान्येन ग्रहणमिति। द्वयोरप्यात्त्वे कृते पूर्वस्य धात्वादेः षः सः (६।१।६४) इति सत्वे समानत्वाद् रूपस्य। लक्षणप्रतिपदोक्तपरिभाषा (प, ११४) च नेहोपतिष्ठते। उभयोर्लाक्षणिकत्वात्। अथात्र संयोगादे रातो धातोर्यण्वत इति (८।२।४३) निष्ठानत्वं कस्मान्न भवतीत्यत आह संप्रसारण इत्यादि। नत्वस्य पूर्वत्रासिद्धत्वात् पूर्वं संप्रसारणं क्रियत इति। तत्र कृते च यण्वत्ता नास्तीति नत्वं न भवति। प्रस्य इत्येवं सिद्ध इति। ननु चैवमुच्यमाने प्रशब्दस्यापि संप्रसारणं स्यात्। ततश्च पृस्तीत इति रूपं स्यात्। तत् किमुच्यते प्रस्य इत्येवं सिद्ध इति? अनन्त्यविकारेऽन्त्यसदेशस्येति (प, १०४) न भवत्येष दोष इति मन्यते। इहापि यथा स्यादिति। कस्मात् पुनर्न प्राप्नोति? संशब्देन व्यवहितत्वात्। किं पूर्वग्रहणे क्रियमाणे शब्दार्थ एव तथाविधो भवति येनात्रापि भवति? अथ ग्रन्थाधिक्यादर्थाधिक्यं सूचयतीत्यभिप्रायेणाह तत् कथमिति। प्रथमकल्पं दर्शयन्नाह प्रपूर्वस्येति। षष्ठ्यर्थे बहुव्रीहिरिति पूर्वशब्दोऽयमवयववचन इति षष्ठ्यर्थे बहुव्रीहिर्भवति। अवयववाचिनि पूर्वशब्दे धातुरन्यपदार्थो नोपपद्यते। नहि धातोः प्रशब्दोऽयमवयवो भवति। अपि तु धातूपसर्गसमुदायस्य। तस्मात् स एवान्यपदार्थो युक्त इत्याह प्रः पूर्वो यस्येत्यादि। तदवयवस्येति। तस्यावयवस्तदवयव इति षष्ठीसमासः। तच्छब्देन धातूपसर्गसमुदायः परामृश्यते। व्यधिकरणषष्ठ्याविति। प्रपूर्वस्येति। स्त्यावयवापेक्षया सोऽयमवयवावयविसम्बन्धस्तत्र षष्ठी। स्त्य इतीयं तु यणवयवापेक्षया यः सम्बन्धस्तत्र। तेन भिन्नाभिधेयत्वात् स्त्यः प्रपूर्वस्येति व्यधिकरणे षष्ठ्यौ। स्यादेवम्। प्रसंस्तीत इत्यत्र प्रपूर्वसमुदायावयवः स्त्याशब्दो न सम्भवतीत्यत आह तत्रेत्यादि।

## २४ । द्रवमूर्त्तिस्पर्शयोः श्यः ।

द्रवमूर्त्तौ द्रवकाठिन्य इत्यनेन द्रवमूर्त्तिशब्दस्यार्थमाचष्टे । द्रवावस्थाया उत्तरोऽवस्थाविशेषः काठिन्याख्योऽत्र द्रवमूर्त्तिशब्देनोच्यते । स्पर्शे चेति । रूपादिसहचरितो गुणः स्पर्श इत्युच्यते । शीतो वायुः (E) । शीतमुदकमिति । कथं पुनरत्र सामानाधिकरण्यम् ? यावता शीतशब्देन गुणविशेषोऽभिधीयते । वाय्वादिशब्देन तु द्रव्यविशेष इत्यत आह गुणमात्र इत्यादि । यथा शुक्लादिशब्दाः कदाचिद् गुणमात्रे वर्त्तन्ते यथा पटस्य शुक्ल इति । कदाचित्तु तद्वति द्रव्ये सोऽयमित्यभेदसम्बन्धत्वान् मतुब्लोपान् मत्वर्थीयाकारप्रत्ययान्तत्वाद्वा शुक्लः पट इति तथा शीतशब्दोऽपि । तेन यदा तद्वति द्रव्ये वर्त्तते तदोभयोरेकद्रव्ये निविशितत्वादुपपद्यते सामानाधिकरण्यमिति भावः । संश्यान इति । संयोगादेरित्यादिना (८।२।४३) नत्वम् ।

## २५ । प्रतेश्च ।

## २६ । विभाषाऽभ्यवपूर्वस्य ।

सेयमुभयत्र विभाषेति । द्रवमूर्त्तिस्पर्शविषये पूर्वेण प्राप्ते, अन्यत्राप्राप्ते । अथ पूर्वग्रहणं किमर्थम् ? न विभाषा ऽभ्यवाभ्यामित्येवोच्येत । अत आह पूर्वग्रहणस्येत्यादि । क्रियमाणे पूर्वग्रहणे कस्मादेवात्र न भवतीत्याह न किलेत्यादि । अयं हि द्विविधोऽपि समुदायो नाभिपूर्वः । नाप्यवपूर्वः । किं तर्हि संपूर्वः । तेन पूर्वग्रहणादत्र न भवति । क्रियमाणेऽपि पूर्वग्रहणे प्राप्नोत्येवेति मन्यमानः किलशब्दमरुचिसूचनार्थं प्रयुक्तवान् । तामेव प्राप्तिं दर्शयन्नाह योऽत्रेत्यादि । संशब्दात् परो यो धातूपसर्गसमुदायस्तदाश्रयो विकल्पः कस्मान्न भवति ? भवति ह्यसावभ्यवपूर्वं इत्यस्ति प्राप्तिः । अत आह यत्नान्तरमास्थेयमिति । विभाषाग्रहणमिह क्रियते । सा च व्यवस्थितविभाषा विज्ञायते । तेनेह न भवतीति यत्नान्तरम् । पूर्वग्रहणस्य चान्यत् प्रयोजनं वक्तव्यमिति । तत् पुनरभिसंशीनम् अभिसंश्यानमवसंशीनमवसंश्यान

---

(E) शीतो वायुः परिणमयिता काननोदुम्बराणामिति ।

मितत्रापि विकल्पो यथा स्यादित्येवं तद् वेदितव्यम्। एतच्च पूर्वग्रहणे क्रियमाणे यथोपपद्यते तथा स्यः प्रपूर्वस्येतत्र (६।१।२३) प्रपूर्वस्येति षष्ठ्यर्थे बहुव्रीहिरित्यादिना व्याख्यातम्।

## २७। श्रृतं पाके।

श्रा पाक इत्यस्य धातोरिति। श्रा पाक इत्यदादौ पठ्यते। घटादौ च मित्संज्ञार्थम्। केश्चिच्चुरादावपि। श्रै पाक इति भ्वादौ। तत्रेहाविशेषेण ग्रहणं प्राप्तम्। श्रायतेरपि हि क्तात्वस्यैतद्रूपं भवत्येव। निपातनाच्च। लक्षणप्रतिपदोक्तपरिभाषया (प,११४) प्रतिबन्धं न करोति। ण्यन्तस्याण्यन्तस्य चेति। विशेषानुपादानात्। तथाचोक्तम्। श्राश्रप्योः श्रृतमिति। यदि विभाषेत्यनुवर्त्तते क्षीरहविषोरपि पक्षे श्राणं श्रपितमिति स्यात्। ताभ्यामन्यत्रापि पक्षे श्रृतमिति प्रसज्येतेत्यत आह व्यवस्थितविभाषेयमिति। यदापीत्यादि। प्रयोजकव्यापारः प्रेषणाध्येषणादिः कार्य्यं कारणोपचारं कृत्वा प्रयोजकशब्देनोक्तः। स हि प्राकृतादर्थाद्बाह्यो भवति। तत्र तस्यानन्तर्भावात्। तत्र यदा हेतुमति चेति (३।१।२३) द्वितीयो णिजुत्पद्यते तदापि क्षीरहविषोरपि निपातनमेतन्नेष्यते। व्यवस्थितविभाषाविज्ञानादेव। तथाचोक्तं श्रपेः श्रृतमन्यत्र हेतोरिति। हेतुमण्णिचोऽन्यत्रेत्यर्थः। द्वितीयग्रहणं यदेकमेव भवति तदेष्टत्वाच् श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेनेति तत्प्रयोजको हेतुश्चेति (१ ४।५५) चकाराद् देवदत्तयज्ञदत्तयोः कर्तृसंज्ञाविधानादुभयत्रापि कर्त्तरि तृतीया। श्रपितमिति। श्रार्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (७।३।३६) पुक्। मितां ह्रस्वः (६।४।९२)। क्षीरं स्वयमेव श्राति स्म। तद् यदा देवदत्तेन प्रयुज्यते स्म तदा हेतुमति चेति (३।१।२६) प्रथमो णिच्। सोऽपि श्रपयन् यदा यज्ञदत्तेन प्रयुज्यते स्म तदा द्वितीयः। णेरनिटीति (६।४।५१) पूर्वस्य णेर्लोपः। ततः क्षीरे प्रयोज्ये कर्मणि निष्ठा। श्रृतमिति। ण्यन्तस्याण्यन्तस्य चेति। निपात्यत इति प्रतिज्ञाते सति युक्तं ण्यन्तस्याप्येतन्निपातनं येषां श्रातिश्चुरादावपि पठ्यते इत्यभ्युपगमः। येतु चुरादावस्य पाठं न प्रतिजानते तेषां कथं ण्यन्तस्यैतन्निपातनं युज्यते? न च शक्यते वक्तुं तेषामपि हेतुमण्यन्तस्यैतन्निपातनम्। युज्यते। श्रपेः श्रृतमन्यत्र हेतोरिति भाष्यकारवचनादिति

यश्चोदयेत् तं प्रत्याह आतिरयमित्यादि । कर्म्मभावापन्नेऽपि योऽर्थः सौकर्य्यात् स्वातन्त्र्येण विवक्ष्यते स कर्मकर्त्ता कर्म भूत्वा कर्त्ता भवतीति कृत्वा । कर्म-चासौ कर्त्ता चेति विशेषणसमासः । स यस्य विषयः स कर्मकर्त्तृविषयः । अर्थद्वारकं चेदं विशेषणं पचेः कर्मकर्त्तृविषयत्वं वेदितव्यम् । तस्य योऽर्थः पच्यमानकर्त्तृकत्वं विक्लेदनमात्रं तत्रायमकर्मकः आतिर्वर्त्तते । यदा तु स ण्यन्तो भवति तदा प्राकृतं पच्यर्थमाह । प्रकृतौ भवः प्राकृतः । स पुनर्यः प्रकृत्यन्तस्य पचेरर्थः पक्तृकर्त्तृको विक्लेदनोपसंहारादिः स इह वेदितव्यः । देवदत्तादिपक्तृकर्त्तृकं प्राकृतं पाकाख्यं पच्यर्थमाहेत्यर्थः । तत्र द्वयोरपि श्रृतमिष्यत इति योऽण्यन्तः आतिः कर्मकर्त्तृविषयेण पचिना समानार्थ-स्तत्रापीष्यते । योऽपि ण्यन्तः प्राकृतं पच्यर्थमाह तत्रापीष्यते । तत्र श्रृतं क्षीरं स्वयमेवेति प्रथमस्योदाहरणम् । श्रृतं क्षीरं देवदत्तेनेति द्वितीयस्य । ननु च अपिः श्रृतमन्यत्र हेतोरिति भाष्य उक्तम् । तत् कथं द्वयोरपीष्यते । एवं मन्यते । यदिदं भाष्य उक्तं अपिः श्रृतमन्यत्र हेतोरिति तत्रान्यत्र हेतो-रित्यनेन सर्वस्य हेतुमण्णिचः पर्य्युदासो न विधित्सितः । अन्यथा विप्रति-षिद्धमिदं स्यात् । असति हि आतेश्चुरादौ पाठे यदि अपिः श्रृतमिति निपात्यते कथमन्यत्र हेतोरिति पर्य्युदासः ? अथान्यत्र हेतोरिति पर्य्युदासो न तर्हि अपिः श्रृतमिति निपातनमुपपद्यते । नहि आतेश्चुरादावसति पाठे आतेर्हेतुमण्णिचं त्यक्त्वा ऽन्यस्ततो णिजस्ति । तस्माद् यस्य हेतुमण्णिचो न केनचित् प्रकारेण स्वार्थिकत्वमुपपद्यते स एव भाष्यकारस्य पर्य्युदासविषय-त्वेनाभीष्टः । स पुनर्यो बाह्ये प्रयोजके द्वितीयो णिजुत्पद्यते स विज्ञेयः । यस्य तु केनचित् प्रकारेण स्वार्थिकत्वमुपपद्यते स एव भाष्यकारस्य पर्य्युदास-विषयत्वेन न प्रकल्प्यते । तस्यैतन्निपातनमिष्टमेव । स पुनर्यस्मिन्नुत्पन्ने आतिः प्राकृतं पच्यर्थमाह स विज्ञेयः । शक्यते हि तस्य पचिना प्रकृत्यर्थेन समानार्थत्वात् स्वार्थिकत्वमुपचारेणाभिधातुमिति । तदेवमिह पाठेऽपि चुरादौ आते र्ण्यन्तस्याप्येतन्निपातनं युज्यत एवेति ।

२८ । प्यायः पी ।

पीनमिति । ओदितश्चेति (८।२।५४) निष्ठानत्वम् । इयमपीत्यादि ।

अपिशब्देन न केवलं पूर्वसूत्रे या विभाषा सैव व्यवस्थितविभाषा ह्यपित्वेषा-पीति दर्शयति। तेन किं सिद्धं भवतीत्याह तेनेत्यादि। सोपसर्गस्य तु नैव भवतीत्यस्यापवादमाह आङ्पूर्वस्येत्यादि। नित्यश्चायमन्धूधसोः (F) पीभावः। व्यवस्थितविभाषैव।

## २९। लिड्यङोश्च।

विभाषेति निवृत्तमिति। उत्तरसूत्रे पुनर्विभाषाग्रहणात्। अन्यथापीद-मेव तत्रानुवर्त्तिष्यत इति तन्न कुर्य्यात्। अतएवोच्यते द्वयोर्विभाषयोर्मध्ये ये विधयस्ते नित्या भवन्तीति। प्यायः (६।१।२८) पीत्येतच्चशब्देनानुकृष्यत इति। इतरथाहि संप्रसारणस्य प्रकृतत्वाल्लिड्यङोः प्यायः संप्रसारणं विज्ञायेत। चशब्दे तु सत्यनन्तरेणैव पीभावेन सम्बन्धः सुखमवसीयते। नाप्राप्ते द्विर्वचने पीभावो विधीयते। तेन तस्य बाधकं प्राप्नोतीति कस्यचिदाशङ्का स्यात्। अतस्तान्निराकर्त्तुमाह परत्वादित्यादि। विरोधे हि सति बाधा स्यात्। इह तु विरोधो नास्ति। अतः परत्वात् पीभावे कृते पुनः प्रसङ्गविज्ञानात् सिद्ध-(प, ४०) मिति द्विर्वचनं भवतीति।

## ३०। विभाषा श्वेः।

शुशावेति। लिटि णलि संप्रसारणे कृते वृद्ध्यावादेशौ। शिश्वायेति। यदा न संप्रसारणं तदा वृद्ध्यायादेशौ। शुशुवतुः। शिश्वियतुरिति। यदा संप्रसारणं तदोवङ्। अन्यदेयङ्। अप्राप्तमिति। केनचिदविहितत्वात्। लिट्यभ्यासस्योभयेषामित्यत्रो (६।१।१७) भयग्रहणादन्यत् कार्य्यं प्रवर्त्तमान-मपास्याभ्यासस्य संप्रसारणमेव यथा स्यादित्येतदुभयेषांग्रहणस्य प्रयोजनमुक्तम्। ततश्चेममपि विकल्पं बाधित्वा नित्यं संप्रसारणमेव स्यादिति कस्यचिद्भ्रान्तिः स्यात्। अतस्तान्निराकर्त्तुमाह यदा चेत्यादि। अत्र श्वयतेर्विभाषा संप्रसारण-मुच्यते। यदि कदाचिद् धातोर्न संप्रसारणं भवति तदाभ्यासस्य स्यात्। ततश्च श्वयतेः संप्रसारणं पाक्षिकं न कृतं स्यात्। स्यादेतत्। लिट्परस्य श्वयतेरिदं विकल्पेन कार्य्यं विधीयते। तस्य च तदस्त्येवेति। असम्यगेतत्।

(F) अन्धूः कूपः।

द्विष्प्रयोगो हि द्विर्वचने क्रियामात्रम् भिद्यते । न धातुरूपम् इति कुतः पूर्वपरयोः कार्य्यसम्बन्धं प्रति भेदः ? तस्माद् यदा धातोर्न भवति तदाभ्यासस्यापि न भवत्येव ।

## २१ । णौ च संश्चङोः ।

णौ च संश्चङोरिति । भिन्नाधिकरणे सप्तम्यौ । संश्चङोः परतो यो णिस्तस्मिन् णौ परतो यः श्वयतिरिति । शुशावयिषतीति । श्वयतेर्णिच् । सन् । संप्रसारणम् । वृद्धिरावादेशः । शुइत्येतस्य द्विर्वचनम् । अशूशवदिति । लुङ् । चङ् श्वङ् । संप्रसारणादिकम् । पूर्ववण्णिलोपः । णौ चङीति (७।४।१) ह्रस्वः । द्विर्वचनम् । दीर्घो लघोरिति ( ७।४।९४ ) दीर्घः । ननु च श्वयतेर्णिचि तदन्ताच्च सनि कृते चङि चान्तरङ्गत्वात् पूर्वं वृद्ध्यायादेशाभ्यां भवितव्यम् । ततः संप्रसारणेन । तथाच सति शुशुययिषतीति सन्परे णौ भवितव्यम् । चङ्परे त्वशूशुयदिति । तत् कथं शुशावयिषति अशूशवदिति चोदाहृतमित्याह संप्रसारणमित्यादि । आदिशब्देनायादेशः परिगृह्यते । संप्रसारणाश्रयं पुनरत्र संप्रसारणाच्चेति (१।१।१०८) परपूर्वत्वम् । तेनापि वृद्ध्यादिकं बाध्यत इति । नन्वेवमपि वृद्ध्यावादेशयोः कृतयोः शावित्यस्य द्विर्वचनं प्राप्नोति । नहि केनचित् णौ स्थानिवद्भावो विहित इत्यत आह ओः पुयण्ज्यपरे (७।४।८०) इत्यादि । यत्र चैतज् ज्ञापकं तथा तस्यैव वृत्तावुपपादयिष्यामः ।

## २२ । ह्वः संप्रसारणम् ।

जुहावयिषतीति । अत्रापि पूर्ववद् बलीयस्त्वाद् वृद्ध्यादेः प्राक् संप्रसारणं भवति । अभ्यासस्य कुहोश्चुरिति (७।४।६२) चुत्वम् । हकारस्य झकारः । तस्याभ्यासे चर्च्चेति (८।४।५४) जश्त्वं जकारः । अथात्र कस्मात् शाच्छासाह्वेत्यादिना ( ७।३।३७ ) प्रागेव संप्रसारणाद् युगागमो न भवतीत्याह संप्रसारणस्येत्यादि । ननु च संप्रसारणग्रहणमनुवर्त्तत एव । तत् किमर्थं पुनः संप्रसारणमित्युच्यत इत्याह संप्रसारणमितीत्यादि । पूर्वकं हि संप्रसारणग्रहणं विभाषेत्यनेन सम्बन्धमतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात् । तस्माद्

विभाषेत्यस्य निवृत्तये पुनः संप्रसारणमित्युक्तम्। अथ कस्माद् योगविभागः क्रियते ? यावता ह्वः संप्रसारणमभ्यस्तस्य चेत्येकयोगेऽपि जुहावयिषतीत्यादि सिध्यत्येव। अत्रापि ह्वयतिरभ्यस्तस्य कारणत्वेन सम्बन्धी भवत्येव। तथाचैकाचो द्वे प्रथमस्येति (६।१।१) स एव द्विरुच्यमानोऽभ्यासस्य कारणं भवतीत्येवेत्याह ह्वः संप्रसारणमित्यादि। एकयोगेनैव सिद्धे पृथग्योगकरणमभ्यस्तस्य निमित्तं यः प्रत्ययो न भवति तेन व्यवधाने संप्रसारणं न भवतीत्यस्यार्थस्य ज्ञापनार्थम्। तेन जिह्वायकीयिषतीत्यत्र ण्वुला क्यचा च व्यवधाने न भवति। यदि पुनः पृथग्योगकरणेनायमर्थो न ज्ञाप्येत तदा स्यादेवात्र संप्रसारणम्। भवति ह्यत्रापि ह्वयतिरभ्यस्तस्य निमित्तम्। ह्वायकशब्दात् ण्वुलन्तात् क्यच्। क्यचि (७।४।३३) चेतीत्त्वम्। क्यजन्तात् सन्। इट्। अतो लोपः (६।४।४८)। द्विर्वचनम्।

## ३३। अभ्यस्तस्य च।

चकारो ह्व इत्यनुकर्षणार्थः। अत एवाह ह्व इत्यनुवर्त्तत इति। यदि ह्व इत्येतन्नानुवर्त्तेत ततोऽभ्यस्तमात्रस्य स्यात्। तत्र ह्व इत्यनुवर्त्तमानस्याभ्यस्तस्येत्यनेन यदि सामानाधिकरण्यं स्यात् तदा द्विर्वचने कृते ऽभ्यस्तसंज्ञायामुपजातायां संप्रसारणं स्यात्। एवञ्च न संप्रसारणे संप्रसारणमित्यभ्यासस्य (६।१।३७) संप्रसारणं न स्यात्। यद्यपि परेण ह्वरूपेण व्यवधानं तथापि समानाङ्गग्रहणात् तस्य व्यवधानेऽपि प्राप्नोत्येवात्र प्रतिषेधः। यथा यूनेत्यत्रेतीमं पक्षे सामानाधिकरण्ये दोषं पश्यन्नाह तदभ्यस्तस्येत्यनेन व्यधिकरणमिति। भिन्नाभिधेयमित्यर्थः। अभ्यस्तस्य यो ह्वयतिरित्यादिना सम्बन्धलक्षणां षष्ठीं व्यापयं स्तदेव वैयधिकरण्यं दर्शयति। तेन किं सिद्धं भवतीत्याह तेनेत्यादि। जुहावेति। संप्रसारणे वृद्ध्यावादेशयोः स्थानिवद्भावेन हु इत्यस्य द्विर्वचनम्।

## ३४। बहुलं छन्दसि।

## ३५। चायः की।

निचिक्युरिति। एरनेकाच इत्यादिना (६।४।८२) यणादेशः। निचाय्येति।

त्ववन्तमेतत् । दीर्घोच्चारणं चिकीवानित्यत्र दीर्घस्य श्रवणार्थम् । इदं क्वसौ रूपम् ।

## ३६ । अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्त्ताः ।

अकारलोपश्चेति । धातोरवयवो योऽकारस्तस्य निपातनाल्लोपः । अपास्पर्द्धेथामिति । अपा कारस्याटश्चेति (६।१।९०) सवर्णदीर्घत्वम् । विषयविभागमिच्छन्तीति । स च निपातनसामर्थ्याल्लभ्यत इति वेदितव्यम् । यदि क्वचिदप्येकस्मिन् आभावो दृश्यते तदर्थं तर्हि यत्नान्तरमास्थेयम् । नहि श्राता इत्यनेनैतदपि सिध्यति । सूत्रे बहुवचननिर्देशात् । अत आह भस्येत्यादि ।

## ३७ । न संप्रसारणे संप्रसारणम् ।

येषां संप्रसारणमुक्तं तेषां यावन्तो यणः सम्भवन्ति तेषां सर्वेषां सम्प्रसारणं प्राप्तमिति प्रतिषेधोऽयमारभ्यते । ननु चालोऽन्त्यपरिभाषया (१।१।५२) न्त्यस्यैव भविष्यति । नानन्त्यस्य । नैतदस्ति । नह्यनया परिभाषया शक्यमिहोपस्थातुम् । वचिस्वपियजादीनामन्त्यस्य यणोऽसम्भवात् । एवं तर्ह्यनन्त्यविकारेऽन्त्यसदेशस्येत्यन्त्यसदेशस्य (प, १०४) कार्य्यं भविष्यति । अन्त्यसदेशो यो यण् तस्यैव कार्य्यं भविष्यति । नेतरस्य । नैषास्ति परिभाषा । प्रयोजनाभावात् । यदाह तस्याः परिभाषाया न सन्ति प्रयोजनानीति । तस्मात् कर्त्तव्यमेतत् सूत्रम् । ननु च पूर्वपरयोरेकयोगलक्षणं संप्रसारणम् । ततो यदि तत् परस्याभिनिर्वृत्तं तदा पूर्व्वस्याप्यभिनिर्वृत्तमेव । (G) न चाभिनिर्वृत्तस्य निवृत्तिः शक्यते कर्त्तुम् । नाप्यनभिनिर्वृत्तस्य निमित्तत्वेनाश्रयणं युज्यते । ततोऽस्मादेव प्रतिषेधवचनात् तत् परस्य तावत् क्रियते । तत्र कृते तु

---

(G) अतःपरं—"न चाभिनिर्वृत्तस्य प्रतिषेधः शक्यते कर्त्तुम् । यो हि भुक्तवन्तं ब्रूयान् मा भुक्था इति किं तेन कृतं स्यात् ? अथ पूर्वस्याभिनिर्वृत्तम् परस्याप्यभिनिर्वृत्तमेव । एवं सत्यसतः प्रतिषेधं प्रतिनिमित्तत्वेनाश्रयो नोपपद्यत इत्याह एकयोगलक्षणेत्यादि । यदि युगपद् द्वयोरपि स्यादिदं वचनमनर्थकं स्यात्।। इत्यधिकः महीशूरपुस्तके पाठः ।

पूर्वस्यापि प्राप्तं प्रतिषिध्यते। अथ संप्रसारणमित्यनुवर्त्तमाने पुनः सम्प्रसारणग्रहणं किमर्थमित्याह संप्रसारणमित्यादि। असति पुनः संप्रसारणग्रहणेऽनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति (प, ६२) प्रकृतस्यैव संप्रसारणस्य प्रतिषेधः स्यात्। न विदेशस्थस्य। तस्मात् विदेशस्थस्यापि भिन्नप्रकरणविहितस्य प्रतिषेधो यथा स्यादित्येवमर्थं पुनः संप्रसारणग्रहणम्। यूनो यूनेति। संप्रसारणे कृते परपूर्वत्वे कृते चाकः सवर्णे दीर्घः (६।१।१०१)। ननु च क्रियमाणेऽपि पुनः संप्रसारणग्रहणे तत्र प्रतिषेधो न स्यात्। सवर्णदीर्घत्वस्य पूर्वविधौ स्थानिवद्भावे सत्युकारव्यवहितत्वात्। अत आह संप्रसारणग्रहणसामर्थ्यादेवेत्यादि। यदि स्थानिवद्भावः स्यादनर्थकं पुनः संप्रसारणग्रहणं स्यादित्यभिप्रायः। अभ्युपेत्य पुनः परिहारान्तरमाह। सति वेत्यादि। संप्रसारणग्रहणसामर्थ्यादेवात्राश्रूयमाणोऽपि शास्त्रान्तरेण स्थानिवद्भाव मापन्नो योऽज् व्यवधानं करोति तन्मात्रेण व्यवधानं नाश्रयिष्यते। मा भूत् संप्रसारणग्रहणमनर्थकमिति। ननु च यूनश्च कुत्सायाम् (४।१।१६७)। वृद्धो यूनेति (१।२।६५) निपातनादेव यूनो यूनेत्यत्र संप्रसारणं न भविष्यति। तत् किमेतन्निवृत्त्यर्थेन पुनः संप्रसारणग्रहणेन ? नैतदस्ति। अबाधकान्यपि निपातनानि भवन्तीत्युक्तम्। अपि चैतद्विषयमेव निपातनं विज्ञायते। तथाच यूनो यूना यूनीत्यत्र संप्रसारणं स्यादेवेति। आरेवानिति। रयिरस्यास्तीति मतुप्। संप्रसारणे कृते आद्गुणः (६।१।८७)। छन्दसीर इति वत्वम् (८।२।१५)।

## ३८। लिटि वयो यः।

वयेर् द्वौ यणौ। तत्र पूर्वेण वकारस्य संप्रसारणप्रतिषेधे प्राप्ते यकारस्थानेन संप्रसारणं लिटि प्रतिषिध्यते। तत्र प्रतिषिद्धे यकारः संप्रसारणभाग् न भवतीति वकारस्य संप्रसारणं भवति। धातोरभ्यासस्य च। तत्र धातोर् ग्रह्यादिसूत्रेण (६।१।१६)। (H) अभ्यासस्य लिट्यभ्यासस्योभयेषामित्यनेन (६।१।१७)। अथ किमर्थं लिड्ग्रहणम् ? यावता वयेरादेशस्य लिटोऽन्यत्र

(H) वच्यादिसूत्रेणेति मद्दीशूरपुस्तके पाठः।

सम्भवो नास्ति । तद्विधौ लिव्यन्यतरस्यामित्यतो (२।४।४०) लिड्ग्रहणानुवृत्तेः । तत् सामर्थ्यादेव लिटि भविष्यतीत्यत आह लिड्ग्रहणमुत्तरार्थमिति । वेञ इति (६।१।४०) प्रतिषेधो लिटि यथा स्यादित्येवमर्थं लिड्ग्रहणम् ।

३९ । वश्चान्यतरस्यां किति ।

४० । वेञः ।

४१ । ल्यपि च ।

४२ । ज्यश्च ।

४३ । व्यश्च ।

योगविभाग उत्तरार्थं इति । उत्तरत्र व्येञ एव विभाषा संप्रसारणं यथा स्याज् ज्या इत्यस्य मा भूदित्येवमर्थो योगविभागः ।

४४ । विभाषा परेः ।

४५ । आदेच उपदेशेऽशिति ।

धातोरिति वर्त्तत इति । लिटि धातोरनभ्यासस्येत्यतः (६।१।८) । तस्य च धातोरेचेच इति विशेषणम् । विशेषणेन च तदन्तविधिर्भवतीत्याह एजन्तो यो धातुरिति । उपदेश इति । आद्युच्चारणे गणपाठ इत्यर्थः । चेता स्तोतेति । ननु च लक्षणप्रतिपदोक्तपरिभाषयैवात्र न भविष्यति । तत् किमुपदेशग्रहणेन ? एवं तह्युपदेशग्रहणमेतज् ज्ञापयति । अनित्यैषा परिभाषेति । एतेनार्त्तिह्रीत्यादि (७।३।३६) सूत्रे लाक्षणिकस्याप्याकारस्य ग्रहणे सति ज्ञापयतीत्यादावपि पुक् सिद्धो भवति । श इद् यस्य सोऽयं शिदिति । यश्च लिटस्तझयोरेशिरेजित्येशादेशः (३।४।८१) स शिद् भवति । ततश्च शिति प्रतिषेधे क्रियमाण एश्यप्यात्त्वं न प्राप्नोति । अत्रायादेशे कृते स्थानिवद्भावेन ग्लै इत्यस्य द्विर्वचने जिग्लाय इत्यनिष्टं रूपं स्यादिति मन्यमान आह कथमित्यादि । ग्लै इत्यादावातो लोप इटि चेत्याकारलोपः (६।४।६४) । नैवमित्यादिना परिहारः । श एव इत् शिदिति विज्ञायमाने सत्यल्ग्रहणमेव भवति । तत्र यस्मिन्

विधिस्तदादावल्ग्रहणपरिभाषया [प, ३४) शिदादौ प्रत्यये प्रतिषेधेन भवितव्यम्। नचैश् शिदादिः। किं तर्हि शिदन्तः। शिदन्तस्यैवोच्चारणात्। तस्मादत्रैशि प्रतिषेधो न भवति। अशितीति पर्य्युदासो वा प्रसज्यप्रतिषेधो वा। तत्र यदि पर्य्युदासस्तदा शितोऽन्यदात्त्वनिमित्तमाश्रितं स्यात्। एवञ्च यावदात्त्वस्य निमित्तं न भवति तावदात्त्वेन न भवितव्यमिति। अनाकारान्तत्वात्। सुग्ल इत्यादावाकारान्तलक्षणः कप्रत्ययो न स्यादित्येतच्चेतसि कृत्वाह अशितीत्यादि। तेन किं सिद्धं भवतीत्याह तेनेत्यादि। प्रसज्यप्रतिषेधे ह्यात्त्वस्य शिति प्रतिषेधः क्रियते। नतु किञ्चिन्निमित्तमाश्रीयत इति। तदनैमित्तिकं भवति। अतः प्रागेव प्रत्ययोत्पत्तेरात्त्वं भवतीत्याकारान्तलक्षणः प्रत्ययः सिध्यति। तेन सुग्ल इत्यादि सिद्धं भवति। आदिशब्देन सुग्ल सुग्ला इत्यादेर्ग्रहणम्। तत्र हि स्त्रियामातश्चोपसर्गे (३।३।१०६) इत्यङ्।

## ४६। न व्यो लिटि।

व्येञ् संवरणे। अथालिटीति कस्मान्न न्यायते? तुल्या हि संहिता। नैतदस्ति। यदि ह्येवं स्यात् लिटि व्य इति नियम एव कृतः स्यात्। लिटेवात्त्वम्। नान्यत्रेति। लक्ष्यस्थित्या च विपरीतनियमो भविष्यति। द्विवचनबहुवचनयोः संप्रसारणे पूर्वरूपत्व आत्त्वे च सत्यसति वा नास्ति विशेष इत्येकवचनान्तमुदाहृतम्। संविव्ययिथेति। थलि वलादिलक्षणस्येट एकाच इत्यादिना (७।२।१०) प्रतिषेधः। पुनरपि क्रादिनियमार्थः प्राप्तः। सोऽप्यचस्तास्वदित्यादिना (७।२।६१) प्रतिषिद्धः। पुनरृतो भारद्वाजस्येति (७।२।६३) नियमाद्विकल्पे प्राप्त इड्र्तिव्ययतीनामिति (७।२।६६) नित्यं क्रियते।

## ४७। स्फुरतिस्फुलत्योर्घञि।

विस्फारो विस्फाल इति भावे घञ्। हलश्चेति (३।३।१२१) करणाधिकरणयो र्वा।

## ४८ । क्रीङ्जीनां णौ ।

डुक्रीञ् द्रव्यविनिमये । इङ् अध्ययने । जि जये । अनुपदेशार्थ आरम्भः । क्रापयतीत्यादावात्त्वे कृते ऽर्त्तिह्रीत्यादिना (७.३।३६) पुक् । किमर्थमिद-मुच्यते ? न क्रप कृपायां गतौ । जप जल्प व्यक्तायां वाचि । आप्लृ व्याप्ता-वित्यस्य चाधिपूर्वस्य णिचि कृते क्रापयतीत्यादिकं रूपं सिद्धम् । अनेकार्थत्वाद् धातूनां क्रीणात्याद्यर्थे क्रपादयो वर्त्तिष्यन्ते । उच्यते । क्रीणात्यादीनां णिचि प्रयोगान्तरनिवृत्त्यर्थम् । अथ करोतेरीङ् गतावित्यस्य ग्रहणं कस्मान्न विज्ञायते ? उच्यते । करोतेस्तावन्न सम्भवति । एच इत्यधिकारात् । अतएव हृक्षिकृतेच इत्यनुवर्त्तितम् । वचनसामर्थ्याद्वा । तस्य हि वृद्धेरा-वात्त्वं सिद्धम् । नैतदस्ति । नियमार्थं हि स्यात् । आत्त्वमेव । न पुना रपरत्वमिति । नैतदस्ति । विधिनियमसम्भवे विधिरेव ज्यायानिति क्रीणातेरेव ग्रहणम् । न करोतेः । तस्य नियमार्थत्वात् । क्रीणातेस्तु विध्यर्थत्वात् । ईङ् गतावित्यस्यापि ग्रहणं न सम्भवति । जयतिना ह्रस्वा-न्तेन साहचर्य्यात् । इङ् ह्रस्वान्तो ग्रहीष्यते । न दीर्घान्तः । शब्दपर-विप्रतिषेधात् । जयतिना साहचर्य्यम् । न क्रीणातिना । व्याख्यानतो वा विशेषोऽवसेयः ।

## ४९ । सिध्यतेरपारलौकिके ।

अन्नं साधयतीति । अन्नं निष्पादयतीत्यर्थः । अत्र हि सिधिः पारलौकिकेऽर्थे ज्ञानविशेषे वर्त्तत इति । अस्यार्थं तापसः सिध्यतीत्यादिना स्पष्टीकरोति । उपसंहरन्निति निष्पादयन्नित्यर्थः । इह कस्मान्न भवती-त्यादि । एवं मन्यते । ब्राह्मणेभ्यो दास्यामीत्यनेनाभिप्रायेण योऽन्नं साधयति स जन्मान्तरे भवन् फलमभ्युदयलक्षणं प्राप्नोति । तस्मात् पारलौकिकेऽर्थे सिधिरत्र वर्त्तत इति पर्य्युदासेन भवितव्यमिति । सिध्यतेरन्नार्थो निष्पत्ति-रित्यादिनेहलोकार्थतां तस्य दर्शयति । तस्याः प्रयोजनमन्नमित्यन्न-मुद्दिश्य प्रवृत्तत्वात् । तस्येत्यन्नस्य न पुनः सिद्धिरेवेतीति । अर्थाल्लिङ्गविपरि-णामं कृत्वा न पुनः सिद्धिरेव पारलौकिकीति सम्बन्धनीयम् । सिद्धि-

निष्पत्तिरित्यर्थः। इतिकरणो हेतौ। यस्मात् सिद्धौ धातुर्वर्त्तते। अत्र सिद्धिः पारलौकिकी न भवति। तस्मान्नात्त्वं पर्य्युदस्यते। स्यादेतत्। यद्यपि साक्षाद् धातुः परलोकार्थो न भवति पारम्पर्य्येण तु भवत्येव। तस्माद् भवितव्यमेव प्रतिषेधेनेत्याह साक्षादित्यादि। यदि साक्षादव्यवधानेन परलोकार्थो यः सिध्यतेरर्थस्तत्रापि पारलौकिक इतीदं वचनं न कृतार्थं स्यात् तदा पारम्पर्य्येणापि यः परलोकार्थस्तत्र व्याप्रियेत। मा भूद् वचनवैयर्थ्यमिति। इदं तु ज्ञानविशेषे साक्षात् परलोकार्थे सिध्यत्यर्थे चरितार्थम्। ततो नोत्सहत एवं विधिविषयमवगाहितुम्। न शक्नोत्येवं-प्रकारे विषये निषेधः प्रवर्त्तितुमित्यर्थः। अथ सिध्यतेः श्यना निर्देशः किमर्थः? न सिधेरित्येवोच्येत। एवं हि लघु सूत्रं भवतीत्याह सिध्यतेरित्यादि।

## ५०। मीनातिमिनोतिदीङां ल्यपि च।

उपदेश इत्यनुवृत्तेः प्रागेव प्रत्ययोत्पत्तेरात्त्वेन भवितव्यमिति। अत आत्त्वविधानकाले ल्यपः परत्वं न सम्भवतीति तस्माल्ल्यपीति विषयसप्तमीयं विज्ञायत इत्याह ल्यपि विषय इति। एच इति। यद्यपि प्रकृतिविशेषणं प्रागासीत् तथापीहोपदेशाधिकारान्मीनातिप्रभृतीनाञ्चोपदेशावस्थायामिचो-ऽसम्भवात् सामर्थ्याद्विषयविशेषणं विज्ञायत इत्याह एचश्च विषय इति। उपदेश इत्यस्य प्रागित्यादिनार्थमाचष्टे। प्रमायेति। समासेऽनञिति (७।१।३७) ल्यप्। कः पुनरुपदेशावस्थायामेवात्त्वविधानेऽर्थः सम्पद्यते? यदर्थमुप-देशावस्थायामात्त्वं क्रियत इत्याह उपदेश एवेत्यादि। इवर्णान्तलक्षण एरजित्यच् (३।३।५६)। आकारान्तलक्षण आतो युच् (३।३।१२८)। उपदाय इति। उपदेश एवात्त्वे कृते सत्यचो निमित्तं विहतमित्युत्सर्ग एव भाव इति (३।३।१८) घञ् सिद्धो भवति। आतो युक् चिण्कृतोरिति (७।३।३३) युक्। ईषदुपा-दानमिति। उपदेशावस्थायामात्त्वे खलपवादो युच् सिद्धो भवति।

## ५१। विभाषा लीयतेः।

तयोरुभयोरपि यका निर्देशः स्मर्य्यत इति। आचार्य्यैः। अथ दैवादिकस्यायं श्यना निर्देशः कस्मान्न विज्ञायते? अतएव निर्देशात्।

यदि दैवादिकएवात्र निर्देष्टुमभीष्टः स्यादनुबन्धेन लीङ इति निर्देशं कुर्य्यात् । तस्मात् साधारणेनागन्तुकेन यकायमुभयोर्निर्देशः । ईषत्प्रमय इति । ईषद् दुःखित्यादिना (३।३।१२६) खल् । निमयो वर्त्तत इति । एरजित्यच् (३।३।५६) । अत्र तु लियो व्यवस्थितविभाषया विज्ञानात् सिद्धमिति । लिय इत्युपलक्षणमात्रम् । इतरयोरपि सिद्ध एव । विभाषाग्रहणस्य पूर्वेणापि सूत्रेण सम्बन्धात् । व्यवस्थितविभाषाविज्ञानात् प्रलम्भनशालीनीकरणयोश्च णौ नित्यमात्त्वं भवति । व्यवस्थितविभाषाविज्ञानादेव । उल्लापयतेऽपलापयत इति । लियः सम्माननशालीनीकरणयोरित्यात्मनेपदम् (१।३।७०) ।

## ५२ । खिदेश्छन्दसि ।

चिखादेति । पुगन्तलघूपधस्येति (७।३।८६) गुणे कृत आकारः । यदि खादिरपि खिदेरर्थे वर्त्तते ततोऽयं योगः शक्योऽकर्त्तुम् । खादेस्तु चखादेति भविष्यति । खिदेस्तु चिखेदेति ।

## ५३ । अपगुरो णमुलि ।

अपगारमपगारमिति । आभीक्ष्ण्ये द्वे भवत इति (८।१।१२, वा) द्वित्वम् ।

## ५४ । चिस्फुरो र्णौ ।

क्रीङ्जीनां णावित्यत्र (६।१।४८) प्रदेश इदं नोक्तम् । नित्यं मा भूदित्येवमर्थम् ।

## ५५ । प्रजने वीयतेः ।

यदि वा गतिगन्धनयोरित्ययं धातुः प्रजने वर्त्तते ततः शक्यतेऽपि योगोऽवक्तुम् । वातेर्हि वापयतीति भविष्यति । वीयतेस्तु वाययतीति ।

## ५६ । बिभेतेर्हेतुभये ।

हेतुभय इति । पञ्चमी भयेनेति (२।१।३७) पञ्चमीसमासोऽयमित्याह ततो यद्भयमिति । किं पुनस्ततो भयमित्याह स यस्य भयस्येत्यादि । अथात्लपक्षे पुगागमः कस्मान्न भवति ? अस्ति ह्यत्रापि प्राप्तिः । एकदेशविकृतमनन्यवद् भवतीत्यत ( प, ३८ ) आह स चेत्यादि । भियो हेतुभये

युगित्यत्र (७।३।४८) हि भी ई इति ईकारेण प्रश्लिष्टस्य निर्देशः कृतः। ईकारान्तस्यैव युग् यथा स्यात्। आकारान्तस्य मा भूदिति। तथा लियो ग्रहणम्। तस्याप्यात्त्वपक्षे लीलोर्नुक्लुकावन्यतरस्यां स्नेहविपातन इति (७।३।३९) नुङ् न भवति। ईकारप्रश्लेषनिर्देशादेवेति प्रसङ्गेन व्युत्पादितम्।

## ५७। नित्यं स्मयतेः।

भयशब्देन धात्वर्थसाम्यादित्यादि। यश्च बिभेतेरर्थो यश्च स्मयते स्तौ द्वावपि सदृशौ। चित्तविकारस्वभावतया। द्वावपि तौ चित्तसंक्षोभलक्षणौ। अतो द्वयोरपि यत् सामान्यं तत् सादृश्यम्। तस्माद् भयशब्देनात्र स्मयतेरर्थोऽभिधीयते। दृश्यते हि सादृश्यादर्थान्तरेऽपि शब्दानां वृत्तिः। यथा सिंहो माणवक इति। किं पुनः कारणमेवं व्याख्यायत इत्याह नहीत्यादि। हेतुभय इत्यनुवर्त्तते। उच्यते चेदं विशेषणम्। नच मुख्ये भये स्मयते र्वृत्तिरस्ति। तत्र सामर्थ्यात् केनचित् सादृश्येन स्मयत्यर्थ एव भयशब्देनात्राभिधीयत इति विज्ञायते।

## ५८। सृजिदृशोर्झल्यमकिति।

स्रष्टा द्रष्टेति। अमागमे कृते यणादेशः। व्रश्चादिसूत्रेण (८।२।३६) षत्वम्। लघूपधगुणापवादोऽयमित्यादि। ननु चासति सम्भवे बाधनं भवति। अस्ति च सम्भवो यदुभयं स्यादिति। तत्र गुणे कृतेऽमागमो भविष्यति। नैतदेवम्। सामान्यविहितो गुणो विशेषविहितस्त्वमागमः। सामान्यविहितस्य च विशेषविहितो बाधको भवति यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति। यथा सामान्यविहितस्य दधिदानस्य विशेषविहितं तक्रदानं बाधकं भवति तथेहापि युक्ता ऽमागमेन गुणस्य बाधा। अस्राक्षीत्। अद्राक्षीदिति। आदेशप्रत्यययोरिति (८।३।५९) षत्वम्। अस्तिसिचोऽपृक्ते (७।३।९६) इतीट्। वदव्रजहलन्तस्याच इति (७।२।३) वृद्धिः। षढोः कः सीति (८।२।४१) कत्वम्। वृद्धिरमि कृते भवतीति। अथ प्रागेव वृद्धिः कस्मान्न भवतीत्याह पूर्वन्तु बाध्यत इति। यथैव हि विशेषविहितत्वादमागमेन सामान्यविहितो गुणो बाध्यते तथा वृद्धिरपि सामान्यविहितैवामागमे कृते पश्चात् पुनः प्रसङ्गविज्ञानात्

(प, ४०) सिद्धमिति सापि भवति । गुणस्त्वमागमे कृते न भवति । निमित्तस्य विहतत्वात् । न ह्यमागमे कृत उपधा लघ्वी गुणभाविन्युपपद्यते । अथेह कस्मान्न भवति ? रज्जुसृड्भ्यां देवदृग्भ्यामिति । सत्यपि धात्वधिकारे क्विबन्ता धातुत्वं न जहतीति भ्याम्प्रत्ययमाश्रितमाश्रित्यामागमः प्राप्नोतीत्यत आह धातोरित्यादि ।

## ५९ । अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ।

उपदेश इति वर्त्तत इति । अनुदात्तस्य विशेषणार्थम् । तेन त्रप्तेत्यत्र यद्यपि तृणि विहिते नित्स्वरेण धातोरुदात्तत्वं तथाप्युपदेशावस्थायामनुदात्त इत्यमागमः सिद्धो भवति । इहच वर्ढेति यद्यपि तृचि कृते धातुरनुदात्तो भवति तथाप्युपदेशावस्थायान्नायमनुदात्त इत्यमागमो न प्रवर्त्तते । किमर्थम् पुनरनुदात्तस्येत्युच्यते ? अनिट इत्येव नोच्येत । एवं लघु सूत्रं भवतीत्याह । तृप प्रीणन इत्यादि । तृप्यतिदृप्यत्यो रधादिभ्यश्चेतीट् (७।२।४५) विकल्प्यते । ततो यद्यनिट एवोच्येत तदा पाक्षिकेणेटा नैतावनिटाविति तयोरमागमो न स्यात् । अथ पाक्षिकेणेड्भावेन तयोरनिट्त्वादमागमो भवति । तथाच सति वृहू उद्यम इत्यस्यापि स्यात् । अयमप्यूदित्वात् पाक्षिकेड्भावादनिड् भवति । तस्मान्न शक्यतेऽनिट इति वक्तुमित्यभिप्रायः । यदि तर्ह्यनयोरिड् विकल्प्यते तदानुदात्तोपदेशः किमर्थः ? स ह्येवमर्थः क्रियते । अनुदात्तादितीट् (७।२।१०) प्रतिषेधो यथा स्यात् । यदि तर्ह्यनयोरिड् विकल्प्यते किं तेनेत्यत आह अनुदात्तोपदेशः पुनरेवमर्थ एवेति । वर्ढेति । हो ढः (८।२।३१) । ष्टुना ष्टुः (८।४।४१) । ढो ढे लोपः (८।३।१३) । यदाप्युदात्तोपदेशस्तदेड्न प्राप्नोतीत्याह ऊदित्वादित्यादि । स्वरतिसूती (७।२।४४) त्यादिनास्योऽदित्वादिड् विकल्प्यते । ततस्तेन सत्युदात्तत्वे पक्ष इड्भावो न भवति । चकारोऽमनुकर्षणार्थः । तेनोत्तरत्र तस्यानुवृत्तिर्न भवति ।

## ६० । शीर्षंश्छन्दसि ।

किं पुनः कारणमादेशो नेष्यत इत्याह सोऽपि ह्रीत्यादि । यतः शिरःशब्दोऽपि च्छन्दसि प्रयुज्यते ततो नायमादेशः प्रयुज्यते । आदेशे हि सति

शिरःशब्दस्य च्छन्दसि विषये प्रयोगो न स्यात्। निवृत्तिधर्मत्वात् स्थानिनः। यद्यन्यतरस्यांग्रहणमिहानुवर्त्तते तदादेशेऽप्यदोषः। शीर्षा इति। नोपधाया इति (६।४।७) दीर्घः। क्वचित् शीर्षाणीति पठ्यते। तत् तृतीयान्तं द्रष्टव्यम्। अल्लोपोऽन इत्यकारलोपः (६।४।१३४)। शीर्षं इति। षष्ठेरकवचनान्तमेतत्।

## ६१। ये च तद्धिते।

यदि यकारादावपि तद्धिते प्रकृत्यन्तरं विज्ञायते ततो यदि शिरःशब्दाद् यकारादिस्तद्धित उत्पद्यते तदा तस्य श्रवणमापद्येत। न चेष्यत इत्यत आह आदेशोऽयमिष्यत इति। स्थानिनोऽनुपादानादिहाप्यादेशो न युज्यत इत्यभिप्रायेणाह स कथमिति। तद्धित इति हीत्यादि। यस्मादिह यकारादिस्तद्धितः परनिमित्तमुपादीयते न चानुपादाय प्रकृतिं तद्धित उत्-पद्यते। न च शीर्षन्शब्द एव प्रकृतिर्युक्ता। तस्य भाषायामसम्भवात्। सहि च्छन्दसि निपातितः। भाषायाञ्चेदम्। तस्मात् प्रकृत्यन्तरादुत्पन्ने यकारादौ तद्धिते विधीयमाने या तेन प्रकृतिराक्षिप्ता तस्या आदेशोऽयं विज्ञायते। आदेशोऽपि हि विज्ञायमानो न यस्य कस्यचिद्विज्ञायते। अपि तु शिरःशब्दस्यैव। यतः स तद्धितस्तदनुरूपां तस्यादेशस्य शब्दतश्चार्थतश्चान्तरतमां प्रकृतिं शिरःशब्दमेवाक्षिपति। शीर्षण्य इति। अट्कुप्वादिना णत्वम् (८।४।२)। शिरस्यतीति। सुप आत्मन क्यच् (३।१।८)। वा केशेष्विति। केशेष्वभि-धेयेषु शिरःशब्दस्य शीर्षन्नित्यादेशो वा वक्तव्यो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। अन्यतरस्यांग्रहणमनुवर्त्तते। सा च व्यवस्थितविभाषा विज्ञायते। तेन शिरसः केशेषु वा शीर्षन्नादेशो भविष्यतीति।

## ६२। अचि शीर्षः।

स्थौलशीर्ष इति। तस्येदमित्यण् (४।३।१२०)। किमर्थं पुनरादेशान्तरं विधीयते। न प्रकृत एव शीर्षन्नादेशो विधीयताम्? तत्रापि न स्तद्धित इति (६।४।१४४) टिलोपे कृते सिध्यत्येवेष्टमित्याह शीर्षन्भाव इत्यादि। ष्यङादेशे कृत इत्यादि। अणिञोरनार्षयोरित्यादिना (४।१।७८)। तस्य शीर्षस्य शिरःशब्दग्रहणेन ग्रहणादिति स्थानिवद्भावेन शीर्षन्नादेशः प्राप्नोतीति। ये च

तद्धित इत्यनेनैव (६।१।६१)। तत्रेत्यादि। प्रकृतिभावप्राप्तिस्तु ये चाभावकर्मणो-रित्यनेन (६।४।१६८)। हास्तिशीर्षन्या हास्तिशीर्ष्येति। यङश्चाबिति (४।१।७४) चाप्। तत् कथमिति हास्तिशीर्ष्येति। कथमिष्टं सिध्यतीत्यर्थः। कर्त्तव्योऽत्र यत्न इति। स पुनर्यत्नः शिरसाः केशा इत्यस्य सिद्धये य एव प्रकृतः स एव वेदितव्यः। व्यवस्थितविभाषयैव हि शीर्षंशब्दस्य शिरःशब्देन ग्रहणाच् शीर्षन्नादेशो न भविष्यतीति। तेन हास्तिशीर्ष्येत्येवं भवति। न हास्तिशीर्षण्येति। अणिञन्तादित्यादि। अणिञोरनार्षयोरित्यत्र (४।१।७८) सूत्रे द्वौ पक्षौ। अणिञोः स्थान आदेशः ष्यङ् विधीयत इत्येकः पक्षः। अणिञन्तात् परः ष्यङ्प्रत्ययो भवतीति द्वितीयः। तत्रादेशपक्षेऽयं दोष आपततीतरणिञन्तात् परः ष्यङाश्रयितव्य इति प्रत्ययपक्ष आश्रयितव्य इत्यर्थः। आदेशपक्षे यत्नो वा कर्त्तव्य इति विकल्पार्थो वाशब्दः। अथ तत्रापि प्रत्ययपक्ष आश्रीयमाणे शीर्षस्य शीर्षन्नादेशः कस्मान्न भवतीत्याह तत्रेत्यादि। यदा प्रत्ययः ष्यङ् तदा तस्मिन् परतो योऽसाविञो यस्येति चेति (६।४।१४८) लोपस्तस्य पूर्वविधौ कर्त्तव्ये स्थानिवद्भावाद् व्यवधानम्। अतो यकारादेः शीर्षन्नादेशनिमित्तस्य तद्धितस्य व्यवधानादादेशो न प्राप्नोतीति भावः।

## ६३। पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु।

इहापि शस्प्रभृतयो निमित्तत्वेनोपादीयन्ते। ते च प्रकृत्या विना नोपपद्यन्त इति भावः। तेषु प्रकृत्यन्तराद्विहितेषु विधीयमानाः पदादय आदेशा विज्ञायन्ते। न च स्थानिनोऽनुपादानादनियमेनादेशप्रसङ्गः। यतस्ते-ष्वादिश्यमानेषु शस् प्रभृतयोऽनुरूपमेव पादादिकां स्वार्थिकीं प्रकृतिमाक्षि-पन्तीत्याह पाददन्तनासिकेत्यादि। पदित्याद्युदाहरणेषु पदो दत इति शसन्ते। यूष्णो दोष्णो यक्नः शक्न इति षष्ठ्येकवचनान्तानि। अल्लोपोऽन (६।४।१३४) इत्यकारलोपः। मासि निशि आसनीति सप्तम्येकवचनान्तानि। आसनीत्यत्र विभाषाङिश्योरिति (६।४।१७६) पक्षेऽकारलोपो न भवति। शेषाणि

तृतीयैकवचनान्तानि। पादौ नासिके इति प्रथमा द्विवचनान्ते। कस्मात् पुनरन्यतरस्यामित्येतदनुवर्त्तयन्तीत्याह तेन पादादयोऽपीत्यादि। यस्मात् पादादयोऽपि प्रयुज्यन्ते तस्मादन्यतरस्यामित्यनुवर्त्तयन्ति। व्यवस्थावाचिनि प्रभृतिशब्दे आश्रीयमाणे शस्प्रभृतिभ्योऽन्यत्रादेशो न सिध्यतीत्यभिप्रायेणाह प्रकारार्थे प्रभृतिशब्द इति। दोषणी इति। केचिदाहुः प्रथमाद्विवचने दोषन्नादेशः। औङः शीभावः। अन्ये त्वाहुः दोषणीति ङीबन्तमेतत्। ङीपि विषयभूते दोषन्नादेशः। तत ऋन्नेभ्यो ङीप् (४।१।५)। नस्यमिति। हितार्थे शरीरावयवाद्यत् (५।१।६)। नस्त इति। अपादाने चाहीयरुहोरिति (५।४।४५) तसिः। नःक्षुद्र इति। नासिका क्षुद्रा यस्येति बहुव्रीहिः। नासिक्यो वर्ण इति। भवार्थे शरीरावयवादिति (५।१।६) यत्। नासिक्यं नगरमित्यत्र हितार्थे यत्।

## ६४। धात्वादेः षः सः।

सिञ्चतीति। शे मुचादीनामिति नुम् (७।१।५९)। षोड़श इति। षट् वा दश वास्येति संख्ययाव्ययेत्यादिना (२।२।२५) बहुव्रीहिः। संख्येये डजित्यादिना समासान्तो (५।४।७३) डच्। षोड़न्निति। (I) षट् दन्ता अस्येति बहुव्रीहिः। वयसि दन्तस्य दतृ इति (५।४।१४१) दन्तशब्दस्य दत्रादेशः। षष उत्त्वं दतृदशसूत्तरपदादेः ष्टुत्वञ्चेति (६।३।१०९ वा) षष उत्वम्। उत्तरपदादेश्च ष्टुत्वम्। डकारः। षण्ड इति। प्रातिपदिकान्तमेतदव्युत्पन्नम्। षड़िक इति। अनुकम्पितः षड़ङ्गुलिदत्त इति बह्वचोऽमनुष्यनाम्नष्ठजिति (५।४।१४१) ठच्। ठाजादावूर्द्ध्वं द्वितीयादच (५।३।८३) इत्यङ्गुलिदत्तशब्दस्य लोपः। ननु च लिटि धातोरित्यतो-(६।१।८) ऽत्र धातुग्रहणमनुवर्त्तिष्यते। तदिह किं पुनर्धातुग्रहणेन ? एवं तर्ह्येतज् ज्ञापयति तन्निवृत्तमिति। तस्य ह्यनुवृत्तौ लोपो व्योर्वलीत्ययमपि (६।१।६६) लोपो धात्ववयवस्यैव विज्ञायते। क्नुयी क्तः क्नुतः। क्ष्मायी क्तः क्ष्मात इत्यत्रैव स्यात्। गौधेरः पचेरन्नित्यत्र न स्यात्। नन्वेवमपि धातु-

(I) षोड़ इति च क्वचित् पाठः। तत्र षोड़न्तमाचष्ट इति णिचि कृते टिलोपे पचाद्यजन्तत्वम्।

ग्रहणमनर्थकमेव। यस्मादुपदेश इति वर्त्तत एव। न च प्रातिपदिकानामुपदेशः। केषां तर्ह्युपदेशः? धातूनाम्। नैतदस्ति। उपदेशाधिकारेऽप्युपदेशग्रहणेन षकारो विशिष्यते। षषश्च षकार उपदेशो भवति। षष उत्त्वं दतृदशसूत्तरपदादेरिति सूत्रे (६।३।१०९ वा) पाठात्। तस्माद् धातुग्रहणं कर्त्तव्यम्। कषतीति। भ्वादौ कषसिषेत्यादिर्हिंसार्थो धातुवर्गे पठ्यते। लषतीति। लष कान्तौ। अनयोरादिग्रहणान्न भवति। ननु चोपदेशसामर्थ्यादेवात्र न भविष्यतीति। अन्यथा ह्युपदेशस्य वैयर्थ्यं स्यात्। नैतदस्ति। अस्ति ह्यन्यत्रूपदेशस्य प्रयोजनम्। किं तत्? शेषे विभाषाऽकखादावषान्त उपदेश (८।४।१८) इत्यत्र कषेर्ग्रहणं मा भूत्। लषेश्च लेषतु लेषुरिति षत्वं यथा स्यात्। किमर्थं पुनः षादयो धातव उपदिष्टाः? न सादयो ह्युपदिश्येरन्? एवं ह्येतत् सूत्रं न कर्त्तव्यं भवतीत्यत आह आदेशप्रत्यययो रित्यादि। षत्वव्यवस्था षत्वनियमः। आदेशप्रत्यययोरित्यनेन (८।३।५९) सहादीनामेव षत्वव्यवस्था यथा स्यादित्येवमर्थम्। षादयः केचिदुपदिष्टाः। अन्यथा सहादीनां षत्वार्थं यत्नान्तरं कर्त्तव्यं स्यात्। तच्च गुरु भवतीत्यभिप्रायः। यद्यपि षकारादिषु सन्देहो न भवति सकारादिषु च भवत्येव। अत्र हि न ज्ञायते किं षोपदेशा एव सन्तो धात्वादेः षः स इत्यनेन कृतसत्वा उच्चारिता उत सकारादय एवेति सन्दिह्य पृच्छति के पुनस्त इति। ये तथा पठ्यन्त इति। षादयो ये तथा पठ्यन्ते सन्निधानात् तएव षोपदेशा अवगन्तव्याः। अज्दन्त्यपरा इत्यादि। अज्दन्त्यौ परौ येषामिति ते ऽज्दन्त्यपराः। परशब्दोऽत्रावयवे वर्त्तते। तत्राज्दन्त्ययोः परत्वमवयवान्तरापेक्षं विज्ञायमानं सन्निधानात् सकारापेक्षं विज्ञायते। स्मिस्विदिस्वञ्जिस्वपयश्चेति। ष्मिङ् ईषद्धसने। ञिष्विदा गात्रप्रक्षरणे। ष्वन्ज परिष्वङ्गे। ञिष्वप् शये। एते स्वरूपेणाख्यायन्ते। मकारवकारयोरज्दन्त्यत्वाभावात्। केचित् स्मिस्वदिस्वदिस्वञ्जिस्वपयश्चेति स्विदिस्थाने स्वदिं पठन्ति। तेषां स्वद स्वर्द आस्वादन इति स्वदिरपि षोपदेश एव। सृपिसृजिस्तृस्त्यासेकृसृवर्जमिति। गस्लृ सृप्लृ गतौ। सृज विसर्गे। स्तृञ् आच्छादने। ष्ट्यै स्त्यै शब्दसंघातयोः। सेक सेकृ स्रकि श्लकि गतयर्थाः। सृ गतौ। एतान् वर्जयित्वा ये

ऽन्यऽजदन्त्यपरा स्ते षोपदेशाः। सुब्धात्वितप्रादि। सुब्धातुः क्वजाद्यन्तः। ष्ठिवु निरसने। ष्वक्क वुक्क मक्क तिक्क टिक्क टीक्क वगि लगि गत्यर्थाः। एषां प्रतिषेधो व्यक्तव्यो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। सुब्धातौ तावत् षोड़ीयतीत्यादौ नैव धात्वादिः षकारः। तथा ह्यादिरवयवः। आरम्भकश्चावयवो भवति। सुब्धातुः सुबन्तेन क्वचा चारभ्यते। न च षकारेणापि वर्णान्तरेणेति कुतस्तस्य षकारादित्वम्? सहादयस्तु षकारादिभिरेव वर्णैरारभ्यन्त इति युक्तं तेषां षकारादित्वम्। ष्ठिवेरपि निपातनान्न भवति। किं तन्निपातनम्? ष्ठिवुक्लमुचमां शितीति (७।३।७५)। यस्य हि सत्वं भवति तमयं प्रदेशेषु कृतसत्वमेवोच्चारयति यथा प्रदेशे स्थाघ्वोरिच्चेति। ष्वक्केरप्यजदन्त्यपरा इत्यनेन निवर्त्तितत्वान् न भवति। वकारस्य दन्त्यौष्ठ्यत्वादजदन्त्यग्रहणेन न गृह्यते। अथवा यादित्वात् ष्ठिवुष्वक्को न भविष्यति। यकारस्तु लुप्तनिर्दिष्टत्वान्न श्रूयते (J)। अथवान्यतरस्यांग्रहणमत्रानुवर्त्तते। सा च व्यवस्थितविभाषा विज्ञायते। तेन सुब्धात्वादीनां न भवतीति। ष्ठीव्यतीति। ष्ठिवुक्लमुचमां शितीति (७।३।७५) दीर्घः। ष्वक्कत इति। अनुदात्तेत्त्वादात्मनेपदम्। अथ ष्ठिवो द्वितीयवर्णः किं ठकार इष्यत उत थकारः? यदि ठकारस्तदा सिद्धं टेष्ठीव्यत इति। न सिध्यति तेष्ठीव्यत इति। अभ्यासे चर्च्चेति (८।४।५५) टकार एवान्तरतमष्ठकारस्य स्थाने प्राप्नोतीति कृत्वा। अथ थकारस्तदा सिद्धं तेष्ठीव्यत इति। एतन् न सिध्यति टेष्ठीव्यत इति। आन्तरतम्याद् विधीयमानस्थकारस्य स्थाने तकार एव प्राप्नोतीत्यत आह ष्ठिव इत्येतस्येत्यादि। अभ्यासस्य द्वैरूप्यं यथा स्यादिति। केचिदाचार्य्येण शिष्याष्ठकारोऽयमित्युपदिष्टाः। अपरेण पुनस्थकारोऽयं ष्टुत्वेन ठकारः श्रूयत इतीममर्थं ग्राहिताः। उभयञ्चैतत् प्रयोजनम्। अन्ये पुनराहुः ष्ठिवुर्दिवादिष्वपि पुनरधीयते। तत्रैकस्य द्वितीयस्थकारः। अपरस्य तु ठकार इति। तेष्ठीव्यत इति शर्पूर्वाः खयः शेषः (७।४।६१)।

६५। णो नः।

सुब्धातोरयमपि नेष्यत इति। पूर्वस्मादेव हेतोः। उपसर्गादसमासेऽ-

(J) लोपो व्योर्वलीति (६।१।६६) लोपात्।

पीत्यादि। अत्र पूर्वानुसारेण पूर्वपक्षो विज्ञेयः। नृतीनन्दीत्यादि। नृती गात्रविक्षेपे। टुनदि समृद्धौ। नर्द्द गर्द्द शब्दे। नक्क वक्क नाशने। नट अवस्यन्दने। चुरादिणिजन्तः। नाथृ नाधृ याच्ञोपतापैश्वर्य्याशीःषु। नॄ नये।

## ६६। लोपो व्योर्वलि।

लिटि धातोरित्यस्य (६।१।८) धातुग्रहणस्य इष्टानुवृत्तिसामर्थ्यादिहाप्यनुवृत्तिरिति मन्यमानस्य धातोरेवायं वलि व्यलोपो विधीयत इति कस्यचिद् भ्रान्तिः स्यात्। अतस्तान्निराकर्त्तुमाह धातोरिति यत् प्रकृतमित्यादि। दिदिवानिति। दिवेः क्वसौ रूपम्। जयीति। जयी तन्तुसन्ताने। क्नुयीति। क्नुयी शब्दे। गौधेर इति। गोधाया ढ्रक् (४।१।१२९)। ढस्यैयादेशः। यकारलोपः। पचेरन्निति। सीयुड्यकारस्य लोपः। जीवेरिति। जीव प्राणधारण इत्यस्य। स्रिवेरिति। स्रिवु गतिशोषणयोरित्येतस्य। आस्रेमाणमिति। औणादिकोऽयं मनिन्। कथं पुनरेतदिहोदाहरणम्? यावता परत्वाद् वार्णादाङ्गं बलीयो भवतीति बलीयस्त्वाच् च्छ्वोः शूडनुनासिके (६।४।१०) चेत्यादिनोठादेशेनात्र भवितव्यमित्यत आह उणादयो बहुलमितग्रादि। बहुलग्रहणस्य सर्वविधिव्यभिचारार्थत्वान् न भवत्येष दोषप्रसङ्ग इति। पश्चाल्लोपग्रहणे क्रियमाणे पकारात् परेणाध्यर्द्धमात्रोच्चारयितव्या भवति। अकारो हि मात्रा। विसर्जनीयस्त्वर्द्धमात्रः। पूर्वन्तु लोपग्रहणे क्रियमाणे मात्राद्वयमुच्चारयितव्यं जायते। ओकारस्य द्विमात्रिकत्वात्। तच्च लाघवार्थं पश्चादेव लोपग्रहणं कर्त्तुं युक्तम्। तत् किं पूर्वं क्रियत इत्यत आह पूर्वमित्यादि। अन्यस्तु पूर्वं कार्य्यिनिर्देशो युक्तः। पश्चात् कार्य्यनिर्देश इति पूर्वं व्योर्ग्रहणे कर्त्तव्ये किमर्थं लोपग्रहणं क्रियत इति पूर्वपक्षं वर्णयन्ति। स चायुक्तो। लुगणिञोरित्यत्र (४।१।७८) कार्य्यस्यापि पूर्वं निर्देशात्। वेरपृक्तलोपादित्यादि। कण्डूयतेर्लोलूयतेश्च क्विपि कृते वलि लोपात् परत्वात् कृताकृतप्रसङ्गित्वेन नित्यत्वाच्च पूर्वं वेरपृक्तलोप एव स्यात्। अस्मिंश्च सति निमित्ताभावाद् वर्णाश्रये प्रत्ययलक्षणाभावाद् वलि लोपो न स्यात्। तस्मात् पूर्वं लोपग्रहणं क्रियते वलि लोप एव पूर्वं यथा स्यात्। पूर्वं लोपग्रहणे

ह्ययमर्थः सूच्यते वेरपृक्तलोपात् पूर्वं वलि लोप एव कर्त्तव्यमिति। कण्डूरिति। अतो लोप (६।४।४८) इत्यकारलोपः। क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषु न स्थानिवदित्यकारस्य (१।१।५८, वा) स्थानिवद्भावो न भवति। वलि लोपः। अथ व्रश्चको व्रश्चन इत्यत्र रेफे वलि परतो वकारलोपः कस्मान्न भवतीत्याह व्रश्चादीनामित्यादि। यद्येषामपि लोपः स्याद् वकारोच्चारणमनर्थकं स्यात्। अतस्तोच्चारणसामर्थ्याद् व्रश्चादीनां वलि लोपो न भवति। स्यादेतत्। वृश्चति वव्रश्चेत्यत्र संप्रसारणे हलादिशेषे च वकारस्य श्रवणं यथा स्यात्। तत् कुत उपदेशस्य वैयर्थ्यम्? अत आह वृश्चतीत्यादि। यथा व्रश्चक इत्यादौ लोपस्य प्राप्तिरेवं वृश्चतीत्यादावपि संप्रसारणादौ कार्य्ये कृतेऽपि। तस्य बहिरङ्गत्वेनासिद्धत्वात्। तत्र संप्रसारणं ङित्प्रत्ययापेक्षत्वात् बहिरङ्गम्। हलादिशेषोऽभ्यासापेक्षत्वाद् बहिरङ्गः। वलि यलोपस्तु वर्णमात्राश्रयत्वादन्तरङ्गः। तस्मात् सर्वत्रैव व्रश्चेर्वकारलोपः प्राप्नोति। क्रियते चास्योपदेशः। अत उपदेशसामर्थ्यान्न भविष्यतीति तदेवावस्थितम्।

## ६७। वेरपृक्तस्य।

वेरित्यादि। क्विबादेरन्यस्य वेरपृक्तसंज्ञकस्याभावात् क्विबादय एव गृह्यन्ते। कथं पुनर्वेरित्युच्यमाने क्विबादीनां सामान्येन ग्रहणमुपपद्यते? यावता पकारादयस्तेषां विशेषा अनुबन्धाः सन्तीति चोद्यनिरासायेदमुक्तं विशेषाननुबन्धानुत्सृज्येति। ब्रह्महा भ्रूणहेति। सौ चेति (६।४।१३) दीर्घः। घृतस्पृगिति। क्विन्प्रत्ययस्य कुरिति (८।२।६२) कुत्वम्। अर्द्धभागिति। चोः कुरिति (८।२।३०) कुत्वम्। दर्विरित्यादावुणादयो बहुलमिति (३।१।१) बहुलग्रहणादेव लोपो न भवतीति शक्यते वक्तुम्। अतः प्रपञ्चार्थं वैचित्र्यार्थं वाऽपृक्तग्रहणम्।

## ६८। हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्।

यदि लोप इतीहानुवर्त्तमानं शास्त्रीयेणार्थेनैवार्थवत् स्यात् तदा तेन हलित्यस्य प्रथमान्तस्य सामानाधिकरण्येन सम्बन्धो नोपपद्यते। शास्त्रीयस्य हि लोपशब्दस्यार्थो दर्शनाभावोऽदर्शनम्। न च हलदर्शनं भवति। न च

हल्ङ्याब्भ्य इति पञ्चमी हलिति प्रथमायाः षष्ठीत्वं प्रकल्पयिष्यति। सामर्थ्याद्वा हलित्यस्य षष्ठ्यन्ततया विपरिणामो भविष्यति। अतः षष्ठ्यन्तस्य लोपशब्देन सम्बन्धो भविष्यतीति शक्यं प्रकल्पयितुम्। अकृतार्थत्वात् प्रथमायाः षष्ठीभावस्यानुपपत्तेरित्येतदालोच्याह तदित्यादि। लुप्यत इति लोपः। कर्मणि घञ्। एतेन लौकिकार्थेनार्थवत्त्वं लोपशब्दस्य दर्शयति। लुप्यत इति निरुध्यत इत्यर्थः। लौकिकेनार्थेनार्थवता कर्मसाधनेन लोपशब्देन हलित्येतस्य विशेषणविशेष्यभाव उपपद्यते। लोपशब्देन हि लुप्यमानं वर्णमात्रमुच्यते। सुतिस्यपृक्तं हलिति। अनेन च तदेव विशिष्यते। दीर्घादित्येतच्च ङ्यापोरेव विशेषणम्। सम्भवाव्यभिचारात्। ननु हलन्तस्य। असम्भवात्। उखास्रत्। पर्णध्वदिति। स्रन्सु ध्वन्सु अधःपतने। उखायां स्रंसते पर्णानि ध्वंसत इति क्विप्। अनिदितामित्यनुनासिकलोपः (६।४।२४)। वसुस्रंसुध्वंस्वनडुहान्द इति (८।२।७२) दकारः। तस्य वावसाने (८।४।५६) चर्त्वं तकारः। कुमारीति। वयसि प्रथम इति (४।१।२०) ङीप्। गौरीति। षिद्गौरादिभ्यश्चेति (४।१।४१) ङीष्। शार्ङ्गरवीति। शार्ङ्गरवाद्यञो ङीन् (४।१।७३)। खट्वेति। अजाद्यतष्टाबिति (४।१।४) टाप्। बहुराजेति। डाबुभाभ्यामन्यतरस्यामिति (४।१।१३) डाप्। कारीषगन्ध्येति। यङश्चाप् (४।१।७४)। हलन्तादेव तिलोपः सिलोपश्चेति। ननु ङ्याबन्तादित्येवकारेण दर्शयति। नहि ङ्याबन्तात् परौ तिसी सम्भवतः। धातोरेव परस्य लकारस्य तयोर्विधानात्। अबिभर्भवानिति। गुणे रपरत्वे च कृते तिलोपः। अजागर्भवानिति। जाग्रोऽविचिण्णल्ङित्स्विति (७।३।८५) गुणः। भवानित्यनुप्रयोगस्तिशब्दाभिव्यक्तये। अभिन इति। भिदेर्लङ्। दश्चेति (६।१।११२) रुत्वम्। अतो रोरप्लुतादप्लुत (६।१।८७) इत्युत्वम्। अमोऽकारेण सहाद्गुणः। एङः पदान्तादतीति (१।६।१०९) पूर्वरूपत्वम्। ग्रामणीरिति। ग्रामं नयतीति सत्सूद्विषेत्यादिना (३।२।६१) क्विप्। निष्कौशाम्बिरिति। निर्गतः कौशाम्ब्या इति प्रादिसमासः। गोस्त्रियोरुपसर्जनस्येति (१।२।४७) ह्रस्वत्वम्। अतिखट्व इति। खट्वामतिक्रान्त इति पूर्ववत् समासे कृते ह्रस्वः। अभैत्सीदिति। वदव्रजेति (७।२।३) वृद्धिः। अपृक्त ईट्।

ननु सौति सामान्येन निर्देशात् सिचोऽपि ग्रहणम्। अतो न युक्तमिदं प्रत्युदाहरणम्! अत आह तिसहचरितस्येत्यादि। तिङ्तिशब्देन साहचर्य्यात् तिङ एव से ग्रहणम्। न सिच इति किमत्रायुक्तम्? बिभेदेति। णलोऽकारोऽत्र भवत्यपृक्तः। ननु हल् इति नासौ लुप्यते। संयोगान्तलोपेनैव सिद्धमिति। राजेत्यादिकमुदाहरणमिति शेषः। कथं पुनर्न सिध्यतीत्यत आह राजा तक्षेत्यादि। यथा पचन्नित्यत्र संयोगान्तलोपस्यासिद्धत्वान् नलोपो न भवति तथा राजा तक्षेत्यादावपि न स्यात्। संयोगान्तलोपासिद्धत्वञ्चात्र पारम्पर्य्येण हेतुः। तस्मिन् सति हि सौ परतः पूर्वस्य पदसंज्ञा न भवति। असर्वनामस्थान इति (१।४।१७) प्रतिषेधात्। तस्याञ्चासत्यां पदस्येत्युच्यमानो नलोपो न स्यात्। नलोपे चासति राजेत्यादिकं रूपं न सिध्येत्। दत्वमिति। न स्यादिति प्रकृतेन सम्बन्धनीयम्। दत्वमपि हि संयोगान्तलोपस्यासिद्धत्वादसत्यां पदसंज्ञायां न स्यात्। अथवा संयोगान्तलोपोऽत्र न प्रवर्त्तत एव। तत्र स्कोः संयोगाद्योरन्ते चेति (८।२।२९) संयोगादिलोपोऽपवादभूत इति सएव स्यात्। यथा काष्ठं तक्ष्णोतीति काष्ठतड़ित्यत्र। तस्मिंश्च सति विभक्तिसकारस्य रुत्वविसर्गौ स्यातामिति कुतो दत्वम्? उत्वमिति। न स्यादित्यपेक्षते। एतदपि संयोगान्तलोपस्यासिद्धत्वात्। अलब्धपदव्यपदेशस्य न स्यात्। रात्सस्येति (८।२।२४) नियमादिति। संयोगान्तस्य लोप (८।२।२३) इत्यनेनैव सिद्धेः। रात्सस्येति (८।२।२४) नियमार्थमिदम्। रात्सस्यैव लोपो यथा स्यान्नान्यस्येति। ततश्चाबिभर्भवानित्यत्र तकारस्य लोप एव न स्यात्। तस्मात् संयोगान्तलोपेन न सिध्यतीति हलन्ताल्लोप उच्यते। अस्यैवार्थस्य सुखोपग्रहणार्थं संयोगान्तलोपे हीत्यादि संग्रहश्लोकस्योपन्यासः। हिशब्दो हेतौ। यस्मात् संयोगान्तलोप आश्रीयमाणे नलोपादिकं कार्य्यं न सिध्यतीति किञ्च ते तव (K) भवतः संयोगान्तलोपवादिनो रात्तु रेफात्तु

---

(K) In the संग्रहश्लोक the printed काशिका has the reading रात् तु ते नैव ii तेरिति तिप्रत्ययस्येत्यर्थः। But the न्यासकार takes up the reading रात् तु ते नैव and explains ते as तव भवत इति। ii तव संयोगादिलोपवादिन इत्यर्थः।

परस्य तकारस्याविभर्भवानजगर्भवानित्यत्र नैव लोपः स्यात् तस्माद्धलन्तात् सुतिसीनां लोपो विधीयते ।

## ६८ । एङ्ह्रस्वात् सम्बुद्धेः ।

हलिति चेति । वर्त्तत इत्यपेक्षते । यदि हलिति नानुवर्त्तेत तदा हे कुण्ड सुइति स्थिते लोपात् परत्वादम्भावे कृत आदेः परस्येतप्रकारलोपे (६।१।५४) सुपि चेति (७।३।२०२) दीर्घत्वे च हे कुण्डामित्यनिष्टं रूपं स्यादितप्रभिप्रायः । अपृक्तमिति नाधिक्रियत इति । यदि ह्यपृक्तमिहानुवर्त्तेत तर्हि हे कुण्डेत्यत्र लोपो न स्यात् । अपृक्तसंज्ञाया अभावादिति भावः । कथं पुनर्ज्ञायते ? अपृक्त इह नानुवर्त्तत इत्याह तथा चेत्यादि । तथा चेति हेतौ । यस्मात् पूर्वसूत्रेऽपृक्तग्रहणं कृतमतोऽवसीयते नात्र प्रकरणेऽपृक्तग्रहणस्यानुवृत्तिरस्तीति । अन्यथा हि वेरपृक्तस्येत्यत (६।१।६७) एवापृक्तग्रहणमनुवर्त्तिष्यत इति । पुनरपृक्तग्रहणं पूर्वसूत्रे न क्रियेतेति । स चेत् सम्बुद्धेर्भवतीति । यदि सम्बुद्धेः सम्बन्धी भवतीत्यर्थः । एतेन सम्बुद्धेरित्यस्यावयवषष्ठ्यन्ततां दर्शयति । हे अग्ने हे वायो इति । ह्रस्वस्य गुणः (७।३।१०८) । हे नदि हे वध्विति । अम्बार्थनद्योर्ह्रस्व (७।३।१०७) इति ह्रस्वत्वम् । हल्मात्रस्य मकारस्य लोप इति । हलित्यनुवृत्तेः । हे कतरदित्यत्रैकादेशे कृते ह्रस्वात् सम्बुद्धेर्हल् भवतीति तस्य लोपः कस्मान्न भवतीत्याह हे कतरदित्यादि । अद्ड्डतरादिभ्य इत्यत्र (७।१।२५) द्विडकारनिर्देशाड् डिच्छब्द आदेशो भवतीति डित्वात् टिलोपे ह्रस्वो नास्तीति न भवति लोपः । अथैङ्ग्रहणं किमर्थम् ? यावता हे अग्ने इत्यादावपि प्रागेव सम्बुद्धिगुणाद् ह्रस्वादित्येवं लोपेन भवितव्यमित्यत आह एङ् ग्रहणमितप्रादि । नितप्रत्वात् परत्वाच्च सम्बुद्धिगुणो बलीयानिति तेनैव तावत् भवितव्यम् । तत्र कृते ह्रस्वात् परः सम्बुद्धेर्हल् न सम्भवतीति लोपो न प्राप्नोति । अत एङ्ग्रहणं क्रियते । ननु च विहितविशेषणं विज्ञास्यते । ह्रस्वाद् विहितायाः सम्बुद्धेरिति । नैतदस्ति । एका हीयं पञ्चमी । तत्र यदि ह्रस्वाद् विहितविशेषणं विज्ञायते तदेङन्तादपि विज्ञायेत । तथाच हे गौरितप्रत्रापि स्यात् । तस्मादेङ्ग्रहणं कर्त्तव्यम् ।

## ७० । शेश्छन्दसि बहुलम् ।

जस्शसोः शिरिति (७।१।२०) यः शिरादेशस्तस्यायं लोपो विधीयते। या क्षेत्रा या वना इति। शे लोपे कृते प्रत्ययलक्षणेन नपुंसकस्य झलच इति (७।१।७२) नुम्। सर्वनामस्थाने चासम्बुद्धाविति (६।४।८) दीर्घः। नलोपः प्रातिपदिकान्तस्येति (८।४।७) नलोपः। वेति कर्त्तव्ये बहुलग्रहणं सर्वविधि-व्यभिचारार्थम्। तेन सर्वे विधयश्छन्दसि विकल्प्यन्त इत्युपपन्नं भवति।

## ७१ । ह्रस्वस्य पिति कृति तुक् ।

कृताच्च प्रत्ययेन धातुरुपस्थाप्यते। ह्रस्वेन च स एव विशेष्यते। विशेषणेन च तदन्तविधिर्भवतीत्यतो ह्रस्वान्तो धातुरागमी विज्ञायत इत्याह। ह्रस्वान्तस्य धातोरित्यादि। अग्निचिदिति। अग्नौ चेरिति (३।१।९१) क्विप्। सोमसुदिति। सोमे सुञ इत्युभयत्रोपपदसमासः (३।२।९०)। प्रकृत्येत्यादौ प्रादिसमासः। समासेऽनञ्पूर्वे क्त्वो ल्यबिति ल्यप् (७।१।३७)। अथ ग्रामं नयतीति ग्रामणि ब्राह्मणकुलमित्यत्र नपुंसकह्रस्वत्वे कृते ह्रस्वाश्रयस्तुक् कस्मान्न भवतीत्याह ग्रामणि ब्राह्मणकुलमित्यादि। ह्रस्वत्वं हि नपुंसकार्थ-वृत्तिप्रातिपदिकमपेक्षत इति बहिरङ्गम्। अन्तरङ्गस्तु तुग्। वर्णमात्रापेक्षत्वात्। असिद्धं बहिरङ्गमन्तरङ्ग इति (प, ४६) तुङ् नात्र भवति।

## ७२ । संहितायाम् ।

संहितायामिति विषयसप्तमीयम्। तेन यदि कार्य्यिनिमित्तयोः संहिता विषयभूता भवति तदैवं वक्ष्यमाणं कार्य्यं भवति। नान्यथेति वेदितव्यम्।

## ७३ । छे च ।

छ इति। यद्यप्यकारवतश्छकारादेषा सप्तमी तथापि छकार एव केवलस्तुको निमित्तम्। अकारस्तूच्चारणार्थः। एतच्चेजादेश्च गुरुमतोऽनृच्छ (३।१।३६) इत्याम्प्रतिषेधादवसीयते। यदि ह्यकारसहितश्छकारस्तुको निमित्तं स्यात् तदा ऋच्छेस्तुगभावादसति गुरुमत्त्व आमः प्रसङ्गो नास्तीति प्रतिषेधं न कुर्य्यात्। इच्छतीति। इषुगमियमाञ्छः (७।३।७७)। तुक्। चुत्वम्।

पूर्वस्मिंस्तुग्विधौ ह्रस्वान्त आगमी। अतः स एवात्रागमीति कस्यचिद्भ्रान्तिः स्यात्। अतस्तान्निराकर्त्तुमाह ह्रस्व एवेत्यादि। एवम्मन्यते। ह्रस्वानुकर्षणार्थश्चकारोऽत्र क्रियते ह्रस्व एवागमी यथा स्यात्। तदन्तो मा भूदित्येवमर्थम्। अन्यथा स्वरितत्वादनन्तरत्वाच्च पूर्वसूत्रे य आगमी स एवेहापि विज्ञास्यत इत्यनर्थकश्चकारः स्यात्। ह्रस्व एवागमिनि सति किमिष्टं सिध्यति यतस्तदर्थोऽयं यत्नः क्रियत इत्याह तेनेत्यादि। यदि ह्रस्वान्तस्य तुक् स्यात् तदा चिच्छिदतुरित्यादौ तस्याभ्यासग्रहणेन ग्रहणाद्धलादिशेषेण निवृत्तिः स्यात्। ह्रस्वे त्वागमिनि नायमभ्यासस्य हलिति न भवत्येष दोषः। कथं पुनर्ह्रस्व आगमिनि तुगभ्यासग्रहणेन न गृह्यत इत्याह नावयवावयव इत्यादि। इतिकरणो हेतौ। यस्मादवयवस्य योऽवयवः स समुदायस्यावयवो न भवति। तस्मात् ह्रस्व एवागमिनि तुकोऽभ्यासग्रहणेन न ग्रहणं भवति। नावयवावयवः समुदायस्यावयवो भवतीत्यत्र चैतत् सूत्रविहितस्तुगित्यभिप्रायो वेदितव्यः। यदि ह्यविशेषेणावयवावयवः समुदायावयवो न स्यादेवं सति शेरत इत्यत्र रुड़ागमः सार्वधातुकस्यावयवस्य झादेशस्यातोऽवयव इति सोऽपि समुदायस्य सार्वधातुकस्यावयवो न स्यात्। ततः शीङः सार्वधातुके गुण इति (७।४।२१) गुणो न स्यात्। रुटा सार्वधातुकस्य व्यवहितत्वात् स ह्यवयव उक्तस्तमेव व्यवदध्यात्। स समुदायन्तु न व्यवदधात्येव। तस्मात् पूर्वोक्त एवाभिप्रायो वृत्तिकारस्य वेदितव्यः। कस्मात् पुनरेतत् सूत्रविहितोऽवयवावयवः समुदायस्यावयवो न भवति? ह्रस्वानुकर्षणार्थचकारकरणसामर्थ्यात्। सहि चकारो ह्रस्वानुकर्षणार्थ एवमर्थः क्रियते ह्रस्वमात्र आगमिनि तुकोऽभ्यासग्रहणेनाग्रहणाद्धलादिशेषेण निवृत्तिर्मा भूदिति। यदि चैतत्सूत्रविहितोऽप्यवयवावयवः समुदायावयवः स्यात् तदा ह्रस्वेऽप्यागमिनि तुकस्तु तदवयवस्याप्यभ्यासग्रहणेन ग्रहणाद्धलादिशेषेण निवृत्त्या भवितव्यमिति चकारो ह्रस्वानुकर्षणार्थो निष्फलः स्यात्। तस्मादयमेव तुगवयवावयवः समुदायावयवो न भवति। अन्यस्तु भवत्येव। युक्तञ्चैतत्। तथाहि बाह्वोर्योऽवयवो हस्तः स देवदत्तस्याप्यवयवो भवत्येव। अन्यथा हस्तवान् देवदत्त इति प्रयोगो न स्यात्।

## ७४। आङ्माङोश्च।

अत्राकारो ङिदुपात्तः। स चेषदादावर्थे वर्त्तत इत्याह आङित्यादि। माशब्दोऽपि ङिदुपात्तः। सोऽपि निषेधे वर्त्तत इत्याह माङश्च प्रतिषेधवचनस्येति। आच्छादयतीत्यादि। छद अपवारणे। चौरादिकः। अत्र च्छादनक्रियाङा विशिष्यत इति स क्रियायोगे वर्त्तते। आच्छायाया इति मर्य्यादायामाङ्। छायां मर्य्यादां परित्यज्येत्यर्थः। आङ्मर्य्यादावचन (१।४।८९) इत्याङश्च कर्मप्रवचनीयसंज्ञकस्य योगे पञ्चम्यपाङ्परिभिरिति (२।३।१०) पञ्चमी। आच्छायमिति। छायामभिव्याप्येत्यर्थः। आङ्मर्य्यादाभिविध्योरिति (२।१।२२) पञ्चम्यन्तेनाव्ययीभावः। नाव्ययीभावादतोम् त्वपञ्चम्या इति (२।४।८३) विभक्तेर्लुगम्भावश्च। मा च्छिददिति। इरित्वाच्चेरङ्। आछाया आच्छायेति। अत्राकारः स्मरणे वर्त्तते। तत्र चास्य ङित्त्वं नास्ति। वाक्यस्मरणयोरङिदिति वचनात्। तेनात्र पदान्ताद्वेति विकल्पो (६।१।७६) भवति। प्रमाच्छन्द इति। माङ् माने। प्रपूर्वः। आतश्चोपसर्ग इत्यङ् (३।३।१०६)। स्त्रियामजाद्यतष्टाप् (४।१।४)। ननु च लाक्षणिकत्वादेवात्र न भविष्यति। नैतदस्ति। गामादाग्रहणेष्वविशेष इति (प, १२७) वचनात्।

## ७५। दीर्घात्।

उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति। दीर्घादिति पञ्चम्याच्छ इत्यस्याः सप्तम्याः षष्ठ्यां प्रकल्पितायां तस्मादित्युत्तरस्येति (१।१।६७) च्छकारस्यैव तुक् प्राप्नोतीति कस्यचिद्भ्रान्तिः स्यात्। अतस्तान्निराकर्त्तुमाह दीर्घात् परो यश्छकारस्तस्मिन् परतः पूर्वस्येत्यादि। एवं मन्यते। तस्मादित्युत्तरस्येत्यत्र (१।१।६७) तस्मादिति योगविभागः कर्त्तव्यः। पूर्वस्येति पूर्वसूत्रादनुवर्त्तते। तेन दीर्घादित्यादौ सत्यपि पञ्चमीनिर्देशे पूर्वस्यैव कार्य्यं भवति। नोत्तरस्य। न चातिप्रसङ्गो योगविभागादिष्टसिद्धेरिति। ह्रीच्छतीति। ह्रीच्छ लज्जायाम्। म्लेच्छतीति। म्लेच्छ अव्यक्तायां वाचि। अपचाच्छायत इति। छो छेदने। आदेच उपदेशेऽशितीत्यात्वम् (६।१।४५)। यङ्। दीर्घोऽकित इत्य- (७।४।८३)भ्यासस्य दीर्घः।

## ७६ । पदान्ताद्वा ।

कुटीच्छायेति । षष्ठीसमासः । असमासो वा । विश्वजनादीनामित्यादि । विश्वजन इत्येवमादीनां छन्दसि विषये विकल्पेन तुग्भवतीत्येतदर्थंरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यान सर्वे विधयश्छन्दसि विकल्प्यन्त इति प्राक् प्रतिपादितमेतत् । तेन विश्वजनादीनां छन्दसि वा तुग् भवतीति ।

## ७७ । इको यणचि ।

इको यणादेशो भवतीति । इकां यणाञ्च साम्यात् यथासंख्यं भवतीति वेदितव्यम् । यश्च सवर्णोऽच् तत्र दीर्घविधानसामर्थ्यादसवर्णेऽचि यणादेशो विज्ञायत इति । इक इति किम् ? वागत्रेत्यत्र कुत्वादेव सिद्धत्वाद् यणादेशो मा भूदिति । अचीति किम् ? दधि करोति । प्लुतपूर्वस्येति । प्लुतः पूर्वो यस्मात् स प्लुतपूर्वः । वक्तव्यो व्याख्येयः । तत्रेदं व्याख्यानम् । इको यणचीत्यत्र तन्त्रेण द्वौ योगावुच्चारितौ । तत्रैको यणादेशार्थः । अपरस्त्विकः प्लुतपूर्वस्य सवर्णदीर्घबाधनार्थो भविष्यतीति । भो३ यिदम् । भो३ इ इदमिति स्थिते गुरोऽनृतोऽनन्तरस्याप्येकैकस्य प्राचामित्यनेन (८।२।८६) दूराद्धूते ऽर्थे भोशब्दस्य प्लुतः कृतः । ततः सवर्णदीर्घत्वे प्राप्ते यणादेशः ।

## ७८ । एचोऽयवायावः ।

कयेते यरेत इति । के एते ये एत इति स्थितेऽयादेशः । वायावरुणावीति । वायौ अवरुणावीति स्थित आवादेशः ।

## ७९ । वान्तो यि प्रत्यये ।

यीति वर्णग्रहणम् । तेन यस्मिन् विधिस्तदादावल्ग्रहणइति (प, १०७) यकारादौ प्रत्यये कार्यं विज्ञायत इत्यत आह यकारादौ प्रत्यय इति । यद्यपीह स्थानी न निर्दिष्टस्तथाप्यवादेश ओकारस्य स्थान आवादेशोऽप्यौकारस्य स्थाने भवतीति वेदितव्यम् । कथम् ? पूर्वयोगे हि यद्धर्मा वान्त आदेशो दृष्ट इहापि तद्धर्मैवानुवर्त्तते । कश्च पूर्वयोगे तद्धर्मो दृष्टः ? अवादेशस्यौकारस्य स्थानित्वम् । आवादेशस्याप्यौकारस्य स्थानित्वम् । अत इहापि स्वधर्ममजहतोऽनुवृत्तस्य

वान्तादेशस्य पूर्वक एव स्थानी विज्ञायते। बाभ्रव्य इति। बभ्रुशब्दादपत्येऽर्थे मधुबभ्र्वोर्ब्राह्मणकौशिकयोरिति (४।१।१०६) यञ्। ओर्गुण इति (६।४।१४६) गुणः। माण्डव्य इति गर्गादिभ्यो यञिति (४।१।१०५) यञ्। शङ्कव्यमिति शङ्कुशब्दाद् तस्मै (५।१।५) हितमित्युगवादिभ्यो यदिति (५।१।२) यत्। नाव्य इति। नावा तार्य्यंत इति नौवयोधर्मविषेत्यादिना (४।४।९१) यत्। वैयतीति। सुप आत्मनः क्यजिति (३।१।८) क्यच्। गोयानमिति षष्ठी-समासः। गोर् यूतौ छन्दसीत्यादि। वक्तव्यशब्दस्य व्याख्येय इत्येषोऽर्थो वेदितव्यः। तत्रेदं व्याख्यानम्। वान्तो यीति योगविभागोऽत्र क्रियते। तेन गोशब्दस्य यूतौ परतश्छन्दसि विषयेऽवादेशो भवति। अध्वपरिमाणे चेति। गोर्यूताविति वर्त्तते। तत्रापि वक्तव्यशब्दस्य स एवार्थः। व्याख्यान-मपि तदेव। इदञ्च सामान्येन वचनम्। तेन भाषायामप्यध्वपरिमाणे भवति।

## ८०। धातो स्तन्निमित्तस्यैव।

पूर्वेणैव सिद्धे नियमार्थं वचनम्। तन्निमित्तस्येति तच्छब्देन यकारादि-प्रत्ययः प्रत्यवमृश्यते। स निमित्तं यस्य स तथोक्तः। लव्यमिति। अचो यदिति (३।१।९७) यत्। तमेव यकारमाश्रित्य सार्वधातुकार्धधातकयोरि-त्योकारो (७।३।८४) विधीयमानस्तन्निमित्तो भवति। अवश्यलाव्यमिति। ओरावश्यक इति (३।१।२५) ण्यत्। मयूरव्यंसकादयश्चेति (२।१।७२) समासः। लुम्पेदवश्यमः कृत्य इति मकारलोपः। अत्रापि ण्यतमाश्रित्याचो ञ्णितीति (७।२।११) विधीयमान औकारस्तन्निमित्तो भवतीति। प्रातिपदिकस्य नियमो मा भूदिति। असति हि धातुग्रहणे प्रातिपदिक-स्यापि नियमः स्यात्। ननु च प्रातिपदिकस्यापि नियम एतन्निमित्तस्यैव भवति नातन्निमित्तस्येत्ययमर्थः स्यात्। तथाच पूर्वसूत्रस्यारम्भोऽनर्थकः स्यात्। निर्विषयत्वात्। नैष दोषः। यो हि धातोरिति किमिति पृच्छति स पूर्वयोगस्यारम्भं पृथङ् नेच्छत्येव। स ह्येवं मन्यते। वान्तो यिप्रत्यये तन्निमित्तस्यैवेत्येको योगः कर्त्तव्य इति। तत्र को दोष इति प्रातिपदिक-

नियमे सति यदि कश्चिद् दोष आपद्येत ततस्तन्निवृत्तये क्रियमाणं धातुग्रहणं शोभत इत्यभिप्रायः । बाभ्रव्य इत्यत्रैव स्यादिति । एचस्तन्निमित्तत्वात् । इह तु न स्यात् गव्यं नाव्यमिति । अतन्निमित्तत्वादेचः । उपोयत इति । वेञ एच आत्वे कृत उपपूर्वाल्लट् । भावकर्मणो (१।३।१३) रित्यात्मनेपदम् । सार्वधातुके यगिति (३।१।६७) यक् । यजादित्वात् संप्रसारणम् । अकृत्सार्वधातुकयोर्दीर्घं (७।४।२५) इति दीर्घः । उपाकारेण सहाद्गुणः (६।१।८७) । औयत इति । तस्यैव धातोर्लङ् । पूर्ववदात्मनेपदादि । आडजादीनामित्याट् (६।४।७) । आटश्चेति वृद्धिः (६।१।९०) । अयमौकारः पूर्वक ओकार एतदुभयमप्यतन्निमित्तम् । एतस्य मा भूदित्येवमर्थं तन्निमित्तग्रहणम् । ननु चान्तरङ्गो यणादेशो वर्णमात्राश्रयत्वात् । बहिरङ्गस्त्वेकादेश उभयपदाश्रयत्वात् । ततश्चासिद्धं बहिरङ्गमन्तरङ्ग इत्यसिद्धत्वादेवात्र (प,५१) न भविष्यति । एवं तेर्ह्येतज्ज्ञापयति । नेयमिह परिभाषोपतिष्ठत इति । तेनाक्षद्यूरित्यत्र बहिरङ्गोऽप्यूडादेशोऽन्तरङ्गे यणादेशे कर्त्तव्ये नासिद्धो भवति । अन्यथा यद्ययमर्थो न ज्ञाप्येत तदाक्षैर्दीव्यतीति क्विपि कृते च्छ्वोः शूडनुनासिके चेत्यूडादेशे (६।''।१९) कृते तस्यासिद्धत्वाद् यणादेशो न स्यात् । लौयमानिरिति । लूयमानस्यापत्यमित्यर्थेऽत इञितीञ् (४।१।९५) । तद्धितेष्वचामादेरिति (७।२।१७) वृद्धिः । सा च तद्धितनिमित्ता । नतु यकारादिप्रत्ययनिमित्ता । सिद्धे हि विधिरारभ्यमाणः विनाप्येवकारकरणं नियमार्थो भविष्यतीत्यभिप्रायेणाह एवकारः किमिति । इष्टतोऽवधारणार्थमेवकारकरणं क्रियत इति दर्शयन्नाह धात्ववधारणमित्यादि । एवकारे तन्निमित्तशब्दानन्तरमुच्चार्य्यमाणे यत एवकारकरणं ततोऽन्यत्रावधारणार्थमिति धात्ववधारणं भवति । असति ह्येवकारकरणे धातोरेव तन्निमित्तस्येति तन्निमित्तावधारणमप्यनिष्टं विज्ञायेत । तस्माद् धात्ववधारणं यथा स्यात् तन्निमित्तावधारणं मा भूदित्येवमर्थमेवकारकरणम् । किं पुनर्धात्ववधारणे सतीष्टं रूपं सिध्यति यतस्तदिष्यत इत्यत आह तन्निमित्तस्य हीत्यादि । धात्ववधारणे हि सति तन्निमित्तस्यानियतत्वादधातोश्च भवति बाभ्रव्य इति । धातोश्च भवति लव्यमवश्यलाव्यमिति । यदि तन्निमित्तावधारणं कृतं स्यात् तदा धातोरेव तन्निमित्तस्येति । ततो

बाभ्रव्य इत्यत्र न स्यात्। नहि बभ्रुशब्दो धातुः। तस्माद्बालवधारण-मितीष्यते।

## ८१। क्षय्यजय्यौ शक्यार्थे।

क्षि जि इत्येतयोर्धात्वोरिति। क्षिग्रहणेन क्षि क्षये क्षि निवासगत्योः क्षिष् हिंसायामित्येतेषां ग्रहणम्। जिग्रहणे तु जि जये इत्येतस्य। ननु च निरनुबन्धकग्रहणे न सानुबन्धकस्येत्यनया परिभाषया (प,८२) क्षिष् हिंसायामित्यस्य ग्रहणं न प्राप्नोति। नैष दोषः। निपातनाद् भविष्यति। किं हि निपातनान्न लभ्यते ? यथैव हि ततोऽन्यदलाक्षणिकं कार्य्यं किञ्चिद् भविष्यति तथेदमपि स्यात्। अर्थग्रहणं कर्मण्यपि यथा स्यात्। अन्यथा शकेरकर्मकत्वाद् भाव एव निपातनं विज्ञायेत क्षय्यं देवदत्तेनेति। कर्म्मणि तु न स्यात् क्षय्यो व्याधिरिति। नह्यकर्मकेभ्यः कर्मणि कृत्यप्रत्यय उपपद्यते। अर्थग्रहणेन तु कृत्यार्थ उपलक्ष्यते। कृत्याश्च कर्मण्यपि विहिताः। तेन तत्रापि निपातनाद्विज्ञायते।

## ८२। क्रय्यस्तदर्थे।

क्रय्य इति। अत्र प्रत्ययार्थस्य कर्म विद्यते। कर्मणि कृत्यविधानात्। प्रकृत्यर्थस्य विनिमयः। क्रीणातेर्विनिमयार्थत्वात्। तत्र प्रत्ययार्थः प्रधानम्। प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति कृत्वा। प्रकृत्यर्थस्तूप-सर्जनम्। प्रत्ययार्थविशेषणमिति कृत्वा। तत्र यदि प्रधानत्वात् तदित्यनेन प्रत्ययार्थो निर्दिश्येत तदायमर्थः स्यात् स क्रय्योऽर्थो यस्य शब्दस्य स तदर्थः। तस्मिन्नभिधेये क्रय्य इत्येष शब्दो निपात्यत इति। अयुक्तश्चायम्। नह्यत्र क्रय्यशब्दस्य क्रय्यार्थः कश्चिच्छब्दोऽभिधेयोऽस्ति। ततस्तस्याप्रतीतेः। अथैवं विज्ञायेत स एवार्थस्तदर्थ इति ? एवमपि तदर्थग्रहणमनर्थकम्। अवश्यमेव हि क्रय्यशब्दो यत्प्रत्ययान्तस्तस्मिन् यत्प्रत्ययार्थे वर्त्तते। तस्मात् तच्छब्देन प्रधाननिर्देशे सति तदर्थग्रहणस्यानर्थक्यम्। अतो गुण-भूतोऽपि प्रकृत्यर्थो निर्दिश्यत इति मत्वाह तदर्थे क्रयार्थे यत् तस्मिन्नभिधेय इति। तस्मै इदं तदर्थम्। क्रयार्थमित्यनेन क्रीणात्यर्थस्तच्छब्देन निर्दिश्यत

इति दर्शयति। क्रयणं क्रयो विनिमय इत्यर्थः। क्रयार्थमित्यत्रापि चतुर्थीसमास एव। क्रयाय इदं क्रयार्थम्। क्रयार्थं यः प्रसारित इति। विनिमयार्थं य उपन्यस्त इत्यर्थः। क्रेयं नो धान्यमिति। क्रेतव्यं ग्रहीतव्यं स्वीकर्त्तव्यमित्यर्थः। न चास्ति क्रय्यमिति। नचात्र क्रयार्थमुपन्यस्तं धान्यमस्तीत्यर्थः।

## ८३। भव्यप्रवय्ये च च्छन्दसि।

वी इत्येतस्येति। गतिप्रजनादिषु यो वी पठ्यते तस्य। अजेर्व्यघञपोरित्यजे र्वी (२।४।५६) वी आदेश तस्य वा। ऋदय्या आप उपसंख्यानमिति। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। ऋदय्या इत्यस्य प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्। चकारोऽत्र क्रियते। स चानुक्तसमुच्चयार्थः। तेन ऋदय्या इत्यपि भविष्यतीति।

## ८४। एकः पूर्वपरयोः।

अथ पूर्वपरग्रहणं किमर्थम्? यावतादुगुण (६।१।८७) इत्यादावादित्येषा पञ्चम्यचीत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यतीति। तस्मादित्युत्तरस्येति (१।१।६७) वचनात्। तथाचीत्येषा सप्तम्यादित्यस्याः पञ्चम्याः षष्ठीत्वं प्रकल्पयिष्यति। तस्मिन्निति निर्दिष्टे पूर्वस्येति (६।१।६६) वचनात्। तत्रान्तरेणापि पूर्वपरग्रहणं पूर्वपरयोर्द्वयोरपि भविष्यतीत्याह पूर्वपरग्रहणमित्यादि। किं पुनः कारणमसति पूर्वपरग्रहणे द्वयोरपि युगपदादेशो न सिध्यतीत्यत आह एकस्यैव हीत्यादि। एवं मन्यते। अचीत्येषा सप्तमी यणादेशादिविधौ चरितार्था। आदित्येषा तु पञ्चमी न क्वचिच्चरितार्था। अतः सा सप्तम्याः षष्ठीत्वं प्रकल्पयेत्। तत्रासति पूर्वपरग्रहणे ऽच एव स्थाने गुणः स्यात्। वृद्धिरेचीत्यत्र(६।१।८८) च गुणविधावादिति पञ्चमी कृतार्थेति तस्या एचीति सप्तम्यकृतार्था षष्ठीत्वं प्रकल्पयेत्। एवञ्च वृद्धिरवर्णस्यैव प्रसज्येत। उपसर्गादृति धाताविव्यत्र (५।१।९१) द्वयोरपि पञ्चमीसप्तम्योरकृतार्थत्वात् पर्य्यायेण परस्परं षष्ठीप्रकल्पनेति पर्य्यायेणैव वृद्धिः स्यात्। यत् पुनः परस्याभिमतं पञ्चमी सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति सप्तम्यपि पञ्चम्यास्ततोऽन्तरेणापि

पूर्वपरग्रहणं द्वयोरप्यादेशो भविष्यतीति तन्निरासायाह नोभे इत्यादि। निवृत्तिधर्मा हि स्थानी भवति। श्रूयमाणस्य च षष्ठीप्रकल्पनं प्रति निमित्त-भावः। कथञ्च पूर्वपरौ निवर्त्तेयाताम्? षष्ठीप्रकल्पनञ्च प्रति निमित्तभाव-मुपगच्छेताम्? अतएवानिवृत्तेर्निमित्तभावस्य चासम्भवान्नोभे सप्तमीपञ्चम्यौ युगपत् प्रकल्पिके भवतः। तस्मादेकस्यैव स्यान्नोभयोः। अथैकग्रहणं किमर्थम्? यावता भ्रस्जो रोपधयो रमन्यतरस्यामित्यत्र (६।४।४६) विनाप्येक ग्रहणमेक एव रम्भवति तथाप्यत्रैकग्रहणेन विनाप्येक एव भविष्यतीत्याह एकमित्यादि। रमागमेन हि मित्त्वान्मिदचोऽन्त्यात् परः (१।१।४७) इत्यचोऽ-न्त्यात् परेण भवितव्यम्। न च द्वयो रमोर्भृज्जतावचोऽन्त्यात् परेण सम्भवोऽस्ति। ततो युक्तं तद्विनाप्येकग्रहणम्। एक एव रम् भवतीति गुणादिस्त्वादेशः। सम्भवति च स्थानिभेदे सत्येकैकस्य स्थानिनो गुणादिः पृथगादेशः। तत्रा-सत्येकग्रहणे पृथगादेशः स्यात्। तस्मात् पूर्वपरयोर्द्वयोः स्थानिनोः पृथगादेशो मा भूदित्येवमर्थमेकग्रहणम्। असति पुनरेकग्रहण आदेशश्च द्वयं प्राप्नोती-त्यसुमर्थं सोपपत्तिकं प्रतिपादयितुमाह स्थानिभेदाद्धीत्यादि। यथा रदाभ्यां निष्ठातो नः पूर्वस्य च द इति (८।२।४२) स्थानिभेदाद्भेत्तोर्भिन्नं छिन्नमित्येव-मादिषु द्वाविवादेशौ भवतस्तथा खट्वेन्द्र इत्येवमादिष्वपि द्वावादेशौ स्यताम्।

## ८५। अन्तादिवच्च।

अन्तादिवदित्युक्ते न ज्ञायते कोऽस्यातिदेशस्यार्थ इत्यतस्तत्परिज्ञानायाह यथेत्यादि। इत्येषोऽतिदेशस्यार्थ इति। इतिशब्दोऽतिक्रान्तप्रत्यवमर्शी। अतिदिश्यतेऽनेनेत्यतिदेशः। स पुनरन्तादिवच्चेत्येष एव योग इत्येषोऽनन्त-रोक्तोऽस्यातिदेशस्यार्थ इत्यर्थः। वर्णाश्रयविधावयमन्तादिवद्भावो नेष्यत इति। कथमेतज्ज्ञायत इत्याह तथाहीत्यादि। अतो भिस (७।१।९) ऐसित्यकार-वर्णाश्रयो विधिस्तत्र कर्त्तव्ये खट्वाभिरित्यत्र सवर्णदीर्घत्वं पूर्वस्यान्तवन्न भवति। आत औ णल (७।१।३४) इत्याकारवर्णाश्रयोऽयं विधिः। तत्र कर्त्तव्ये वर्णाश्रये जुहावेत्यत्राभ्यस्तस्य चेति (६।१।३३) ह्वयतेः संप्रसारणे कृते यत् पूर्वरूपत्वमा-कारस्य तन्नादिवद्भवति। एङः पदान्तादतीत्येष (६।१।१०९) विधिरेङ्वर्णा-

श्रयः । तत्र कर्त्तव्येऽस्मै अस्त्र इत्यता (६।१।८०) टश्चेति वृद्धिः परस्मादिवन्न भवति । तदभावादायादेशः। लोपः शाकल्यस्येति (८।३।१९) यकारलोपः । तत् किमेतद् वक्तव्यं वर्णाश्रये नान्तादिवदिति ? नवक्तव्यम् । कथम् ? अताद्रूप्याति-देशात् । नेह ताद्रूप्यमतिदिश्यते । रूपाश्रयश्चेते विधयः । तेनाद्रूप्यान्न भविष्यन्ति । किमर्थं पुनरयमन्तादिवद्भावो विधीयते ? यावता पूर्वपरा-वुक्ताविकादेशस्य स्थानिनौ । अत्र स्थानिवद्भावादेव तदाश्रयं कार्य्यं भविष्य-तीत्यत आह पूर्वपरसमुदाय एकादेशस्य स्थानीति । कथं ज्ञायत इतत्राह ह्योत्यादि । येन हि यो निवर्त्त्यत आदेशेन स तस्य स्थानीति । तद् यथा अस्तेर्भूरिति । अत्र भुवो ऽस्तिः । समुदायस्त्वेहैकादेशेन निर्वर्त्त्यत इति स एव तस्य स्थानी । न पूर्वपरौ समुदायिनौ । स्यादेतत् । अवयवस्य समुदायाभ्यन्तरत्वात् समुदाय आदेशेन निवर्त्त्यमाने ऽवयवावपि निवर्त्त्येते । तस्मात् तयोरपि स्थानित्वमित्यत आह तत्रेत्यादि । इतिकरणौ द्वावपि हेतौ । तत्र समुदाये स्थानिन्यवयवयोर्यत् स्थानित्वं तदानुमानिकं । समुदाय एकादेशस्य आदेशेन निवर्त्त्यमाने तयोरपि निवर्त्तनं नान्तरीयकमिति कृत्वा । नहि विनावयवनिवर्त्तनेन समुदायः शक्यते निवर्त्तयितुम् । तस्य तदात्मकत्वात् । समुदायस्य तु प्रत्यक्षं स्थानित्वम् । पूर्वपरयोरिति । स्थानषष्ठ्यन्तस्य साक्षाच् श्रवणाच् श्रुतानुमितयोः श्रौतः सम्बन्धो गरीयानिति (प,१४) स्थानिवदा-देशोऽनल्विधावित्यनेन (१।१।५६) यस्य प्रत्यक्षं साक्षाच् श्रुतं स्थानित्वं तदाश्रयमेव कार्यमादेशे विधीयते । अवयवयोश्चानुमानिकं स्थानित्वं न प्रत्यक्षमतस्तदाश्रयं कार्य्यं नातिदिश्यते । तेन तदाश्रयं कार्य्यं स्थानिवद्भावादेशे न प्राप्नोति । इष्यते च । तदर्थमयमन्तादिवद्भावो विधीयते ।

## ८६ । षत्वतुकोरसिद्धः ।

इहासिद्धवचनेनैकादेशस्याभावो वा क्रियते ? तत्कार्य्यसामर्थ्यं वा प्रति-पाद्यते ? सिद्धमपि हि वस्तु सिद्धकार्य्यं कर्त्तुमसामर्थ्यादसिद्धमित्युच्यते । यथा पुत्रकार्य्यकरणेऽसामर्थ्यात् पुत्रोऽप्यपुत्र इति । तत्र यद्यनेनैकादेशस्याभावः क्रियते तदाधीत्येत्यत्र तुग् न स्यात् । नहीह ह्रस्वोऽस्ति । एकादेशेन

निवर्त्तितत्वात् । नचासिद्धवचनेनैकादेशे निवर्त्तिते ऋवस्य प्रादुर्भावो भवति । नहि देवदत्तस्य हन्तरि हते पुनर्देवदत्तस्य प्रादुर्भावो भवतीतीममाद्ये पक्षे दोषं दृष्ट्वा कार्य्यासामर्थ्यमेकादेशस्यासिद्धत्वमुक्त्वा प्रत्याख्यत इति दर्शयन्नाह सिद्धकार्य्यं न करोतीत्यर्थ इति । सिद्धस्य निष्पन्नस्य यत् कार्य्यं तदेकादेशः सिद्धो निष्पन्नोऽपि न करोतीत्ययमस्य वचनस्यार्थः । असिद्धवचनमित्यादिना सूत्रस्य प्रयोजनमाचष्टे । आदेशे च कृते यत्कार्य्यं तद्धेतुकं प्राप्नोति तदादेशलक्षणम् । आदेशो लक्षणं निमित्तमस्येति कृत्वा । तस्य प्रतिषेधो यथा स्यादित्येवमर्थमसिद्धवचनम् । उत्सृज्यते निवर्त्त्यत इत्युत्सर्गः स्थान्यभिधीयते । उत्सर्गो लक्षणं यस्य तदुत्सर्गलक्षणम् । तद्भावो यथा स्यादित्येवमर्थञ्चासिद्धवचनम् । कोऽसिचदिति । सिचेर्लुङि च्लिः । लिपिसिचिह्वश्चेति (३।१।५३) च्लेरङ् । किंशब्दात् परस्य सकारस्य रुत्वम् । अतो रोरप्लुतादप्लुत इत्युत्वम् (६।१।११३) । आद्गुण इति (६।१।८७) गुणः । एङः पदान्तादतीति (६।१।८७) पररूपत्वम् । परं प्रत्यादिवद्भावादितयादि । असिचदित्यत्र योऽकारस्तं प्रत्येकादेशस्यान्तादिवच्चेत्यनेनादिवद्भावः (६।१।८८) । अयञ्चापदादित्वे हेतुः । असिद्धत्वान्न भवतीति । असिद्धत्वे हि सति सकारोऽत्रादिरेव पदस्य भवति । तेन सात्पदाद्योरिति (८।३।१११) षत्वप्रतिषेधो भवति । कोऽस्यंति । इदमः षष्ठ्येकवचनम् । तदादीनाम इत्यत्वम् (७।२।१०२) । टाङसिङसामिनात्स्या इति (७।१।१२) स्यभावः । हलि लोप (७।२।१२०) इतीद्रूपस्य लोपः । शेषं पूर्ववत् । एतदादेशलक्षणप्रतिषेधस्योदाहरणम् । उत्सर्गलक्षणभावस्य त्वधीत्य प्रेत्येति । ननु च बहिरङ्ग एकादेशो द्विपदाश्रयत्वात् । अन्तरङ्गाविव षत्वतुकौ । एकपदाश्रयत्वात् । तत्रासिद्धं बहिरङ्गमन्तरङ्ग इत्यनया (प, ५१) परिभाषयैवात्रासिद्धत्वं भविष्यतीति निरर्थकमिदं वचनम् । एवं तर्हि सैव परिभाषात्र प्रकरणे षत्वतुको र्नियम्यते । तेनाक्षद्यूरित्यत्र बहिरङ्गलक्षणोऽप्यूड़ादेशोऽन्तरङ्गयणादेशे कर्त्तव्ये नासिद्धो भवति । संप्रसारण इत्यादि । संप्रसारणे ङौ इटि च य एकादेशस्तस्यासिद्धत्वप्रतिषेधो वक्तव्यः ब्रह्महूष्विति । ब्रह्माणं ह्वयतीति क्विप् । यजादित्वात् संप्रसारणम् । संप्रसारणाच्चेति (६।१।१०८) पररूपत्वम् । हल इति (६।४।२) दीर्घः । सप्तमी-

बहुवचनम् । परिवीष्विति । वेञः परिपूर्वस्य पूर्ववत् क्विबादिषु कृतेषु रूपम् । अपचेच्छ्वमिति । पचेर्लङ्युत्तमपुरुषैकवचनमिट् । कर्त्तरि शबिति (३।१।६८) शप् । आद्गुण इति (६।१।८७) गुणः ।

८७ । आद्गुणः ।

तवल्कारः । खट्वल्कार इति । कथं पुनरत्र लपरत्वमित्याह लृकारस्य स्थान इत्यादि । एतच्च लृकारऋकारयोः सवर्णसंज्ञा वक्तव्येत्युप-(१।१।९, वा) संख्यानादुरण् रपर (१।१।५१) इत्यत्र रप्रत्याहारग्रहणाल्लभ्यते । उक्तं ह्यक्षरसमाम्नाये हकारादिषु वर्णेष्वकार उच्चारणार्थो लकारे त्वनुनासिक इत्संज्ञकः प्रतिज्ञायत इति । तत्र रेफादारभ्य लणकारेण प्रत्याहारे सति लृकारस्य ऋकारग्रहणेन गृहीतस्य स्थानेऽण् विधीयमानो लपरः सम्पद्यते ।

८८ । वृद्धिरेचि ।

८९ । एत्येधत्यूठ्सु ।

सम्भवे व्यभिचारे च सति विशेषणविशेष्यभावो भवति । तौ च सम्भव-व्यभिचारावेतावेव धातौ स्तः । नेतरत्रेत्याह तदेतदेज्ग्रहणमित्यादि । प्रष्ठौह इति । प्रष्ठं वहतीति च्छन्दसि सह इति (३।२।६३) वहश्चेति (३।२।६४) ण्विप्रत्ययः । वाह ऊठ्यूट् (६।४।१३२) संप्रसारणसंज्ञकः । संप्रसारणाच्चेति (६।१।१०८) परपूर्वत्वम् । ततो वृद्धिः । एत्येधत्योरेङि पररूपापवाद इति वृद्धिर्विधीयत इति प्रकृतेन सम्बन्धः । अथोमाङोश्चे (६।१।९) त्यस्याप्याङि पररूपापवादो वृद्धिः कस्मान्न भवति । नाप्राप्ते हि पररूप इयं वृद्धिरारभ्यत इति सा यथैङि पररूपं बाधते तथाङि पररूपमपि बाधेत । ततश्चेहापि स्यात् । आ इत एतः । उप एत उपेत इत्यत आह ओमाङोश्चेतदित्यादि । अत्रैव कारणमाह येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति (पा, ५८) । नाप्राप्त एङि पररूप इयं वृद्धिरारभ्यत इति युक्तं यत् तस्य बाधिका भवति । आङि पररूपे तु प्राप्ते चाप्राप्ते चैषा वृद्धिरारभ्यते । आइत एतः । प्रएतः प्रेतः परेत इत्यत्र प्राप्त आङि पररूपे । उप एति उपैतीति । अत्र त्वप्राप्ते । तस्मादेषा वृद्धिराङि पररूपत्वं न बाधते । पुरस्तादपवादा इत्यादिना परीहा-

रान्तरमाह। पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते (प, ६०) नोत्तरा-निति। इयञ्च वृद्धिः पुरस्तादपवादः। अस्याश्चेङि पररूपमेवानन्तरम्। अतस्तदेव तया बाध्यते। नाङि पररूपम्। तस्यानन्तरत्वात्। अचादि-त्यादि। वक्तव्येति। व्याख्येयेत्यर्थः। तत्रेदं व्याख्यानम्। उत्तरसूत्रे चकारोऽधिकविधानार्थः। तेनाक्षशब्दादूहिनीशब्दे परतो वृद्धिर्भविष्यतीति। एव मुत्तरत्रापि वक्तव्यशब्दस्यार्थो व्याख्यानमप्येवमेव वेदितव्यम्। अक्षाणामूहः। सोऽस्यास्तीति मत्वर्थीय इनिः। ऋन्नेभ्यो ङीबिति (४।१।५) ङीप्। अक्षौ-हिणी। स्वैरमिति। ईर गतौ। ईरणमीरः। भावे घञ्। स्वस्य ईरः स्वैरः। क्रियाविशेषणत्वात् स्वैरमिति वृत्तौ नपुंसकलिङ्गेन निर्देशः। क्रिया तु काचिदत्राध्याहर्त्तव्या। अथवा स्व ईरो यस्य कुलस्य तत् स्वैरं कुलम्। नपुंसकस्य कुलादेरन्यपदार्थत्वान्नपुंसकलिङ्गत्वम्। स्वैरीति। स्वमीरितुं शीलमस्येति। सुप्यजातौ णिनिस्ताच्छील्य इति णिनिः (३।२।७८)। ऊढ़ ऊढ़िरिति शब्दौ निष्ठाक्तिन्नन्तौ। प्रैष इति। इष गतिहिंसादानेषु। इषु इच्छाया मिति वा। आभ्यां प्रपूर्वाभ्यां यदा घञ् तदा प्रैषः। यदा तु ण्यत् तदा प्रैष्य इति। सुखार्त्त इति। कर्त्तृकरणे कृता बहुलमिति (२।१।३२) समासः।

## ९० । आटश्च ।

ऐक्षतेति। ईक्ष दर्शन इति लङ्। ऐक्षिष्टेति। लुङ्। ऐक्षिष्यत इति। लृङ्। औभ्मीदिति। उभ उम्भ पूरण इति लुङ्। इट्। अस्ति सिचोऽपृक्ते (७।३।९६) इतीट्। इट ईटीति (८।२।२८) सिचो लोपः। औब्जि-दिति। उब्ज आर्जवे। आर्ध्नोदिति। ऋधु वृद्धौ इति लङ्। स्वादिभ्यः श्नुरिति श्नुः (३।१।७३)। चकारोऽधिकविधानार्थ इति। नतु वृद्धेरनुकर्षणार्थः। तदनुवृत्तेः स्वरितत्वादेव सिद्धत्वादित्यभिप्रायः। अधिकविधानार्थं इत्यस्यार्थं वाक्यान्तरेण विस्पष्टीकर्त्तुमाह उस्योमाङोश्चेति। पररूपबाधनार्थं इति। उसि ओमि आङि च यत् पररूपं प्राप्नोति तद्बाधनार्थं इत्यर्थः। चकारेण हि द्विर्वृद्धि-विधानं विज्ञापयति। तत्र यद् द्वितीयं विधानं तद् बाधकबाधनार्थम्

भवति । तेनोस्यपदान्तादिति (६।१।९६) यत् पररूपं प्राप्नोति यच्चोमाङोश्चेति (६।१।९७) तदपि बाधित्वा वृद्धिरेव भवति । औस्त्रीयदौङ्कारीयदिति । उस्र-शब्दादोङ्कारशब्दाच्च सुप आत्मनः क्यजिति (३।१।८) क्यच् । क्यचि चेतीत्त्वम् (७।४।३३) । क्यजन्ताल्लुङ् । आट् । उस्यपदान्तादिति (६।१।६) पररूपे बाधके प्राप्ते चकारस्याधिकविधानार्थत्वाद्वृद्धिरेव भवति । औढीयदिति । ओढ़ा-शब्दात् क्यजन्ताल्लुङ् । आड़ागमे कृत ओमाङोश्चेति (६।१।९५) पररूपे बाधके प्राप्ते चकारस्याधिकविधानार्थत्वाद्वृद्धिरेव भवति ।

## ९१ । उपसर्गादृति धातौ ।

उपार्छतीति । ऋछ गतीन्द्रियप्रलयमूर्त्तिभावेषु । प्रगता ऋच्छका अस्माद्देशात् प्रच्छको देश इति । अत्र यं प्रति क्रियायुक्ताः प्रादय स्तं प्रति गत्युपसर्गसंज्ञका भवन्तीति गमिं प्रति प्रशब्दो गतुरपसर्गसंज्ञकः । न ऋच्छतिं प्रतीति भवति प्रत्युदाहरणमिदम् । वा सुप्यापिशलेरिति (६।१।९२) विकल्पः स्यादिति । एतेनोत्तरार्थतां तपरकरणस्य दर्शयति । अथ धातुग्रहणं किमर्थम् ? यावता सम्बन्धिशब्दा हि नियतं प्रतियोगिन मुपस्थापयन्ति । तद यथा पुत्रादिशब्दाः । उपसर्गश्चायं धात्वपेक्षत्वात् सम्बन्धिशब्दः । तत्रोपसर्गग्रहणादेव धातुग्रहणं सिध्यत्यत आह उपसर्गग्रहणादेवेत्यादि । यदि धातुग्रहणं न क्रियेत तदा परार्च्छतीत्यत्र ऋत्यक इति (६।१।१२) परत्वाच्छा-कल्यस्य मतेन प्रकृतिवद्भावः स्यात् । तस्मात् तस्य शाकल्यस्य प्रकृतिवद्भावस्य निवृत्त्यर्थं धातुग्रहणं क्रियते । कथं पुनः क्रियमाणे धातुग्रहणे शाकल्यस्य प्रकृतिवद्भावनिवृत्तिर्लभ्यते ? योगविभागकरणात् । सति हि धातुग्रहणे योगविभागः क्रियते । उपसर्गादृति वृद्धिर्भवतीति । ततो धाताविति । इहोपसर्गादिति वर्त्तते । ततो द्वितीयो योगो बाधकबाधनार्थो विज्ञायते । अथोपसर्गाच्छन्दसि धात्वर्थ इत्यत्र (५।१।११२) यथा प्राद्युपलक्षणार्थमुपसर्ग-ग्रहणं विज्ञायते तथेहापि कस्मान्न विज्ञायेत ? अशक्यत्वात् । उपसर्गा-च्छन्दसि धात्वर्थ इत्यत्र हि धातोरुपस्थानं न सम्भवतीति युक्तं प्राद्युपलक्षणार्थं मुपसर्गग्रहणम् । इह हि धातोरुपस्थानं सम्भवतीत्ययुक्तम् ।

## ९२। वा सुप्यापिशलेः।

धातावित्यनुवर्त्तते। सुपीति चोच्यते। नच सुबन्तो धातुरस्ति। तत्र सामर्थ्याद्धात्वेकदेशे वर्त्तमानं सुपीत्येतदिह विशेषणं विज्ञायत इत्याह सुबन्तावयवे धातावित्यादि। उपाल्कारीयतीति। कथं पुनर्ऋतीत्युच्यमाने ऌकारे वृद्धिः प्रवर्त्तत इत्याह ऋकारऌकारयो रित्यादि। ऋकारऌकारयोः सवर्णसंज्ञा विहितेति ऋकारो गृह्यमाण ऌकारमपि ग्राहयतीति तत्रापि वृद्धिर्भवति। आपिशलिग्रहणं पूजार्थ मिति। अथ विकल्पार्थं कस्मान्न भवतीत्याह वेत्युच्यत एवेति। यद्यप्याचार्यग्रहणेनैव पूजा विकल्पश्चोभयं सम्पद्यते तथाप्याचार्य्यग्रहणस्य प्राधान्येन पूजां ख्यापयितुं वाग्रहणं कृतमिति भावः।

## ९३। औतोऽम्शसोः।

गाम्पश्येति। कथं पुनरेतदुदाहृतम्? यावता गोतो णिदिति णित्त्वे (७।१।९०) सति परत्वाद् वृद्ध्यात्र भवितव्यमित्यत आह द्योशब्दोऽप्योकारान्त इत्यादि। तपरकरणं हि वर्णनिर्देशेषु प्रसिद्ध मिति। गोत इति तपरनिर्देश ओकारान्तोपलक्षणार्थो विज्ञायते। ततश्च द्योशब्दादपि परं सर्वनामस्थानं णिद्भवति। यद्येवं तत् किमिति वृद्धिर्नात्र भवतीत्याह तेनेत्यादि। यदि द्योशब्दात् परस्य सर्वनामस्थानस्य णित्त्वं न स्यात् ततो द्यां पश्येत्यत्र सावकाशमात्त्वं गां पश्येत्यत्र परत्वाद् वृद्ध्या बाध्येत। यदि तु द्योशब्दादपि परं सर्वनामस्थानं णिद्भवतीति तदा द्यां पश्येत्यत्र वृद्धिः प्राप्नोत्येव। ततो नाप्राप्तायां वृद्धाविदमात्त्वं विधीयमान मनवकाशत्वाद् वृद्धिं बाधते। ततश्च युक्तमेव गां पश्येत्येतदुदाहरणम्। अथेहाप्यचिनवमसुनवमित्यत्र चिनोतेः सुनोतेश्च लङि मिपि विकरणस्य गुणे कृते मिप स्तस्थमिपामित्यादिनाम्भावे (३।४।१०१) चौकारस्यात्त्वं कस्मान्न भवतीत्याह अमीत्यादि। शसा साहचर्य्यात् सुबविकाराद्वा सुप एवाम इदं ग्रहणम्। अतो नात्राऽऽत्त्वस्य प्रसङ्गः। चित्रगुं पश्येत्यत्र तु ह्रस्वत्वे कृत ओकाराभावादनल्विधाविति (१।१।५६) स्थानिवद्भावप्रतिषेधादात्त्वं न भवति।

## ६४ । एङि पररूपम् ।

उपेलयतीति । इल प्रेरणे । चुरादिणिच् । प्रोखयतीति । उख नखे- त्यखिर्गत्यर्थो भ्वादौ पठ्यते । यदि वा सुपीत्यनुवर्त्तयन्त्येवं सति तेन सहास्यैकवाक्यतायां सुब्धातोरेवानेन विकल्पेन पररूपं क्रियते । असुपि तु पररूपं न स्यादेवेत्याह नचेत्यादि । एकवाक्यत्वे हि सत्येष दोषः स्यात् । न चात्रैकवाक्यता । किं तर्हि ? वाक्यभेदः । तेन तदिहानुवर्त्त- मानं सुब्धातावेव विकल्पं करोति । इतरत्र तु नित्यमेव पररूपं प्रवर्त्तते । तत्रावर्णान्तादुपसर्गादसुबन्तावयवे धाताविङादौ परपूर्वयोः पररूपमेकादेशो भवतीत्येकं वाक्यम् । अवर्णान्तादुपसर्गात् सुबन्तावयवे धाताविङादौ पूर्वपरयोर्वा पररूप मेकादेशो भवतीति द्वितीयम् । तत्र पूर्वेण वाक्येना- सुबन्तावयवे धातावुपेलयतीत्यादौ नित्यं पररूपं विधीयते । द्वितीयेन तु सुबन्तावयवे धातावुपेङ्कीयतीत्येवमादौ विकल्पेन पररूपं विधीयते । वाक्यभेदस्त्वेङि पररूपमिति तन्त्रेण सूत्रद्वयोच्चारणाल्लभ्यते । सूत्रद्वये तूच्चार्य्यमाणे सत्येक एव वा सुप्यापिशलेरितित्यतदनुवर्त्तमानमपि (६।१।९२) लक्ष्यानुरोधान्नाभिसम्बध्यते । द्वितीये तु सम्बध्यत एव । तेन वाक्यद्वयं पूर्वोक्तं सम्पद्यते । वक्तव्यमिति । व्याख्येय मित्यर्थः । तत्रेदं व्याख्यानम् । उत्तरसूत्रे चकारोऽधिकविधानार्थः । तेन शकन्ध्वादिषु पररूपं भविष्यतीति । उत्तरत्रापि वक्तव्यशब्दस्यायमर्थो व्याख्यानञ्च तदेव वेदितव्यम् । एवे चानियोग इति । नियोगो नियोजनम् । व्यापारणमित्यर्थः । न नियोगो- ऽनियोगोऽनवक्लृप्तिः । तत्रैवशब्दे पररूपं वेदितव्यम् । एवशब्दोऽनियमे वर्त्तते । यदा तमेव केवलं नियमं व्यापारेणाविशिष्टं ब्रूते तदा पररूपं भवति । यदा तु व्यापारेण विशिष्टं तदा वृद्धिरेव । बिम्बोष्ठीति । नासिकोदरौष्ठेति (४।१।५५) ङीष् । तिष्ठ देवदत्तौष्ठं पश्येति वाक्य मेतत् । नतु समासः । देवदत्तशब्दादेङ्- ह्रस्वात् सम्बुद्धेरिति (६।१।६९) सोर्लोपः ।

## ६५ । ओमाङोश्च ।

अद्योढेति । अद्य ओढा । ननु चाद्गुण (६।१।८७) इत्यनेनाङो निवर्त्ति-

तत्वादिदमाङ उदाहरणं न युज्यते। आङ्माङोरेकादेशस्वाङ्ग्रहणेन ग्रह्यत इत्यदोषः। पूर्वमेव ह्येदमुक्तं द्वयोः षष्ठीनिर्दिष्टयोः स्थाने यो भवति लभते ऽसावन्यतरव्यपदेशमिति। किमर्थं पुनराङो ग्रहणं यावता प्रागेवाङः पूर्वेण सहाकः सवर्णे दीर्घ इति (६।१।१०१) दीर्घत्वे कृते ततः परेण सहादगुण (६।१।८७) इति गुणे चाद्योढ़ त्यादि सिद्धमेव। न सिद्ध्यति। यतो धातूपसर्गयोः कार्य्यमन्तरङ्गमिति पूर्वमादगुणेन भवितव्यम्। तथाच सति वृद्धिः स्यात्। अत आङोऽपि ग्रहणं कर्त्तव्यम्। इह त्वकः सवर्णे दीर्घत्वं बाध्यत इति। अस्य विधेर्विशेषविहितत्वात्। अकः सवर्णे दीर्घस्य च सामान्यविहितत्वात्। विशेषविहितोऽपि सामान्यविहितस्य बाधको भवतीति प्रतिपादितमेतत्।

## ९६। उस्यपदान्तात्।

भिन्द्युरिति। भिदेर्लिङ्। झि। यासुट्। झेर्जुसिति (३।४।१०८) जुस्। श्नम्। श्नसोरल्लोप इत्यकारलोपः (६।४।१११)। लिङः सलोपोऽनन्त्यस्येति (३।४।७९) सकारलोपः। भिन्द्या उसिति स्थिते ऽनेन पररूपत्वम्। अदुरिति। ददाते लुङ्। झि। आत इति (३।४।११०) झेर्जुस्। गातिस्थेति (२।४।७७) सिचो लुक्। अदा उसिति स्थिते ऽनेन पररूपत्वम्। कोस्रा कोषितेति। ननु चात्रैकस्मिन् प्रत्युदाहरणे ऽर्थवद्ग्रहणे नानर्थकस्येत्यनया (प, १५) परिभाषयैव न भविष्यति। उस्राशब्दो हि समुदायोऽर्थवान्। न तूसित्येष तदवयवः। द्वितीये तु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं (प, ११४) नतु लाक्षणिकस्येत्यनया परिभाषयाऽपि न भविष्यति। लाक्षणिको हि तत्रोस्। तथाहि वसेर्निष्ठायां वसतिक्षुधोरिट् (७।१।५२)। यजादित्वात् संप्रसारणे कृत उषितेति। तत्र पररूपं न सम्पद्यते। तत् किमपदान्तादित्यनेन? एवं तर्ह्येतदतिरिच्यमाणमपदान्तग्रहणमर्थवदनर्थवत्त्वादिकं विशेषमनपेक्ष्योस्मात्रे पररूपं भवतीत्यमुमर्थं द्योतयति। तेन नानर्थक उस्यपदान्तादितीत्यतद् भवति। भिन्द्युरित्यत्र हि यासुडादिः समुदायोऽर्थवान्। नतु तदवयव उस्। लाक्षणिकेऽपि भवतीति बभुषः

पश्येति । भा दीप्तौ । लिटः क्वसुः । शस् । वसोः संप्रसारणमिति (६।४।१३१) संप्रसारणम् । संप्रसारणाच्चेति पूर्वरूपम् (६।१।१०८) । बभा उस् अस् इति स्थिते ऽनेन पररूपत्वम् । एतत् सार्वधातुकपक्ष उदाहरणं वेदितव्यम् । आर्धधातुकपक्षे ह्याकारलोपेनैव सिद्धम् । सानुबन्धकेऽपि भवति । अदुरधुरिति । क्व तर्हि स्यात् ? बभुरिति । ननु चानर्थक्ये सत्यपदान्तग्रहणस्यायमर्थः परिकल्प्येत । अस्ति चास्योक्तसूत्रे प्रयोजनम् । किं तत् ? अपदान्ताद् यथा स्यादिह मा भूदिति दण्डाग्रमिति । नैतदस्ति । यद्येतदेव प्रयोजनमभिमतं स्यात् तदोत्तरसूत्र एवेदं कुर्य्यात् । इह करणात् तु यथोक्तार्थप्रतिपादनपरतैव तस्यावगम्यते । अधिकाराच्चोत्तरार्थतापि भवत्येव । कोषितेत्यत्र वसतिक्षुधोरितीट् (१।२।५२) । शासिवसिघसीनाञ्चेति (८।३।६०) षत्वम् । तस्य चासिद्धत्वात् पररूपत्वप्राप्तिर्वेदितव्या । चक्रुरिति । कृञो लिट्यसि रूपम् । अबिभयुरिति । ञिभी भये । लङ् । शप् । जुहोत्यादिभ्यः श्लुरिति (२।४।७५) श्लुः । द्विर्वचनम् । सिजभ्यस्तविदिभ्यश्चेति (३।४।१०९) झेर्जुस् । जुसि चेति (७।३।८३) गुणः ।

## ९७ । अतो गुणे ।

पचे यज इत्यत्र वृद्धिरेचीति (६।१।८८) वृद्धिः प्राप्नोति । तेन तस्या एव पररूपत्वमपवाद इत्यभिप्रायः । आद्गुण इत्यत (६।१।८७) आदित्यनुवर्त्तत एवेति मन्यमान आह अत इति किमिति ? दीर्घनिवृत्त्यर्थं इह तपरस्याकारस्य निर्देशः क्रियत इति दर्शयितुमाह यान्ति वान्तीति । अपच इति । लङ्यात्मनेपदोत्तमपुरुषैकवचन इट् । अत्राद्गुणः (६।१ ८७) । पररूपे तु सति स गुणो न लभ्यते ।

## ९८ । अव्यक्तानुकरणस्यात इतौ ।

अव्यक्तमपरिस्फुटवर्णमिति । अपरिस्फुटा अव्यक्ता अनभिव्यक्ता अकारादयो वर्णा यत्र तत् तथोक्तम् । यद्येवं तदनुकरणेनापि तथाविधेन भवितव्यम् । सदृशं ह्यनुकरणं भवति । नत्वसदृशम् । ततश्चानुकार्य्य इवानुकरणेऽपि नैवाच्छब्दोऽवधार्य्यते । अनवधारितस्य च कथं शक्यते

परत्वं विधातु मित्यत आह तदनुकरण मित्यादि। यदि तर्हि तदनुकरणं परिस्फुटवर्ण मेवं सति तत् तस्यानुकरण मेव न स्यात्। नहि विसदृशमनुकरणं भवति। तेनानुकर्त्तुमशक्यत्वात्। अतिप्रसङ्गो वेत्यत आह केनचिदित्यादि। तत् पुनः सादृश्यं ध्वने स्तुल्यता। उभयोरपि तयोः समानो ध्वनिः। तेन यद्यप्यनुकरणे वर्णविशेषा अवधार्यन्ते तथापि ध्वनेः समानतया तदव्यक्तमप्यनुकार्य्यमनुकरोति। पटितीति। ननु चालोऽन्त्यस्येत्यनया (१।१।५२) परिभाषयान्त्यस्य भवितव्यम्। तत् कथं सर्व्वस्यैवाच्छब्दस्य भवति? नैष दोषः। नानर्थकेऽलोऽन्त्यविधिरिति (प, १०५)। अथवा यदयं नाम्रेड़ितस्यान्त्यस्य तु (६।१।९९) वेत्यत्रान्त्यग्रहणं करोति ततोऽवसीयते नात्रालोऽन्त्यस्यैषा परिभाषा प्रवर्त्तत इति। कथं पुनः पररूपे कृते तदनुकार्य्यस्य प्रतिपादनं भवति? कुतश्च न भविष्यति? न्यूनत्वात्। नैष दोषः। यथैव हि व्यक्तवर्णमपि तस्य केनचित् साधर्म्येण प्रतिपादकं भवति तथा न्यूनमपि भविष्यतीति। अनेकाच इति वक्तव्यमिति। अनेकाचोऽव्यक्तानुकरणस्य पररूपं भवतीत्येतदर्थरूपं व्याख्येय मित्यर्थः। तत्रेदं व्याख्यानम्। उत्तरसूत्रे वाग्रहणमुभयोरपि योगयोः शेषः। सा च व्यवस्थितविभाषा विज्ञायते। तेनानेकाच एव भविष्यति। न त्वेकाच इति। कथमिति। तकारान्त मेतदव्यक्तमनुकरणमिति मन्यमानस्य प्रश्नः।

## ९९। नाम्रेड़ितस्यान्त्यस्य तु वा।

यदा त्वित्यादि। यदा पटत्पटदित्येष शब्दः समुदाय एवानुकरणं तदा तस्याविरक्तत्वात् परस्यावयवस्य पटच्छब्दस्याम्रेड़ितसंज्ञा नास्तीति पूर्वेण पररूपं भवत्येव।

## १००। नित्यमाम्रेड़ितं डाचि।

डाच्परमिति। डाच् परो यस्मात् तत् तथोक्तम्। डाचि विहित इत्यादि। विहित इति। हि गतावित्यस्य विपूर्वस्य रूपमिदम्। अस्य च सर्वे गत्यर्था ज्ञानार्था इति विहिते विज्ञाते बुद्धिस्थ एवेत्येषोऽर्थो वेदितव्यः। तेनायमर्थो भवति डाचि विहिते बुद्धिस्थविषयभूत एवानुत्पन्ने डाचि बहुलं

द्वे इति (८।१।१२,वा) द्विर्वचन मिति। अवश्यञ्चैतदेवं विज्ञेयम्। अन्यथा हि यदि डाचि विहिते कृत इत्येषोऽर्थः स्यात् तदा डाचि परभूते डाचि बहुलं द्वे इत्यनेन (८।१।१२, वा) द्विर्वचनं विधीयेत। तथाच यद्दक्ष्यति डाचीति विषय-सप्तमीयमिति तद् विरुध्यते। किं पुनः कारणं डाचि विहिते बुद्धिविषयीभूत एवानुत्पन्ने द्विर्वचनं विधीयत इत्याह तच्चेत्यादि। चशब्दो हेतौ। यस्माद् द्विर्वचनं टिलोपात् पूर्वमिष्यते तस्माड् डाचि विहिते बुद्धिस्थे विषयभूते एवानुत्पन्ने द्विर्वचनं विधीयते। न परभूते। एवं तट्टिलोपात् पूर्वं सिध्यति। नान्यथा। यदि हि डाचि परभूते द्विर्वचनं न क्रियते तदान्तरङ्गत्वाट्टि-लोपे कृते पश्चात्तकारान्तस्य द्विर्वचनमापद्येत। तथाच पटपटेति न सिध्येत्। नच शक्यते वक्तुं नित्यमाम्रेडितं डाचीत्येतद्वचनं ज्ञापकं पूर्वं द्विर्वचनं भवति ततष्टिलोप इति। यस्मात् पटदित्यादिकं टिलोपे कृते द्विरुच्यमानं यच्छब्दान्तं भवति तदर्थमेवेदं स्यात्। पटपटा करोतीति। अथवा डाचीति डाचि विहिते सति परसप्तम्यामदोष इति मन्यमानेन डाचि विहित इत्युक्तम्। डाचि विहिते सति डाचि बहुलं द्वे इत्यनेनोपसंख्यानेन (८ १।१२, वा) द्विर्वचनम्। ननु चैवं सति सर्वविधिभ्यो लोपविधिर्बलीयानिति (प, १००) द्विर्वचनात् प्राक् टिलोपः स्यात्। तथाचानिष्टं रूपं प्रसज्येतेत्यत आह तच्चेत्यादि। कथं पुनष्टिलोपात् पूर्वमिष्यमाणमेतल्लभ्यते। बहुलग्रहणात्। अस्मिंस्तु व्याख्याने विहित इति दधातेरेव तद् रूपं वेदितव्यम्।

## १०१। अकः सवर्णे दीर्घः।

अग्नय इति। परत्वाद् घेर्ङितीति (७।१।१११) गुणे कृते ऽगभावादत्र न भवति। दध्यत्रेति। ननु च यणादेशोऽत्र बाधको भविष्यति। तत् किमेतन्नि-वृत्त्यर्थेन सवर्णग्रहणेन? इहापि तर्हि बाधकः स्याद् दधीन्द्रो मधूष्णमिति। तस्माद् विषयविभागार्थं सवर्णग्रहणं कर्त्तव्यम्। कुमारी शेत इति। अत्रेचुय-शास्तालव्या इति। विवृतं करणमूष्मणां स्वराणाञ्चेतीकारस्य सवर्णः शकारो यद्यपि भवति तथाप्यज्ग्रहणानुवृत्तेर्न भवति। न च सावर्ण्यमप्यत्र नास्ति।

नाज्झलौ (१।१।१०) विति प्रतिषेधादित्यत आह नाज्झलावित्यत्रेत्यादि। यदि नाज्झलावित्य (१।१।१०) त्राणुदित् सवर्णस्य चाप्रत्यय (१।१।६९) इत्येतद् ग्रहणकशास्त्रमभिनिर्वृत्तं स्याद् एवमिकारो गृह्यमाण ईकारस्यापि ग्राहको भवति। ततश्च सवर्णत्वमीकारशकारयोः प्रतिषिध्येत। न च नाज्झलावित्यत्र (१।१।१०) प्रतिषेधे कर्त्तव्ये ग्रहणकशास्त्रमभिनिर्वृत्तम्। तस्य हि शास्त्रस्य सवर्णसंज्ञाङ्गं निमित्तम्। ततो यावत् सा न प्रवर्त्तते तावदङ्गवैकल्याद् ग्रहणकशास्त्रमनभिनिर्वृत्तम्। एवं सवर्णसंज्ञापि यावदपवादो नाभिनिर्वृत्तो भवति तावत् क्व मया प्रवर्त्तितव्यमिति स्वविषयमजानाना न प्रवर्त्तते। ततो नाज्झलावित्य ( १।१।१० ) स्यापवादस्यानभिनिर्वृत्तत्वात् सवर्णसंज्ञा न प्रवर्त्तते। तेनाङ्गवैकल्याद् ग्रहणकशास्त्रमपरिनिष्पन्नम्। अतोऽकः सवर्णा गृह्यन्ते। तेनागृहीतसवर्णानामेव प्रत्याहारसन्निविष्टानामयं प्रतिषेधः। न चायमीकारोऽत्तु सन्निविष्ट इति नासौ नाज्झलावित्याजिति ( १।१।१० ) प्रत्याहारग्रहणेन गृह्यते। तेन सवर्णत्वमीकारशकारयोरप्रतिषिद्धम्। होतृ ऌकारो होतॄकार इति। कथं पुनरत्र दीर्घत्वम्? यावता ऋकारॡकारयोर्भिन्नस्थानत्वात् सवर्णसंज्ञा नास्तीत्यत आह ऋकारऌकारयोः सवर्णसंज्ञाविधिरुक्त इति। ननु च ऋकारऌकारसमुदायोऽत्र स्थानीति तस्यैव योऽन्तरतमस्तेनैव युक्तमादेशेन भवितुम्। न च ऋकारस्तस्यान्तरतमस्तत् कथं स भवतीत्यत आह दीर्घपक्षे त्वित्यादि। समुदायान्तरतमस्याभावादिति। ऋकारऌकारसमुदायोऽत्र स्थानी। तस्य चान्तरतमो दीर्घो न सम्भवतीत्यवयवस्य योऽन्तरतमस्तेनैव युक्तमादेशेन भवितुम्। तत्रापि ॡकारस्य दीर्घो न सम्भवतीति ऋकारस्य योऽन्तरतमो दीर्घः स एव ॠकारो भवति।

## १०२। प्रथमयोः पूर्वसवर्णः।

प्रथमशब्दोऽयं सन्निवेशविशेषापेक्षेऽभिधेये वर्त्तते। परेष्वभिसमीक्षितेषु यस्मात् पूर्वो नास्ति स प्रथमशब्दाभिधेयः। इह च प्रथमयोरिति सामान्येन निर्देशान् न ज्ञायते कयोः प्रथमयोरिदं ग्रहणमित्यतस्तत्परिज्ञानायाह

प्रथमाशब्द इत्यादि। प्रथमाशब्दोऽयमिह शास्त्रे विभक्तिविशेषे रूढ़ः सुपां यदाद्यन्त्रिकं तत्र प्रसिद्धः। तथाहि सपूर्वयोः प्रथमयोर्विभाषा (८।१।२६) सप्तमीपञ्चमीप्रथमाभ्य (५।३।२७) इत्येवमादिषु निर्देशेषु प्रथमाशब्देन स एव विभक्तिविशेषो निर्दिष्टः। तस्माद् रूढ़िशब्दत्वादिह प्रथमाशब्दो विभक्ति-विशेषे वर्त्तत इति विज्ञायते। ननु च स्त्रीलिङ्गो यः प्रथमाशब्दः स इह शास्त्रे विभक्तिविशेषे रूढ़ः। अस्य च स्त्रीलिङ्गतैव सन्दिग्धा। नैतदस्ति। प्रथम-शब्दोपादानादेव स्त्रीलिङ्गोऽयमुपात्त इत्यवसीयते। यदि हि पुंलिङ्गस्येद-मुपादानं स्यादेवं सति प्रत्ययग्रहणमेव स्यात्। यदि च प्रत्ययग्रहणमभीष्टं स्यात् तदौजसोरित्येवं ब्रूयात्। न चैवमुच्यमाने द्वितीयासम्बन्धिनोऽप्यौ-कारस्य ग्रहणप्रसङ्गः। इह जसा साहचर्य्यात् प्रथमासम्बन्धिन एवौकारस्य ग्रहणं विज्ञास्यते। तस्मात् स्त्रीलिङ्गस्येदं ग्रहणमित्यसन्दिग्धमेतत्। ननु च यदि प्रथमाशब्दोऽयमिह शास्त्रे विभक्तिविशेषे रूढ़ एवं सति विभक्तिविशेष एक इत्येकवचनेनैव भवितव्यम्। तत् कथं प्रथमयोरिति द्विवचनमित्यत आह तत्साहचर्य्यादित्यादि। तेन प्रथमाख्येन विभक्तिविशेषेण साहचर्य्याद् द्वितीयापि विभक्तिः प्रथमेत्युक्ता। ततश्च द्वित्वाद् द्विवचनमेव न्याय्यम्। तदेतेन प्रथमयोरिति विभक्त्योरिदं ग्रहणं न प्रत्यययोरिति दर्शयति। वृक्षाः प्लक्षा इति। कथमिदमुदाहृतम्? यावताऽतो गुण (६।१।९७) इत्यनेन पररूपेणात्र भवितव्यम्। तद्धि नाप्राप्ते विभक्त्यन्तर आरभ्यमाणं यथाऽकः सवर्णे दीर्घत्वं बाधते तथा प्रथमयोः पूर्वसवर्ण इति दीर्घत्वमपि बाधेतेत्यत आह अतो गुण इत्यादि। अत्रैवोपपत्तिमाह पुरस्तादित्यादि। इतिकरणो हेतौ। यस्मात् पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति तस्मादतो (प, ६०) गुणे पररूपमकः सवर्णे दीर्घ इति (६।१।१०) दीर्घत्वं बाधते। तस्यैव तदनन्तरत्वात्। प्रथमयोः पूर्वसवर्ण इति दीर्घत्वन्तु न बाध्यते विपर्य्ययात्। अग्नी इत्यत्रेत्यादि। असति पूर्वग्रहणे अग्नी इत्यत्र पूर्वपरसमुदायः स्थानी। तस्य चान्तरतमो दीर्घ आदेशो नास्तीत्यवयवान्तरतमो य स्तेन भवितव्यम्। अवयवौ चात्र द्वौ पूर्वःपरश्चेति। तत्र च पूर्वस्यैव भवितव्यमिति नियमो न लभ्यते नियमकरणाभावादिति तयोः पर्य्यायेण भवनादेशः

पक्षे परसवर्णो वा स्यात्। अतस्तन्निवृत्त्यर्थं पूर्वग्रहणम्। सवर्णग्रहणन्तु विप्रतिषेधनिरासार्थम्। असति हि तस्मिन् दीर्घ इत्यनुवर्त्तमाने ऽग्नी इत्यत्र विप्रतिषिद्धत्वमापद्येत यदि पूर्वो न दीर्घः। अथ दीर्घो न पूर्वः। यदि च पूर्वशब्देन पूर्वाकृति रुच्येत दीर्घादनुवृत्तेः पूर्वस्येति षष्ठी वा क्रियेत। तथाच सवर्णग्रहणं शक्यमकर्त्तुम्। क्रियमाणं वा तत् सुखप्रतिपत्त्यर्थं वेदितव्यम्। दीर्घग्रहणं त्रिमात्रे स्थानिनीत्यादि। अग्नि औ इति स्थिते ऽसति दीर्घग्रहण एकादेशः क्रियमाणः स्थानिन आन्तरतम्यात् त्रिमात्रः प्राप्नोति। स्थानिन स्त्रिमात्रकत्वात्। तथाह्यग्निशब्दस्येकार एकमात्रः। औकारो द्विमात्र इत्येतत्समुदायात्मकश्चात्र स्थानी। तस्मात् त्रिमात्रे स्थानिन्यन्तरतमस्त्रिमात्र आदेशो मा भूदित्येवमर्थं दीर्घग्रहणम्। दीर्घग्रहणे हि सति तेनादेशे विशिष्यमाणे त्रिमात्रस्यादेशप्रसङ्गो न भवति। द्विमात्रस्यैव दीर्घसंज्ञाविधानात्।

## १०३। तस्माच्छसो नः पुंसि।

तस्मात् पूर्वसवर्णदीर्घादिति। एतेन तस्मादित्यनेनानन्तरः पूर्वसवर्णदीर्घो निर्दिष्ट इति दर्शयति। शसोऽवयवस्य सकारस्येति। अनेन शस इति सकारावयवापेक्षयावयवषष्ठीति पुंसीति प्रत्ययार्थस्येदं वा विशेषणम्। पुंसाश्चेद् बहुत्वे शस् उत्पन्न इति। प्रकृतिविशेषणं वा। पुंशब्दाच्चेत् परः शसिति। तत्र यदा प्रत्ययार्थस्य विशेषणं तदा सर्व एत इत्यादिरयं पूर्वपक्षः। वृक्षान् अग्नीनित्यादिकं युक्तमुदाहरणम्। पुंसां बहुत्वेऽत्र शस उत्पन्नत्वात्। षण्ढकान् पण्डकानित्येतदुदाहरणद्वयमयुक्तम्। नह्यत्र पुंसां बहुत्वे शस् उत्पन्नः। किं तर्हि? नपुंसकानामित्यत आह सर्व एत इत्यादि। सर्वग्रहणेन न केवलं वृक्षादयः शब्दाः पुंलिङ्गेन सामान्यविशेषेण विशिष्टं स्वार्थं प्रतिपादयन्त्यपि तु षण्ढकपण्डकशब्दावपीति दर्शयति। स्वार्थः पुनरेषां पुंस्त्वेन सामान्यविशेषेणावच्छिन्नं वृक्षादिकं द्रव्यम्। तदेवं यतः सर्व एते पुंलिङ्गविशिष्टार्थाभिधायिनस्तेनैतेभ्य उत्पद्यमानः शस् पुंसामेव बहुत्वे उत्पद्यत इति पूर्वपक्षो निराकृतो

भवति । यदा तु प्रकृतिविशेषणं तदायं पूर्वपक्षः । वृक्षानित्यादिक-मित्युदाहरणमुपपद्यते । तत्र हि पुंशब्दात् परः शस् भवति । स्थूरान् अररकानितीदमुदाहरणद्वयं नोपपद्यते । तथाहि स्थूराया अपत्यानि अररकाया अपत्यानीति गर्गादिभ्यो यञिति (४।१।१०५) यञ् । तस्य यञञोश्चेति (२।४।६४) लुकि कृते स्त्रीप्रत्ययस्यापि लुक् तद्धितलुकीति (१।२।४९) लुक् । स्थूर अररक इत्येताभ्यां स्त्रीशब्दाभ्यामुत्पन्नोऽत्र शस् स्त्रीशब्दाभ्यां परो भवति । न नपुंसकशब्दाभ्यामित्यत आह सर्वं एत इत्यादि । प्रकृतिरेव ह्यत्र तद्धितलुगन्ता प्रत्ययार्थे वर्त्तते । स च प्रत्ययार्थः पुंलिङ्गेन विशिष्टः । तस्मान्न केवलं वृक्षादयः शब्दाः पुंलिङ्गेन विशिष्टं वृक्षादिकं स्वार्थं प्रतिपादन्त्यपि तु स्थूरारकशब्दावपीति पूर्वपक्षः प्रतिक्षिप्तो भवति । अयं तर्हि प्रत्ययार्थविशेषणपक्षे दोषः । चञ्चेव चञ्चाः पुमांस इति । इवे प्रतिकृतौ कन् (५।३।९६) । लुम् मनुष्य (५।३।९८) इति लुप् । यदा लुबन्ताच्चञ्चा-शब्दात् पुंसां बहुत्वे शस् उत्पद्यते तदा चञ्चाःपश्येत्यत्र नत्वं प्राप्नोतीत्यत आह इह त्वित्यादि । नैवं ह्यत्र पुंबहुत्वे शस् उत्पन्नः । किं तर्हि ? स्त्रीबहुत्वे । पुंसोऽपि युक्तवद्भावेन स्त्रीत्वातिदेशात् । ततोऽत्र नत्वं न भवति । दीर्घग्रहणं प्रकृतम् । तस्य चेहार्थवशेन पञ्चम्यन्त-स्योपस्थाने सत्यन्तरेणापि तस्मादित्येतद् वचनं दीर्घादेवोत्तरस्य शसो नत्वं भविष्यतीत्यभिप्रायेणाह तस्मादिति । किमिति । एतान् गास्वरतः पश्येति । औतोम्शसो (६।१।९३) रित्यात्वम् । यद्यनन्तरदीर्घप्रत्यवमर्शी तच्छब्देनोपा-दीयेत तदाऽविशेषेण दीर्घमात्रान्नत्वं विधीयमानमेतान् गास्वरतः पश्येत्येत्रापि स्यात् । भवति ह्ययमाकारो दीर्घः । तस्मात् तच्छब्दे तु न दोषः । न ह्ययमनन्तरसूत्रविहित आकारः ।

## १०४ । नादिचि ।

खट्वे इति । औङ आप इति (७।१।१८) शीभावः । कुण्डे इति । अत्रापि नपुंसकाच्चेति (७।१।१९) । तत्र कृत आद्गुण इति ( ६।१।८७ ) गुणः ।

## १०५। दीर्घाज्जसि च।

आदिति नानुवर्त्तते। तेनायं दीर्घमात्रात् पूर्वसवर्णस्य प्रतिषेधः। अथ खट्वा इत्यत्र कथं प्रथमयोः पूर्वसवर्ण इति दीर्घत्वम्। नैव ह्यत्र प्रथमयोः पूर्वसवर्ण इति (६।१।१०२) दीर्घत्वम्। किं तर्हि तस्मिन् प्रतिषिद्धे ऽकः सवर्णे दीर्घ इति (६।१।१०१) दीर्घत्वम्। दीर्घादिति वचनं स्पष्टार्थम्। ननु चासति तस्मिन् वृक्षा इत्यत्रापि स्यात्। नैतदस्ति। यदि ह्यत्रापि स्यात् तदा पूर्वसूत्र इचीत्येतदपार्थकं स्यात्। इह तर्हि स्याद् अग्नय इति। इष्टत्वाददोषः। अत्र हि परत्वाज्जसि चेति (७।३।१०९) गुण एव भवति। उत्तरार्थं तर्हि स्यात्। वा छन्दसीति (६।१।१०६) दीर्घाद् यथा स्यात्। नैतदस्ति। वाग्रहणस्य तत्र व्यवस्थितविभाषाविज्ञानात्। दीर्घादेव भविष्यति। न ह्रस्वात्। जसि चेत्येतदपि (७।३।१०९) स्पष्टार्थमेव। ननुचासति जसि चेत्येतस्मिन् (७।३।१०९) युवतीः पश्य पद्धतीः पश्येत्यादौ शस्यपि प्रतिषेधः स्यात्। ज्ञापकान्न भविष्यति। यदयं तस्माच्छसो नः पुंसीति (६।१।१०३) पुंग्रहणं करोति तज् ज्ञापयति शसि प्रतिषेधो न भवतीति। तद्धि नपुंसके पूर्वसवर्णदीर्घत्वासंभवात् स्त्रीनिवृत्त्यर्थमेव क्रियते। यदि च स्त्रियामप्ययं युवतीः पश्येत्यादौ प्रतिषेधः स्यात् तदा पूर्वसवर्णदीर्घत्वाभावान् नत्वस्य प्राप्तिरेव नास्तीति किं पुंग्रहणेन? उत्तरार्थं तर्हि जस्ग्रहणम्। नैतदस्ति। वाग्रहणस्य तत्र व्यवस्थितविभाषात्वविज्ञानादेव जसोऽन्यत्र न भविष्यति।

## १०६। वा छन्दसि।

मारुतीरिति। मरुद् देवता आसामिति। सास्य देवतेत्यण् (४।२।२४) टिड्ढाणञिति (४।१।१५) ङीप्। सवर्णदीर्घत्वम्। वाराहीरिति। वराहस्य विकार इति। अवयवे च प्राण्योषधिवृक्षेभ्य इत्यण् (४।३।१३५)। पूर्ववद् ङीप्। उपानहीरिति। षिद्गौरादिभ्यश्चेति (४।१।४१) ङीष्।

## १०७। अमि पूर्वः।

पूर्वसवर्णदीर्घत्वे प्राप्ते वचनमिदम्। दीर्घ इति चेहानुवर्त्तते। अन्यथा

ह्रीदं वचनमनर्थकं स्यात्। अथ पूर्व्वग्रहणं किमर्थम्? यावता प्रकृतं यत् पूर्व्वग्रहणं तदेवेहानुवर्त्तिष्यत इति। अत आह पूर्व्वग्रहणमित्यादि। यथाजातीयकः पूर्वस्तथाजातीयक एव यथा स्यादित्येवमर्थं पूर्व्वग्रहणम्। एवकारेण यद्व्यवच्छिन्नं तद् दर्शयितुमाह पूर्वसवर्णान्तरतमो मा भूदिति। पूर्वसवर्णश्चासावन्तरतमश्चेति कर्म्मधारयः। असति हि पूर्व्वग्रहणे यत् पूर्वकं पूर्व्वग्रहणं तेनैवानुवर्त्तितव्यम्। तस्मिंश्चानुवर्त्तमाने तत्सम्बद्धं सवर्णग्रहणमप्यनुवर्त्तेत। तथाच स्थानेऽन्तरतम इत्यनया (१।१।५०) परिभाषया पूर्व्वस्य यः सवर्णः स एव प्रसज्येत। किं पुनरेवं सत्यनिष्टं स्यात्? वृत्तमित्यादौ द्विमात्रस्य स्थानिनो द्विमात्र एव स्यादिति चेत्? नैतदस्ति। एवं हि वचनमिदमनर्थकं स्यात्। प्रथमयोः पूर्वसवर्णः (६।१।१०२) इत्यनेन सिद्धत्वादित्यत आह कुमारीमित्यत्र हीत्यादि। कुमारीशब्दस्येकारो द्विमात्रः। अमोऽकारो मात्रिकः। तत्समुदायात्मकश्चात्र स्थानी। तत्र पूर्वसवर्णो विधीयमानस्त्रिमात्रस्य स्थानिनोऽन्तरतमस्त्रिमात्र एव स्यात्। पूर्वग्रहणे तु सति यथाजातीयक एव पूर्वस्तथाजातीयक एव द्विमात्रो भवति। वा च्छन्दसीत्येवेत्यादि। यदि तर्हि वा (६।१।१०६) च्छन्दसीत्यनुवर्त्तते तन सहास्यैकवाक्यतायां भाषायां परपूर्वत्वं न सिध्यति। नैतदस्ति। यस्मात् तदिहानुवर्त्तमानं पूर्ववद् वाक्यभेदेन च्छन्दस्येव विकल्पं करोति। न भाषायाम्।

## १०८। संप्रसारणाच्च।

संप्रसारणस्य यणादेशो मा भूदित्येवमर्थमिदं परपूर्वत्वं विधीयते। यदि चात्र यणादेशः स्यात् तदा संप्रसारणविधानमनर्थकं स्यात्। तस्मात् संप्रसारणविधानसामर्थ्यादेव यणादेशो न भविष्यति। तत् किमर्थमिदं विधीयत इत्याह संप्रसारणविधानसामर्थ्यादित्यादि। संप्रसारणविधानसामर्थ्याद् यणादेशो न भवतीति विगृहीतस्याकृतसंहिताकार्यस्य श्रवणं प्राप्नोति। तस्मान्मा भूदेष दोष इति परपूर्वत्वं विधीयते। वा च्छन्दसीत्येवेत्यादि। अत्रापि पूर्ववद् वाक्यभेदो द्रष्टव्यः। अन्यथा भाषायां न स्यात्। यक्ष्यमाण इति। परपूर्वत्वाभावपक्षे यणादेशः। कथं पुनरत्र यणादेशः?

यावता विगृहीतस्यैव ग्रहणेन भवितव्यम् ? इदानीमेव द्युक्तं संप्रसारण-विधानसामर्थ्याद्विगृहीतस्यैव श्रवणे प्राप्ते परपूर्वत्वं विधीयत इत्यत आह परपूर्वत्वविधान इत्यादि। अनारब्धेहि परपूर्वत्वे विगृहीतस्यैव श्रवणं प्राप्नोति। मा भूत् संप्रसारणस्य वैयर्थ्यमिति कृत्वा। सति तु परपूर्वत्वे यत्र परपूर्वत्वमिष्टमित्यादौ तत्रार्थवत् संप्रसारणम्। अतः परपूर्वत्वाभावपक्षे यणादेशो भवत्येव। अथेह कस्मान्न भवति शकह्वौ शकह्वर्थमिति। अत्र हि शकं ह्वयतीति क्विप्। यजादित्वात् संप्रसारणम्। परपूर्वत्वम्। तस्यान्तादिवच्चेति (६।१।८५) संप्रसारणग्रहणेन ग्रहणात् संप्रसारणासंप्रसारणयोरेकादेशस्य संप्रसारणस्य व्यपदेशभावत्वात्। औकारे ऽर्थशब्दे च च परतो व्यवस्थिते संप्रसारणाच्चेति (६।१।१०८) परपूर्वत्वं प्राप्नोतीत्यत आह अन्तरङ्गे चाचीत्यादि। योऽयं ह्वयतेरेचःस्थाने विहित आकारः स संप्रसारणस्यान्तरङ्गः प्रत्यासन्नः। उभयोरप्येकधात्वन्तर्गतत्वात्। औकारोऽर्थशब्दाकारश्च विप्रकृष्टः। विप्रकृष्टस्तु देशतः कालतश्च यदाह बाह्य इति। यस्य धातोः संप्रसारणमवयवस्तत्रानन्तर्भावाद् बाह्यः। कालतश्च यदाह पश्चात् सन्निपतित इति। पूर्वरूपविधानकालादुत्तरकालं सन्निहित इत्यर्थः। तत्र सन्निकृष्टविप्रकृष्टयोरचोः प्रत्यासत्तेरन्तरङ्गो योऽच् तत्रेदं वचनं प्रवर्त्तते। तत्र चरितार्थमिति विप्रकृष्ट औकारादौ पश्चात् सन्निहितेन भवति।

## १०९। एङः पदान्तादति।

अग्नेऽत्रेति। सम्बुद्धौ चेति (७।३।१०६) गुणः।

## ११०। ङसिङसोश्च।

एङ उत्तरयोरित्यादि। एङ उत्तरौ यौ ङसिङसौ तयोः सम्बन्ध्यवयवो योऽत् तस्मिन् परत इत्यर्थः। अग्नेरागच्छतीति। घेर्ङितीति (७।३।१११) गुणः। अथ कस्मादत्र यथासंख्यं न भवति ? एङावपि हि द्वौ। ङसिङसावपि द्वावेवेति प्राप्नोति। नैष दोषः। नह्यत्र ङसिङसोः परतः कार्यं विधीयते। किं तर्हि ? तत्सम्बन्धिन इति। स चैक एव। अथापि सम्बन्धिभेदेन भेदः स्यात् ? एवमप्यदोषः। चकारोऽत्र समुच्चयार्थः क्रियते।

एवञ्च समुच्चयो भवति यद्येकैकस्येङो ङसिङसोः प्रत्येकमपि परतः परपूर्वत्वं भवति । नान्यथा । ईदग्नेः सोमवरुणयोः (६।३।२७) । ओरावश्यक (३।१।१२५) इति च निर्देशस्तदभावं ज्ञापयति । लक्षणव्यभिचारचिह्नं न वा । अल्पाच्तरस्य ङसः परनिपातेन यथासंख्याभावोऽवसीयते ।

## १११ । ऋत उत् ।

द्वयोः षष्ठीनिर्दिष्टयोः स्थान इत्यादि । किं पुनर्होतुरित्यादावनिष्टं स्याद् यदि रपरत्वं न क्रियेत ? न किञ्चित् । न्यायतस्तु प्राप्नोति रपरत्वमपि । तदवश्यं कर्त्तव्यम् । तमेव न्यायं दर्शयितुं द्वयोः षष्ठी निर्दिष्टयोः स्थान इत्युक्तम् । ऋत इति तपरकरणं दीर्घनिवृत्त्यर्थम् । तेनोश्योर्यः (३।३।२९) । प्रे स्त्रोऽयज्ञे (३।३।३२) इत्यादौ न भवति । उदित्येतदपि तपरकरणं दीर्घ-निवृत्त्यर्थमेव । आन्तरतम्याद् द्विमात्रस्य स्थाने द्विमात्र एव प्राप्नोति । ननु च भाव्यमानोऽण् सवर्णान् न गृह्णातीति (प, २०) सवर्णानां ग्रहणं न भविष्य-तीति तत् किमेतन्निवृत्त्यर्थेन तपरकरणेन ? एवं तह्येतज् ज्ञापयति । भवत्यत्र ह्युकारेण भाव्यमानेन सवर्णस्य ग्रहणमिति (प, २१)। तेनामू अमूभ्या मित्यत्रादसोऽसेर्दादुदोम इति (८।२।८०) दीर्घस्य स्थाने दीर्घऊकारो भवति ।

## ११२ । ख्यत्यात् परस्य ।

ख्यत्येति । खिशब्दखीशब्दयो स्तिशब्दतीशब्दयोश्च कृतयणादेशयोरिदं ग्रहण मिति । यणादेशे कृते तुल्यं रूप मिति विशेषाभावात् । अथ कस्माद-त्वाकारान्तयोरेव ख्यशब्दत्यशब्दयो रिदं ग्रहणं न भवति ? केवलस्य ख्यशब्दस्य त्यशब्दस्यासम्भवादिति चेत् ? न । यदि केवलौ न स्त स्तदन्तानां तर्हि मुख्यगोसंख्यादीनामपत्यगार्हपत्यादीनाञ्च ग्रहण मस्तु । नैतदस्ति । एवं हि सख्युरसम्बुद्धौ (७।१।९२) पत्युर्नौ यज्ञसंयोग इति (४।१।३३) निर्देशौ नोपपद्येयाताम् । सह खेन वर्त्तत इति सख इति । तेन सहेति तुल्ययोग इति (२।२।२८) बहुव्रीहिः । वोपसर्जनस्येति (६।३।८२) सहस्य सभावः । सखीय-तीति । क्यचि चेतीत्त्वम् (७।४।३३) । सखीरिति । क्विप् । अतो लोप (६।४।४८) इत्यकारलोपः । लोपोव्योर्वलीति (६।१।६६) यकारस्य च । लून

मिति। ष्वादिभ्य इति (८।२।४४) निष्ठानत्वम्। ननु च नायं तीशब्दः। तत् कथं तस्येदमुदाहरणमित्यत आह निष्ठानत्वमित्यादि। अथेह कस्मान् न भवति अतिसखेरागच्छति। सेनापतेरागच्छतीति ? अस्ति ह्यत्रापि खिशब्द स्तिशब्दश्चेत्यत आह विकृतनिर्देशादित्यादि। योऽयं ख्यत्यादित्यागन्तुकेनाकारेण यणादेशं कृत्वा विकृतनिर्देशः कृतस्तस्यैतदेव प्रयोजनम्। यत्र यणादेश स्तत्रैव यथा स्यात्। नचात्र यणादेशोऽस्ति। अतो न भवति। अन्यथा हि विकृतनिर्देशोऽनर्थकः स्यात्। ननु च लघ्वर्थः स्यात्। अन्यथा हि खितिखीतीभ्य इत्युच्यमाने गौरवं स्यात्। एवं मन्यते। यदि यत्र यण् न भवति तत्रापि भवितव्यं तदा खीतीभ्यामित्येवं ब्रूयात्। नचैवमुच्यमाने कृत्सान्ताभ्यान्न प्राप्नोति। खिशब्दात् सख्युर्यः (५।१।१२६)। तिशब्दात् पत्युर्नो यज्ञसंयोग (४।१।३३) इति निर्देशाभ्यामेव सिद्धेः। अत्र हि सखिपतिशब्दयोर्ग्रहणम्। न सखीपतीशब्दयोः। नहीह पतीशब्दस्य यज्ञेन संयोगोऽस्ति। नापि सह खेन वर्त्तत इत्यादिना प्रकारेण व्युत्पादितो यः सखीशब्दस्तत उत्पन्नो यः प्रत्ययः स प्रकृत्यर्थाभिधाने समर्थो भवति यतोऽभिधानलक्षणा हि कृत्तद्धितसमासा भवन्ति। तस्माद् विकृतनिर्देशस्य पूर्वोक्तमेव प्रयोजनमिति। अथ स यणादेशोऽत्र कस्मान्न भवति यस्मिन् सतुरत्त्वेन भवितव्यम् ? घेर्ङितीति (७।३।१११) गुणेन बाधितत्वादिति चेत् ? न। शेषो घ्यसखीति (१।४।७) घिसंज्ञाप्रतिषेधादिति चेत्यत आह सखीशब्दस्येत्यादि। अत्र च ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति प्रतिषेधो (प,२२) हेतुः। परस्येति किमर्थम् ? पूर्वपरयोर्मा भूत्। इतश्चारभ्य पूर्वपरयोरितीतत्रानुवर्त्तते।

## ११३। अतो रोरप्लुतादप्लुते।

उकारानुबन्धकस्येति। यदि रुशब्दः समुदायः स्थानी स्यात् तदा महातरुवनमित्यत्रापि हशि चेत्युत्त्वं (६।१।११४) प्रसज्येत। किञ्च ससजुषोरुरित्युकारा-(८।२।६६) नुबन्धकरणमनर्थकं स्यात्। तत्र ह्युकारोऽस्य सूत्रस्य विशेषणार्थः क्रियते। स इह समुदाये स्थानिन्यनर्थको जायते।

तस्मादुकारानुबन्धवत इदं ग्रहणम् । ननु चोत्त्वे कर्त्तव्ये पूर्वत्रासिद्धमिति (८।२।१) रुत्वमसिद्धम् । तदसतो रोः कथमुत्त्वं शक्यते विधातुमित्यत आह रुत्वमप्याश्रयात् सिद्धमिति । यदि रुत्वमसिद्धं स्यात् तदा स्थानित्वेन रोराश्रयणमनर्थकं स्यात् । कस्यचिदुकारानुबन्धविशिष्टस्य रोरसम्भवाद् । तस्मादाश्रयादेव रोरसिद्धत्वं नास्तीति । तस्यापीति । यत्राति परतो रोरुत्वमुच्यते तस्य सुस्रोता ३ अत्रेति दूराद्धूते चेति (८।२।८३) प्लुतः । देवदत्ता ३ अत्रेति । अत्रापि गुरोऽनृतोऽनन्त्यस्याप्येकैकस्य प्राचामित्यनेन (८।२।८६) । अथ किमर्थमप्लुतादप्लुत इत्युच्यते ? नन्वतोऽतीति च तपरकरणस्य वर्णस्य निर्देशे क्रियमाणे प्लुतात् परस्य प्लुते वा परतः प्राप्नोतीत्यत आह प्लुतस्येत्यादि । ननु च सिद्धः प्लुतः स्वरसन्धिषु (L) यदयं प्लुतः प्रगृह्या अचीति (६।१।१२५) प्रकृतिभावं शास्ति । एवं मन्यते । प्रकृतिभाव एवैतज्ज्ञापकं स्यात् । अथापि कथञ्चित् स्वरसन्धिविषयं ज्ञापकं स्यात् । तथा रोरुत्वं स्वरसन्धिर्न भवति । अथापि संहिताकार्य्यविषये ज्ञापकं स्यात् तथापि रोरुत्वं संहिताकार्य्यं न भवति । येन हि वर्णाः सन्धीयन्ते तत् संहिताकार्य्यम् । न चोत्त्वेन वर्णाः संहिता भवन्ति । पुनरप्याह गुणाद्यपेक्षणादिति ।

## ११४ । हशि च ।

पूर्वत्रातीत्यनुवृत्ते हश्युत्त्वमप्राप्तमेवानेन विधीयते । चकारोऽप्लुतादित्यस्यानुकर्षणार्थः । तेनेह न भवति । सुस्रोता ३ देहीति ।

## ११५ । प्रकृत्याऽन्तःपादमव्यपरे ।

प्रकृत्येति करणे तृतीया । अन्तःपादमिति सप्तम्यन्तमेतत् । विभक्त्यर्थेऽव्ययीभावं विधाय ततः सप्तमी । तस्यास्तृतीयासप्तम्योर्बहुलमित्यभावः (२।४।८४) कृतः । एङ इत्यादि । पञ्चम्यन्तस्यैङः प्रकृत्या भवतीत्यनेन सम्बन्धो नोपपद्यते । तस्मादिहार्थादेङ्ग्रहणं प्रथमान्तमुपजायते । प्रकृतिरित्यादिना

---

(L) प्रकृतिभावेषु इति लक्ष्मीपुरपुस्तके पाठः ।

प्रकृतिशब्दस्यार्थमाचष्टे। प्रकृतिशब्दो हि लोके स्वभावे प्रयुज्यते यथा दुस्त्यजा प्रकृतिरिति। कारणेऽपि यथा दध्नः क्षीरं प्रकृतिरिति। तदिहापि स एवार्थस्तस्य विज्ञायते। अन्तरित्यव्ययमधिकरणभूतमिति। अत एवान्तःपादमित्यव्ययीभावो भवति। पादशब्देनेत्यादि। कथं पुनरृक्-पादस्यैव ग्रहणं लभ्यते ? यावता पादशब्दः सामान्यवाची। एवं मन्यते। वा छन्दसीत्यत (६।१।१०६) श्छन्दोग्रहणमिह मण्डूकप्लुतिन्यायेनानुवर्त्तते। तेन ऋक्पादस्यैव ग्रहणं विज्ञायते। अथ सर्वत्र विभाषा गोरित्यतः (६।१।१२२) सूत्रात् प्राक्छन्दस्यैव कार्य्यं विज्ञायते। एवं हि तत्र सर्वत्रग्रहणमर्थवद् भवति यदि च्छन्दसि पूर्वं विधानं भवति। एवमवयवानामर्थमाख्यायावकारयकार-इत्यादिना समुदायस्यार्थमाचष्टे। अविद्यमानौ वकारयकारौ यस्य स तथोक्तः। स्वभावेनेत्यादि। यदा प्रकृतिशब्दः स्वभावे वर्त्तमानो गृह्यते तदायमर्थः। एङ् स्वभावेन भवति। स्वभावपरित्यागेन संहिताकार्य्यं नोपपद्यत इति। यदा तु कारणे वर्त्तमानस्य प्रकृतिशब्दस्य परिग्रहस्तदायमर्थः। एङ् कारणात्मना भवतीति। कारणं परपूर्वत्वादेः कार्य्यस्यैङ्। तस्य य आत्मा स्वरूपं तेनैवात्मनैङ् भवतीत्येतदुक्तं भवति। प्राक् संहिता-कार्य्याद् यदेङो रूपं तेनैव तदवतिष्ठत इति। अनन्तरोक्तमेवार्थद्वयं स्पष्टी-कर्त्तुमाह। न विकारमापद्यत इति। एवं हि स्वभावेन भवति। यदि स्वभावादन्यथालक्षणा विकारावस्था नोत्पद्येत तदैवं कारणात्मनापि भवति। यदि विकारभावं नोत्पद्यते। यदि कार्य्यात्मना न विपरिणमतीत्यर्थः। तौ चेन्निमित्तकार्यिणाविति। निमित्तं तपरत्वविशिष्टोऽकारः। तत्र हि परतः प्रकृतिभावो विधीयते। कार्यी त्वेङ्। तस्य हि कार्य्यं प्रकृतिभावो-ऽस्ति। ते अग्रे अश्वमायुञ्जन्नित्यस्य ऋक्पादस्य मध्ये य एङ् एकारस्तेशब्दे ऽग्रेशब्दे च तस्य तदनन्तरे प्रकृतिभावादेङः पदान्तादतीति (६।१।१०९) पूर्व-रूपं न भवति। अयादेशश्च। उपप्रयन्तो अध्वरमिति। अत्रापि प्रयन्त इति शब्दौकारस्यैङोऽध्वरशब्दस्यात्यनन्तरे प्रकृतिभावात् पूर्वरूपं न भवति। अवादेशश्च। एवं सुजाते अश्व इत्यादावपि प्रकृतिभावात् पूर्वरूपादि-कार्य्यस्याभावो वेदितव्यः। एतेऽर्चयन्तीति। अत्रैतेशब्दे य एङ् एकारः

स पदान्ते वर्त्तते । तदनन्तरस्त्वकारः पादादौ । न पादमध्ये । तेऽवदन्निति । अत्र तेशब्दे य एङ् तस्य प्रकृतिभावो न भवति । तदनन्तरस्यातो वकार-परत्वात् । अवदन्निति । वदतेर्लङि प्रथमपुरुषबहुवचनान्तम् । तेऽयजन्निति । अत्रापि तेशब्दे य एङ् तस्य प्रकृतिभावो न भवति । तदनन्तरस्यातो यकारपरत्वात् । अन्वग्नीत्यादि । सर्वमत्राश्लिष्ट । नत्वनुशब्द उकार एङ् भवति । नास्य प्रकृतिभावः । केचिदित्यादि । यदि तर्हि नान्तः पादमव्यपर इति सूत्रं पठन्त्येवं सति परपूर्वस्यैव प्रतिषेधः कृतः स्यात् । नायवोः । तथाहि परपूर्वत्वमेङोऽनन्तरविहितमित्यत आह ते संहितायामित्यादि । यदि परपूर्वत्वं संहिताकार्य्यं विशेषणमपेक्ष्यायं प्रतिषेधः क्रियते तदायं दोषः स्यात् । यदा तु संहिताधिकारविहितं कार्य्यमात्रमपेक्ष्य प्रतिषेधो विधीयते तदा सर्वस्यैव संहिताधिकारविहितस्य कार्य्यस्य प्रतिषेधो युक्त इति तेषां भावः ।

## ११६ । अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ।

नो अव्यादिति । अस्मदो द्वितीया बहुवचनान्तस्य बहुवचनस्य (८।१।२१) वस्नसोरिति नसि कृते ऽतो रोरप्लुतादप्लुत (६।१।११३) इत्युत्त्व आद्गुण इति (६।१।८७) गुणे कृते नो इति भवति । अव रक्षण इत्यस्मादाशिषि लिङि यासुटि तिपीतश्चेतीकारलोपे (३।४।१००) स्कोःसंयोगाद्योरन्ते चेति (८।२।२९) सकारलोपे च कृते ऽव्यादिति भवति । अवद्यादिति । अवद्यशब्दोऽयं पञ्चम्येकवचनान्तः । अवक्रमुरिति । अवपूर्वात् क्रमेर् लिटुसि रूपम् एतत् । अन्ये तु लुङि वर्णयन्ति । बहुलं छन्दसीति (२।४।७६) श्लुः श्लौ । श्लाविति (६।१।१०) द्विर्वचनम् । जुस्भावश्छान्दसः । अवन्त्विति । अवते र्लोट् । झेरन्तादेशः । एरुरित्युत्वम् (३।४।८६) । अवस्यव इति । अवतेः सर्वधातुभ्यो ऽसुन्निति (उण् ४।६२८) असुन् । अवस् इति । ततः सुप आत्मनः क्यजिति (३।१।८) क्यच् । तदन्तात् क्याच्छन्दसीत्युप्रत्ययः (३।२।१७०) । ततो जस् । जसि चेति (७।३।१०९) गुण ओकारः । एचोऽयवायाव इत्यवादेशः (६।१।७८) ।

## ११७। यजुष्युरः।

उरो अन्तरिक्षमिति। उरःशब्दस्योत्वम्। आद्गुण इति (६।१।८७) गुणः। ओकारान्तमुरोशब्दं सम्बुद्ध्यन्तमधीयत इति। उरुशब्दस्य सम्बुद्धौ चेति (७।३।१०६) गुणे कृत उरो इति भवति।

## ११८। आपोजुषाणोवृष्णोवर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे।

आपो इत्येवमादीनि सर्वाण्येतान्यनुकरणान्यविभक्तिकानि। सुपां सुलुगित्यादिना (७।१।३९) तेभ्य उत्पन्नाया विभक्तेर्लुप्तत्वात्। अत्रापो इति प्रथमा बहुवचनान्तस्यानुकरणम्। जुषाणो इति। प्रथमैकवचनान्तस्य। वृष्णो इति। षष्ठ्येकवचनान्तस्य। वर्षिष्ठे इति। सप्तम्येकवचनान्तस्य। अम्बे अम्बाले इति। द्वितीयाद्विवचनान्तस्य। अम्बिकेपूर्वे इति। एतत् तु प्रथमाद्विवचनमनुकरणमेव। अम्बे अम्बाले इत्येतयोर्विशेषणम्। अम्बिकेशब्दात् पूर्वे अम्बिके पूर्वे। अस्मादेव निपातनात् समासः। ननु चाम्बे इति सम्बुद्ध्यन्तस्यानुकरणम्। ततश्चाम्बार्थनद्योर्ह्रस्व इति (७।३।१०७) ह्रस्वेनैत्त्वापवादेन भवितव्यम्। तत् कथमम्बे इत्यत्रैत्त्वमित्यत आह अस्मादेवेत्यादि। अम्बाले अम्बिके इत्येतयोस्तु युक्तमेवैत्त्वम्। वक्ष्यति हि ह्रस्वविधानेऽम्बार्थं द्व्यचरं (७।३।१०७ वा) यदीति।

## ११९। अङ्ग इत्यादौ च।

अङ्ग इत्यादौ चेति। इतिकरणेनानन्तरोक्तोऽङ्गशब्दः प्रत्यवमृश्यते। तदादौ चाकार इति। समानाधिकरणे सप्तम्यौ। तच्छब्देनातिक्रान्तप्रत्यवमर्शिनेतिकरणस्यार्थमाचष्टे तदादाविति। अङ्गशब्दादावित्यर्थः। यः पूर्वं इति। एङिति सम्बध्यते। चकारोऽङ्गशब्दस्यादौ योऽकारस्तत्रापि परतः पूर्वस्यैङः प्रकृतिभावो यथा स्यादिति समुच्चयार्थः क्रियते। तत्र ह्यसत्यङ्गशब्दाकारे परतोऽङ्गशब्दस्य य एङ् तस्यैव प्रकृतिभावः स्यात्। य स्त्वङ्गशब्दे परतोऽनङ्गशब्दस्यैङ् तत्र न स्यात्। प्राणो अङ्ग इत्यादि। अत्र प्राणोशब्दे य एङ अङ्गशब्दादावकारे प्रकृत्या भवति। अङ्गे अङ्गे अदीध्यदिति। अत्राङ्गशब्दे य एङ् तस्याङ्गशब्दादावकारेऽदीध्यच्छब्दादौ प्रकृतिभावो भवति।

## १२०। अनुदात्ते च कुधपरे।

कुध पर इति। अकारविशेषणमेतत्। कुधौ परौ यस्मात् स तथोक्तः। धकारेऽकार उच्चारणार्थः। अयं सो अग्निरिति। अग्निशब्दोऽङ्गेर्नि लोपश्चेति (उण् ४।५९०) निप्रत्ययान्तो व्युत्पादित इति प्रत्ययस्वरेणान्तोदात्तः। शेषो-ऽनुदात्त इत्यकारस्यानुदात्तत्वम्। अयं सो अध्वर इति। अध्वरशब्दोऽपि प्राति-पदिकस्वरेणान्तोदात्तः। तदादिरप्यकारोऽनुदात्त एव। आद्युदात्तो निपात्यत इति। त्रक्षेन्द्राग्रवज्रविप्रकुत्रचुत्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरा-माला: (फिट् २।१८६) इत्यनेन। सोऽयमिति। अयंशब्दः प्रातिपदिक-स्वरेणान्तोदात्तः। तस्यादिरनुदात्तः।

## १२१। अवपथासि च।

यद्रुद्रेभ्योऽवपथा इति। अटः स्वरेणाद्युदात्तोऽयमवपथाशब्दः।

## १२२। सर्वत्र विभाषा गोः।

## १२३। अवङ् स्फोटायनस्य।

अतीति निवृत्तमिति। यद्यतीत्यनुवर्त्तेत तदा गवौदनादौ न स्यात्। तस्मादतीत्येतदस्वरितत्वाद् निवृत्तम्। इत्यपि तर्हि प्राप्नोतीत्यत आह अचो-त्येतत् पुनरनुवर्त्तत इति। इको यणचीत्यतः (६।१।७७)। सा पुनस्तस्यानुवृत्ति-र्मण्डूकप्लुतिन्यायेन वेदितव्या। नहि संप्रसारणाच्चेत्यतः (६।१।१०८) परेण ये योगा अस्माद् योगात् पूर्वं तेष्वतीत्यस्यानुवृत्तिरस्ति। तथाच पूर्वसूत्रमचोति चायमधिकारः संप्रसारणाच्चेति (६।१।१०८) यावदिति। गवाग्रम्। गवाजिन-मिति। बहुव्रीहिस्तत्पुरुषो वा। गवोष्ट्रमिति द्वन्द्वः। आद्युदात्तश्चायमित्यादि। इह गावोऽग्रमस्येति बहुव्रीहौ कृते पूर्वपदप्रकृतिस्वरत्वञ्च प्राप्नोति। अवङा-देशश्च। तत्रान्तरङ्गादवङ् भवति। स च भवन् प्रातिपदिकस्वरेणान्तोदात्तस्य गोशब्दस्य स्थान आन्तर्य्यतोऽन्तोदात्त एव स्यात्। तस्मिन् सति पश्चात् प्रकृति स्वरे कृतेऽन्तोदात्तत्वं पूर्वपदस्यापद्येत। आद्युदात्तश्चेष्यते तस्मादाद्युदात्तोऽय-मादेशो निपात्यते। यद्येवं तत्पुरुषादावपि स एव निपातनस्वरः प्राप्नोती-त्यत आह अन्यत्र त्वित्यादि। अन्यत्रेति। तत्पुरुषे द्वन्द्वे च। गोशब्द-

स्यायमादेश इति तत्सम्बन्ध्येव शब्दान्तरं निपातनस्वरेण बाध्यते। न समासस्वरः। तस्माद् बहुव्रीहेरन्यत्र तत्पुरुषादौ समासान्तोदात्तत्वेन निपातनस्वरो बाध्यते। स्फोटायनग्रहणं पूजार्थमिति। किं पुनः कारणं विकल्पार्थं न भवतीत्याह विभाषेत्येव हि वर्त्तत इति। किमर्थं पुनरवङ् विधीयते? अगेव न विधीयेत। तत्रापि ह्यवादेशेन सिध्यत्येव। न सिध्यति। एङः पदान्तादतीति (६।१।१०९) पूर्वरूपत्वं प्राप्नोतीति। ननु चाकि विहिते सति तदन्तो न भवति। आगमस्य तद्ग्रहणेन ग्रहणात्। नह्योकारस्य प्राक् प्रवृत्ता पदान्तता नास्तीति शक्यं वक्तुम्।

## १२४। इन्द्रे च नित्यम्।

इन्द्रशब्दस्य इति। य इन्द्रशब्दे तिष्ठति स इन्द्रशब्दस्थः। स पुन यं इन्द्रशब्दस्यावयवः स वेदितव्यः। पूर्वेण विकल्पः सिद्ध एव। तत्रारम्भसामर्थ्यादेव नित्ये विधावस्मिँल्लब्धे नित्यग्रहणमुत्तरार्थम्।

## १२५। प्लुतप्रगृह्या अचि।

देवदत्ता३ अत्र न्वसीति। दूराद्धूते चेति (८।२।८४) प्लुतः। ननु च पूर्वत्रासिद्धमित्य (८।२।१) सिद्धः प्लुतः। तदसतस्तस्य कथं शक्यते प्रकृतिभावो विधातुम् इत्यत आह आश्रयादित्यादि। आश्रयणमाश्रयः। तदेतत् प्रकृतिभावकार्य्यं विधातुं प्लुतस्य कार्य्यित्वेनाश्रयणम्। अस्मादेवात्र प्रकृतिभावे कर्त्तव्ये सिद्धः प्लुतः। अन्यथा तस्य कार्यित्वेनाश्रयणमनर्थकं स्यात्। अग्नी इत्यादि। ईदूदेद् द्विवचनमित्यादिना (१।१।११) प्रगृह्यसंज्ञा। अचीति किमर्थम्? यावताऽचीत्यनुवर्त्तत एवेत्यत आह एवेत्यनुवर्त्तमान इत्यादि। आदेशस्य निमित्तं योऽच् तस्य प्रकृतिभावनिमित्तत्वेन परिग्रहो यथा स्यादित्येवमर्थं पुनरज्ग्रहणम्। आदेशस्तत्र यत्राचि प्रकृतिभावो विधीयते तमेवाश्रित्य यः प्राप्नोति स एव विज्ञेयः। कुत एतत्? प्रत्यासत्तेः। तेनेह न भवति प्रकृतिभावः। जानुउ अस्य रुजति। जानू अस्य रुजतीति। नहि जानुशब्दे य उकारो यस्य तदनन्तरः प्रगृह्यसंज्ञकस्तयो सवर्णदीर्घत्वं प्रति प्रगृह्यसंज्ञकादुकारात् परस्याकारस्य निमित्तभावः। इह च न भवति।

जान्वस्य वृजतीति । तेन पूर्वपरयोरकारयो यं एकादेशः स यद्यप्यन्तादि वच्चे-(६।१।८५) त्यादिवद्भावात् प्रगृह्यसंज्ञकोकारग्रहणेन गृह्यते तथापि यणादेशोऽकारे परतो भवत्येव । नह्यसावप्यकार एकादेशनिमित्तम् । यदि तु विशिष्टाच्परिग्रहार्थं पुनरज्ग्रहणं न क्रियेत तदाऽज्मात्रे प्रकृतिभावो विधीयमान इहापि स्यादेव । प्रगृह्यसंज्ञा पुनरकारपूर्वस्योकारस्य निपात एकाजनाङित्यनेन (१।१।१४) । नित्यग्रहणमित्यादि । यदि नित्यग्रहणमिहानुवर्त्तते तदाग्नो इतीत्यादा अस्य विधिः कृतार्थत्वाद् वायू अत्रेत्यादौ परत्वाच्छाकल्यो विधिः प्रसज्येत । तस्मात् प्रकृतिभाव एव यथा स्यादित्येवमर्थं नित्यग्रहणमिहानुवर्त्तते ।

## १२६ । आङोऽनुनासिकश्छन्दसि ।

आङ इति । ङिद्विशिष्टस्याकारस्योपादानम् । ईषदर्थे क्रियायोगे मर्य्यादाभिविधौ च य स्तस्यैव ग्रहणं यथा स्यात् । वाक्यस्मरणयोर्यस्तस्य मा भूदितेत्रवमर्थम् । असति प्रकृतिभावे विहितेऽप्याङोऽनुनासिकत्वे स्यादेव स्वरसन्धिः । अनुनासिकविधानं त्वादेशस्य सानुनासिकत्वार्थं स्यादितेत्र-तन्मनसि कृत्वाह न च प्रकृत्या भवतीति । आतरदिति । तरते राङ्पूर्वाल्लङ् । अडागमः । अटा सह सवर्णदीर्घत्वम् ।

## १२७ । इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ।

ह्रस्वश्च तस्येकः स्थाने भवतीति । यद्येवं प्रकृत्येत्यस्यानुकर्षणार्थश्चकारो न कर्त्तव्यः । ह्रस्वविधानसामर्थ्यादेव हि स्वरसन्धिर्न भविष्यति । अत्रैतत् स्यात् । दीर्घाणामेव ह्रस्वविधानसामर्थ्यात् स्वरसन्धिर्न स्यात् । ह्रस्वानान्तु स्यादेव । नहि तेषां ह्रस्वा भवन्ति । प्रयोजनाभावादित्येतच्च नास्ति । ह्रस्वानामपि हि स्वरसन्धिबाधनार्थं ह्रस्वो भवत्येव । कृतकारिखल्विदं शास्त्रम् । पर्ज्जन्यवत् । नाकृतकारि । दहनवत् । एवं तर्हि चकारेणे-तदाख्यायते । क्वचिद् ईषा अक्षादौ प्रकृतिभाव एव भवति । न ह्रस्वत्व-मिति । तेन यदुक्तमीषा अक्षादौ प्रकृतिभावमात्रमिति तन् न वक्तव्यम्

भवति। यणादेशेन सह विकल्पार्थं शाकल्यग्रहणं कस्मान्न भवतीत्याह आरम्भसामर्थ्यादेव हीत्यादि। यणादेशस्य ह्रस्वर्ण एवाज्विषय:। सवर्णे त्वकः सवर्णे दीर्घ इति (६।१।१०१) दीर्घविधानात्। अयमपि च शाकलो ह्रस्वो विधीयते। अत एवास्मिन् विषय आरम्भसामर्थ्यादेवास्य विधेर्यणादेशेन सह विकल्पः सिद्ध इति न तदर्थमाचार्य्यग्रहणम्। सिन्नित्यसमासयोरित्यादि। एकापि सप्तमी द्विधा भिद्यते। अपेक्षाभेदात्। सिदपेक्षया परसप्तमी। नित्यसमासापेक्षया विषयसप्तमी। सिच्च नित्यसमासश्चेति द्वन्द्वः। स इद् यस्य स सित्। नित्याधिकारे विहितः समासो नित्यसमासः। शाकल्यस्यायं विधिः शाकलः। कण्वादिभ्यो गोत्र (४।२।१११) इत्यण्। यस्येति चेत्यकारलोपः। (६।४।१४८) आपत्यस्य च तद्धितेऽनातीति (६।४।१५१) यकारलोपः। शाकलस्य प्रतिषेधः शाकलप्रतिषेधः। वक्तव्य इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। सर्वत्र विभाषा गोरित्यतो (६।१।१२२) विभाषाग्रहणमनुवर्त्तते। सा च व्यवस्थितविभाषा विज्ञायते। तेन सिन्नित्यसमासयोः शाकलप्रतिषेधो भविष्यतीति। ऋत्विय इति। ऋतुः प्राप्तोऽस्येति ऋतोरण्। ( ५।१।१०५ ) छन्दसि घसिति ( ५।१।१०६ ) घस्। व्याकरणमिति। कुगतिप्रादय इति ( २।२।१८ ) समासः। अत्र हि नित्यं क्रीड़ाजीविकयो रित्यतो ( २।२।१७ ) नित्यग्रहणानुवृत्तेर्नित्यसमासोऽयम्। कुमार्य्यर्थमिति। कुमार्य्या इदं कुमार्य्यर्थमिति। अर्थशब्देन सह समासवचनं सर्वलिङ्गता चेत्ययमपि (२।१।३६, वा) नित्यसमास एव। सर्वत्र शाकलविधौ प्रतिषिद्धे यणादेशो भवत्येव।

## १२८। ऋत्यकः।

सवर्णार्थमनिगर्थञ्च वचनमिति। अन्यत्र पूर्वेणैव सिद्धत्वात्। यदि सवर्णार्थं वचनं कथं तर्हि खट्वृश्य इत्युदाहरणम्? नह्यत्र सवर्णोऽच्परः। नैतदस्ति। अनिगर्थञ्चेति यदुक्तं तस्योदाहरणम्। अत एवाक इत्युपात्तम् सूत्रे। अन्यथेक इत्यनुवर्त्तनीयं स्यात्। सत्यस्मिन् योगे सवर्णार्थेऽप्यकोऽनेनैव युक्तौ ह्रस्व-प्रकृतिभावौ परत्वादित्यस्योदाहरणस्योपन्यासः।

## १२९ । अप्लुतवदुपस्थिते ।

ऋषौ वेदे भव आर्षः । तस्मादन्यो लौकिकोऽनार्षः । समुदायादिति । वाक्यादित्यर्थः । कुत एतत् ? पदरहितस्य वाक्यस्याप्रयोगात् । वाक्यस्य च समुदायात्मकत्वात् । अवच्छिद्येति । पृथक् कृत्वेत्यर्थः । स्वरूपे व्यवस्थाप्यत इति । शब्दपदात्मकतायां व्यवस्थाप्यत इत्यर्थः । अप्लुतवदिति । अप्लुतेन तुल्यं वर्त्तत इत्यप्लुतवत् । येन साधर्म्येणाप्लुतवद् भवति तद् दर्शयितुमाह प्लुतकार्य्यमित्यादि । तदनेन प्लुतकार्य्यस्यायं प्रतिषेधो नतु प्लुतस्येति दर्शितं भवति । सुश्लोका ३ इति । दूराद्धूते चेति (८।२।८४) प्लुतः । सुश्लोकेति । प्लुतकार्य्यस्याकरणादेकादेशो भवत्येव । ननु चैकादेशेनापि न भवितव्यम् । तस्यापि प्लुतकार्य्यत्वात् । नैतदस्ति । एवं हि वचनस्य वैयर्थ्यं स्यात् । तस्मात् प्लुतसंशब्दनेनैव प्लुतस्य यत् कार्य्यं विहितं तस्यैव प्रतिषेधो न सर्वस्य प्लुतकार्य्यस्य । नचैकादेश एवं विहितः । वत्करणं किमिति । इह कार्य्यमात्रस्य प्रतिषेधे सति प्लुतस्य श्रवणं यथा स्यादित्येवमर्थं वत्करणं स्यात् । सत्यपि च कार्य्यमात्रस्य प्रकृतिभावस्य प्रतिषेधेनैव प्लुतस्य श्रुत्या भवितव्यम् । एकादेशेन निवर्त्तितत्वात् । तत् कस्मात् प्लुतस्यैव प्रतिषेधो न क्रियत इत्यभिप्रायः । प्लुतप्रतिषेधे वक्ष्यमाणं दोषं चेतसि कृत्वाह प्लुत इत्युच्यमान इत्यादि । तत्र को दोष इति यो वत्करणे सति न भवतीति भावः । प्रगृह्याश्रय इत्यादि । प्रगृह्य आश्रयो यस्य तस्मिन् प्रकृतिभावे सति प्रगृह्यसंज्ञको यः प्लुतस्तस्य श्रवणं न स्याद् यदि प्लुत एव प्रतिषिध्येत । वत्करणे तु सति प्लुतकार्य्यस्यायं प्रतिषेधो भवति । न प्लुतस्यैव । तत्र प्लुताश्रये प्रकृतिभावे प्रतिषिद्धेऽपि प्रगृह्याश्रयस्याप्रतिषिद्धत्वादसत्येकादेश एष दोषो न भवति । अग्नी ३ इतीति । ईदूदेद् द्विवचनमित्यादिना (१।१।११) प्रगृह्यसंज्ञा । गुरोरनृत इत्यादिना (८।२।८६) प्लुतः ।

## १३० । ई ३ चाक्रवर्म्मणस्य ।

अचि परत इति । एतेनोपस्थित इत्येतन्निवृत्तम् । अस्वरितत्वादिति सूचयति । अस्य ही ३ इति । असु क्षेपणे । लोट् (३।४।८७) सिप् । सेर्ह्यपिच्चेति

सेर्हिः। व्यत्ययेन श्नु:। चियाशी:प्रैषेषु तिङाकाङ्क्षमिति (८।२।१०५) प्लुतः। तदुपस्थिते निवृत्त्यर्थमिति। तत्र पूर्वेणाप्लुतवद्भावस्य नित्यं प्राप्तत्वात्। अनुपस्थिते प्राप्त्यर्थमिति। तत्र केनचिदप्राप्तत्वात्। इकारादित्यादि। कथं पुनरिकारादन्यत्रापीष्यमाणोऽप्येषोऽप्लुतवद्भावो लभ्यते। इकोऽसवर्णे शाकल्यस्य ह्रस्वश्चेत्यतो (६।१।१२७) ऽनुवृत्तस्य चकारस्यानुक्तसमुच्चयार्थत्वात्।

## १३१। दिव उत्।

सानुबन्धकत्वादिति। कस्य धातोरनन्तरम्? प्रकृतत्वात् तस्यैव। दीव्यतिर्धातुः सानुबन्धः। प्रातिपदिकन्तु दिवितिप्रतन्निरनुबन्धकम्। निरनुबन्धकस्य च सूत्र उपादानम्। तस्मान्निरनुबन्धकस्य ग्रहणे न सानुबन्धकस्येति (प, ४२) प्रातिपदिकस्येदं ग्रहणम्। न धातोरिति। द्युकाम इति। दिवि कामोऽस्येति बहुव्रीहिः। दिवं कामयत इति वा। शीलिकामिभिक्षाचरिभ्यो णो वक्तव्य इति (३।२।१ वा) णप्रत्ययः। द्युमानिति। द्यौरस्यास्तीति। तदस्यास्त्यस्मिन्निति (५।२।९४) मतुप्। विमलद्यु दिनमिति। विमला द्यौरस्मिन्निति बहुव्रीहिः। अक्षद्यूभ्याम्। अक्षद्यूभिरिति। अक्षशब्द उपपदे दीव्यतेर्धातोः क्विप्। च्छ्वोः शूड्नुनासिके चेत्यूठ् (६।४।१९)। अथ तपरकरणं किमर्थम्? यावता यद्यपि ऋत उदित्यत्र (६।१।१११) तपरकरणेन भाव्यमानोऽप्युकारः सवर्णान् गृह्णातीति ज्ञापितं तथाप्यत्रान्तर्यतोऽर्द्धमात्राकालस्य व्यञ्जनस्य मात्रिक एव भविष्यति। न दीर्घं इत्यत आह तपरकरणमित्यादि। यद्यप्यनेन दीर्घो न प्राप्नोति लक्षणान्तरेण तु द्युभ्यां द्युभिरित्यत्रोट् प्राप्नोति। अतः स मा भूदितिप्रवमर्थं तपरकरणम्। स्यादेतत्। ननु चोट्प्राप्तिरेव नास्ति। किं तन्निवृत्त्यर्थेन तपरकरणेनेत्यत आह द्युभ्यां द्युभिरिति। अत्र हीत्यादि। उत्त्वस्यावकाशो यत्र झलादिः क्विप् परो न विद्यते विमलद्यु दिनमिति। ऊठोऽवकाशः अक्षद्यूभ्यामिति। द्युभ्यामित्यादावुभयप्रसङ्गे परत्वादूठ् प्राप्नोति। तपरकरणादुत्त्वमेव भवति। यदि तर्हि प्राप्तस्योठो निवृत्तये तपरकरणं क्रियत एवं सति च्छ्वोः शूड्नुनासिके चेत्यत्र (६।४।१९) कथं द्युभ्यां द्युभिरिति परेण

चोदिते यद्यप्यत्यूठि कृते दिव उदिति (६।१।१३१) तपरत्वान् मात्राकालो भविष्यतीति तद्विरुध्यते। तस्योठि कृतेऽभिनिर्वृत्ते तस्य स्थाने मात्राकालो भविष्यतीति तद्विरुध्यते। तस्योठि कृते ऽभिनिर्वृत्ते तस्य स्थाने मात्राकाल उकारो भविष्यतीत्ययमर्थः। नास्ति विरोधः। ऊठि कृत इत्यस्य हि ग्रन्थस्य पूर्वेण चोद्यग्रन्थेन सह सम्बन्धः। नेतरेण परिहारग्रन्थेन। तत्र केचिदत्र क्ङितीति नानुवर्त्तयन्तीत्यस्मिन् दर्शनान्तर उपन्यस्तो कथं द्युभ्यां द्युभिरित्यूठि कृतेऽतिदेश्यम्। तत्रायं चोदयितुरभिप्रायः। यदि क्ङितीति नानुवर्त्तेत तदा द्युभ्यां द्युभिरित्यत्राप्यूडेव कर्त्तव्यः। ततश्चोठि कृते कथं द्युभ्यां द्युभिरिति सिध्यति ? यावता द्यूभ्यां द्यूभिरिति भवितव्यमित्यस्य देश्यस्य दिव उदिति (६।१।१३१) तपरत्वान् मात्राकालो भविष्यतीत्येष परिहारः। अत्राप्ययं परिहर्त्तुरभिप्रायः। तपरकरणस्यैतदेव प्रयोजनम्। ऊण् मा भूदिति। अन्यथा तदनर्थकं स्यात्। तस्मादुत्त्वमेव कर्त्तव्यम्। नतूड्भाव इति। ये तु क्ङितीत्यनुवर्त्तयन्ति तेषां तपरकरणं विस्पष्टार्थम्।

## १३२। एतत्तदोः सुलोपोऽकोरनञ्समासे हलि।

नञ्समासे न वर्त्ततेति। अनेन क्रियासम्बन्धं दर्शयन्ननञ्समास इति प्रसज्यप्रतिषेधोऽयमिति दर्शयति। पर्युदासे हि सति नञिवयुक्तन्यायेन (प, ७५) नञ्समासादन्यस्मिन् समासे वर्त्तमानयोः स्यात्। परमैष ददाति। परमस ददातीति। एष ददाति स ददातीत्यत्र तु न स्यात्। अथ स सम्प्रदानमित्यादिको (१।४।३१) निर्देशो ज्ञापयत्यसमासेऽपि भवतीति। उच्यते। एवमप्येतच्छब्दस्य न स्यात्। योगापेक्षे तु ज्ञापक आश्रीयमाणे प्रतिपत्तिगौरवं स्यादित्यभिप्रायः। तयोर्थः सुशब्द इति। एतेनैतत्तदोरिति सुशब्दापेक्षया सम्बन्धलक्षणेयं षष्ठीत्याचष्टे। यद्येवं सुशब्दस्य सापेक्षत्वादसामर्थ्ये सति लोपशब्देन सह समासो नोपपद्यते। गमकत्वात् सापेक्षस्यापि समासो भविष्यतीत्यदोषः। अथवा ऽसमासनिर्देश एवायम्। षष्ठी तु सुपां सुलुगित्यनेनैव (७।१।३९) लुप्तत्वान्न श्रूयते। कश्च तयोः सुशब्द इति। एवं मन्यते।

आनन्तर्य्यलक्षणेन वा सम्बन्धेनैतत्तदोः सुशब्दः सम्बन्धी स्यात् । अर्थद्वारेण वा । तत्र हि पूर्वस्मिन् पक्षे सप्तमीबहुवचनस्यापि ग्रहणं स्यात् । भवति हि तदेतदोरानन्तर्य्यलक्षणेन सह सम्बन्धेन सम्बन्धी । इतरस्मिन्ननञ् समास इति प्रतिषेधस्यैव वैयर्थ्यं स्यात् । अनेषो ददाति । असो ददातीति । अत्र हि समासद्वारेण सुशब्दः समासस्यैव सम्बन्धी । नत्वेतत्तदोरिति । ननु च सानुबन्धकत्वात् सप्तमीबहुवचनं नाशङ्कनीयमेव । नैतदस्ति । प्रथमैकवचनमपि हि तद्गुणसंविज्ञाने बहुव्रीहौ सानुबन्धकमेव । तद्गुण-संविज्ञान इत्येकानुबन्धग्रहणे न द्व्यनुबन्धकस्येत्यत्र (प,१२०) यदस्त्येकानुबन्ध-ग्रहणं तदपेक्ष्य बोध्यम् । तत्रातद्गुणसंविज्ञानेऽङ्गीकृत एतद्वचनं न घटते । अनुबन्धं त्यक्त्वा सुशब्दो नास्ति । किं तर्हि ? सशब्दः । इयाँस्तु विशेषः । एकस्य पकारोऽनुबन्धः । अपरस्य तूकार इति । तस्माद् द्वयोरपि सानुबन्धकत्वात् सप्तमीबहुवचनमपि युक्तं माशङ्कितुम् । द्वितीये तु पक्षे यो दोषस्तमुत्तरत्र परिहरिष्यामीति चेतसि कृत्वाह यस्तदर्थेन सम्बन्ध इति । एवं ब्रुवता प्रथमैकवचनं तयोः सम्बन्धीत्युक्तम् भवति । कथं कृत्वा ? एतत्तच्छब्दौ हि प्रातिपदिके । त्रिकञ्च प्रातिपदिकार्थ इतीद-मत्र दर्शनमाश्रितम् । तथाहि बहुषु बहुवचनमित्यत्र बहुषु बहुवचनं भवति । बहुत्वमस्य वाच्यं भवतीत्यर्थः । कर्मादयोऽप्यपरे विभक्तीनां वाच्यास्तदीये इति ब्रुवाणेन ( १।४।२१ ) संख्यायाः कर्मादीनाञ्च विभक्तिवाच्यत्वमिति दर्शितम् । अर्थाच्च त्रिकत्वं स्वार्थद्रव्यलिङ्गात्मकं प्रातिपदिकार्थ इति तस्य प्रातिपदिकार्थस्य यदेकत्वं तत्र प्रथमैकवचनमेव भवति । न सप्तमीबहु-वचनम् । तद् व्यधिकरणस्यैव बहुत्वे भवति । तस्माद् एतत्तदोरर्थ-द्वारकेण प्रथमैकवचनमेव सम्बद्धम् । न सप्तमीबहुवचनम् । एष ददातीति । तदोः सः सावनन्त्ययोरिति (७।२।१०६) सत्वम् । त्यदाद्यत्वम् । आदेशप्रत्यययो-रिति (८।३।५९) षत्वम् । एषक इति । अव्ययसर्वनाम्नामकच् प्राक् टेरित्यकच् (५।३।७१) । ननु चाकचावेतौ भिन्नरूपत्वादेतत्तदौ न भवतः । तत् किमकोरिति प्रतिषेधेनेत्यत आह तन्मध्यपतित इत्यादि । तस्याश्च परिभाषाया अस्तित्व एष एवाकोरिति प्रतिषेधः ज्ञापकः । नेदमदसोरको-

रिति (७।१।११) च । ननुच नञ्समासे क्रते शब्दान्तरस्य सम्बन्धो सुर्भवति । नैतत्तदोः । ततश्च प्रसङ्गो नास्तीति किमनञ्समास इति प्रतिषेधेनेत्यत आह उत्तरपदार्थप्रधानत्वादित्यादि । यद्यपि शब्दान्तरं नञ्समास स्तथापि तस्योत्तरपदार्थप्रधानत्वादेतत्तदो-श्चोत्तरपदत्वात् तत्सम्बन्धिन्यामेव संख्यायां सुप्शब्द उत्पन्न इति तयोरेव सुर्भवति । तस्मादस्ति प्राप्तिरिति प्रतिषेधः क्रियते । समास इति किम् ? वाक्ये प्रतिषेधो मा भूत् । नैष ददाति । न स पश्यतीति ।

## १३३ । स्यश्छन्दसि बहुलम् ।

स्य इति । त्यदः प्रथमैकवचनम् । तस्यानुकरणम् । तस्माच्च या षष्ठ्युत्पन्ना तस्याः सुपां सुलुगित्यादिना (७।१।३९) लुक् । अनुत्पत्तिरेव तस्याः । अनुकार्य्यानुकरणयोर्भेदस्याविवक्षितत्वाद् यथा गवित्ययमाहेति । उदाहरणे तु पूर्ववत् सत्वादिकार्य्यम् ।

## १३४ । सोऽचि लोपे चेत् पादपूरणम् ।

सोऽचीति । पूर्ववत् तस्य प्रथमैकवचनान्तस्यानुकरणम् । पादपूरणं पादनिष्पत्तिः । ननुचारम्भसामर्थ्यादेवाचि विज्ञास्यते । हलि हि पूर्वेणैव सिद्धत्वात् । तत् किमर्थमचीति क्रियत इत्याह अचीति विस्पष्टार्थमिति । केचिदिच्छन्तीति । ते च्छन्दोग्रहणं नानुवर्त्तयन्तीति ।

## १३५ । सुट् कात् पूर्वः ।

संस्कर्त्तेति । सम्पुंकानां सत्वमिति (८।३।५, वा) वचनात् समः सुटीति निर्देशाद्वा (८।३।५) समो मकारस्य सकारः । अत्रानुनासिकः पूर्वस्य तु वेति (८।३।२) पूर्वाकारस्यानुनासिकः । अथ कात्पूर्वग्रहणं किमर्थम् ? यावता सुड्यमादिलिङ्गः । करोतिश्च ककारादिः । तत्रान्तरेणापि कात्पूर्वग्रहण-माद्यन्तौ टकिताविति (१।१।४६) कात्पूर्व एव सुड् भविष्यतीत्यत आह कात्पूर्वग्रहणमित्यादि । किं पुनरभक्तत्वे सतीष्टं सिध्यतीति ? अतस्तज्ज्ञापकं प्रति यत्नः क्रियत इत्याह तथाहीत्यादि । संस्कृषीष्टेति ।

आशिषि लिङ्। सीयुट्। आत्मनेपदम्। उश्चेति (१।२।१२) कित्त्वाद्गुणाभावः। सुट् तिथोरिति (३।४।१०७) तकारस्य सुडागमः। कात्पूर्वः सुट्। स यदि करोतिर्भक्तः स्यात् ततस्तस्य करोतिग्रहणेन ग्रहणात् कृञः संयोगादित्वं जातमिति ऋतश्च संयोगादेरितीट् (७।४।२०) प्रसज्येत। संस्क्रियत इति। लट्। कर्मण्यात्मनेपदम्। यक्। रिङ् शयग् लिङ् क्षु इति (७।४।२८) रिङादेशः। तत्र यदि करोतिभक्तत्वं सुटः स्यात् ततश्च संयोगादित्वं करोतेर्जातमिति गुणोऽर्त्तिसंयोगाद्योरिति (७।४।२९) गुणः स्यात्। अभक्तत्वे तु सुटः संयोगादित्वाभावादिड्गुणौ न भवतः। तिङ्ङतिङ इत्यादि। यद्यभक्तः सुट् तदा संस्क्रियत इत्यत्र समः पदस्य सुटा व्यवहितत्वात् तिङ्ङतिङ इति (८।१।२८) निघातो न सिध्यति। नच सुट एव पदस्य तिङो लभ्यते। पदादित्यधिकारात् (८।१।१७)। सुटश्चापदत्वात्। स्वरविधावित्यादि परिहारः। ऋतश्च संयोगादेरित्यनेन (४।२।४३) ऋकारान्तस्याङ्गस्य संयोगादेर्लिटि गुणो विधीयते। स चाभक्ते सुटि करोतेरसंयोगादित्वान्नोपपद्यत इति मन्यमान आह सञ्चस्करतुरित्यादि। गुणः कथम्? न कथञ्चिदित्यर्थः। तन्मध्य इत्यादि। द्विर्वचने कृते द्वौ करोती भवतः। तन्मध्ये चायं वर्त्तते सुट्। तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति (प, ८६) करोतिग्रहणेन गृह्यते। ततो नास्त्यसंयोगादित्वं कृञ इति भावः। ननु च द्विष्प्रयोगो द्विर्वचनमित्यस्मिन् पक्ष उच्चारणमात्रं भिद्यते। धातुस्त्वेक एव। तत् कथं करोतेर्द्वित्वम्। नैष दोषः। यद्यपि धातुरभिन्नस्तथाप्युच्चारणभेदाद्भेदस्तस्याश्रित इति। अड्भ्यासव्यवायेऽपीति (६।१।१३६) वचनात्। अभेदे हि व्यवाय एव नास्तीत्यभ्यासग्रहणमनर्थकं स्यात्। अथापि कथञ्चित् स तद्ग्रहणेन न गृह्येत एवमपि गुणो भवत्येवेति दर्शयन्नाह संयोगेत्यादि संयोगोपधग्रहणे हि सति संयोग उपधा यस्येति संयोगोपधत्वेन ऋकारं विशेष्य पश्चात् तेनाङ्गं विशेष्येत तदन्तस्याङ्गस्येति। तत्र यद्यपि करोतिरङ्गं संयोगोपधं न भवति ऋकारस्तु भवतीति गुणो भवत्येव। तद्भक्तः सुट्। टित्करणं किमर्थम्? तद्धि तदादित्वात् तद्भक्तता यथा स्यादित्येवमर्थं क्रियते। अभक्तश्चेत् सुट्

तदा टित्करणस्य वैयर्थ्यमेवापन्नमित्यत आह टित्करणमित्यादि। सुट् सुरुन्नामितुरुच्यमाने (८।३।७०) सुरेत्यादौ यः सुशब्दो यश्चोपसर्गस्तस्यापि ग्रहणं स्यात्। ततश्चातिसुरो ऽतिसुस्थित इत्यादावपि षत्वं प्रसज्येत। तस्मात् विशेषणार्थं टित्करणम्।

१३६। अड्भ्यासव्यवायेऽपि।

अड्व्यवायेऽभ्यासव्यवायेऽपीति। व्यवायो व्यवधानम्। अपिशब्दाद-व्यवायेऽपि। असत्यपिशब्दे व्यवाय एव स्यात्। समस्करोदिति लङ्। समस्कार्षीदिति लुङ्। च्लिः। तस्य सिच्। सिचि वृद्धिरित्यादिना (७।२।१) वृद्धिः। इतश्चेतिकारलोपः (३।४।१००)। अस्तिसिचोऽपृक्ते इतीट् (७।३।९६)। सञ्चस्करतुरिति। लिट्। यदि पूर्वं धातुः साधनेन युज्यते तदा साधनाभिधायिनि प्राग्लकारे कृते तन्निमित्ताभ्यामड्भ्यासाभ्यां भवितव्यम्। ततश्च तद्व्यवधाने सति सुण् न प्राप्नोतीति तदर्थं युज्यतेऽस्यारम्भः। न च पूर्वं धातुः साधनेन युज्यते। किं तर्हि? उपसर्गेण। यदि हि पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण ततोऽनुभूयते कम्बलो देवदत्तेनेत्यत्र कर्मणि लकारो न स्यात्। भवतेरकर्मकत्वात्। उपसर्गेण पूर्वं धातौ सम्बध्यमाने न भवत्येष दोषः। अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्तीति। तस्मात् पूर्वं धातुरुपसर्गेण युज्यते। ततश्च धातूपसर्गयोः कार्य्यमन्तरङ्गम्। तन्निमित्तयोर् धातूपसर्गयोरड्भ्यासनिमित्तात् प्रत्ययविशेषात् प्रागेव संविधानात्। अड्भ्यासौ तु बहिरङ्गौ। उत्तरकालभाविप्रत्ययविशेषापेक्षत्वात्। धातूपसर्गकार्य्यञ्च सुट्। तन्निमित्तत्वात्। अतस्तेनान्तरङ्गत्वाद् धातूपसर्गयोरुपादानमनन्तरमेव भवितव्यम्। नह्यसावुपजातनिमित्तो लकारस्य तावदुत्पत्तिं प्रतीक्षते। कुतः पुनरड्भ्यासावित्यभिप्रायेणाह किमर्थं पुनरिदमुच्यत इत्यादि। इतरस्तु नैवेदम-प्राप्तस्य सुटः प्रापणार्थमारभ्यते। किं तर्हि? कृतयोरड्भ्यासयोस्तद्व्यवाये कात्पूर्वः सुड् यथा स्यादकृतयो र्मा भूदित्येवमर्थमिति दर्शयितुमाह पूर्व-मित्यादि। इतिकरणो हेत्वर्थः। तत्र धातोः पूर्वमुपसर्गेण योगः। सुटोऽन्तरङ्गतायां हेतुः पूर्वं सुट्करणस्य। तदपि पश्चादड्भ्यासाविति कर्त्तव्या-विति शेषः। यतो धातुः पूर्वमुपसर्गेण युज्यते तेन धातूपसर्गयोः कार्य्यं

नैव किञ्चिदनिष्टमापद्यत इत्याह अभक्तश्च सुडित्युक्त मित्यादि। पूर्व्वमेव ह्यभक्तत्वं सुटः प्रतिपादितम्। अतस्तस्य करोतिग्रहणेनाग्रहणे सति पश्चाद् भवन्तौ सकारात् परावड्भ्यासावनिष्टे देशे स्याताम्। ततश्चेष्टरूपं न सिध्यतीत्यभिप्रायः। अथ सत्यप्यस्मिन् कथमयं दोषो न भवतीत्याह एतस्मिंस्तु सत्यत एवेत्यादि। अत्र तु सूत्रे सत्यत एव यावदड्भ्यास-व्यवायो न भवति तावत् सुटा भवितव्यमेव। तस्मात् पूर्व्वमड्भ्यासौ कर्त्तव्यौ। तत स्तद्व्यवाये सति अात् पूर्व्वं सुडिति सर्वमिष्टं सिध्यति।

## १३७। सम्पर्य्युपेभ्यः करोतौ भूषणे।

सम्पूर्व्वस्य क्वचिदभूषणेऽपीष्यत इति। कथं पुनरिष्यमाणो लभ्यते? संस्कृतं भक्षा (४।२।१६) इत्याचार्य्यप्रवृत्तेर् लिङ्गात्।

## १३८। समवाये च।

समवायः समुदाय इति। समवपूर्वादिणो भाव एरजित्यच् (३।३।५६)। समवाय इति संघात इत्यर्थः। समुदित इत्यर्थं इति। भावे निष्ठा।

## १३९। उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु।

सत इत्यादि। लब्धसत्ताकस्यार्थस्य पूर्वोत्पन्नेभ्यो गुणेभ्यो योऽन्यो गुणस्तद्गुणान्तरम्। तदाधीयत उत्पाद्यते येन तद् गुणान्तराधानम्। तत् पुनः किमर्थमित्याह आधिक्यायेत्यादि। किं तदित्याह समीहेति। तदेवं विद्यमानस्य वस्तुन आधिक्याय हृदये हृद्यस्य चैव तादवस्थ्याय तस्या हृद्यावस्थाया अपरिहाणाय गुणान्तराधानं ययाधीयते समीहया चेष्टया स प्रतियत्न इत्युच्यते। विकृतमिति जातविक्रियमित्यर्थः। गम्यमानस्य वाक्यार्थस्य स्वरूपेणेति। समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्त्तन्त इति प्रतीयमानोऽर्थः प्रकरणादिवाक्यस्यैकदेशो वाक्यशब्देनोक्तः। गम्य-मानार्थस्यापि सुखप्रतिपत्तये स्वरूपेणोपादानं वाक्याध्याहारः।

## १४०। किरतौ लवने।

लवनविषय इत्यादि। अनेन लवनं किरते र्नाभिधेयतया विशेषणम्।

अपि तु तदर्थस्य विषयभावेनेति दर्शयति। केन पुनरत्र णमुल्? यावता आभीक्ष्ण्ये णमुल् चेत्यादिना (३।४।२२) शास्त्रेण स आभीक्ष्ण्यादावप्यर्थे विधीयते। नचात्र सोऽर्थो विवक्षितः। नापि प्रतीयत इत्याह णमुलवेत्यादि। वक्तव्य इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। कृत्यल्युटो बहुल मित्यतो (३।३।११३) बहुलवचनाद् भविष्यति ॥

## १४१। हिंसायां प्रतेश्च।

हिंसायां विषय इति। एतेन किरतेर्नाभिधेयत्वेन हिंसाविशेषणम्। अपितु तदर्थस्य विषयभावेनेति दर्शयति। प्रतिस्कीर्ण मिति। ऋत इद्धातो रितीत्वम् (१।१।१९)। रपरत्वञ्च। रदाभ्यामित्यादिना निष्ठानत्वम् (८।२।४२)। हलि चेति (८।२।७७) दीर्घत्वम्। तथेत्यादिना किरतेरर्थस्य हिंसाविषयतां दर्शयति। अनुबध्नातीति। अनुगच्छतीत्यर्थः।

## १४२। अपाच्चतुष्पाच्छकुनिष्वालेखने।

तस्मिन् विषय इत्यादि। अनेनाप्यालेखनं किरतेर्नाभिधेयतया विशेषणम्। अपि तु तदर्थस्य विषयभावेनेति दर्शयति। अपस्किरत इति। तुदादिभ्यः श इति शः (३।१।७७)। पूर्ववदित्वम्। रपरत्वम्। आलिख्येत्यादिना लेखनस्य किरत्यर्थस्य विषयतामुद्भावयति। आलिख्येति। आकृष्येत्यर्थः। चतुष्पाच्छकुनिसाधनस्यालेखनस्य सामान्येनोपादानादिहापि प्राप्नोति। अपकिरति श्वौदनपिण्डमाशित इति। अत इदमालेखनविशेषण माह हर्षजीविकेत्यादि। हर्षः प्रमोदः। जीविका प्राणधारणोपायः। कुलाय आश्रमः। किं पुनः कारणं हर्षादिष्वात्मनेपदं भवति। नत्विह प्रत्युदाहरण इत्याह हर्षजीविकाकुलायकरणेष्वेवेत्यादि।

## १४३। कुस्तुम्बुरूणि जातिः।

ननुच सूत्रे नपुंसकलिङ्गेन निर्देशान्नपुंसकलिङ्गतायां फलजाताविव भवितव्यम्। नान्यलिङ्गतायाम्। औषधजातौ बहुवचन एव भवितव्यम्। नान्यत्र। बहुवचनेन निर्देशात्। तत् कथं कुस्तुम्बुरुरित्यत्र पुंलिङ्गतायामेकवचने च भवतीत्यत आह सूत्रनिर्देश इत्यादि। नपुंसकग्रहण

मुपलक्षणमात्रम्। बहुवचनमपि ह्यतन्त्रमेव सूत्रे। तथाचोक्तं सूत्रे लिङ्गवचनमतन्त्रम्। तस्याविवक्षितत्वादिति।

## १४४। अपरस्पराः क्रियासातत्ये।

अपरस्परा इति। अपरे च परे चेति द्वन्द्वः। सन्ततशब्दाद् भाव प्रत्यय उत्पन्ने सान्तत्यमिति भवितव्यमित्यभिप्रायेणाह किमिद मित्यादि सततशब्दादेवायं भावप्रत्यय उत्पन्न इति दर्शयन्नाह सततस्य भाव इत्यादि। कथं सततमिति ? एवं मन्यते। समो मकारलोपस्य लक्षणं तावदिह शास्त्रे नास्ति। अथ सातत्य इत्येतदेव निपातनं ततशब्दे परतः समो मकारस्य लोपो भविष्यतीत्यस्यार्थस्य ज्ञापनं कल्प्यतेतेवं सति सन्तत मिति न सिध्यतीत्यत आह समस्तते विकल्पेनेत्यादि। अयमभिप्रायः। सातत्यशब्दं पूर्व्वाचार्य्यलक्षणप्रसिद्धमुच्चारयता पूर्व्वाचार्य्यलक्षणमप्याश्रितम्। अतस्तेन समो मकारस्यात्र लोपो विधीयते। एवञ्च कृत्वा ऽवश्यम्प्रभृतीनामपि कृत्यादिषु लोपः सिद्धो भवति। अतस्तदेव पूर्व्वाचार्य्यलक्षणं दर्शयति लुम्पेदित्यादि। अन्त्यमिति शेषः। अवश्यं शब्दस्य कृत्यप्रत्ययान्ते परतो लुम्पेदन्त्यलोपमस्य कुर्य्यादित्यर्थः। अवश्यकर्त्तव्यम्। तुमुन्प्रत्ययान्तस्याप्यन्त्यं लुम्पेत् काममनसोश्च शब्दयोः परतः। कर्त्तुं कामोऽस्येति कर्त्तुकामः। हर्त्तुं मनोऽस्येति हर्त्तुमनाः। सम्शब्दस्य चान्त्यं लुम्पेद् विकल्पेन हिततततयोः शब्दयोः परतः। सहितम्। संहितम्। सततं सन्ततम्। कुगतिप्रादय इति (२।२।१८) समासः। मांसशब्दस्यान्त्यं लुम्पेत्। क्व ? पचि। डुपचष् पाक इत्येतस्मिन् धातौ। किंविशिष्टे ? युड्घञो रिति। ल्युटि (M) घञि च प्रत्यये परतो यः पचिस्तस्मिन्नित्यर्थः। अत्रापि वाग्रहणं सम्बध्यते। मांस्पचनम् (N) मांसपचनम्। मांस्पाकः मांसपाकः। कृद्योगा च षष्ठी समस्यत इति (२।२।८,वा) समासः। समासेऽयं लोपः पूर्वाचार्य्याणामभिप्रायः। संहितायाञ्च। तेन वाक्ये विच्छिद्य पाठे न भवति।

---

(M) युड़िति ल्युटः पूर्वाचार्य्याणां संज्ञा। (N) कथं मांस्पाकादिषु संयोगान्तस्य लोप (८।२।२३) इति न सकारस्य लोपः ? अयस्मयादित्वादित्येके (१।४।२०)। मांस्पचन्या उखाया इति भाष्यकारप्रयोगप्रामाण्यादित्यन्ये।

## १४५ । गोष्पदं सेवितासेवितप्रमाणेषु ।

तस्य च षत्वमिति । अनादेशप्रत्ययसकारत्वात् सुटः षत्वं न प्राप्नोतीत्यतस्तदपि निपात्यते । गावः पद्यन्त इत्यादिना देशस्य सेवितत्वं दर्शयति । असेवित इत्यादि । ननुच गोष्पदशब्दः सूत्र उपात्तः । तत् कस्मादसेविते ऽगोष्पदादीनीत्यादुग्रदाक्रियत इत्याह असेवित इत्यादि । क्रियते चेदमसेवितग्रहणम् । नच तत्र गोष्पदशब्दः सम्भवति । तस्मादसेविते ऽगोष्पदार्थं निपातनं विज्ञायते । यद्येवमिति । यद्यसेविते ऽगोष्पदार्थं निपातनमित्यर्थः । नार्थं एतेनेति । असेवितग्रहणेन । कथं तेन विना सिध्यतीत्याह गोष्पदप्रतिषेधादित्यादि । सत्यमेवैतदिति । गोष्पदप्रतिषेधादित्यादि यदुक्तं तस्य सत्यतामाह ननु नार्थं एतेनेत्यस्यार्थः । यदि तर्हि सत्यमेवैतत् तत् किमर्थं सेवितग्रहण मिह क्रियत इत्याह यत्र त्वित्यादि । नञ्समासेऽगोष्पद इत्येष तत्पुरुषः स्वभावादुत्तरपदार्थसदृश मर्थं माचष्टे । अब्राह्मणवत् । ततश्च न गोष्पदमगोष्पदमिति तत्पुरुषे कृते यत्र सेवितस्य सेवनस्य प्रसङ्गोऽस्ति तत्रैवागोष्पदमित्येतत् स्यात् । नतु यत्रात्यन्तासम्भव एव सेवितस्य तत्र । तथाहि स एव गोष्पददेशस्य सदृशो नेतरः । असेवितग्रहणात् तत्रापि भवतीति । अपिशब्दो न केवलं यत्र सेवितप्रसङ्गोऽस्ति तत्रैवागोष्पद मित्यमुमर्थं द्योतयति । कस्मात् ? पुनरत्रासेवितग्रहणात् तत्रापि भवतोत्यत आह यानि हीदि । एवमिति । असेवितग्रहणार्थकः प्रकारः प्रत्यवमृश्यते । असेवितग्रहणे हि सति मा भूत् तस्य वैयर्थ्यमिति बहुव्रीहिरयम् भावसाधनेनासेवितशब्देन विज्ञास्यते । अविद्यमानं सेवितमस्मिन्निति बहुव्रीहि स्त्वात्यन्ताभावेऽपि भवतीति येषु गवामत्यन्तासम्भव स्तान्यरण्यान्यासेवितशब्देनोच्यन्ते । ततश्च तत्राप्यगोष्पदमिति भवति । गोष्पदपूरमिति । वर्षप्रमाण ऊलोपश्चास्यान्यतरस्यामिति णमुल् (३।४।३२) । ननुच गोष्पदमिति षष्ठीसमासोऽयम् । तस्य च गोसम्बन्धि पदमर्थो नतु प्रमाणम् । तत् कथं गोष्पदमात्रं क्षेत्रमित्यादि ? कथ मुदाहरणं प्रमाणे युज्यत इत्यत आह

नात्वेत्यादि। नह्यत्र स्वार्थप्रतिपादनार्थमेव गोष्पदमित्युपादीयते। किं तर्हि? चेत्रादेरियत्तां परिच्छेत्तुम्। तस्मात् चेत्रादेरियत्ता तेन परिच्छिद्यते प्रमीयत इति भवति प्रमाणम्। नचात्र प्रमाणशब्देनायाम उच्यते। किं तर्हि? परिच्छेदमात्रम्। कुत एतत्? निपातनसामर्थ्यात्। निपातनं हि वस्त्वप्रसिद्धमप्युपादत्ते।

## १४६। आस्पदं प्रतिष्ठायाम्।

आत्मयापनायेति। आत्मयापनं प्राणधारणम्। तदर्थं यत् स्थापनं तत् प्रतिष्ठेत्युच्यते। आस्पदमिति। आङः परस्य पदस्य सुट् निपात्यते। आपदमिति। आङ् मर्य्यादावचन (१।४।८९) इत्याङः कर्मप्रवचनीयत्वम्। तद्योगे पञ्चम्यपाङ्परिभिरिति (२।३।१०) पञ्चमी। तदन्तेनाङ् (२।१।१३) मर्य्यादाभिविध्योरित्यव्ययीभावसमासः।

## १४७। आश्चर्य्यमनित्ये।

यद्यनित्येऽशाश्वतिक आश्चर्य्यमिति निपात्यते ततो घटादिष्वपि स्यादित्येतं दोषं परिजिहीर्षुराह अनित्यतयेत्यादि। अद्भुतं चित्रमित्युच्यते। यल्लोकेऽद्भुतं तच्चित्रम्। तस्य भावोऽद्भुतत्वम्। तस्य चान्यत्राभावादनित्यता विषयभूता। नहि तत्र ततोऽन्यत्र सम्भवति। तस्मात् तया विषयभूतयाऽद्भुतत्वमुपलच्यते। आश्चर्य्यं स यदि भुञ्जीतेति। अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपीत्यनवक्लृप्तावसम्भावनायां (३।३।१४५) लिङ्। भोजनं कस्यचिद् विशिष्टकालादावदृष्टपूर्वम्। अतस्तत्र भवत् तदद्भुतं भवति।

## १४८। वर्चस्कोऽवस्करः।

कुत्सितं वर्चः वर्चस्कमिति। कुत्सित इति (५।३।७४) कना निर्देशो दीप्तौ मा भूदित्येवमर्थः। दीप्तावपि हि वर्चःशब्दो वर्त्तत इति तत्रापि स्यात्। यदि वर्चस्कोऽवस्करशब्दो निपात्यते तदा तत्सम्बन्धिदेशे न प्राप्नोति। तत्रापि च लोकेऽवस्करशब्दः प्रयुज्यतइत्यत आह तत्सम्बन्धादित्यादि। यथा यष्टीः

प्रवेशयेति यष्टिसम्बन्धात् पुरुषा अपि यष्टिशब्देनोच्यन्ते तथावस्करसम्बन्धादवस्करशब्देन देशः।

१४९। अपस्करो रथाङ्गम्।

रथावयव इति। अनेनादिशब्दस्यावयववचनमाचष्टे।

२५०। विष्किरः शकुनिर्विकिरो वा। (0)

ननु च विष्किरः शकुनावित्येतावतैव सुड्विकल्पो सिद्धस्तत्र किमर्थं विकिरग्रहणमित्यत आह शकुनावेव विकिरशब्दस्य प्रयोगो यथा स्यादन्यत्र मा भूदित्येवमर्थं विकिरग्रहणम्।

१५१। ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे।

पूर्वं कात्पूर्वग्रहणादभक्तः सुडितुत्क्रम्। इह कात्पूर्वत्वं न सम्भवति। आगमलिङ्गञ्चास्य टित्त्वमस्ति। तत आगम एव सुड् विज्ञायत इत्याह सुडागमो भवतीति। स च भवन्नुभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति ह्रस्वादिति पञ्चम्याश्चन्द्रोत्तरपद इति च सप्तम्याः षष्ठ्यां प्रकल्पितायां चन्द्रशब्दस्यैव भवति। सुश्चन्द्र इति। प्रादिसमासः। सूर्याचन्द्रमसाविति। द्वन्द्वः। देवताद्वन्द्वे चेत्यानङ् (६।३।२६) अथेह कस्मान्न भवति ? शुक्लमसि चन्द्रमसीति ? अत्रापि ह्रस्वात् परश्चन्द्रशब्द उत्तरपदमस्तीत्यत आह उत्तरपदमित्यादि। शुक्लमसि चन्द्रमसीति वाक्ये। तस्मादिह चन्द्रशब्दउत्तरपदग्रहणेन न गृह्यत एव। यस्मादुत्तरपदं समास एव प्रसिद्धम्।

१५२। प्रतिष्कशश्च कशेः।

प्रतिगता कशां प्रतिकशोऽश्व इति। प्रादिसमासः। ननु च कशाशब्दोऽपि कशेरेव धातोः पचाद्यच सुत्पाद्य साध्यते। तदिहापि सुटा भवितव्यमित्यत आह यद्यपीत्यादि। कशेरेव धातोर्यदुपादानं तत् तस्यैव कशेर्य उपसर्गः प्रतिशब्दस्तस्य प्रतिपत्तिर्यथा स्यादित्येवमर्थम्। न च कशेः प्रतिरुपसर्गः। किं तर्हि ? गमेः। तेन धात्वन्तरोपसर्गान्न भवति।

---

(0) विष्किरः शकुनौ वेति पाठोऽन्येषाम्।

## १५३। प्रस्कण्वहरिश्चन्द्रावृषी।

प्रस्कण्वहरिश्चन्द्राविति। प्रकृष्टः कण्वोऽस्येति प्रस्कण्वः। हरिश्चन्द्रोऽस्येति हरिश्चन्द्रः। व्युत्पत्तिमात्रमेतत् कृतम्। न त्वत्रावयवार्थोऽस्ति। रूढ़िशब्दौ ह्येतौ प्रत्यस्तमितावयवार्थौ क्वचिदेव ऋषिविशेषे वर्त्तेते। ननुच हरिश्चन्द्रे ह्रस्वाच्चन्द्रोत्तरपद इत्यनेनैव (६।१।१५) सुट् सिद्धः। तत् किमर्थं हरिश्चन्द्रग्रहणमित्यत आह हरिश्चन्द्रग्रहण मित्यादि। प्रकण्व इति। प्रगतः-कण्वो ऽस्मादिति प्रकण्वः। हरिरिव चन्द्रोऽस्येति हरिचन्द्रः।

## १५४। मस्करमस्करिणौ वेणुपरिव्राजकयोः।

परिव्राजके त्विनिरपीति। निपात्यत इत्यपेक्षते। किं पुनः कारणं न प्राप्नोतीति। मत्वर्थाभावात्। अविद्यमानमस्करोऽपि परिव्राजको मस्करीत्युच्यते। मस्करिशब्दस्य तत्रैव रूढ़त्वात्। अच्प्रत्ययमपि निपातयन्तीति। कर्त्तर्युच्यमानः करणे न प्राप्नोतीत्यच्प्रत्ययमपि निपातयन्ति। यदि चेह वेणौ मस्करशब्दो निपात्यते तदा दण्डे न प्राप्नोति। तत्रापि चासौ लोके प्रयुज्यत इत्याह वेणुग्रहणमित्यादि। येन निवार्य्यते तदुपलक्षणार्थं वेणुग्रहणम्। दण्डेनापि निवार्य्यत इत्यत्रापि भवत्येव। कर्मापवादित्वादिति। सांसारिकं फलं कर्म। तदपवदितुं प्रतिषेद्धुं शीलं यस्य स कर्म्मापवादी। तस्य भावः कर्मापवादित्वम्। स हीत्यादिना तदेव कर्म्मापवादित्वं दर्शयति।

## १५५। कास्तीराजस्तुन्दे नगरे।

## १५६। कारस्करो वृक्षः।

केचिदित्यादि। यदि तर्हि सूत्र मेतत् केचिन्नाधीयते तत् कथं तेषां कारस्करशब्दो वृक्षे सिध्यतीत्याह पारस्करप्रभृतिष्वेवेत्यादि।

## १५७। पारस्करप्रभृतीनि च संज्ञायाम्।

पारस्करप्रभृतयो रूढ़िशब्दा यथाकथञ्चिद् व्युत्पाद्याः। नात्रावयवार्थं प्रत्यभिनिविष्टव्यम्। पारं करोतीति पारस्करः। कृञो हेतुताच्छील्यानु-

लोम्येष्विति टः (३।२।२०)। रथं पातीति रथस्पा। आतोनुपसर्गे कः। कार्य्यं करोतीति करोतेर्डुः। कार्य्यस्य च किरादेशः। किष्कुः। किमप्यन्त-र्दधातीति दधातेः पूर्ववत् कः। किमो द्विर्वचनम्। पूर्वस्य च मकारस्य लोपः। किष्किन्धा। तद्बृहतोरित्यादि। तद्बृहतोरित्यादि। तद् बृहत् इत्येत-योर्यथाक्रमं करपतिशब्दयोः परतश्चौरे देवतायाञ्चाभिधेयायां सुड् भवति। अन्त्यस्य च तकारस्य लोपः। तत् करोतीति किंयत्तद्बहुष्विज्विधान मित्यच् (३।२।२१,वा)। तस्करश्चौरः। तत्करोऽन्यः। बृहतां पतिर्बृहस्पति-र्देवता। बृहत्पतिरन्यः। अथ किमर्थञ्चौरदेवतयोरितुपाधिरुपादीयते? यावता संज्ञाग्रहणादेव तत्परिग्रहः सिद्धः। नह्यन्यस्य तस्करबृहस्पतिशब्दौ संज्ञा इत्यत आह संज्ञाग्रहणमित्यादि। प्रात्तुम्पतावित्यादि। तुप तुम्प हिंसाविति। अत्र परतः प्रशब्दात् परस्य सुड् भवति गवि कर्त्तरि। प्रस्तुम्पति गौः। प्रतुम्पतिरवान्यः। (P) यदुक्तमिति तु भाष्ये। यदि तर्हि पारस्कर-प्रभृतिराकृतिगणः प्रतिष्कशश्च कशेरित्यारभ्य पूर्वं सूत्रं न पठितव्यम्। तस्याप्यनेनैव संग्रहात्। सत्यमेतत्। प्रपञ्चार्थं तु पठितव्यम्।

## १५८। अनुदात्तं पदमेकवर्जम्।

एकवर्जमिति। एकं वर्जयित्वेत्यर्थः। द्वितीयायाञ्चेति णमुल्प्रत्ययः (३।४।५३)। यद्ययमधिकारार्थः स्यात् ततः षाष्ठिक एव स्वरः संगृहीतः स्यात्। ये त्वन्ये स्वराः समानोदरे शयित ओ चोदात्तः। अस्थिदधिसक्थ्य-क्ष्णामनङुदात्त इत्येवमादयः सप्ताध्याय्यां ते न संगृहीताः स्युः। परि-भाषायान्त्वस्या स्तेऽपि संगृहीता भवन्ति। सा ह्येकदेशे स्थितापि सकलं शास्त्रमभिज्वलयति यथा वेश्म प्रदीप इवेत्यालोच्याह परिभाषेयमिति। विध्यङ्गशेषभूता चेयम्। परिभाषा हि कार्य्यवाक्यानां शेषभावगता। यस्य

---

(P) गवीति किम्? प्रतुम्पति मेषः। कर्त्तरीति किम्? प्रतुम्पति गां वृषलः। तुम्पताविति न तिङन्तानुकरणम्। अपि च धातुनिर्देशः। प्रस्तुम्पको वृषः। प्रस्तुम्पो गौः। लुङि प्रास्तुम्पीद् गौः। पूर्वं धातुरुपसर्गेण युज्यते। अन्तरङ्गत्वात् सुट्। ततो द्वित्वम्। तेन लिटि प्रतस्तुम्प गौः। सनि प्रतुस्तुम्पिषति गौः। श्तिपा निर्देशाद् यङ्लुकि न। प्रतोतुम्पीति गौः।

पदावयवस्य स्वरित उदात्तो वा विधीयते तत्र शेषमनुदात्तम्भवति । स्वरविधिविषयेति । स्वरविधिर्विषयोऽस्या इति विग्रहः । यत्रान्य इति । अनुदात्तापित्त्वमन्यत्वम् । तत्रानुदात्तं पदमिति । ननु च नीचैरनुदात्त इत्यनुदात्तशब्दो (१।२।३०) विशिष्टगुणे ऽवसङ्गीतः । तत्राज्झललक्षणञ्च पदम् । पदशब्दस्यार्थस्तत् । कथमत्र सामानाधिकरण्यम् ? नैष दोषः । अनुदात्ताच्कमनुदात्तं पदमिहाभिमतम् । तेन पद एवानुदात्तशब्दो वर्त्तते । कथम् ? मत्वर्थीयाकारान्तत्वात् । अनुदात्ता अस्य सन्तीत्यनुदात्तम् । अर्श आदेराकृतिगणत्वादच् । एकवर्जमित्युक्तम् । स त्वेको न ज्ञायते यो वर्जनीयः । तस्याभिव्यक्तये पृच्छति कथं पुनरित्यादि । यस्य चोदात्तः स्वरितो वा विधीयते स एवैको वर्जते । यदि ह्यसावपि न वर्ज्यते तस्य तत् स्वरविधानमनर्थकं स्यात् । गोपायति । धूपायतीति । गुपू रक्षणे । धूप सन्तापे । गुपधूपेत्यादिनाय (३।१।२८) प्रत्ययान्तस्य सनाद्यन्ता धातव (३।१।३२) इति धातुसंज्ञा । धातो (६।१।१६२) रिति (६।१।१६२) धातोरन्तोदात्तत्वम् । आयप्रत्ययान्तस्यान्त्ययकाराकारस्य धातुस्वरत्वम् । धातुस्वरं आस्वरो बाधत इति । सतिशिष्टस्वरत्वात् । सति शिष्टस्य बलीयस्त्वात् । तथाह्युक्तं सतिशिष्टस्वरो बलीयानिति वक्तव्यमिति (६।१।१५७, वा) । लुनाति पुनातीति । प्वादीनां ह्रस्व(७।३।८०)इति ह्रस्वः । आप्रत्ययस्य च प्रत्ययस्वरेणाद्युदात्तत्वम् । आस्वरमिति । बाधत इति सम्बध्यते । ननु परत्वात् तिबादिषु कृतेषु विकरणैर् भवितव्यम् । अतः सति सर्वधातुकस्वरे आस्वरस्य शिष्यमाणत्वात् तस्य सति शिष्टत्वम् । एवञ्च आस्वरेणैव बाधा युक्ता तस्स्वरस्य । एवं मन्यते । यत् तास्यनुदात्तेन् ङिदुपदेशेत्यत्रादिना ( ६।१।१८६ ) तासेः परस्य लसार्वधातुकत्वं शास्ति तज्ज्ञापयति शिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरेण बाध्यत इति । लुनीतः पुनीत इति । ई हल्यघोरितीत्वम् (६।४।११३) । तस्स्वरमास्वर इति । बाधत इति सम्बन्धः । बाधकत्वे तस्य हेतुः सति शिष्टत्वमेव । लुनीतस्तरामिति । तिङश्चेति (५।३।५६) तसन्तात् तरप् । तदन्तात् किमेत्तिङव्ययेत्यादिनामुप्रत्ययः (५।४।११) । किमर्थं पुनरयमेकवर्जपदस्वरो विधीयत इत्याह आगमस्येत्यादि । आगमादीनां

पृथक् स्वरो मा भूदितिएवमर्थमेकं वर्जयित्वा पदानुदात्तत्वं विधीयते। आगमस्वरः प्रकृतिस्वरं बाधत इति। सत्यस्मिन्नेकवर्जं पदं स्वरे। असति तस्मिन् प्रकृतेरागमस्य च पृथगेव स्वरः स्यात्। चत्वार इति। प्रकृतिस्वरः पुनराद्युदात्तत्वम्। तथाहि चतेरुरन्नितुरन् (उण् ५।७२६) प्रत्ययान्तश्चतुः शब्दो व्युत्पाद्यत इति स नित्स्वरेणाद्युदात्तो भवति। अनड्वाह इति। अनुडुहोऽप्येवं व्युत्पत्तिःक्रियते। अन प्राणने। अस्मात् सर्वधातुभ्योऽसुन्नित्यसुन् (उण्, ५।६२८) प्रत्ययान्तत्वादनःशब्दो नित्स्वरेणाद्युदात्तः। अनो वहतीत्यनसि वहेः क्विप्। उञ्चानस इत्यनस्युपपदे वहेर्धातोः क्विप्। अनसोकारादेशः। वहे यँजादित्वात् संप्रसारणम्। उपपदसमासः। तत्पुरुषे तुल्यार्थेत्यादिना (६।२।२) पूर्वपदप्रकृतिस्वरत्वम्। तस्मादनुडुहोऽप्येवं व्युत्पादितस्य स्यादाद्युदात्तत्वम्। विकार आदेशः। अनड्स्वरः प्रकृतेरिति। दध्यस्थिशब्दावाद्युदात्तौ। तथाह्यसु क्षेपणे। असिसञ्जिभ्यां थ्क्निनिति (उण्, ३।४३४) थ्क्निन्प्रत्ययान्तत्वान्नित्स्वरेणास्थिशब्द आद्युदात्तः। दधिशब्दोऽपि किन्प्रत्ययान्तत्वादाद्युदात्त एव। धाधातोरादृगमहनेति (३।२।१७२) किकिनौ लिट् चेति किन्प्रत्ययः। तत्र द्विर्वचने कृत आकारलोपे च दधीति भवति। अस्थिदधीत्यादिनानङि कृते (७।१।७५) तस्य यः स्वरः स च कर्त्तव्यः। तस्याप्यसत्यस्मिन्नस्थिदधिशब्दयोरनङश्च पृथगेवोदात्तत्वं तु स्यात्। अस्मिंस्तु सत्यनङ एव भवति। प्रकृतेरित्यादि। गोपायति धूपायतीति। अत्र प्रकृते गुपिधूपिश्च धातोरित्यन्तोदात्तत्व (६।१।१६२) आयप्रत्ययादेरप्याकारस्य प्रत्ययाद्युदात्तत्वम्। गोपायधूपायशब्दयोरपि सनाद्यन्ता धातव इति (३।१।३२) धातुसंज्ञायां कृतायां धातोरित्यन्तोदात्तत्व (६।१।१६२) मेव प्राप्नोति। एवं पृथक् स्वरप्रसङ्गे यकाराकारस्यैव धातुस्वरो भवति। न गुपिधूप्यो र्नापि प्रत्ययाकारस्य। कर्त्तव्यमिति। धातोरन्तोदात्तत्वे प्रत्ययस्याद्युदात्तत्वे च प्राप्ते प्रत्ययाद्युदात्तत्वमेव भवति। ननु धातुस्वरः। यथानियमेनैकस्वरस्य वर्जयमानता कस्मान्न भवति? नह्यत्र सूत्रे कश्चिद् व्यवस्थाहेतुरुपात्तः। नच विना व्यवस्थाहेतुना सा लभ्यत इत्याह पर-

नित्यान्तरङ्गेत्यादि। यत्र परादिस्वराः प्राप्नुवन्ति तद्विपर्ययाश्च तत्र परादीनां बलीयस्त्वात् तत एव वर्त्त्यं न। इतरे तु निवर्त्यन्ते। यत्र तु परनित्यान्तरङ्गा पवादेऽपि क्वचिदिष्टं न सिध्यति तत्र सति शिष्टेन व्यवस्था भवति। तस्य हि बलीयस्त्वमुक्तम्। अतः सति शिष्टेतरस्वरप्राप्तौ सति शिष्ट एव वर्त्त्यते। नेतरः। कथं पुनः सति शिष्टेन व्यवस्थेत्यत आह यो हीत्यादि। कथमेतज् ज्ञायत इत्याह तथाहीत्यादि। गोपायतीति। अत्रायप्रत्ययस्य प्रत्ययस्वरेणाद्युदात्तत्वम्। स च स्वरो धातुस्वरस्यापवादोऽपि सन्नायप्रत्ययान्तस्य धातुसंज्ञायां कृतायां पुनस्तेन धातुस्वरेण सति शिष्टेन बाध्यते। कार्ष्णोत्तरासङ्गपुत्र इति। बहुव्रीहिं कृत्वा तत्पुरुषः कर्त्तव्यः। बहुव्रीहिस्वर इति। बहुव्रीहौ प्रकृत्येत्यादिनोक्तः (६।२।१)। पूर्वकं ज्ञापकं चेतसि कृत्वाह विकरणस्वरस्त्वित्यादि। विभक्तिस्वरेत्यादि। निपाता आद्युदात्ता (फिट्, ४।७९) इति नञुदात्तः। तत्र तत्पुरुषसमासे कृते तत्पुरुषे तुल्यार्थेत्यादिना (६।२।२) प्रकृतिस्वरादुदात्तत्वमेव भवति। यदा तु नञ्स्वराद् विभक्तिस्वरः प्राप्नोति नञ्स्वरश्चेष्यते तस्माद् विभक्तिस्वरो बलीयानिति वक्तव्यम्। बलीयस्त्वे सति किं भवतीत्याह अतिस्त्र इत्यत्रेत्यादि। तिसृभ्यो जस (६।१।१६६) इत्यनेन विभक्तेरुदात्तत्वं विधीयते। तद्बलीयस्त्वात् सति शिष्टमपि नञ्स्वरेण बाध्यते। विभक्तिस्वरस्य तु तिस्रः तिसृष्विति त्येषोऽवकाशः। विभक्तिनिमित्तस्वराच्चेत्यादि। विभक्तिर्निमित्तं यस्य स स्वरो विभक्तिनिमित्तस्वरः। यस्य विभक्तिर्निमित्तमाम इति। आमो विभक्तिनिमित्तत्वं पथिमथोः सर्वनामस्थान (६।१।१९९) इत्यतः सर्वनामस्थानग्रहणानुवृत्तेः। तस्य यदुदात्तत्वमित्यादिना बलीयस्त्वस्य फलं दर्शयति। विभक्तिनिमित्तस्वरस्य चत्वारोऽनड्वाह इत्येषोऽवकाशः। वाक्ये हीत्यादि। देवदत्तशब्द आमन्त्रितस्वरेणाद्युदात्तत्वम्। गोशब्दो हि प्रातिपदिकस्वरेणान्तोदात्तः। तस्यौतोऽम् शसो (६।१।९३) रित्याकारोऽपि स्थानिवद्भावेनोदात्त एव। तथा विभक्त्या सहैकादेशेऽपि। एकादेश उदात्तेनोदात्त (८।२।५) इति वचनात्। अभिशब्दोऽन्तोदात्तः। तस्य निपाता आद्युदात्ता उपसर्गाश्चाभिवर्जं (फिट्, ४।८०) मित्याद्युदात्तविधाने वर्जितत्वात् प्रातिपदिक-

स्वर एव भवति । आङुपसर्गस्वरेणाद्युदात्तः । आजेत्येष तु लोडन्तस्तिङ्ङ-तिङ इति (८।१।२८) निघातेनानुदात्तः । शुक्लशब्दो हि प्रातिपदिक-स्वरेणान्तोदात्त इति तस्यैकादेश उदात्तेनोदात्त (८।२।५) इति टापा सहैका-देशे कृतेऽन्तोदात्त एव भवति । एवमभिपूर्वत्वे (६।१।१०७) कृते वेदि-तव्यम् । तदेवं पदग्रहणाद् वाक्य एकैकस्मिन् पदे पृथगेव स्वरो भवति । यद्यनुदात्तं पदमेकवर्जं भवत्येवं सति यावत् पदसंज्ञा न भवति तावदेकं वर्जयित्वा परिशिष्टस्यानुदात्तत्वेन भवितव्यम् । ततश्च कुवल्या विकारः कौवलमित्यत्रानुदात्तादेश्चेत्यनेनाञ् (४।२।४३) प्रत्ययो न स्यात् । यतः कुवलशब्दोऽयं ग्रामादीनाञ्चेत्याद्युदात्तः (फिट्, २।२८) । गौरादित्वान् ङीषि विहितेऽपि पदव्यपदेशाभावादाद्युदात्तत्वं न परित्यजतीत्याह परिमाणार्थञ्चेद-मित्यादि । पदमत्र गौणमभिप्रेतम् । न मुख्यम् । अन्यथा पदाधिकारे सति पुनः पदग्रहणमनर्थकं स्यात् । तस्मादुत्तरकालं यस्य पदसंज्ञा भविष्यति तदिह पदमभिप्रेतमिति वेदितव्यम् । असति पदग्रहणे न ज्ञायते कियता-मचामनुदात्तत्वं भवतीति । पदग्रहणे तु सत्येकस्मिन् पदे यावन्तोऽच-स्तावतामनुदात्तत्वं भवतीत्येषोऽर्थो ज्ञायते । तस्मात् परिमाणार्थमिति । नतु सुबन्तस्य तिङन्तस्य वा प्रतिपादनार्थम् । तेन प्रागेव पदव्यपदेशादनुदात्त-त्वेन भवितव्यमिति न भवति पूर्वोक्तदोषप्रसङ्गः । स्यादेतत् । यद्यपि पदमित्यनेन मुख्यं पदं न प्रत्याय्यते तथापि पदाधिकारेण तदिह सन्निधाप्यत इति तदवस्थ एव स दोष इत्यत आह पदाधिकारस्य निवृत्तिं करोतीति । एतत् पदग्रहणं गौणमर्थं प्रतिपादयन् मुख्यपदाधिकारं निवर्त्तयति । तेन किमिष्टं भवतीत्याह तेनेत्यादि । तथाचेति । एवञ्च सतीत्यर्थः । प्रागेव पदव्यपदेशात् स्वरविधानतुल्यकालमेव परिशिष्टस्यानुदात्तत्वं भवतीति । अमुमेवार्थं द्रढयितु माह गर्भिणीत्यादि । गर्भोऽस्या अस्तीतीनिः । ऋन्नेभ्यो ङीबिति (४।१।४) ङीप् । गर्भशब्दोऽयं (Q) कुवलशब्दवदाद्युदात्तः । तत्र यदीनिप्रत्ययस्योदात्तत्वसमकालमेवानुदात्तत्वं भवति ततो गर्भिणी-शब्दस्यानुदात्तादित्वादनुदात्तादेरञित्यञ् (४।२।४४) प्राप्नोतीति तद्बाध-

(Q) गर्भशब्दो ग्रामादिः ।

नार्थं युज्यते तस्य भिक्षादिषु पाठः। तस्य तूत्तरकालं पदसंज्ञायामुपजातायामवशिष्टस्यानुदात्तत्वं स्यात्। एवं सति गर्भिणीशब्द आद्युदात्तः स्यात्। ततश्चाणो बाधनार्थं भिक्षादिषु न पठ्येत। पठ्यते च। तस्मात् ततो विज्ञायते प्रागेव पदव्यपदेशात् स्वरविधिसमकालमेवावशिष्टस्यानुदात्तत्वं भवतीत्यभिप्रायः। किं पुनः कारणं लब्धायां पदसंज्ञायामवशिष्टस्यानुदात्तत्वे विधीयमाने कुवलीशब्दादञ् न सिध्यति ? कथञ्च गर्भिणीशब्दस्यानुदात्तादिलक्षणस्याणो बाधनार्थो भिक्षादिषु पाठः ? प्रागेव पदव्यपदेशात् स्वरविधिसमकालमेवावशिष्टस्यानुदात्तत्वं भवतीत्यस्यार्थस्य ज्ञापक इत्याह कुवलगर्भशब्दावित्यादि। आद्युदात्तत्वे ह्यनयो र्यदि पदसंज्ञायां सत्यामवशिष्टस्यानुदात्तत्वं स्यात् कुवलीशब्दस्य च स्यात्। ततश्च कुवलीशब्दाद् विकारेऽर्थेऽञ् न स्याद्। गर्भिणीशब्दस्याद्युदात्तत्वादञ् प्राप्नोति। ततस्तद्बाधनार्थं भिक्षादिषु न पठ्येत। पठ्यते च। तस्मादवसीयते प्रागेव पदव्यपदेशादवशिष्टस्यानुदात्तत्वं भवति।

## १५९। कर्षात्वतो घञोऽन्त उदात्तः।

कर्षात्वत इति। कर्षश्चात्वांश्चेति कर्षात्वत्। समाहारद्वन्द्वः। आकारोऽस्यास्तीत्यात्वान्। कर्षतेर्धातोरिति। कृष विलेखन इत्यस्याकारवतश्चेति सम्बध्यते। कर्षतिना धातुना साहचर्यादात्वतोऽपि धातोरेव ग्रहणम्। घञिति प्रत्ययग्रहणम्। अतः प्रत्ययग्रहणपरिभाषया तदन्तस्य कार्यं ज्ञायत इत्याह घञन्तस्येति। एतच्च कर्षतेरात्वतश्च समानाधिकरणं विशेषणम्। पाक इत्यादि। अत उपधाया (७।२।११६) इति वृद्धौ कृतायां धातोराकारवत्त्वम्। दायो धाय इति। आतो युक् चिण्कृतोरिति (७।३।३३) युक्। किमर्थं पुनः प्रकृते विकृतस्य ग्रहणं क्रियते ? न कृषात इत्येवोच्येतेत्यत आह कर्ष इति विकृतनिर्देश इत्यादि। कृषिर्विलेखनार्थो भ्वादौ तुदादौ च पठ्यते। तत्र यस्य विकरणे परतो गुणात्मको विकारो भवति तस्यैव भौवादिकस्य ग्रहणमिष्यते। नेतरस्य। एतच्च विकृतनिर्देशे सति लभ्यते। तस्मात् कृषतेस्तौदादिकस्य निवृत्तिर्यथा स्यादित्येवमर्थो विकृत-

निर्देशः । कस्मात् पुनस्तौदादिकस्य निवृत्तिरिष्यत इत्यत आह तौदादिकस्य इत्यादि । (R) अथ किमर्थं मतुपा निर्देशः क्रियते ? न कर्षात इत्येवोच्येत ? नैव शक्यम् । विहितविशेषणस्याकारस्य ग्रहणं विज्ञायेत । आकारान्ताद् यो विहित इति । तथाच दाय इत्यादावेव स्यात् । पाक इत्यादौ न स्यात् । मतुब्ग्रहणे तु सति न दोषः । अन्तग्रहणमुत्तरार्थम् । इह ह्यलोऽन्तस्येति (१।१।५१) भविष्यति ।

## १६० । उञ्छादीनाञ्च ।

उञ्छः । म्लेच्छः । जञ्जः । जल्प इति । उछि उञ्छे । म्लेच्छ अव्यक्तायां वाचि । जज जजि युद्धे । जप जल्प व्यक्तायां वाचि । जञ्जेः कुत्वाभावो निपातनात् । जपो व्यध इत्यबन्ताविति । तत्र व्यधजपो रनुपसर्गे (३।३।६१) इत्यबन्तत्वम् । वधशब्दो हि हनश्च वध (३।३।७६) इति । तयोर्धातुस्वरः प्राप्त इति । धातो (६।१।१६२) रित्युदात्तत्वम् । व्यध इति । व्यध ताड़ने । अत्रापि व्यधजपोरित्यबन्तत्वम् (३।३।६१) । पूर्ववद्धातुस्वरः प्राप्तः । कालविशेष इति । कृतद्वापरादौ । रथाद्युपकरणे चेति । आदिशब्देन हलादेर् ग्रहणम् । गर इति । गॄ निगरणे । ऋदोरबित्यबन्तः (३।३।५७) । विषमित्यनेन दूष्यशब्दस्य विशेषे वृत्तिं दर्शयति । अन्यत्राद्युदात्त एवेति । धातुस्वरेण । वेद वेग वेष्ट बन्धा इति । विद ज्ञाने । विचिर् पृथग्भावे । वेष्ट वेष्टने । (S) बन्ध बन्धने । परिष्टुदित्यादि । ष्टुञ् स्तुतौ । यु मिश्रणे । द्रु गतौ । एभ्यो यथायोगं पर्य्याद्युपसर्गपूर्वेभ्यः क्विप् । प्रादिसमासः । अन्यत्र मध्योदात्त इति । वर्त्तनिशब्दो ह्यर्त्तिस्तृहृइत्यतोऽनिप्रत्यये (उण् २।२५८) ऽनु वर्त्तमाने वृतेश्चेत्यनेन (उण्, २।२६३) वृतु वर्तन इत्येतस्मादनिप्रत्यय मुत्पाद्य व्युत्पाद्यते । तस्मात् प्रत्ययस्वरेण मध्योदात्तो भवति । दर इति । दॄ विदारणे । ऋकारान्तत्वादबन्तः । साम्बतापौ भावगर्हायामिति । सहाम्बया वर्त्तत इति साम्बः । बहुव्रीहौ प्रकृत्या पूर्वपद मिति (६।२।१) प्रकृति

(R) अतः परं सद्गौभूरपुस्तके हलस्येति कृद्योगे कर्त्तरि षष्ठीति लिखितमस्ति । (S) मुद्रितकाशिकायान्तु चेष्ट इति पाठः ।

स्वरेण सहशब्दस्य निपाता आद्युदात्ता ( फिट्, ४।७९ ) इत्याद्युदात्तत्वे प्राप्ते भावगर्हायां मन्तोदात्तत्वं विधीयते। साम्बो भिन्नते (T)। भिन्नण मत्र भावगर्हा। तपनं तापः। तप सन्ताप इत्यस्माद् घञ्। आद्युदात्तत्वे प्राप्ते वचनम्। तापो दस्यूनां धार्मिकेषु। भावगर्हायामिति किम्? साम्बस्तिष्ठति। तापो महान् ग्रीष्मस्य। अनयोराद्युदात्तत्वमेव। उत्तमशश्वत् तमाविति। एतौ तमप् प्रत्ययान्तौ। पित्त्वात् प्रत्ययस्यानुदात्तत्व उच्छब्दस्य निपाता आद्युदात्ता ( फिट्, ४।७९) इत्याद्युदात्तत्वमित्यत आद्युदात्तत्वे प्राप्तेऽन्तोदात्तार्थं मुत्तमशब्दः पठ्यते। शश्वच्छब्दोऽपि प्रातिपदिकस्वरेणान्तोदात्तः। ततो मध्योदात्तत्वे प्राप्तेऽन्तोदात्तार्थमेव पठ्यते। सर्वत्रेति। भावगर्हायामन्यत्र च। भक्ष मन्थ इत्यादि। भक्ष भक्षणे। मन्थ विलोड़ने। भुज कौटिल्ये। दिह उपचये। ननु भक्षि श्चुरादित्वाण्ण्यन्त इति। तत एरजित्यचा (३।३।५६) भवितव्यम्। तत् कथमसौ घञन्त इत्याह भक्षिर्ण्यन्तोऽपीत्यादि। अत्रैव कारण माह एरजण्यन्तानामिति (U)।

## १६१। अनुदात्तस्य च यत्रोदात्तलोपः।

कुमारीति। वयसि प्रथम इति (४।१।२०) ङीप्। यस्येति (६।४।१४८) चेत्यकारलोपः। कुमारशब्दोऽन्तोदात्त इति। प्रातिपदिकस्वरेण। एव मुत्तरत्राप्यन्तोदात्तता वेदितव्या। ङीबित्यनुदात्त इति। पित्त्वात्। प्रासङ्ग्य इति। तद् वहतीत्यादिना (४।४।७६) प्राग्घितीयो यत्। प्रसङ्गशब्द इत्यादि। षन्ज सङ्ग इत्यस्माद् घञ मुत्पाद्य प्रसङ्गशब्दो व्युत्पाद्यते। तस्य गतिकारकोपपदादिति (६।२।१३९) तत्पुरुष इति वर्त्तमाने थाथघञ् क्ताजवित्रकाणामित्यन्तोदात्तत्वं (६।२।१४४) विहितम्। अतोऽसावन्तोदात्तः। नैतदस्तीति। उदात्तो लुप्यत इति यदुक्तं तस्य प्रतिषेधः। कस्मान्नैतदस्तीत्याह स्वरिते हीत्यादि। स्वरविधिसमकालमेव शिष्टस्यानुदात्तत्वं भवतीति। प्रातिपादिक मेतत्। तस्मात् स्वरिते विधीयमाने परिशिष्ट-

(T) अम्बया सह भिक्षणस्य गर्हितत्वादित्यर्थः।

(U) एरजण्यन्तानामिति वार्त्तिक मित्येके। अन्ये लिङ्गमार्षमाहुः। एतद्विषये हरदत्त आह "शैलमार्ष मेतद् वचन मित्याहु स्तेषां भक्षशब्दस्य पाठप्रयोजनं मृग्य" मिति।

स्यानुदात्तत्वेन भवितव्यम् । तत् कुत उदात्तलोपः ? न कुतश्चिदित्यर्थः । तदेतदित्यादि । यस्मादेव मनुदात्तग्रहणस्य प्रत्युदाहरणं न संभवति तस्मादनुदात्तग्रहण मेतदादेरनुदात्तस्योदात्तत्वं यथा स्यादित्येवमर्थम् । अन्यथा ह्यस्यानर्थक्यमेव स्यात् । किं पुनः कारणमादे रनुदात्तस्योदात्तो न सिध्यति ? यतस्तदर्थमनुदात्तग्रहणं क्रियत इत्याह अन्त इति ह्रीत्यादि । अवधारण मात्र द्रष्टव्यम् । अन्तस्यैव स्यान्नादेरित्यर्थः । क्व पुनरादेरुदात्तार्थं मनुदात्तग्रहणं क्रियत इत्याह मा हि धुचातामित्यादि । दुहेर्लुङ् । आत्मनेपदमातामाथाम् । ततश्च शलइगुपधादनिटः क्स (३।१।४५) इति च्लेः क्सादेशः । तस्यानुदात्तेत्यादिना (६।१।१८६) लसार्वधातुकस्यानुदात्तत्वम् । क्सस्याची (७।३।७२) त्यकारलोपः । क्सस्याकारः प्रत्ययस्वरेणोदात्तः । दादेर्धातोर्घः ( ८।२।३२ ) खरि चेति (८।४।५५) चर्त्वम् । घकारस्य ककारः । षत्वम् । अत्रासत्यनुदात्तग्रहण आतामाथामाकारस्यादिभूतस्यानुदात्तत्वं न स्यात् । सति त्वस्मिन्नाकारस्यादिभूतस्योदात्तत्वं स्यात् । हिशब्दस्य प्रयोगे हि चेति (८।१।३४) निघातप्रतिषेधो न स्यात् । निघाते हि तिङन्तस्यासत्युदात्तलोपो न स्यात् । माङ्प्रयोगोऽप्यटो न माङ्योग इति (६।४।७४) प्रतिषेधो यथा स्यात् । अटि हि तस्योदात्तत्वाच्छेषस्यानुदात्तत्वं स्यात् । तथाच सत्यनुदात्तस्याकारलोपः स्यात् । नोदात्तस्य । भृगव इति । भृगोरपत्यानि ऋष्यन्धकवृष्णीत्यादिना (४।१।११४) ऋष्यण् । तस्यात्रिभृगुकुत्सेत्यादिना (२।४।६५) बहुषु लुक् । ननु चात्रापि विभक्तावुत्पन्नायामुदात्तस्य लोपः । तस्मादिहापि भवितव्य मेवेत्यत आह प्राक् सुबुत्पत्ते रित्यादि । नहि गोत्रप्रत्ययस्य लुग्विधौ विभक्तिनिमित्तत्वं नाश्रीयते । तस्मात् प्रागेव गोत्रप्रत्ययस्य लुक् । ततो नात्रानुदात्ते । वैदी । ओर्वीति । विदस्यापत्यमुर्वस्यापत्यमित्यृष्यानन्तर्ये विदादिभ्योऽञित्यञ् ( ४।१।१०४ ) । ञित्स्वरेणाद्युदात्तः । टिड्ढाणञिति (४।१।१५) ङीप् ।

## १६२ । धातोः ।

ऊर्णोतीति । अदादित्वाच्छपो लुक् ।

## १६३। चितः।

भङ्गुरमित्यादौ प्रत्ययस्वरस्यापवादोऽन्तोदात्तत्वं विधीयते। कुण्डिना इति। अत्र तु स्थानिवद्भावः स्वरस्य। कुण्डिनीशब्दस्यायमादेशः। स च प्रत्ययस्वरेण मध्योदात्त इति तदादेशोऽपि मध्योदात्त एव स्यात्। कुण्डमस्यास्तीतीनिः। तदन्तात् स्त्रियामृन्नेभ्यो ङीबिति (४।१।४) ङीप्। कुण्डिन्या अपत्यानि बहूनीति गर्गादित्वाद् यञ्। तस्य बहुषु लुक्। परिशिष्टस्य कुण्डिनजादेशः। चिति प्रत्यय इत्यादि। कथं पुनः प्रकृतिप्रत्ययसमुदायस्यान्तोदात्तत्वं लभ्यते? यथा लभ्यते तथाख्यायते। इह चित इति समुदायसम्बन्धेऽवयवादेषा षष्ठी। चितोऽवयवस्य यः सम्बन्धी यः समुदायस्तस्यान्तोदात्तत्वं भवतीत्यर्थः। अथवा चित इति मत्वर्थीयाच् प्रत्ययान्तमेतच् चिदस्यास्तीति चितः। तस्यान्तोदात्तत्वं भवतीत्यर्थः। तेन प्रकृतिप्रत्ययसमुदायस्यान्तोदात्तत्वं सिध्यति। यदि तर्हि चित इति मत्वर्थीयाकारप्रत्ययान्तमेतत् तर्हि षष्ठी प्राप्नोति। चितस्येति निर्देशेन भवितव्यम्। नैष दोषः। छन्दोवत् सूत्राणि भवन्तीति सुब्व्यत्ययेन षष्ठ्याः प्रसङ्गे प्रथमा भविष्यति। बहुपटव इति। ईषदसमाप्ताः पटव इति विभाषा सुपो बहुच् पुरस्तात् त्विति (५।३।६८) बहुच्। उच्चकैरिति। अव्ययसर्वनाम्नामकच् प्राक् टेरित्यकच् (५।३।७१)।

## १६४। तद्धितस्य।

कौञ्जायना इति। कुञ्जादिभ्यश्च्फञिति (४।१।९८) च्फञन्ताद् व्रातच्फञोरस्त्रियामित्यागतस्य (५।३।११३) ञ्यप्रत्ययस्य तद्राजस्य बहुष्वित्यादिना (२।४।६२) लुक्। किमर्थमिति। पूर्वेणैव सिद्धमिति मन्यमानस्य प्रश्नः। परमपीत्यादि। च्फञो हि चकारो व्रातच्फञोरस्त्रियामितत्र (५।३।११३) विशेषणेन चरितार्थः। ञकारोऽपि वृद्धौ। यद्येवं नोच्येत तदा परत्वान् ञित्स्वरः स्यात्। तस्मात् तमपि बाधित्वान्तोदात्तत्वमेव यथा स्यादित्येवमर्थं क्रियते।

## १६५ । कितः ।

प्रत्ययस्वरस्यापवादोऽयम् । आक्षिकः शालाकिक इति । तेन दीव्यतीत्यर्थे (४।४।२) ठक् ।

## १६६ । तिसृभ्यो जसः ।

तिस्रस्तिष्ठन्तीति । त्रिचतुरोः स्त्रियां तिसृचतसृ इति (७।२।९९) तिस्रादेशः । अचि र ऋत इति (७।२।१००) ऋकारस्य रादेशः । उदात्तस्वरितयोरित्यादि । त्रिशब्दः प्रातिपदिकस्वरेणान्तोदात्त इति तदादेशोऽपि तिसृशब्दोऽन्तोदात्त एव । तत्र तत्र ऋकारस्यान्तोदात्तस्य स्थाने विहितो रेफ उदात्तयण् न भवति । ततः परस्य जस उदात्तस्वरितयोरित्यादिना (८।२।४) स्वरितः प्राप्नोति । अतोऽस्यायमपवादः । अथ जस्ग्रहणं किमर्थम् ? तिसृकेतत्र मा भूदिति चेत् ? स्यादेतत् । त्रिशब्दात् संज्ञायां कनि कृते तत्र च तिसृभावे कन्युपसंख्यान (७।२।९९, वा) मिति तिस्रादेशे तिसृकेत्यत्रापि स्यात् । असति जस्ग्रहण इति । नैतदस्ति । नित्स्वरोऽत्र बाधको भविष्यति । नाप्राप्ते स्वरान्तरे तिसृस्वर आरभ्यते । स यथैवानुदात्तौ सुप्पिताविल्येतत्स्वरं (३।१।४) बाधते तथा नित्स्वरमिति चेत् ? नैतदस्ति । यस्माद् येन नाप्राप्ते तस्य बाधनं भवति । नचाप्राप्तेऽनुदात्तौ सुप्पिताविल्येतस्मिन् (३।१।४) तिसृस्वर आरभ्यते । नित्स्वरे पुनः प्राप्ते चाप्राप्ते च । अथवा मध्येऽपवादाः पूर्वान् विधीन् बाधन्त (प,६१) इत्येव तिसृस्वरोऽनुदात्तौ सुप्पिताविरतं (३।१।४) बाधिष्यते । न नित्स्वरम् । शसादिनिवृत्त्यर्थं तर्हि जस्ग्रहणमिति चेत् ? एतदपि नास्ति । शसि तावद् भवितव्यमेवान्तोदात्तेन । उदात्तयणो हल्पूर्वादिति (६।१।१७४) । अन्यानि सर्वाणि बहुवचनानि हलादीनि । तत्र षट्त्रिचतुर्भ्यो हलादिरिति (६।१।१७९) झल्युपोत्तम (६।१।१८०) मितुदात्तत्वेन भवितव्यम् । बहुवचनविषयत्वाच्च तिसृशब्दस्य द्विवचनैकवचने न स्तः । तत्रान्तरेण जस्ग्रहणं जस एव भविष्यतीत्यत आह जस्ग्रहणमित्यादि । एके भाष्यकारादयः । असति जस्ग्रहणे तिसृ अतिक्रान्ताविति प्रादिसमासे कृते ऽतितिस्रा-

वित्यत्रापि स्यात्। तन् मा भूदित्येष दोष इत्युभयसमस्तार्थं जस्ग्रहण-मिच्छन्ति।

## १६७। चतुरः शसि।

चतेरुरन्नितुरन्प्रत्ययान्तत्वा ( उण्, ५।७३६ ) च्चतुःशब्द आद्युदात्तः। तस्य हि शसि परतोऽनेनान्तोदात्तत्वं विधीयते। अथेह कस्मान्न भवति चतस्रः पश्येति ? चतस्रादेशेऽपि चतुरः कृते स्थानिवद्भावेन न प्राप्नोतीत्यत आह चतस्रादेश इत्यादि। चतस्रादेशे कृत आद्युदात्तनिपातनं करिष्यते। स निपातनस्वरः शसि स्वरस्य बाधक इत्याद्युदात्तत्वनिपातनाच्चतस्रः पश्ये-त्यत्रायं स्वरो न भवति। अथवा परत्वादचि र ऋत इति ( ७।२।१०० ) रादेशे कृत ऋकारस्य तावन्न भवितव्यम्। अकारस्याप्यचः परस्मिन् पूर्व-विधाविति ( १।१।५७ ) यणादेशस्य स्थानिवद्भावाद्दकारेण व्यवधाने सति न भवितव्यमेव। ननु च न पदान्तद्विर्वचनेत्यादिना ( १।१।५८ ) स्वरविधौ प्रतिषिध्यते स्थानिवद्भावः। नैतदस्ति। उक्तं हि तत्र स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति (१।१।५८ वा)। नचायं लोपाजादेशः।

## १६८। सावेकाचस्तृतीयादिर्विभक्तिः।

साविति प्रथमैकवचनस्येदं ग्रहणं स्यात् सप्तमीबहुवचनस्य वा ? उभयो र्वा ? तत्र यदि प्रथमैकवचनस्य ग्रहणं स्यात् त्वया त्वयीत्यत्रापि स्यात्। भवति हि युष्मच्छब्दस्य त्वाहौ साविति ( ७।२।९४ ) त्वादेशे कृते प्रथमैक-वचने परत एकाच्त्वम्। सामान्येनोभयग्रहणेऽप्येष दोषः। सप्तमी-बहुवचनस्य ग्रहणे नायं दोषः प्रसज्येत। युष्मास्वित्यत्र युष्मच्छब्दस्यानेकाच्-त्वमित्येतत् सर्वं हृदि कृत्वाह साविति सप्तमीबहुवचनस्य ग्रहणमिति। याद्भ्यामिति। याच्छब्दाच्छत्रन्तात् तृतीया। राज्ञ इति। भवति राजन्शब्दो भसंज्ञके परतो लोपे कृत एकाच्। ननु सौ राजस्विति। तत्रानेकाच्त्वात्। वाक्तरा वाक्तमेति। तरप्तमबिति भवति वा तृतीयादिः। नतु विभक्तिः। अथ कस्मात् सप्तमीबहुवचनग्रहणमित्याह सप्तमीबहुवचनस्येत्यादि। त्वया त्वयीति। युष्मदस्मदोर्मपर्यन्तस्य (७।२।९१ )

त्वमावेकवचन (७।२।९७) इति त्वादेशः । परिशिष्टस्य योऽचीति (७।२।८९) यकारः ।

## १६९ । अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ।

यदि विग्रहाभावेन यो नित्यसमासः स इह नित्यसमासग्रहणेन गृह्येत ततोऽवाचा ब्राह्मणेन सुवाचा ब्राह्मणेनेत्यत्रापि विकल्पेन स्यादित्येतच्चेतसि कृत्वाह नित्यशब्दः स्वर्यत इति । स्वरितत्वमस्य क्रियत इत्यर्थः । तेन किं भवतीत्याह तेनेत्यादि । स्वरितत्वेन ह्यधिकारगतिर्भवति । तेन नित्याधिकारे यो विहितः समासः स एव नित्यसमास इति । अत्र स च प्रतिषिध्यते । परमवाचेति । सन्महदित्यादिना ( २।१।६१ ) समासः । स च नित्याधिकारविहितसमासो न भवतीत्यनित्यसमासः । सुवाचेति । कुगतीत्यादिना ( २।२।१८ ) समासः । अव्ययपूर्वपदप्रकृतिस्वर इति ( ६।२।२ ) स पुनरुदात्तः । निपाताश्चाद्युदात्ता उपसर्गाश्चाभिवर्जमिति ( फिट् ४।८० ) वचनात् । यथात्रोत्तरपदस्यान्तोदात्तत्वं नास्त्येवमनित्यसमासत्वमपि । कुगतीत्यादावपि ( २।२।१८ ) नित्यग्रहणानुवृत्तेः । एवं सति मयूरव्यंसकादयश्चेत्यनेनात्र ( ( २।१।७२ ) समासो द्रष्टव्यः । मयूरव्यंसकादेराकृतिगणत्वात् । अन्यथा हीति । यद्युत्तरपदग्रहणं न क्रियेत तदैकाज्ग्रहणं समासविशेषणं स्यात् । तत्र को दोषः स्यादित्याह तत्रेत्यादि । ऊर्क्शब्दः सम्पदादित्वात् क्विबन्तः । अग्निचिता सोमसुतेति । अग्नौ चेः (६।२।९१) सोमे सुञः ( ३।२।९० ) इति क्विप् । अयं नित्याधिकारे समासो विधीयत इति । तत्र नित्यं क्रीडाजीविकयोरित्यतो ( २।२।१७ ) नित्यग्रहणानुवृत्तेः । तत्रेत्यादि । गतिकारकोपपदात् कृदित्यनेनोत्तरपदस्य ( ६।२।१३९ ) प्रकृतिस्वरो विधीयते । उत्तरपदञ्च धातुस्वरेणान्तोदात्तम् । तेन चिच्छब्द उदात्तो भवति । एवं सोमसुच्छब्दोऽपि । यस्त्वित्यादि । नित्यशब्दः स्वर्यत इति यदुक्तं तस्यानेन प्रयोजनं दर्शयति । अवाचा सुवाचेति । अत्राकारेण पूर्वपदेन सुशब्देन च विग्रहो नोपपद्यते । तयोरिह प्रयोगाभावान्नित्यसमासावेतौ । नतु नित्याधिकारविधानात् ।

## १७० । अच्चेश्छन्दस्यसर्वनामस्थानम् ।

इन्द्रो दधीच इति । दध्यञ्चतीति ऋत्विगितग्रादिना (३।२।५९) क्विन् । अनुनासिकलोपः । षष्ठेग्रकवचनम् । अच इतग्रकारलोपः (६।४।१३८) । चाविति ( ६।३।१३७ ) दीर्घः । तृतीयादिरितग्रादि । यदि सर्वनामस्थानग्रहणं क्रियते तदा शसो न स्यात् । तस्मात्तृतीयादित्वात् । अथापि तृतीयादिग्रहणं निवर्त्त्येतैवमपि सर्वनामस्थानेऽपि स्यात् । प्रतीच इति । पूर्वेण तुल्यम् ।

## १७१ । ऊडिदंपदाद्यप्पुंरैद्युभ्यः ।

प्रष्ठौह इति । वहश्चेति (३।२।६४) ण्विः । वाह ऊठित्यूठ् (६।४।१३२) । एत्येधत्यूठ्स्विति ( ६।१।८९ ) वृद्धिः । ऊठ्यपधाग्रहणमिति । उपधाभूत ऊड् गृह्यते येन तदुपधाग्रहणमिति व्याख्यानं कर्त्तव्यमितग्रर्थः । किमर्थमितग्राह इह मा भूदिति । तत्रेदं व्याख्यानम् । अन्तोदात्तादितग्रादि सूत्रादिहा न्यतरस्यांग्रहणमनुवर्त्तते ( ६।१।६९ ) । सा च व्यवस्थितविभाषा विज्ञायते । तेनोपधाभूतादेव भवितव्यमिति तस्यैव ग्रहणं युक्तमिति । अक्षद्युवेति । अक्षैर्दीव्यतीति क्विप् । च्छ्वोः शूडनुनासिके चेति (६।४।१९) वकारस्योट् । यणादेशः । आभ्यामिति । इदमस्त्यदाद्यत्वम् । हलि लोप इतीद्रूपस्य ( ७।२।११३ ) लोपः । अथो आभ्यामिति । इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादावित्यशादेशः ( २।४।३२ ) । निश्पर्य्यन्ता इह गृह्यन्त इति । एतदपि पूर्ववद् व्यवस्थितविभाषया लभ्यते । तस्यां हि सत्यां निश्पर्य्यन्तेभ्य एव भवितव्यम् । तेषामेव ग्रहणं युक्तमिति तएव गृह्यन्ते । निपद इति । शसि परतः पादस्य पदादेशः । दत इति । अत्रापि दन्तशब्दस्य ददादेशः । आसन्निति । अत्रासनशब्दस्य सप्तम्येकवचनेऽसन्नित्ययमादेशः । (U) उदन्निति । अत्राप्युदकशब्दस्योदन्नादेशः । अद्भिरिति । पकारस्य तकारः । तस्य जश्त्वं दकारः । राभ्यामिति । रायो हलीत्यात्त्वम् ( ७।२।८५ ) ।

(U) आसशब्दस्यासन्नादेश इति तु मिश्रदीक्षितादयः ।

## १७२ । अष्टनो दीर्घात् ।

अष्टन आ विभक्ताविल्यात्वम् (७।२।८४) । अष्टस्विति । ननु चात्रापि भवितव्यमेवात्वेन । नहि तद्विधौ विकल्पप्रतिपादकं वचनमस्ति । नापि प्रकृतमित्यत आह इदमेवेत्यादि । यदि हि नित्यमात्वं स्यादिह दीर्घग्रहणमनर्थकं स्यात् । व्यावर्त्त्याभावात् । कृतात्वस्य च षट्संज्ञामिति । इदमेव हि दीर्घग्रहण मष्टनो ज्ञापयति सम्बन्धनीयम् । कथं पुनर्ज्ञापयतीत्याह अन्यथा हीत्यादि । दीर्घग्रहणं ह्येवमर्थं क्रियते यत्रात्वं नास्ति तत्रायं स्वरो मा भूदिति । यदि कृतात्वस्याष्टनः षट्संज्ञा न स्यात् तदात्वपक्षे षट्संज्ञायामसत्यां सावकाशो ऽष्टनः स्वरः । तत्रापि षट्स्वरः प्राप्नोतीति कृत्वा । ततश्च यदि दीर्घग्रहणं न क्रियेत तदानवकाशत्वाद् यदात्वपक्षे ऽष्टनः स्वरो न भवति तदेतरस्मिन्नपि पक्षे स्यात् । अतस्तन्निवृत्तये दीर्घग्रहणं क्रियमाणमर्थवद् भवति । कृतात्वस्याष्टनः षट्संज्ञाया मष्टानामित्यत्र षट्चतुर्भ्यश्चेति (७।१।५५) नुट्सिद्धो भवति ।

## १७३ । शतुरनुमो नद्यजादी ।

तुदति तुदतीति । तुदादित्वाच्छः । लुनती पुनतीति । श्नाभ्यस्तयोरात ( ६।४।११२ ) इत्याकारलोपः । प्रत्ययस्वरेण शत्रन्तमिहान्तोदात्तं वेदितव्यम् । तस्येत्यादि । कथं पुनरिष्यमाणमपि न भवति ? न इत्यत्र नेति योगविभागात् । बृहन्महतोरित्यादि । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम् । ङ्याश्छन्दसीत्यतः (६।१।१७८) सिंहावलोकितन्यायेन बहुलग्रहणमुपतिष्ठते । तेन बृहन्महद्भ्यामपि भवतीति ।

## १७४ । उदात्तयणो हल्पूर्वात् ।

उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति (८।२।४) प्राप्ते वचनम् । तन्नन्तोऽयमाद्युदात्त इति । नित्स्वरेण । बहुतितवेति । बह्वस्तितवो

(V) मुद्रितकाशिकायामत्र वहति नावा ब्राह्मण्येत्यपपाठः । बहुतितवा ब्राह्मण्येति हि पाठः । तनोते र्डउः सन्वच्चेति (उण्, ५।७२०) तितउशब्दः । चालनी तितिउः पुमानित्यमरः । पदमञ्जर्यामपि बहुतितवेति हि पाठः ।

यस्या इति बहुव्रीहिः। तया बहुतितवेति। तितउशब्दोऽयं बह्वोर्नञ् वदुत्तरपदभूम्नीत्यन्तोदात्तः (६।२।१७५)। नकारग्रहणं कर्त्तव्य मिति। नकारो गृह्यते येन तन्नकारग्रहणं व्याख्यानं कर्त्तव्यमित्यर्थं। तत्रेदं व्याख्यानम्। इहापि पूर्ववद् बहुलग्रहण मनुवर्त्तते। तेनोदात्तस्य स्थाने यो नकारस्ततोऽपि न भविष्यतीति। अथवा नकारस्यात्र प्रश्लेषः। हल्पूर्वान्नोङ् धात्वोरिति (६।१।१७५)। तथाचायमर्थो भवति। उदात्तयण उदात्तनकाराच्चेति। तेनोदात्तनकारादपि भविष्यतीति। वाक्पत्नीति। पतिशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। तत्र विभाषा सपूर्वस्येति (४।१।३४) नकारान्तादेशः। ऋन्नेभ्यो ङीबिति (४।१।४) ङीप्।

## १७५। नोङ्धात्वोः।

ब्रह्मबन्ध्वेति। ब्रह्मा बन्धुरस्या इति विगृह्य बहुव्रीहिः। (४।१।६६) तस्मादूङुत (४।१।६६) इत्यूङ्। तेन सह य एकादेशः सोऽप्युदात्त इति। एकादेश उदात्तेनोदात्त इति (८।२।५) वचनात्। स्वर्यत इति। स्वरितः क्रियत इत्यर्थः। कदुत्तरपदेत्यादि। जकारोऽत्र धातुस्वरेणान्तोदात्तः। स गतिकारकोपपदादित्युदात्त (६।२।१३९) स्तिष्ठति। प्रकृतिस्वरेण।

## १७६। ह्रस्वनुड्भ्यां मतुप्।

पित्त्वान् मतुपोऽनुदात्तत्वे प्राप्तेऽयं विधिरारभ्यते। अक्षण्वतीति। अक्षमस्यास्तीति मतुप्। छन्दस्यपि दृश्यत इत्यनङ् (७।१।७६)। अनो नुड़िति (८।२।१६) नुड़ागमः। पूर्वस्य नकारस्य नलोपः प्रातिपदिकान्तस्येति (८।२।८) लोपः। शीर्षण्वतेति। शीर्षन्निति। शीर्षन्शब्दः शीर्षं च्छन्दसीति (६।१।६०) निपातितः। वसुशब्द आद्युदात्त इति। स हि भृमृशीङ् चरित्सरितनिधनिमिमस्जिभ्य उरिति (उण्, १।७) वर्त्तमाने धान्ये निदित्यतो (उण्, १।९) निदग्रहणे शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेति (उण्, १।१०) व्युत्पाद्यते। तेन नित्स्वरेणाद्युदात्तो भवति। अथेह कस्मान्न भवति? मरुतोऽस्य सन्ति मरुत्वानिति? मरुच्छब्दोऽपि मृग्रोरुतिरित्युतिप्रत्ययान्तत्वात् (उण्,१।९४) प्रत्ययस्वरेणान्तोदात्त इत्यस्यत्र

प्राप्तिः । अतो नकारेण व्यवधानान्न भवतीति चेत् ? न । तस्य लुप्तत्वात् । अथापि स्वरसिद्धौ नलोपस्यासिद्धत्वमेवमपि स्वरविधौ व्यञ्जनमविद्यमानवदिति नास्ति (प, ८०) व्यवधानमित्यत आह स्वरविधावित्यादि । कथं पुनर्ज्ञायते नाश्रीयत इति ? नुड्ग्रहणात् । नुडागमो ह्ययं मतुप एव भक्त इति तद्ग्रहणेनैव गृह्यते । यद्येषा परिभाषाश्रीयेत तदा नकारस्य व्यञ्जनस्याविद्यमानाद् ह्रस्वादित्येव सिध्यतीति नुड्ग्रहणं न कुर्य्यात् । कृतञ्च । ततो ज्ञायते नेयमिह परिभाषाश्रीयत इति । वक्तव्यमिति । व्याख्येयमित्यर्थः । उत्तरत्रापि वक्तव्यशब्दस्यायमेवार्थः । व्याख्यानं तु पूर्ववद् बहुलग्रहणानुवृत्तिमाश्रित्य कर्त्तव्यम् ।

## १७७। नामन्यतरस्याम् ।

नामिति । सनुट्कस्य षष्ठीबहुवचनस्य ग्रहणम् । किं पुनः कारणं मतुपा ह्रस्वो विशेष्यत इत्याह अन्यथा हीत्यादि । संप्रति भवः साम्प्रतिकः । अध्यात्मादित्वात् ठञ् । तिसृणामिति । अत्र न तिसृचतसृ इति (६।४।४) दीर्घत्वप्रतिषेधात् साम्प्रतिक एव ह्रस्वो विद्यते । ननु साम्प्रतिके सति भूतपूर्वगतिर्युक्ता । यत्र यदि मतुपा ह्रस्वो न विशिष्येतेह नैव स्यादग्नीनामिति । नामीति ( ६।४।३ ) दीर्घत्वे कृते न स्यात् । ह्रस्वाभावात् । तस्माद् भूतपूर्वेऽपि ह्रस्वो यथा स्यादित्येवमर्थं मतुपा ह्रस्वो विशिष्यते । धेन्वाम् । शकट्यामिति । यदि सनुट्कस्य ग्रहणं न क्रियेत तदानीं सप्तम्यादेशस्याप्याम्ो ग्रहणं स्यात् । ततश्च धेन्वामित्यादावपि स्यात् । सनुट्कस्य ग्रहणे तु न भवति । तस्मिन्नसति धेनुशकटिशब्दयोः प्रातिपदिकस्वरेणान्तोदात्तयोरन्त्यस्य यणादेशे कृत उदात्तयण इत्यादिनान्तोदात्तो (६।१।१७४) नित्यो भवति । त्रपूणामिति । त्रपुशब्दो वसुशब्दवद् आद्युदात्तः ।

## १७८। ङ्याश्छन्दसि बहुलम् ।

## १७९। षट्त्रिचतुर्भ्यो हलादिः ।

अन्तोदात्तादित्येतन्निवृत्तमिति । यद्येतदनुवर्त्तेत पञ्चानां सप्तानां

चतुर्णामित्यत्र न स्यात्। षट्चादीनां शब्दानां न्नः संख्याया ( फिट्, २।२८ ) इत्युदात्तत्वात्। न्न इति रेफनकारान्तयोः संख्याशब्दयोर्ग्रहणम्।

## १८०। झल्युपोत्तमम्।

त्रिप्रभृतीनामन्त्यमुत्तममिति। उत्तमशब्दस्याव्युत्पन्नस्येह ग्रहणम्। स च स्वभावात् त्रिप्रभृतीनामन्त्यमाहेति कृत्वा। तत्समीपे यत् तदुपोत्तममिति। अव्ययं विभक्तीत्यादिनाव्ययीभावः (२।१।६)।

## १८१। विभाषा भाषायाम्।

पूर्वेण नित्ये प्राप्ते विकल्पार्थं वचनम्।

## १८२। न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः।

साविति। प्रथमैकवचनस्य सुशब्दस्य ग्रहणं वा स्यात् सप्तमीबहुवचनस्य वा ? तत्र यदि सप्तमीबहुवचनस्य ग्रहणं स्यात् केभ्यस्तेभ्य इत्यत्र न स्यात्। नहि तत् प्रथमैकवचनम्। किंतच्छब्दयोः सप्तमीबहुवचने परतो नावर्णान्तत्वमुपपद्यते। कृतेऽपि त्यदाद्यत्वे बहुवचने झल्येदित्येत्त्वविधानात् ( ७।३।१०३ )। प्रथमैकवचनस्य तु ग्रहणे सत्यत्रापि भवति। तस्मादसप्तम्या एव ग्रहणं युक्तमिति मत्वाह प्रथमैकवचने यदवर्णान्तमिति। अनन्तरमिह प्रतिषिध्यं न भवतीति सर्वस्य षाष्टिकस्वरस्य प्रतिषेधोऽयं विज्ञायत इत्याह इत्येतेभ्य यदुक्तं तन्न भवतीति। सुगुनेति। शोभना गावोऽस्येति सुगुः। गोस्त्रियोरित्यादिना ( १।२।४८ ) ह्रस्वः। नञ्सुभ्यामित्युत्तरपदस्यान्तोदात्तत्वम् ( ६।२।१७२ )। शुनेति। श्वयुवमघोनामतद्धित इति ( ६।४।३।१३३ ) सम्प्रसारणम्। पूर्ववत् प्राप्तिरिति। शुना श्वभ्यामित्यत्र सावेकाजित्यादिना (६।१।११८) प्राप्तिः। परमशुनेति। अत्राप्यन्तोदात्तादुत्तरपदादित्यन्तोदात्तत्वं ( ६।१।१६९ ) तु समासस्वरेण। राजा। परमराजेति। अत्रापि पूर्ववत् प्राप्तिः। श्वन्नितिः कृतनन्त इति। यद्येवं तर्हि यत्र नकारलोपेन न भवितव्यं तस्यैव सनकारस्य ग्रहणं कर्त्तव्यम्। किमर्थं सनकारस्य ग्रहणमित्याह तस्येत्यादि। एतदपि किमर्थमित्याह यत्रास्येत्यादि। ननु च सर्वत्रैव लोपेन भवि-

तव्यम् ? तत् कथं नलोपस्याभाव इत्याह नाञ्चेरित्यादि । प्राञ्चेति । पूर्ववत् प्राप्तिः । प्राञ्चतीति क्विन् । प्राचेति । पूर्ववन्नोपदीर्घत्वे । क्रुञ्चेति । क्रुच क्रुञ्च कौटिल्याल्पीभावयोः । क्विन् । क्रुञ्चेति निपातना न्नलोपाभावः । परमक्रुञ्चेति । समासस्वरेणान्तोदात्तत्वम् । परमकृतेति । अत्रापि । कृतिर्वेति । कृती छेदन इत्येषः ।

## १८३ । दिवो झल् ।

## १८४ । नृ चान्यतरस्याम् ।

नृशब्दात् सावेकाच इति (६।१।१६८) न गोश्वन्साववर्ण इति (६।१।१८२) नित्ये प्रतिषेधे च प्राप्ते विभाषेयमारभ्यते ।

## १८५ । तित् स्वरितम् ।

चिकीर्ष्यं जिहीर्ष्यमिति । सन्नन्ताद् यत् । अतो लोपः (६।४।४८) ।

## १८६ । तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ।

तासिप्रभृतीनां समाहारद्वन्द्वेन निर्देशः । अदुपदेशादिति । उपदिश्यत इत्युपदेशः । शास्त्रवाक्येषु खिलपाठे च यः प्रथममुच्चार्यते स इत्यर्थः । अच्चासावुपदेशश्चेत्यदुपदेशः । कर्मसाधनस्योपदेशशब्दस्याश्रयणम् । भावसाधनस्य वा । नानेन सामानाधिकरण्यानुपपत्तेः । लसार्वधातुकमिति । षष्ठीसमासः । अदुपदेशादिति । पूर्ववत् कर्मसाधनेनोपदेशशब्देन कर्मधारयः । वर्णग्रहणं सर्वत्र तदन्तविधिं प्रयोजयतीत्यकारान्तोपदेशादित्यर्थः । कर्त्तेति । करोतेर्लुट् । आत्मनेपदप्रथमपुरुषः । तस्य डारौरसः (२।४।८५) । एकवचने टेर्लोपः । द्विवचनबहुवचनयो रि चेति (७।४।५२) सकारस्य । आस्त इत्येवमादिषु शेत इत्येवं पर्यन्तेष्वदादित्वाच्छपो लुक् । वस्त इति । वस आच्छादने । सूत इति । षूङ् प्राणिगर्भविमोचने । शेत इति । शीङः सार्वधातुके गुण इति (७।४।२१) गुणः । तुदतः । तुदत इति । तसन्ते एते । एवं पचतः पठत इत्येते अपि । ननु च व्यञ्जनान्तोऽयमुपदेशे शप् । नाकारान्तः । तत् कथमिहानुदात्तत्वं भव-

तीत्याह अनुबन्धस्येत्यादि। एकान्त एकदेशः। नैकान्तोऽनेकान्तः। तद्ग्रहणेन गृह्यत इति यावत्। अनेकान्तस्य भावोऽनेकान्तत्वम्। ततो हेतोरकारान्तोपदेश एव शप्। न व्यञ्जनान्तः। तेन पचत इत्यादावनुदात्तत्वं भवतीति भावः। अकारान्तत्वं तु शबकारस्य व्यपदेशिवद्भावात्। पचमानो यजमान इति। शानच्। कथं पुनरिहानुदात्तत्वम्? यावता मुकाच व्यवधानमित्याह यद्यत्रेत्यादि। मुगागमोऽयमकारमात्रस्य वा स्याददकारान्ताङ्गस्य वा? तत्र यद्यकारमात्रस्य तदादुपदेशग्रहणेनैव तस्य ग्रहणमिति लसार्वधातुकमदुपदेशादनन्तरमेव भवति। व्यवधानाभावात्। नहि स्वावयवो व्यवधायको भवति। तेनान्तरङ्गत्वात् सिद्धो निघातः। अथेत्यादिना द्वितीये पक्षे निघातस्यासिद्धत्वात् प्रतिपादयति तथापीति। एवमपीत्यर्थः। लसार्वधातुकस्येत्यस्य सिद्धो निघात इति वक्ष्यमाणेन सम्बन्धः। असिद्धइत्यस्यापि मुगित्यनेन प्रकृतेन। इतिकरणो हेतौ। तदयमर्थः। यस्माल्लसार्वधातुकानुदात्ते बहिरङ्गत्वाद्मुगसिद्धस्तस्मादेवमपि सार्वधातुकस्यानुदात्तत्वम्। बहिरङ्गत्वं तु मुको बह्वपेक्षत्वात्। स ह्यकारान्तविशिष्टमङ्गमाश्रयति। आनञ्च प्रत्ययविशेषम्। अङ्गावयवमदुपदेशं लसार्वधातुकमात्रं निघातः। तस्मादसावन्तरङ्गः। स्वरविधित्वाच्च। उक्तं हि स्वरविधेर्भाष्येऽन्तरङ्गत्वम्। ननु चाद्ये पक्षे मुकि कृते निघातो न सिध्यति। अदुपदेशादिति तपरकरणात्। मुकि च कृते कालस्यातिरिच्यमानत्वात्। नैष दोषः। यद्येवमपि कृतेऽर्द्धमात्राधिका भवति तथाप्युपदेशग्रहणात् सिध्यत्येव। उपदेशे मात्रिकस्यैवोच्चारणात्। -चित्स्वरोऽप्यनेनेत्यादि। चित्स्वरस्यावकाशश्चलनशब्दार्थादकर्मकाद् युच्। (३।१।१४८) चलनं चोपनमिति। तास्यादिभ्योऽनुदात्तस्यावकाश आस्ते शेत इति। इहोभयं प्राप्नोति पचमानो यजमान इति। परत्वाल्लसार्वधातुकानुदात्तत्वमेव चित्स्वरं बाधित्वा प्रवर्त्तते। चिनुतश्चिन्वन्तीति। ननु सार्वधातुकमपिदिति (१।२।४) श्नुरपि ङिदेव। तत् कथमिदं प्रत्युदाहरणमुपपद्यत इत्याह ङिदयमित्यादि। सार्वधातुकमपिदित्यनेन (१।२।४) पूर्वस्य कार्य्यमतिदिश्यते। न परस्य। तथाचोक्तं सिद्धं तु पूर्वस्य कार्य्यातिदेशादिति। तस्मात् पूर्वस्य कार्य्यं प्रति ङित्वं भवति नतु

परस्येति किमत्र नोपपद्यते ? इह चेत्यादि । पचावः पचाम इत्यत्र ह्यतो दीर्घो यञीति (७।३।१०१) दीर्घत्वे कृते न स्यात् । असत्युपदेशग्रहणे । तस्मिंस्तु सति अवकारोऽपि मात्रिक एवोपदिष्ट इति । यद्यप्युत्तरकालं दीर्घत्वं भवति तत्रापि निघातो भवतीति । इह च मा भूदिति हतो हथ इति । अत्रानुदात्तोपदेशेत्यादिनानुनासिकलोपे (६।४।३७) सत्यु-पदेशात् परं लसार्वधातुकं भवति । तत्रासत्युपदेशग्रहण इहापि स्यात् । अस्मिंस्तु सति न भवति । नहि हन्तिरवर्णान्त उपदिश्यते । किं तर्हि ? व्यञ्जनान्तः । पचमाना इति । ताच्छील्यवयोवचनशक्तिषु चानश् (३।२।१२९) । न च स लादेशः । अपि तु प्रत्ययः । लसार्वधातुकत्वं त्वस्य न विद्यते । शिश्य इति । शीङो ह्यात्मनेपदे रूपम् । एरनेकाच इत्यादिना (६।४।८२) यणादेशः । लिट् चेत्यार्धधातुकमेतत् (३।४।११५) । शिश्याते इति । लिप्सातामि रूपम् । नानुदात्तत्वम् । असार्वधातुकसंज्ञाविधानात् । ह्नुते । यदधीत इति । ह्नुङ् अपनयने । इङ् अध्ययने । यच्छब्दस्य प्रयोगो निपातैर्यद्यदीति (८।१।३०) निघातप्रतिषेधो यथा स्यात् ।

## १८७। आदिः सिचोऽन्यतरस्याम् ।

मा हि कार्ष्टामिति । हि माङश्च प्रयोगे प्रयोजनं पूर्वमेवोक्तम् । अपरो-ऽन्तोदात्त इति । प्रत्ययस्वरेण । अपरो मध्योदात्त इति । प्रत्ययस्वरेणैव । ननु च वलादिरिड् प्रत्ययः । इट् चागमः । आगमानाञ्चानुदात्तत्वं भवति । तस्मादिहाप्यन्तोदात्तेनैव भवितव्यम् । तत् कथं मध्योदात्तत्वमित्याह सिचश्चित्करणादित्यादि । सिचश्चित्करणेनागमानुदात्तत्वे बाधिते चित्स्वर एव भवतीति युक्तं मध्योदात्तत्वम् । सिच आद्युदात्त इत्यादि । सिच आद्युदात्तत्वे कर्त्तव्येऽनिटो विद्यमाने सिचः परो य श्चित्प्रत्ययस्तस्योदात्तत्वं वक्तव्यम् । मा हि कार्षमिति । पक्षे सर्वानुदात्तत्वं पदं मा भूदित्येवमर्थ-मिदम् । पक्षे तूदात्तत्वेन मुक्ते सर्वानुदात्तमेव पदं भवति ।

## १८८। स्वपादिर्हिंसामच्यनिटि ।

सार्वधातुकग्रहणमित्यादि । अचीत्येतत् सप्तम्यन्तं लसार्वधातुकस्य

समानाधिकरणं विशेषणम्। नच प्रथमान्तस्य सप्तम्यन्तेन सामानाधिकरण्य मुपपद्यते। तस्मादचीत्यनेन सम्बन्धात् विशेषणविशेष्यलक्षणान्नसार्वधातुक-ग्रहणादित्याह सप्तम्यन्त उपजायते। स्वपादिरा वृत्करणादिति। यद्यप्येत देवं तथापि ञिष्वप् शये श्वस प्राणने अन च इत्येत एव ये तदिह स्वपादि-ग्रहणेन गृह्यन्ते। परेऽपि ये जक्षित्यादयोऽभ्यस्तसंज्ञा स्तेषु परत्वादभ्यस्ताना मादिरित्यनेन (६।१।१८९) नित्यमाद्युदात्तत्वं भवति। हिंसन्तीति। तृह हिसि हिंसायाम्। रुधादित्वात् श्नम्। श्नसोरल्लोप इत्यकारलोपः (६।४।१११)। श्नान्नलोप इति (६।४।२३) परस्य नकारस्य। स्वप्यादिति। लिङ्। अदादित्वाच्छपो लुक्। स्वपित इति। रुदादिभ्यः सार्वधातुक (७।२।७६) इतीट्।

## १८९। अभ्यस्तानामादिः।

प्रत्ययस्वरेण प्राप्ते तदपवादोऽभ्यस्तानां धातूनामादेर्विधीयते। दधती-त्यादौ श्नाभ्यस्तयोरात (६।४।११२) इत्याकारलोपः। उभे अभ्यस्तमित्यभ्यस्त-संज्ञा (६।१।५)। जक्षति जाग्रतीति। अत्रापि जक्षित्यादयः षड़िति (६।१।६)। सर्वत्रादभ्यस्तादिति (७।१।४) झेरदादेशः। जक्षित इति। पूर्ववदिट्। अथादिग्रहणं किमर्थम्? यावतादिः सिचोऽन्यतरस्यामित्यत (६।१।१८७) आदिरित्यनुवर्त्तत इत्यत आह आदिरिति वर्त्तमान इत्यादि। पूर्वकं ह्यादिग्रहणमन्यतरस्यांग्रहणेन सम्बद्धम्। अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। तस्मान्नित्यार्थं पुनरादिग्रहणं क्रियते।

## १९०। अनुदात्ते च।

अनजाद्यर्थमिदम्। (W) अजादौ त्वनुदात्ते पूर्वेणैव सिद्धम्। जिह्रीते मिमीत इति। अत्र तास्यनुदात्तेदित्यादिना (६।१।१८६) लसार्वधातुकस्यानु दात्तत्वम्। भृञामिदित्यभ्यासस्येत्वम् (७।४।७६)। अनुदात्त इति। शास्त्रीयस्यानुदात्तस्यायं निर्देश इति कस्यचिद् भ्रान्तिः स्यादतस्तन्निरासार्थ-

(W) क्षुद्रितकाशिकायामनजाद्यर्थं आरम्भ इति पदमञ्जर्यां दर्शनादत्रापपाठ इति आचार्यबाल शास्त्रिण उक्तिः। अनजाद्यर्थमिद मिति हि मिश्रोक्तिः। न्यासेऽपि स एव पाठः। कथं नायं पाठो मूलोक्ते रेव विहतिरिति ज्ञायते?

माह अनुदात्त इति बहुव्रीहिनिर्देश इति । अविद्यमानमुदात्तमस्मिन्नित्यनुदात्तम् । किमर्थं पुनर्बहुव्रीहिनिर्देश इत्याह लोपयणादेशार्थ इति । लोपयणादेशयोः कृतयोरप्याद्युदात्तत्वं यथा स्यात् । मा हि स्म दधात् । दधात्यत्रेति । स्मशब्दस्य प्रयोगः स्मोत्तरे लङ् यथा स्यात् । अत्र यदि शास्त्रीयस्यायं निर्देशः स्यादितश्चेतीकारलोपे (३।४।१००) कृते यणादेशे चोदात्तं न स्यात् । शास्त्रीयस्यानुदात्तस्याभावात् । बहुव्रीहिनिर्देशे चात्रापि भवति । उदात्तस्येहाविद्यमानत्वात् ।

## १९१ । सर्वस्य सुपि ।

इण्शीभ्यां वन्निति ( उण्, १।५०) प्रकृत्य सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्र इति (उण्, १।१५१) सर्वशब्दोऽन्तोदात्तो निपातितः । तेन तस्य सुप्याद्युदात्तत्वं विधीयते । अन्तोदात्तत्वनिपातनं तु सर्वस्य विकारः सार्व इत्यत्रानुदात्तादेरञ् यथा स्यात् (४।२।४४) । प्रत्ययलक्षणेनापीत्यादि । कथं पुनरिष्यमाणोऽपि लभ्यते ? यावता सर्वस्तोम इत्यत्र सुपो धातुप्रातिपदिकयो (२।४।७१) रिति लुमता लुप्तम् ? ततश्च न लुमताङ्गस्येति (१।१।६३) प्रत्ययलक्षणस्य प्रतिषेधेन भवितव्यम् ? नैष दोषः । पूर्वसूत्राच्चकारोऽनुवर्त्तते । स च समुच्चयार्थः । तेन प्रतिषेधविषयेऽप्येष स्वरो भविष्यति । सर्वस्वरोऽनकच्कस्येत्यादि । योऽयं सर्वशब्दस्य स्वरो विधीयते स तस्याविद्यमानकच्कस्य भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । आदिः सिचोऽन्यतरस्यामित्यतो (६।१।१८७) ऽन्यतरस्यांग्रहणमिह मण्डूकप्लुतिन्यायेनानुवर्त्तते । सा च व्यवस्थितविभाषा । तेनानकच्कस्य भवति ।

## १९२ । भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति ।

अनुदात्ते चेत्याद्युदात्ते (६।१।१९०) प्राप्ते प्रत्ययात् पूर्वस्य भीह्रीप्रभृतीनामुदात्तो विधीयते । बिभेति जिह्रेतीति । ञिभी भये । ह्री लज्जायाम् । बिभर्त्तीति । बिभर्त्तेः पूर्ववदभ्यासस्येत्वम् । ममत्त्विति । मदी हर्षे । लट् । एरुः (३।४।८६) । दिवादित्वाच्छ्यन् । तस्य श्लुः । जजनमिन्द्रमिति । जनेर्

लेट्। तस्य मिप्। इतश्चेत्यादिनेकारलोपः (३।४।१००)। लेटोऽडाटाविल्यट् (३।४।९४)। जुहोत्यादित्वाच्छपः श्लुः। द्विर्वचनम्। क्वचिज्जजनदिति पठ्यते। तत् तिबन्तमेव वेदितव्यम्। दधनदिति। एतदपि पञ्चमे लकारे तिपि रूपम् (X)। पूर्ववदड़ादिकार्य्यम् विधेयम्। दरिद्रतीति। पूर्ववज् झेरदादेशो विधीयते। पूर्ववच्चाकारलोपः।

## १९३। लिति।

लकारेत्संज्ञक इति। लकार इत्संज्ञको यस्य स तथोक्तः। चिकीर्षक इति। सन्नन्ताण्ण्वुल्। तत्रातो लोप (६।४।४) इत्यकारलोपे कृते ण्वुलः पूर्वस्येकारस्योदात्तत्वम्। भौरिकिविधमिति। भौरिक्याद्यैषुकार्य्यादिभ्यो- विधल्भक्तलाविति (४।२।५४) विधल् प्रत्ययः। भौरिकिर्विषयो देश इति। ऐषुकारिभक्तमिति। ऐषुकारि र्विषयो देश इति। पूर्वसूत्रेणैव भक्तल् प्रत्ययः।

## १९४। आदिर्णमुल्यन्यतरस्याम्।

लित्स्वरे प्राप्ते णमुलि परत आद्युदात्तत्वं विकल्पेन विधीयते। तेन मुक्ते पक्षे लित्स्वरोऽपि भवत्येव। अनेकाचश्च धातवो विकल्पं प्रयोजयन्तीति। ये त्वेकाचस्तेषां लित्स्वरेणानेन वा विशेषो नास्ति। लोलूयंलोलूयम् पोपूयं पोपूयमिति। यदन्तास्णमुल् तस्याभीक्ष्ण्ये द्वे भवत इति (८।१।१२, वा) द्विर्वचनम्। अनुदात्तञ्चेत्याम्रेड़ितस्यानुदात्तत्वम् (८।१।३)।

## १९५। अचः कर्त्तृयकि।

कर्त्तृवाचीति। सार्वधातुकं कर्त्तृशब्देनोक्तम्। अभिधानेऽभिधेयोपचारात्। तत्र यः कर्त्तरि यक् स कर्त्तृयक्। सप्तमीति (२।१।४०) योगविभागात् समासः। लूयते केदारः स्वयमेवेति। लुनाति केदारो देवदत्तः। केदारो लवनक्रियया व्याप्तुमिष्टतमत्वात् कर्म। यदा तु सौकर्य्यात् तस्यैव कर्त्तृत्वं विवक्ष्यते तदासौ कर्त्ता भवति। कर्मवत् कर्मणा तुल्यक्रिय इत्यतिदेशात् (३।१।८७)। यगात्मनेपदञ्च। स्तीर्य्यत इति। स्तॄ आच्छादने।

---

(X) वृत्तिकारदेशे लेट्शब्दोऽश्लीलार्थक आसीदित्याह:। ततो बहुवायमस्मिन् ग्रन्थे पञ्चमलकार इति प्रकारान्तरेण निर्दिश्यते।

ऋतद्द्वातोः (७।१।१००) । हलि चेति (८।२।७८) दीर्घः । लसार्वधातुक-निघाते कृत इति । अदुपदेशभक्तायक एव स्वरो भवतीति । प्रत्ययलक्षणः । अथेह कथं भवति जायते स्वयमेव सायते स्वयमेव खायते स्वयमेवेति ? यावता ये विभाषेत्यात्त्वे कृते (६।४।४३) सत्युत्तरकालं जनादयोऽजन्ता भवन्ति । ननूपदेश इत्याह जनादीनामित्यादि । जनादीनां ह्यात्वविधावनुदात्तोपदेश-ग्रहणमनुवर्त्तते । तेन तेषामुपदेश एवात्त्वं द्रष्टव्यम् । जायते स्वयमेवेति । कथं पुनरकर्मकर्त्ता ? यावता जनिरकर्मकः । अन्तर्भावितण्यर्थः सकर्मको भवतीत्यदोषः । लूयते केदारो देवदत्तेनेति । अत्र शुद्धकर्मण्यात्मनेपद-विधानात् कर्त्तृयङ् न भवति ।

## १९६ । थलि च सेटीडन्तो वा ।

अन्यतरस्यामित्यनुवर्त्तमाने वाग्रहणं कार्यिणो विकल्पार्थम् । अन्यतरस्यां-ग्रहणेन कार्य्यं विकल्प्यते । वाग्रहणेन तु कार्यिणः । तेनेडादयः पर्यायेण कार्य्यं प्रतिपद्यन्ते । लुलविथेति । क्रादिनियमादिट् । ययाथेति । अच स्तास्वत् थल्यनिटो नित्यमितीटो वा प्रतिषेधः (७।२।६१) ।

## १९७ । ञ्नित्यादिर्नित्यम् ।

वासुदेवक इति । वासुदेवो भक्तिरस्येत्यर्थे वुन् । अथेह गर्गा विदा इति यञञोश्चेति (२।४।६४) बहुषु लुकि कृते यञ्चेव चञ्चेत्यत्र चेवे प्रति-कृतावित्युत्पन्नस्य (५।३।९६) कनो लुम् मनुष्य इति (५।३।९८) लुपि कृते कस्मान्न भवति ? लुमेऽपि प्रत्यये प्रत्ययलोपे प्रत्ययलक्षणमित्यस्ति (१।१।६२) प्राप्तिरित्यत आह प्रत्ययलक्षणमत्र नेष्यत इति । तत् कथं पुनरिष्यमाणो न भवति ? संज्ञायामुपमान (६।१।२०४) मित्यत्र वक्ष्यमाणाज्ज्ञापकात् । अथवा न लुमताङ्गस्येत्यनेन (१।१।६३) यन्नाम किञ्चिदङ्गस्य कार्य्यमङ्गाधिकारे विहित-मेव तेन प्रतिषेधादिह प्रत्ययलक्षणं स्वीकार्य्यं न भविष्यति । एवमुत्तरत्रापि प्रत्ययलक्षणाभावो वेदितव्यः । यञि कनि च लुप इति । चकाराद् विदाद्यञि च ।

## १९८। आमन्त्रितस्य च ।

देवदत्तेति। ददातेः क्तिच्क्तौ च संज्ञायामित्याशिषि ( ३।३।१७० ) क्तः। दो दद्‌ घोरिति ( ७।४।४६ ) धातोर्ददादेशः। दत्तशब्दस्य देवशब्देन कर्तृकरणे कृता बहुलमिति ( २।१।३२ ) समासः। सर्पिरागच्छेति। स्वमोर्नपुंसकादिति ( ७।१।२३ ) विभक्तेर्लुक्। सप्तागच्छतेति। अत्रापि षड्भ्यो लुगिति (७।१।२२) च।

## १९९। पथिमथोः सर्वनामस्थाने।

पथिमथिशब्दावित्यादि। गमेरिनिरित्यत ( उण्, ४।४४६ ) इनिप्रत्यये वर्त्तमाने मन्थ ( उण्, ४।४४७ ) इतीनिप्रत्ययः। अतो मथिन्शब्दो व्युत्पाद्यते। पतमे किदित्यतः ( उण्, ४।४५० ) किद्ग्रहणानुवृत्तेर्मन्थेरनुनासिकलोपः। पतस्थ चेति ( उण् ४।४५१ ) पथिन्शब्दोऽपीनिप्रत्ययान्त इति। तेनैतौ प्रत्ययस्वरेणान्तोदात्तौ। पन्था इति। पथिमथ्यृभुक्षामादित्याकारन्तादेशः ( ७।१।८५ )। इतोऽत् सर्वनामस्थान इतीकारस्यात्त्वम् ( ७।१।८६ )। थोन्थ इति ( ७।१।८७ ) थस्य न्थादेशः। पथः पश्येति। भस्य टेर्लोप इति ( ७।१।८८ ) टिलोपः। तत्र कृतेऽनुदात्तस्य च यत्रोदात्तलोप इत्यन्तोदात्तत्वम् ( ६।१।१५१ )। पथिप्रिय इति। पन्थाः प्रियो यस्येति बहुव्रीहिः। वा प्रियस्येति (२।२।१६, वा) प्रियशब्दस्य पचे परनिपातः।

## २००। अन्तश्च तवै युगपत्।

कर्त्तवा इति। कृत्यार्थे तवैकेन्केन्यत्वन इति ( ३।४।१४ ) तवैप्रत्ययः। किं पुनः कारणं पर्य्यायनिवृत्तये यत्नः क्रियत इत्याह एकवर्जमित्यादि।

## २०१। क्षयो निवासे।

क्षय इति। क्षि निवासगत्योरित्यस्येदं रूपमिति।

## २०२। जयः करणम्।

जय इति। जि जि अभिभव इतास्य जयते रूपमेतत्। जयो ब्राह्मणानामिति। भाव एरच् (३।३।५६)।

## २०३। वृषादीनाञ्च।

वृषो जनो ज्वरो ग्रहो ह्यो गय इति। वृषु वृषु सेचने। जनी प्रादुर्भावे। ज्वर रोगे। ग्रह उपादाने। ह्य गतौ। कै गै शब्दे। सर्वं एतेऽच्प्रत्ययान्ता इति। पचादित्वात् (Y)। एतेन चित्स्वरे प्राप्ते पाठ एषामिति दर्शयति। नयस्तयो ऽयो ऽशो वेदः सूदो ऽश इति। णीञ् प्रापणे। तायृ सन्तानपालनयोः। क्वचित् तय इतयस्य स्थाने चय इति पठ्यते। स चिनोते द्रष्टव्यः। इण् गतौ। अथवाय वय मय चय इत्यादिः। अंश समाधाने। विद ज्ञाने। षूद क्षरणे। अश भोजने। सूद इगुपधेति कप्रत्ययान्त इति। एतेऽपोति यदुक्तं तस्यायमपवादः। गुहेति। गुहू संवरणे। समरणौ संज्ञायामिति। शमु उपशमे। अण रण इति शब्दार्थः। संज्ञाया अन्यत्रान्तोदात्तावेव भवतः। सम्मतौ भावकर्मणोरिति। शमरणाविति वर्त्तते। सम्मतावर्थे विवक्षिते समरणौ भावकर्मणोर्यथाक्रममाद्युदात्तौ भवतः। मन्त्र इति। मत्रि गुप्तभाषणे। केचित्तु संमतौ भावकर्मणोर्मन्त्र इति पठन्ति। तस्य मन्त्रे विषयीभूत इत्येषोऽर्थो वेदितव्यः। शान्तिरिति। शमु उपशमे। क्तिच् क्तौ च संज्ञायामिति (३।३।१७४) क्तिच्। कामो याम इति। कमु कान्तौ। यम उपरमे। घञन्ताविति। कर्षात्वतो घञोऽन्तउदात्त (६।१।१५९) इत्येतस्मिन् प्राप्तेऽस्य पाठः। कल्प इति। कृपू सामर्थ्ये। पाद इति। पद गतौ। वृषादिराकृतिगण इति। तदेव चाकृतिगणत्वं ज्ञापयितुं चकारः कृतः।

## २०४। संज्ञायामुपमानम्।

यद्येवमिति। यदि कनो लुबित्यर्थः। कनोऽपि लुपि सत्यपि प्रत्ययलक्षणेनैव सिद्धमेषां हि नित्स्वरेणाद्युदात्तत्वम्। तदपार्थकमित्यभिप्रायः। एतदेवेत्यादि। यदि हि क्वचित् स्वरविधौ प्रत्ययलक्षणं स्यात् कर्त्तव्यमेवेदं वचनं स्यात्। प्रत्ययलक्षणेन सिद्धत्वात्। कृतञ्च। तस्मादेतज्ज्ञापयति प्रत्ययलक्षणमिह स्वरविधौ न भवतीति। क्वचिद्ग्रहणं क्वचित्तु भवतीति प्रदर्शनार्थम्। तथाहि सर्वस्य सुपीत्यत्रोक्तं (६।१।१९१) प्रत्ययलक्षणेना-

(Y) वृष इतीगुपधत्वात्क इति मतान्तरम्।

प्ययं स्वर इष्यत इति। तथाचेत्यादिना ज्ञापनस्य प्रयोजनमाह। अग्नि-र्माणवक इति। भवत्यग्निशब्द उपमानम्। तथाह्यग्निरिवेति गम्यते। नासौ माणवकस्य संज्ञा।

## २०५। निष्ठा च द्व्यजनात्।

गुप्त इति। गुपू रक्षणे। बुद्ध इति। बुध अवगमने। देव इति। देवशब्दः पचाद्यजन्तत्वादन्तोदात्तः। भीमशब्दोऽपि मगन्तत्वात् प्रत्यय-स्वरेण। इषियुधीत्याद्यधिकृत्य ( उण्, १।१४२ ) भियःषुग्वेति (उण् १।१४५) मक् प्रत्ययान्तो व्युत्पाद्यते। चिन्तित इति। चिति स्मृत्याम्। चौरादिकः। निष्ठायां सेटीति (६।४ ३२) णिलोपः। रक्षित इति। रक्ष पालने। त्रात आप्त इति। त्रैङ् पालने। आप्लृ व्याप्तौ।

## २०६। शुष्कधृष्टौ।

शुष्क इति। शुष शोषणे। शुषः क इति क्तस्य कादेशः ( ८।२।५१ )। धृष्ट इति। ञिधृषा प्रागल्भ्ये। ष्टुत्वम्। कत्वष्टुत्वयोरसिद्धत्वादिह निष्ठान्तत्वं वेदितव्यम्। असंज्ञार्थं आरम्भ इति। संज्ञायां पूर्वेणैव सिद्धत्वात्।

## २०७। आशितः कर्त्ता।

आशेरिति। अश भोजन इत्यस्मात् कर्त्तरि क्तो निपात्यते। गत्यर्था-कर्मकेत्यादिना ( ३।४।७२ )। पूर्ववत् कर्मणि क्त इति। तयोरेवेत्यादिना (३।४।७०)। उत्तरत्र भाव इति। नपुंसके भावे क्त इति (३।६।११४)।

## २०८। रिक्ते विभाषा।

रिक्त इति। रिचिर् विरेचने। प्रत्ययस्वरे प्राप्त आदेर्विभाषोदात्तत्वं विधीयते। संज्ञायामित्यादि। निष्ठा च (६।१।२०५) द्व्यजनादित्यस्याव-काशो दत्तो गुप्त इति। अस्यावकाशोऽसंज्ञायां रिक्तो घट इति। यदा तु रिक्तशब्दः कस्यचित् संज्ञा भवति तदोभयोःप्राप्तौ पूर्वविप्रतिषेधेन निष्ठा च द्व्यजनादिति ( ६।२।२०५ ) नित्यमाद्युदात्तो भवति। न च पूर्वविप्रतिषेधो वक्तव्यः। परशब्दस्येष्टवाचित्वात्।

## २०९ । जुष्टार्पिते चच्छन्दसि ।

जुष्ट इति । जुषी प्रीतिसेवनयोः । अर्पित इति । अर्त्तेर्णिच् । अर्त्तिह्रीत्यादिना (८।३।३६) पुक् ।

## २१० । नित्यं मन्त्रे ।

केचिदन्तेत्यादि । किं पुनः कारणं जुष्टशब्द एवानुवर्त्तयन्तीत्याह अर्पितशब्दस्येत्यादि । अत्रापि किं कारणमित्याह अन्तोदात्तोऽपीत्यादि । तमेवान्तोदात्तस्य पाठमन्त्रं दर्शयितुमाह तस्मिन् साकं त्रिशतेत्यादि । आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं विस्पष्टार्थमुत्तरार्थञ्च ।

## २११ । युष्मदस्मदो ङसि ।

युष्मदस्मदी मदिकप्रत्ययान्ते इति । युष्यसिभ्यां (Z) मदिगिति (उण् २।१३६) मदिक्प्रत्ययमुत्पाद्य तयोर्व्युत्पादनात् । एतेन युष्मदस्मदोः प्रत्ययस्वरेणान्तोदात्तत्वं दर्शयति । तव ममेति । युष्मदस्मद्भ्यां ङसोऽशित्यादेशः (७।१।७२) । तवममौ ङसीति (७।२।९६) युष्मदस्मदोर्मपर्य्यन्तस्य (७।१।९१) तवममौ । शेषे लोपे (७।२।९०) कृते ऽतो गुणे (६।१।९७) पररूपत्वम् । युष्मदस्मदोरादेशस्य स्थानिवद्भावादन्तोदात्तत्वम् । एवञ्च यो ह्यशादेशेन सहैकादेशः सोऽप्येकादेश उदात्तेनोदात्त इत्युदात्त (८।२।५) एवेत्यनेन क्रमेण विभक्तिस्वरे प्राप्त इदमुच्यते ।

## २१२ । ङयि च ।

तुभ्यं मह्यमिति । ङे प्रथमयोरमित्यभावः (७।१।२८) । तुभ्यमह्यौ ङयीति (७.१।९४) युष्मदस्मदो स्तुभ्यमह्यावादेशौ । किमर्थं पृथगयं योगः क्रियत इत्यत आह पृथग्योगकरणमित्यादि । एकयोगे हि कार्य्यिणोर्निमित्तयोश्च समानत्वाद् यथासंख्यमत्र भवितव्यमिति कस्यचिदाशङ्का स्यात् । अतः पृथग्योगकरणं यथासंख्यनिरासार्थमिति प्रदर्शनार्थम् । ततश्चास्वरितत्वादेव यथासंख्यं न भविष्यति । आशङ्कातः कस्यचिन्मन्दबुद्धेः

---

(Z) युषिः सौत्रो धातुः ।

स्यादिति तन्निरासार्थं पृथग्योगकरणम्। अयमपि पूर्ववदेव विभक्ति-स्वरापवादः।

## २१३। यतोऽनावः।

कण्ठ्यमोष्ठ्यमिति। भवार्थे तद्धितः। नाव्यमिति। नावा तार्य-मित्यस्मिन्नर्थे नौवयोधर्मेत्यादिना (४।४।९१) यत्। अत्र वान्तो यि प्रत्यय इत्यवादेशे (६।१।७९) कृते व्यञ्जनस्य स्वरविधावविद्यमानत्वात् ततः पूर्वस्य स्यादिति नावः प्रतिषेधः क्रियते। ललाट्यमिति। शरीरावयवाद् यदिति यत् (५।१।६)।

## २१४। ईड्वन्दवृशंसदुहां ण्यतः।

ईड् स्तुतौ। वदि अभिवादनस्तुत्योः। वृङ् संभक्तौ। शंस स्तुतौ। दुह प्रपूरणे। एतेभ्यो धातुभ्य ऋहलोर्ण्यदिति (३।१।१२४) ण्यत् प्रत्ययः। कस्मिन् पुनः प्राप्त इदमारभ्यत इत्याह ञ्यनुबन्धकत्वादित्यादि। अथ कथं पुनर्वार्य्यमित्यत्र ण्यत्प्रत्ययः? यावतेतिस्तुशास्वित्यादिना विशेषविहितेन क्यपा (३।१।१०९) भवितव्यमित्याह वार्य्यमित्यादि। ननु च वृङोऽपि क्यपैव भवितव्यम्? वृद्रति सामान्यनिर्देशादित्याह क्यब्विधौ हीत्यादि।

## २१५। विभाषा वेण्विन्धानयोः।

णुप्रत्ययान्त इति। तद्विधौ स्थो णुरित्यतो (उण्, ३।३२७) णु-ग्रहणानुवृत्तेः। यदि चानशन्त इति। ताच्छील्यवयोवचनशक्तिषु चान-शित्यनेन (३।२।१२९)। अथ शानजन्त इति। लटः शतृशानचावित्या-दिना (२।२।१२४)। लसार्वधातुकनिघाते कृत इति। तास्यनुदात्ते-दित्यादिना (६।१।१८५)। इन्धान इति। अस्यानुदात्तत्वादुदात्तनिवृत्ति-स्वरेणेति। अनुदात्तस्य च यत्रोदात्तलोप (६।१।१६१) इत्यनेन। वेणु-रित्यादि। संज्ञायामुपमान (६।१।२०४) मित्यस्यावकाश अश्वा वध्रिकेति। अस्या विभाषाया अवकाशोऽनुपमानो वेणुशब्दः। शुष्को वने वेणुरिति। वेति। यदा वेणुरिवेत्युपमानवेणुशब्दःकस्यचित् संज्ञा भवति तदा संज्ञायामुप-मानमिति (६।१।२०४) तस्याद्युदात्तत्वमिष्यते। तत्र पूर्वविप्रतिषेधाश्रयते।

२१६ । त्यागरागहासकुहश्वठक्रथानाम् ।

कुह विस्मापने । शठ श्वठ सम्यगवभाषणे । एतौ चौरादिकौ । श्रथ श्नथ क्रथ क्लथ हिंसार्थाः ।

२१७ । उपोत्तमं रिति ।

२१८ । चङ्यन्यतरस्याम् ।

मा हि चीकरतामिति । सन्वल्लघुनि चङ्परेऽनग्लोप ( ७।४।९३ ) इत्यभ्यासस्येत्त्वम् । अटि प्रतिषिद्ध इति । यद्यटः प्रतिषेधो यस्य तस्यैव स्वरः स्याद्धात्वकारस्य हि चेति ( ८।१।३४ ) निघात इति । प्रतिषिद्ध इत्यपेक्षते । यदि निघातो न प्रतिषिध्येत तदा चङन्तस्योदात्तस्याभाव एव स्यात् । मा हि दधदिति । विभाषा धेट्श्व्योरिति ( ३।१।४९ ) चेश्चङ् ।

२१९ । मतोः पूर्वमात् संज्ञायां स्त्रियामिति ।

उदुम्बरावतीति । उदुम्बरा अस्यां सन्तीति चातुरर्थिको मतुप् । मतौ बह्वचोऽनजिरादीनामिति ( ६।३।११९ ) दीर्घत्वम् । शरावतीति । अत्र शरादीनाञ्चेति ( ६।३।१२० ) । मतोरिति किम् ? गवादिनीति । मतो-रित्यस्मिन्ननुच्यमाने तत्सम्बद्धं पूर्वग्रहणमपि नोच्येत संज्ञाशब्दस्याकारमात्र-स्योदात्तत्वं प्रसज्येत । पूर्वग्रहणंमतोरनन्तरस्यास्य यथा स्यात् । इह मा भूत् सानुमतीति । लक्षणप्रतिपदोक्तपरिभाषया चेहैव स्याच् श्यामावती । उदम्बरावतीत्यादि न स्यात् । पूर्वग्रहणात्तु पूर्वमात्रस्य भवति ।

२२० । अन्तोऽवत्याः ।

अजिरवतीत्यादि । पूर्व्ववन्मतुप् । पित्त्वादनुदात्तत्वं प्राप्तमिति । अत-स्तस्यायमपवाद इति शेषः । अथावत्या इत्युच्यमाने राजवतीत्येतस्मान्न भवति । ह्येतदपि नलोपे कृतेऽवतीशब्दान्तमित्याह स्वरविधावित्यादि । कथमुदाहरणम् ? यावता मतोर्वत्वस्यासिद्धत्वादत्रावतीशब्दान्तत्वं नास्तीत्याह वत्वं पुनरित्यादि । पुनः शब्देन नलोपाद्विशेषं दर्शयति । लोपो ह्यसिद्धः । वत्वं पुनः सिद्धम् । कुतः ? आश्रयात् । आश्रयः स्वरविधौ निमित्त-

त्वेनोपादानमित्यर्थः। अवतीशब्दस्यान्तोदात्तत्वं ब्रुवता वत्वमाश्रितम्। तस्मादाश्रयात् तस्य सिद्धत्वम्। अन्यथैवं वचनमनर्थकं स्यात्। नहि वत्वस्य सिद्धत्वमन्तरेणावतीशब्दान्तं किञ्चिदस्ति।

## २२१। ईवत्याः।

अयमपि पित्त्वानुदात्तस्यैवापवादः। अहीवतीत्यादि। शरादीनाञ्चेति (६।३।१२०) दीर्घः। संज्ञायामिति च (८।२।११) वत्वम्।

## २२२। चौ।

उदात्तनिवृत्तिस्वरापवादोऽयमिति। दधीच इति। दध्यञ्चतीति क्विन्। गतिकारकोपपदादित्युत्तरपद (६।२।१३९) प्रकृतिस्वरेणाञ्चेरकार उदात्तः। विभक्तावजादावसर्वनामस्थानेऽच इत्यकारलोपे (६।४।१३८) कृते सत्यनुदात्तस्य च यत्रोदात्तलोप ( ६।१।१६१ ) इत्युदात्तनिवृत्तिस्वरः प्राप्नोति। अतस्तस्यायमपवादः। चावतद्धित इत्यादि। यदीदमञ्चेः पूर्वस्यान्तोदात्तत्वं विधीयते तदा तद्धितं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानञ्चेदम्। अन्यतरस्यांग्रहणमनुवर्त्तते। सा च व्यवस्थितविभाषा। तेन तद्धिते न भविष्यतीति।

## २२३। समासस्य।

राजपुरुष इत्यादिषूदाहरणेषु समासपदानां तस्मिंस्तस्मिन् स्वरे प्राप्ते सतीदमारभ्यते। स आख्यायते। राजशब्दे तावत् कनिन् युवृषितक्षिराजीति ( उण, १।१५४ ) कनिन्प्रत्ययान्तत्वान् नित्स्वरेणाद्युदात्तत्वम्। एवं पुरुषेऽपि। स हि पुरः कुषन्निति ( उण, ४।५१३) कुषन् प्रत्ययान्तो व्युत्पाद्यते। ब्राह्मण इदमिति तस्येदमिति ( ४।३।१२० ) ब्राह्मणशब्दोऽणन्तः प्रत्ययस्वरेणान्तोदात्तः। कलस्तृपश्चेति ( उण, १।१०४ ) वृषादिभ्यश्चित् ( उण, १।१०६ )। बहुलवचनात् कमे र्बुगिति ( उण, १।१०६, गणसूत्र ) कम्बलशब्दो व्युत्पाद्यते। तेनायं चित्स्वरेणान्तोदात्तः। कन्याशब्दोऽन्तस्वरितः। अघ्न्यादयश्चेति ( उण, ४।५५० ) निपात्यते। अथवा कनी दीप्तिकान्तिगतिष्वित्यस्मादचोयदिति ( ३।१।१२४ ) यत्। कन्यायाः

कनीन चेति (४।१।११६) निपातनादृद्धयभावः। तित्स्वरेणायमन्त-स्वरितः सम्पद्यते। स्वनशब्दः स्वनहसोर्वेत्यबन्तत्वाद् (३।३।६२) धातु-स्वरेणाद्युदात्तः। पटत् पटद् ध्वन्यत इति पटहशब्दः पृषोदरादित्वादन्तो-दात्तः। शब्दशब्दः शाशपिभ्यां ददनाविति (उण्, ४।५३७) दन् प्रत्ययान्त-त्वान्नित्स्वरेणाद्युदात्तः। पचादिषु नदड़िति पठ्यते। तेन टिड्ढाणञिति (४।१।१५) ङीपि कृते तत्र च यस्येति चेत्यकारलोपे (६।४।१४८) कृत उदात्तनिवृत्तिस्वरेणान्तोदात्तो नदीशब्दो भवति। घोषशब्दो घञन्तत्वान् ञित्स्वरेणाद्युदात्तः। पृषत्समिच्छब्दौ प्रातिपदिकस्वरेणान्तोदात्तौ। अथ राजपृषदुब्राह्मणसमिदितयत्र कथमन्तो भवति ? यावता योऽत्र समासस्यान्तो नासौ स्वरभाक्। यस्तु तस्मात् पूर्वः स तकारेण व्यवहित इत्याह स्वरविधा-वितऽादि। हलन्तेऽपीति समासस्येदं विशेषणम्। अन्तोदात्तत्वमिति। समासे येऽचः पूर्वं तदपेक्षया परस्याचोऽन्तत्वं वेदितव्यम्। तेन नानापद-स्वरस्यापवाद इति। समासे हि पदानां पृथक् स्वरो भवति यदीदं नोच्येत। ततो नाना पृथक् पदानां स्वरः प्राप्नोति। अतस्तदपवादोऽय-मुच्यते।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां षष्ठस्याध्यायस्य
प्रथमः पादः ॥ ६।१ ॥

---

अथ

# काशिकाविवरणपञ्जिका।

## षष्ठाध्यायस्य।

## द्वितीयः पादः।

### १। बहुव्रीहौ प्रकृत्या पूर्वपदम्।

पूर्वपदग्रहणमित्यादि। प्रकृतिभावो ह्यत्र तस्य युज्यते विधातुं यस्यानुदात्तलक्षणो विकारः प्राप्नोति। नच पूर्वपदस्याज्झल्समुदायस्यासौ प्राप्नोति। किं तर्हि? स्वरितस्योदात्तस्य वा। तत्र यदीह पूर्वपदग्रहणं पूर्वपद एव वर्त्ततेऽपार्थकमेवेदं वचनं स्यात्। तस्मात् पूर्वपदस्थे स्वर उदात्ते स्वरिते वा पूर्वपदग्रहणं वर्त्तत इति विज्ञायते। भवति हि तात्स्थ्यात् ताच्छब्द्यं यथा मञ्चाः क्रोशन्तीति। स्वभावेनावतिष्ठत इति। अनेन प्रकृत्या भवतीत्यस्यार्थमाचष्टे। तमेव वाक्यान्तरेण स्पष्टीकर्त्तुमाह न विकारमनुदात्तत्व मापद्यत इति। कथं पुनरनुदात्तलक्षणो विकारः प्राप्नोति यन्निवृत्तये प्रकृतिभावोऽयमारभ्यत इत्याह समासान्तोदात्तत्वे हि सतीत्यादि। समासान्तोदात्तत्वापवादोऽयमिति। नाप्राप्ते तस्मिन्नारम्भात्। कृष्णो मृग इति। कृष्णगुणत्वात्। आद्युदात्त इति। नित्स्वरेण। तत्र चेत्यादि। तत्र स्रुवो दीर्घश्चेति (उण्, ३।२०५) दीर्घग्रहणमनुवर्त्तते। सुसृभ्यां निच्चेत्यतो (उण्, ३।२०६) निच्चेति च। तेनाद्युदात्त इति। नित्स्वरेण। कटुकरपदेत्यादि। ब्रह्मचारीति। व्रत (३।२।८०) इति णिनिः। उपपदसमासः। तत्र गतिकारकोपपदात् कृदिति (६।२।१३९) ब्रह्मचारीतिशब्दः कृत्स्वरेणान्तोदात्तः। स्नातकशब्दः कन्प्रत्ययान्त इति। यावादित्वात्। यावादिषु स्नात वेदसमाप्ताविति

पश्यति । आद्युदात्त इति । नित्स्वरेण । श्रोत्रियशब्दो निच्वादाद्युदात्त इति । श्रोत्रियंश्छन्दोऽधीत इति निपात्यते (५।२।८४)। तेन नित्स्वरेणाद्युदात्तः । मनुष्यशब्दस्तित् स्वरित (६।१।१८) मितीति । मनोर्जातावञ्यतौ षुक् चेति (४।१।१६१) यत्प्रत्ययान्तत्वात् । उदात्तग्रहणमित्यादि । तत्रोदात्तग्रहणं कर्षात्वतो घञोऽन्तउदात्त (६।१।१५९) इत्यतोऽनुवर्त्तते । स्वरितग्रहणमिति । तित् स्वरित (३।१।१८५) मित्यतः । ततः किं सिद्धं भवतीत्याह तेनेत्यादि । उदात्तस्वरितानुवृत्ते ह्येतदेव प्रयोजनम् । यत्रोदात्तः स्वरितो वास्ति तत्रैव यथा स्यात् । समशब्दो हि सुनोतेर्डमबिति डमण्प्रत्ययान्तो व्युत्पाद्यते । तेन धातोष्टिलोपे कृते प्रत्ययस्य पित्त्वात् सर्वानुदात्तो भवति ।

## २ । तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ।

यतोऽनाव (६।१।२१३) इत्याद्युदात्त इति । नौवयोधर्मेत्यादिना (४।४।९१) यत्प्रत्ययान्तस्य तुल्यशब्दस्य व्युत्पादितत्वात् । तुलया संमितं तुल्यमिति । सदृक्शब्द इत्यादि । त्यदादिषु दृशेरनालोचने कञ्चेत्यत्र (३।२।६०) समानान्ययोश्चेति वक्तव्यमित्युपसंख्यानं कृतम् । तेन सदृक्छब्दः कञन्तः । दृग्दृशवतुष्विति (६।३।८९) समानस्य सभावः । सदृशशब्दोऽपीत्यादि । कृदुत्तरपद प्रकृतिस्वरेणेत्यपेक्ष्यते । इकारः प्रत्यय इति । तत्राच इरित्यत (उण्, ४।५७८) इकारप्रत्ययानुवृत्तेः । किदिति । भुजेः किच्चेत्यतः (उण्, ४।५८१) किद्ग्रहणानुवृत्तेः । सप्रत्ययान्तोऽश्वशब्द इति । अग्रेर्देवन इत्यत (उण्, ४।६२०) वृतृवदिहनिकमिकषिभ्यः स इत्यतः ( उण् ३।३४२ ) सप्रत्ययानुवृत्तेः । नव्विषयस्येति । नपुंसकलिङ्गविषयस्येत्यर्थः । मध्योदात्तत्वञ्चेति । न्यग्रोधस्य च केवलस्येति (७।३।५) निपातनादित्यनेन सम्बन्धः । अब्राह्मण इति । नञ्समासः । कुब्राह्मण इत्यादौ कुगतिप्रादय इति (२।२।१८)। एतान्यव्ययान्याद्युदात्तानीति । निपाता आद्युदात्ता इति ( फिट्, ४।७९) वचनात् । एषाञ्च निपातत्वात् । तत्र नञ्कुशब्दयोश्चादयोऽसत्त्व इति (१।४।५७) चादिषु पाठान्निपातत्वम् । निरतिशब्दयोस्तु प्रादय इति ( १।४।५८ ) तयोः प्रादिषु पाठात् । अव्यय इत्यादि । अव्यये पूर्वपदे प्रकृतिभावे कर्त्तव्ये नञ्

प्रभृतीनामेव भवतीत्येतदर्थंरूपं व्याख्येयम्। तत्रेदं व्याख्यानम्। चङ्यन्यतरस्यामित्यतो (६।१।२१) ऽन्यतरस्यांग्रहण मनुवर्त्तते। सा च व्यवस्थितविभाषा। तेन नञ्कुनिपातानामेव भविष्यतीति। कालाकालक इति। मयूरव्यंसकादित्वात् समासः। क्त्वातोसुन्कसुन इति (१।१।४०) पूर्वपदस्याव्ययत्वम्। मुहूर्त्तसुखमित्यादौ कालाध्वनोरत्यन्तसंयोग इति (२।३।५) द्वितीया। सर्वरात्रशब्दोऽप्यच्प्रत्ययान्त इति। सर्वा च रात्रिश्चेति पूर्वकालैकेत्यादिना (२।१।४९) समासोऽहः सर्वैकेत्यादिनाच् प्रत्ययविधानात् (५।४।८७)।

## ३। वर्ण्यो वर्णेष्वनेते।

वहे श्च लो वेतीति। अत्र (उण्, ३।३७१) हृश्याभ्यामितन्नितीतनो (उण्,३।३७२) ऽनुवर्त्तनात्। परमकृष्ण इति। अत्र समासान्तोदात्तत्वमेव।

## ४। गाधलवणयोः प्रमाणे।

शम्बगाधमिति। गाध्यत इति गाधः। गाधृ प्रतिष्ठालिप्सयोः। अर्धर्चादित्वात् पक्षे नपुंसकत्वम्। अर्त्तिलूधूसू इति। अनेन सूत्रैकदेशेनार्त्तिलूधूसूखनसहचर इत्र (३।२।१८४)) इत्येतत्सूत्रमुपलक्ष्यते। मध्योदात्त इति। प्रत्ययस्वरेण। अशूप्रुषीति। अशूप्रुषिलटिकणिघटिविशिभ्यः कन्निति (उण्, १।१४९) सूत्रमुपलक्षयति। ननु चायामः प्रमाणम्। आयामस्तु प्रमाणं स्यादिति वचनात्। नच शम्बगाध मित्यादि स्तत्पुरुषः प्रमाणवाची। किं तर्हि ? इयत्तावाचीत्याह प्रमाणमित्यादि। इयतो भाव इयत्ता। सा परिच्छिद्यते येन स इयत्तापरिच्छेदः। स एवात्र प्रमाणं वेदितव्यम्। न पुनरायाम एव। तत् कथम् ? प्रमीयतेऽनेनेति प्रमाणमिति क्रियाशब्दोऽत्र प्रमाणशब्दो गृह्यते। नतु रूढिशब्दः। लक्ष्यानुरोधात्। तेन येनेयत्ता परिच्छिद्यते तत् सर्वं प्रमाणम्। स्वरव्यञ्ज्यं चेति। अस्य स्वरे योऽयं प्रकृतिभावो विधीयते तेन व्यञ्ज्यं द्योत्यमित्यर्थः। एतेषामिति। शम्बगाधादीनाम्।

## ५। दायाद्यं दायादे।

दायो भागः। अंश इत्यर्थः। दायमादत्त इति दायादः। मूलविभुजादि-

त्वात् कः । दायादस्य कर्म दायाद्यम् । किं पुनस्तत् ? दाय एव । स हि दायादिरादीयमानः कर्म भवति । उदात्त इति च तत्र वर्त्तत इति । मन्त्रे वृषेत्यादेः ( ३।३।९६ ) सूत्रात् । ननुच निपूर्वः सूत्रे धातुरुदात्तः । तत् कथं केवलाद् भवतीत्याह बहुलवचनादित्यादि । अथेत्यादि । वक्ष्यमाणोऽभिप्रायः । येनाभिप्रायेण पृष्टवांस्तमाविष्कर्त्तुमाह यद्येवमित्यादि । यदि स्वामीश्वरेदिना (२।३।३९) षष्ठी विधीयते । सप्तम्येव हि विधातव्या । न षष्ठी । तस्याः शेष इतीत्रव (२।३।५०) सिद्धत्वादित्यत आह तस्यास्त्वित्यादि । यदि सप्तम्येव विधीयेत ततोऽसौ विशेषविहितत्वात् षष्ठ्या बाधिका विज्ञायेत । नत्वेवं विज्ञायेतेति पुनरनयैव शेषलक्षणषष्ठ्यभ्यनुज्ञायते । नत्वपूर्वा विधीयते । तेनाप्रतिपदविहितत्वाद् भवत्येव समासः । परमदायाद इति । अत्र पूर्वपदं पूजावाचि । न दायाद्यवाचि ।

## ६ । प्रतिबन्धिचिरकृच्छ्रयोः ।

कार्य्यसिद्धिं प्रतिबध्नाति विहन्तीति प्रतिबन्धि । ताच्छील्य आवश्यके वा णिनिः । विशेषणसमासे कृत इति । ननु च विशेषणसमासः सामानाधिकरण्ये भवति । नचेदं सामानाधिकरण्यम् । कथं पुनरत्र पूर्वपदं प्रतिबन्धि भवतीत्याह गमनमित्यादि । अचिरकालभाविनि गमने कार्य्यसिद्धिर्निष्पद्यते । कृच्छ्रयोगि चेति । कृच्छ्रं दुःखम् । तद्योगिनि गमने गन्ता प्राप्यमर्थं दुःखेनाभिहन्यमानो न प्राप्नोति । तस्माच्चिरकालभावि कृच्छ्रयोगि वा यद् गमनं तत् कार्य्यसिद्धेः प्रतिबन्धि जायते ।

## ७ । पदेऽपदेशे ।

व्याज इति । छद्मेत्यर्थः । मूत्रपदेनेति । मूत्रव्याजेनेत्यर्थः । ष्ट्रन्प्रत्ययान्त इति । सिविमुच्योष्टेरूच्चेत्यत्र (उण्, ४।६०२) ष्ट्रन्नित्यस्यानुवृत्तेः । मूत्रयतेरिति । मूत्र प्रस्रवणे । उच्चारशब्दोऽपि घञन्तः । थाथादीत्यादि । घञन्तत्वात् ।

## ८ । निवाते वातत्राणे ।

कुड्यादिहेतुक इत्यादि । कुड्यादि हेतुके वर्त्तन्ते कार्य्ये कारणोपचारात् ।

भवति कारणे कार्य्योपचारो यथा सर्वमिदं पुरातनं कर्म भुज्यत इति। कवतेरिति। कु शब्दे। आद्युदात्त इति। यतोऽनाव इत्यनेन (६।१।२१३)। ण्वुक्प्रत्ययान्तोऽन्तोदात्त इत्यपर इति। ते कवते ङ्गिति सूत्रमधीयते।

## ९। शारदेऽनार्त्तवे।

रज्जुशारदं हृषच्छारदमिति। योगविभागात् समासः। शारद-शब्दोऽयं प्रत्यग्रवाचीति। प्रत्यग्रमभिनवमचिरकालभावीत्यर्थः। एतेन नानार्थवाचित्वं शारदशब्दस्य दर्शयति। नित्यसमास इति। महा-विभाषायाः प्रकृताया व्यवस्थितविभाषात्वात्। अनुपहतमिति। रजोभिः। अनुपहतत्वं तु सद्य उद्धृतत्वात्। उप्रत्ययान्त इति। सृजेरसुम् चेत्यत्र (उण्, १।१५) भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उरित्यत (उण्, १।५) उकारप्रत्ययानुवृत्तेः। आदिप्रत्ययान्त इति। दृणातेः षुग् ह्रस्वश्चेत्यत्र (उण्, १।११८) शॄदृभसोऽदिरित्यतो (उण्, १।१२७) ऽदिप्रत्ययानुवृत्तेः। परमशारदमिति। शरदि भवं शारदम्। सन्धिवेलाद्यृतुनक्षत्रेभ्योऽणिति (४।३।१६) सूत्रेणोत्पन्नोऽयं शब्दः।

## १०। अध्वर्य्युकषाययोर्जातौ।

जातिवाचिनो नियतविषया इति। नियतो विषयो येषामिति विग्रहः। नियतविषयत्वं तु जातिविशेषत्व एव वर्त्तमानत्वात्। अध्वर्य्युप्रभृतीनां गोत्रञ्च चरणैः सहेति चरणत्वाज्जातित्वम्। यत्प्रत्ययान्त इति। द्युप्राग-पागुदक्प्रतीचो यदिति (४।२।१०१)। कठशब्दः पचाद्यचि व्युत्पादित इति। कठ कृच्छ्रजीवन इत्यस्मात्। तदेवमिति। यस्मादेवं कालापशब्दो-ऽणन्तस्तस्मात् प्रत्ययस्वरेणान्तोदात्तः। ठकि सत्यन्तोदात्त इति। कित (६।१।१६५) इत्यनेन।

## ११। सदृशप्रतिरूपयोः सादृश्ये।

पितृसदृश इति। तुल्यार्थैरित्यादिना (२।३।७२) षष्ठी तृतीया च। पूर्वसदृशेत्यादिना (२।१।३१) समासः। पितृमातृशब्दावुणादिष्वन्तोदात्तौ निपातिताविति। नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ इत्यत्र

( उण्, २।२५२ )। अथ सदृशग्रहणं किमर्थम् ? यावता मातृसदृशः पितृसदृश इत्यत्र तत्पुरुषे तुल्यार्थं ( ६।२।२ ) इत्येव सिद्धमित्यत आह षष्ठीसमासार्थञ्चेत्यादि। तुल्यार्थे हि प्रयोगे षष्ठ्यपि विधीयते। तत्र यदा मातृसदृश इति षष्ठीसमासः क्रियते तदापि यथा स्यादित्येवमर्थं सदृशग्रहणम्। सति त्वस्यारम्भे तृतीयासमासेऽपि परत्वादनेनैव सदृशग्रहणं कर्त्तव्यमित्यत आह इहेत्यादि। दास्याः सदृशो वृषल्याः सदृश इति। अत्र षष्ठ्या आक्रोशे इत्यलुकि ( ६।३।२१ ) कृते षष्ठीसमास स्तत्सदृशग्रहणं प्रयोजयति। अलुकि सति रूपविशेषस्य विद्यमानत्वात्। यदि षष्ठीसमासार्थं सदृशग्रहणमिह क्रियते तृतीयासमासो न कर्त्तव्यः। विशेषाभावात्। नैतदस्ति। तत्रापि हि कर्त्तव्य एव यत्र षष्ठ्यर्थो नास्ति तदर्थः। यथा विद्यया सदृशो विद्यासदृश इति। नह्यत्र षष्ठ्यर्थो विद्यते। किं तर्हि ? तृतीयार्थः। विद्यया हेतुना सदृश इत्यर्थः। अत्रेत्यादि। तत्र दासीशब्दस्य ङीबुदात्तनिवृत्तिस्वरेणान्तोदात्तार्थः। दसि सेवन इति दंसेष्टटनौ न आ चेति ( उण्, ५।६८८ ) टप्रत्ययान्तो नकारस्य चाकारादेशः। टिड्ढाणञिति ( ४।१।१५ ) ङीप्। यस्येतिलोपः ( ६।४।१४८ )। अनुदात्तस्य च यत्रोदात्तलोप ( ६।१।१६१ ) इत्युदात्तत्वम्। वृषलीशब्दो जातेरस्त्रीविषयादिति ( ४।१।६३ ) ङीषन्तोऽन्तोदात्तो भवति। प्रत्ययस्वरेण।

## १२। द्विगौ प्रमाणे।

प्राच्यसप्तशम इति। षष्ठीसमासः। प्राच्यशब्द आद्युदात्त इति। यत् प्रत्ययान्तत्वात्। यतोऽनाव इति (६।१।२१३)। गान्धारिशब्दः कर्दमादित्वादाद्युदात्तो मध्योदात्तो वेति। कर्द्दमादीनाञ्चेत्य-( फिट्,५९ ) त्रादिग्रहणञ्चानुवर्त्तते। तत्र यदादेरुदात्तो विधीयते तदाद्युदात्तो भवति। यदातु द्वितीयस्य तदा मध्योदात्तः। व्रीहिप्रस्थ इति। षष्ठीसमासः। परमसप्तशम इति। सप्तानां (A) शमानां समाहारः सप्तशमम्। मूलोदाहरणे तु तद्धितार्थे द्विगोरुत्तरपदत्वम्।

---

(A) मुद्रितकाशिकायां समशब्दो दन्त्यादिः। टीकायान्तु तालव्यादिः। शमस्तु चतुरङ्गुल इति यादवः।

## १३। गन्तव्यपण्यं वाणिजे।

गमनीयं गन्तव्यम्। पण्यं व्यवहर्त्तव्यमिति। मद्रवाणिज इति। मद्रेषु यो व्यवहरति स एव मुच्यते। सप्तमीसमास इति। सप्तमीति (२।१।४०) योगविभागात्। रक्प्रत्ययान्तत्वादिति। स्फायितञ्चीत्यादिना (उण्,२।१७०) मदे रकं विधाय व्युत्पादितत्वात्।

## १४। मात्रोपज्ञोपक्रमच्छाये नपुंसके।

तुल्यप्रमाणे वर्त्तत इति। तुल्यं प्रमाणं यस्येति विग्रहः। अस्वपदविग्रह इति। स्वपदविग्रहः कस्मान्न भवति? तादृशं हि वाक्यं कर्त्तव्यं यथा समासार्थः प्रतीयते। भिक्षामात्रमिति। अस्य च भिक्षया तुल्यप्रमाण मित्येषोऽर्थः। नचायं स्वपदविग्रहेण शक्यः प्रतिपादयितुम्। मात्रशब्दस्य तुल्यप्रमाणवृत्तित्वात्। स हि समास एव तुल्यप्रमाणे वर्त्तते। न वाक्ये। अतएवोक्तं मात्रशब्दोऽयं वृत्तिविषय इत्यादि। वृत्तिरिह समासवृत्तिरेव विषयः। अप्रत्ययान्तोऽन्तोदात्त इति। टापा सहैकादेश उदात्तेनोदात्तत्वात्। उप्रत्ययान्त इति। इषेः किच्चेत्यत्र (उण्, १।१३) भूमृशीत्यादेः सूत्रादु- (उण्, १।५) प्रत्ययानुवृत्तेः।

## १५। सुखप्रिययोर्हिते।

तत्र सुखप्रियशब्दावित्यादि। तच्छब्देन सुखप्रिययोः प्रत्यवमर्शः। तयोः सुखप्रिययोः हेतुरायत्यां जन्मान्तरे प्रीतिकरः। तत्र सुखप्रियशब्दौ वर्त्तेते। किं कारणमेवं व्याख्यायत इत्याह तदिहहितमित्यादि। हि तथाचेत्यर्थः। तत्-पुरुषे प्रकृतिभावोऽयं विधीयते। एष हि तत्पुरुषो हितवाची भवति यदि सुखप्रियशब्दावुत्तरपदे हितहेतौ वर्त्तेते। हितञ्च किम्? यदायत्यां प्रीतिं करोति। कथं पुनः सुखप्रियशब्दौ तद्धेतौ वर्त्तेते? कारणे कार्य्योप-चाराद् यथा नड्वलोदकं पादरोग इति।

## १६। प्रीतौ च।

अथ प्रीतौ चेतीदं ग्रहणं किमर्थम्? यावता सुखप्रिययोः प्रीत्य-व्यभिचारात्। एवं प्रीतौ गम्यमानायां भविष्यतीत्यत आह सुखप्रिययोः

प्रीत्येतग्रादि। प्रीतिग्रहण मन्तरेणापि सिद्धे सुखप्रिययोः प्रीतग्रव्यभिचाराद् यदिह प्रीतिग्रहणं क्रियते तदतिशयिता या प्रीति स्तस्यां यथा स्यादित्येव-मर्थम्। ब्राह्मणच्छात्रशब्दो प्रतग्रयस्वरेणान्तोदात्ताविति। ब्राह्मणशब्दोऽणन्तः। छात्रशब्दश्छत्रादिभ्यो ण (४।४।६२) इति णप्रतग्रयान्तः। कन्याशब्दः स्वरितान्त इति। (B) अघ्न्यादिषु तथाभूतस्यैव पाठात्। राजसुखं राजप्रियमिति। अत्र यद्यपि सुखप्रिययोः प्रीतग्रव्यभिचारित्वात् प्रीतिर्गम्यते तथाप्यतिशयेन या प्रीतिः सा न गम्यत इति भवति प्रत्युदाहरणम्।

## १७। स्वं स्वामिनि।

## १८। पत्यावैश्वर्य्ये।

धान्यमन्तस्वरित इति। ण्यदन्तत्वात् तित्स्वरेण। वृषल्या भर्त्तेत्यर्थ इति। वृषल्याः कामयितेति यावत्।

## १९। न भूवाक्चिद्दिधिषु।

भुवः संज्ञान्तरयोरिति (३।२।१७९) क्विपा भूशब्दो धातुस्वरेणान्तोदात्तः। एवं वाक्शब्दः। वचः क्विब्वचिप्रच्छीत्यादिना (३।२।१७८, वा) क्विप्। चिदिति। चिती संज्ञान इत्यस्मादन्येभ्योऽपि (३।२।१७८) दृश्यत इति क्विप्। कृतिशृध्योः कूरित्यधिकृत्य (उण्, १।८१) अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषू रिति (उण्, १।८३) दिधिषूशब्दः कूप्रत्ययान्तोऽन्तोदात्त इति।

## २०। वा भुवनम्।

## २१। आशङ्काबाधनेदीयःसु सम्भावने।

शकि शङ्कायामित्येतस्माद्गुरोश्च हल (३।३।१०३) इत्यकारप्रत्ययः। केचित्तु घञन्तस्य शङ्कशब्दस्य ग्रहणमिति वर्णयन्ति। बाधृ लोड़न इत्यस्मादाङ्पूर्वाद् घञाबाधः। अत्यर्थमन्तिकं नेदीयः। अन्तिकशब्दस्यान्तिकबाढ़यो-र्नेदसाधावितीयसुनि (५।३।६३) परतो नेदादेशः। अस्तित्वाध्यवसाय इति। अस्तित्वनिश्चय इत्यर्थः। गमनाशङ्कमिति। षष्ठीसमासः। क्रियाविशेषण-त्वान्नपुंसकलिङ्गम्। लोकाश्रयत्वाद्वा लिङ्गस्य।

(B) तित्यशिक्येति (फिट्, ७६) सूत्रेण कन्याशब्दोऽन्तस्वरितः।

## २२। पूर्वं भूतपूर्वे।

आढ्यो भूतपूर्व्व इति। यः पूर्वमाढ्य आसीत् स एवमुच्यते। समासे गम्यमानार्थत्वाद् भूतशब्दो न प्रयुज्यते यथा दध्योदन इत्यत्रोपसिक्तशब्दः। परमपूर्व इति। अत्र सन्महदित्यादिना ( १।१।६१ ) समासः। अत्र परमश्चासौ पूर्वश्चेति समास इति। इतिकरणोऽर्थनिर्देशार्थः। परमश्चासौ पूर्वश्चेति योऽयं वाक्यार्थः पूज्यमानतालक्षणस्तस्मिन्निह प्रत्युदाहरणे समास इत्यर्थः। नतु परमो भूत इति। तुशब्दोऽवधारणे। परमो भूतपूर्व इति योऽयं वाक्यार्थः परमपूर्वकाललक्षणस्तस्मिन्नेवात्र समास इत्यर्थः। किं कारणमित्याह तथाचेत्यादि। चशब्दो हि हीतरार्थे। अयं समासो न भवति। एवं सत्युदाहरणमेवेदं भवति। न प्रत्युदाहरणम्। पूर्वशब्दस्य भूतपूर्ववाचित्वात्। यस्तु प्रायेण पुस्तकेषु पाठोऽत्र परमश्चासौ भूतपूर्वश्चेति विग्रहो नतु परमो भूतपूर्व इति स प्रमादपाठो वेदितव्यः। वाक्यद्वयेऽपि भूतपूर्वयोर्गम्यमानत्वात्।

## २३। सविधसनीड़समर्य्यादसवेशसदेशेषु सामीप्ये।

सह विधया सविधः। तेन सहेति तुल्ययोग ( २।२।२८ ) इति बहुव्रीहिः। वोपसर्जनस्येति ( ६।३।८२ ) सहस्य सभावः। एवं सनीड़ादिष्वपि बहुव्रीहिभावश्च वेदितव्यः। मद्रसविधमित्यादयः षष्ठीसमासाः। ननु च सह विधयेत्येवमादावर्थे सविधादयः शब्दा व्युत्पाद्यन्ते। तत् कथमेषां सामीप्ये वृत्तिरित्याह सह विधयेत्येवमादिकेत्यादि। आदिशब्देन सह नीड़ेन सह मर्य्यादयेत्येवमादीनां ग्रहणम्। एवकारोऽवधारणार्थोऽभिधेयव्यवच्छेदं करोति। व्युत्पत्तिनिमित्तमेव नाभिधेयमिति। समीपवाचिनस्त्वे त इति। अत्रापि तुशब्दोऽवधारणार्थएव। समीपवाचिन एव। नतु सह विधयेत्येवमादिवाक्यार्थवाचिन इति।

## २४। विस्पष्टादीनि गुणवचनेषु।

विस्पष्टकटुकमिति। कटुशब्दात् संज्ञायां कन्। सुप्सुपेति समास इति। अथ विशेषणं विशेष्येण बहुलमिति ( २।१।५७ ) विस्पष्टकटुकमित्यत्र

विग्टह्य कस्मात् कर्मधारय एव न क्रियत इत्याह विसृष्टादयो ह्यत्रेत्यादि । कर्मधारयो हि सामानाधिकरण्ये सति भवति । न चेह सामानाधिकरण्यमस्ति । तस्माद् विसृष्टादयोऽत्र कटुकादेः शब्दस्य यत् प्रवृत्तिनिमित्तं कटुकत्वादि तस्य विशेषणम् । न तद्वतो द्रव्यस्य । कटुकादिभिश्च शब्दैः कटुकस्यास्तिलक्षणो यस्यास्ति तद्गुणवद् द्रव्यमभिधीयते । ततो वैयधिकरण्ये नास्ति कर्मधारयः । तस्माद् यथोक्तेन विधिना समासोऽत्र कर्त्तव्यः । विसृष्ट इति । सृश बाधनस्पर्शनयोरित्यस्य निष्ठायां दस्तस्पष्टच्छन्नज्ञप्ता इति (७।२।२७) स्पष्टशब्दो निपातितः । तस्य विशब्देन गतिसमासः । विचित्रशब्द इत्यादि । चित्र चित्रीकरणे । चुरादिः । तस्माद् घञ् । विशेषेण चित्रं विचित्रम् । प्रादिसमासः । अव्ययस्वरेणेति । तत्पुरुषे तुल्यार्थं इत्यादिना (६।२।२) विहितेन । अव्ययं पुनरत्र विशब्दः । तस्य च निपाता आद्युदात्ता (फिट्, ७९) इतत्राद्युदात्तत्वम् । विचित्तशब्दमिति । चिती संज्ञान इत्यस्य निष्ठायां चित्तम् । विगतं चित्तमस्येति बहुव्रीहिः । बहुव्रीहिस्वरेणेति । बहुव्रीहौ प्रकृत्येति (६।२।१) विहितेन । व्यक्तशब्द इत्यादि । अञ्जेर्विपूर्वस्य निष्ठायां गतिस्वर उदात्तः । तत्रेकारस्य स्थाने यो यण् स उदात्तयण् भवति । ततः परस्याकारस्यानुदात्तस्य स्वरितः । सम्पन्नशब्द इत्यादि । पदेः संपूर्वस्य निष्ठायां सम्पन्नशब्दः कर्त्तरि चेति । पटुपण्डितशब्दौ प्रत्ययस्वरेणेति । अन्तोदात्तग्रहणमेकवचनान्तं यत् प्रक्रतं तस्य विपरिणामं क्रत्वान्तोदात्ताविति सम्बन्धः कर्त्तव्यः । पाटयतेः फलिपाटिनमिजनीनां गुक् पटिनाकिधश्चेतुग्प्रत्ययः (उण्, १।१८) । पटिशब्दश्चादेशः । पटुः । पडि गतौ । अस्मान्निष्ठायां पण्डितः । कुशल इति । कुशाल्लातीति ला दान इत्यस्मादातोऽनुपसर्गे क इति (३।२।३) कः । उपपदसमासः । गतिकारकोपपदात् क्रदित्युत्तरपद-(६।२।१३९) पदप्रक्रतिस्वरः । चपलशब्द श्चित्स्वरेणेति । अन्तोदात्त इत्यपेक्ष्यते । कथमयमन्तोदात्तश्चित्स्वरेणेत्याह कलस्तृपश्चेत्यतः (उण्, १।१०४) कलप्रत्ययेऽनुवर्त्तमाने चुपेरच्चो-(उण्, १।१०८) पधाया इति चुप मन्दायां गताविस्मात् कलप्रत्ययान्तो व्युत्पाद्यते । तत्र वृषादिभ्य (उण् १।१०६) श्चिदित्यतश्चिद्ग्रहणमनुवर्त्तते । तेन चित्-

स्वरेणान्तोदात्तः। निपुणशब्द इत्यादि। अन्तोदात्त इति प्रकृतेन सम्बन्धः। पुणेरिति। पुण कर्मणि शुभ इत्यस्मादिगुपधाज्ञाप्रीकिरः क इति ( ३।१।१३५ )कप्रत्ययः।

## २५। अज्ञावमकन्पापवत्सु भावे कर्म्मधारये।

गमनश्रेष्ठमिति। ल्युट् चेति (३।३।११५) ल्युट्। विशेषणसमासः। अतिशयेन प्रशस्यः श्रेयः। इष्ठनीयसुनोः प्रशस्यस्य श्र इति ( ६।३।६० ) आदेशः। वचनज्येष्ठमिति। अत्रापि तयोरेव प्रत्यययोः परतः प्रशस्यशब्दस्य ज्यादेशः। गमनकनिष्ठं गमनकनीय इति। इष्ठनीयसुनोः परतो युवशब्दस्याल्पशब्दस्य च युवाल्पयोः कनन्यतरस्यामिति (५।३।६४) कनादेशः। ननु च अज्यकनामिति कथम्? इतिकरणो हेतौ। यस्माच्छ्र्ज्यकनामिहादेशानां ग्रहणं ते चाजादौ प्रत्यये प्रशस्यादीनां विधीयन्त इति केवलानामसम्भवः। तस्मात् सामर्थ्यात् तद्दुत्तरपदं गृह्यते।

## २६। कुमारश्च।

कुमारश्रमणेति। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति (प,७२)। कुमारीशब्दोऽत्र समस्यते। एवं हि श्रमणाशब्देन स्त्रीलिङ्गेन सामानाधिकरण्यमुपपद्यते। नान्यथा। कुमारशब्दोऽन्तोदात्त इति। कुमार क्रीड़ायामित्यस्मात् पचाद्यचि व्युत्पादितत्वात्। केचित् पुनरित्यादि। कथं पुनर्लक्षणप्रतिपदोक्तपरिभाषायां सत्यामविशेषेणेति लभ्यते? एवं मन्यते। चकारोऽत्र क्रियते। सचास्यैव विधेः समुच्चयार्थः। तेन सर्व्वत्राविशेषेण भवति। एवं हि समुच्चयो भवति। नान्यथेति। ये तु कुमारः श्रमणादिभि ( २।१।७० ) रित्यत्रैव समासमिच्छन्ति ते पूर्व्वविध्यपेक्षया चकारमिह समुच्चयार्थं वर्णयन्ति।

## २७। आदिः प्रत्येनसि।

प्रतिगत एनसेति। अनेनावादयः क्रुष्टाद्यर्थे तृतीययेति (२।२।१८, वा) तत्पुरुषत्वं प्रत्येनःशब्दस्य दर्शयति। प्रतिगतमेनो वा यस्येति। अनेन बहुव्रीहित्वम्। कुमारप्रत्येना इति। अलसन्तस्य चाधातोरिति (६।४।१४)

दीर्घः । ननु च नेह सूत्र उदात्तग्रहणमस्ति । तत् कथमुदात्तस्वरो लभ्यत इत्याह उदात्त इत्येतदिहेत्यादि । किं पुनस्तत्सामर्थ्यमित्याह पूर्व्वपदे-त्यादि । नहि प्रकृतिस्वरादन्य एव स्वर उच्यते । किं तर्हि ? प्रकृतिस्वर एव । यतः प्रकृत्येति ( ६।२।१ ) वर्त्तते । तत्रैवमभिसम्बन्धः क्रियते । प्रकृति-भावेन कुमारशब्दस्य यः स्वरः प्राप्तः स आद्ये भवतीति । एवञ्च सामर्थ्या-दुदात्तो लभ्यते । स एव हि कुमारशब्दस्य प्रकृतिभावेन स्वरः ।

## २८ । पूगेष्वन्यतरस्याम् ।

## २९ । इगन्तकालकपालभगालशरावेषु द्विगौ ।

तद्धितार्थे द्विगोर्यविति । मासाद्वयसीत्यनुवर्त्तमाने (५ १।८१) द्विगोर्य-विति यप् ( ५।१।८२ ) । ठञो लुगिति । प्राग्वतीयस्य । पञ्चकपाल इति । पञ्चसु कपालेषु संस्कृतः पुरोडाश इति संस्कृतं भक्षा इत्यण् ( ४।२।१६ ) तस्य द्विगोरित्यादिना ( ४।१।८८ ) लुक् । एते समासा इति । पञ्चकपाल इत्येवमादयो दशशरावपर्य्यन्ताः । कृताण्प्रत्ययलोपा इति । कृतोऽण्प्रत्ययलोपो येषां ते तथोक्ताः । पञ्चदशशब्दावत्र न्ःसंख्याया इत्याद्युदात्तौ ( फिट् २८ ) । पञ्चाश्व इति । तद्धितार्थे समासः । आर्हादगोपुच्छेत्यादिना ( ५।१।१९ ) ठक् । अध्यर्धपूर्वेत्यादिना ( ५।१।२८ ) लुक् । पञ्चशराव इति । पञ्च शरावाण्यस्मिन्निति बहुव्रीहिः । अथेह कथं भवति पञ्चारत्नयो दशारत्नयो इति ? यावता यणादेशे कृते गुणे च, नालेगन्तमुत्तरपदमित्याह पञ्चारत्नय इत्यादि । यद् यण्गुणौ ह्यजादौ विभक्तौ परत इति ताविह बहिरङ्गौ । स्वरस्त्वन्तरङ्गः । प्राग् विभक्त्युत्पत्ते र्भावात् । असिद्धं बहिरङ्गमन्तरङ्गे । तेन पञ्चारत्नय इत्यत्रापि द्विगुस्वर इगन्तलक्षणः प्रवर्त्तते । स्थानिवद्भावाद्वेति । अचःपरस्मिन् पूर्व्वविधाविति ( १।१।५७ ) पूर्वस्वरे कर्त्तव्ये यो गुणः स्थानि-वद्भावेनेगन्तलक्षणः प्रवर्त्तते । ननु च स्वरविधौ न पदान्तेत्यादिना (१।१।५८) स्थानिवद्भावः प्रतिषिध्यते । नैतदस्ति । स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदितुक्तत्वात् (१।१।५८,वा) । नचैव मिको यण् गुणौ लोपाजादेशौ । पञ्चारत्नय इति । अरत्निशब्दोऽत्र कृदिकारादक्तिनः सर्वतोऽक्तिन्नर्थादित्येक

इति ( ४।१।४५ ग ) बह्वादिषु पाठान् ङीषन्तः। इहापि पूर्ववत् तद्धितार्थे द्विगुः। मात्रचस्तु लोपः।

## ३०। बह्वन्यतरस्याम्।

पूर्वेणेगन्तादिषूत्तरपदेषु बहुशब्दस्यापि नित्यं प्रकृतिस्वरे प्राप्ते विकल्पोऽयमुच्यते। बहुरत्निरिति। पूर्ववत् समासादि। बहुमास्य इति। पूर्ववद् यप्। बहुकपालादयः समासा इहापि संस्कृतं भक्षा ( ४।२।१६ ) इत्यत्रापि तद्धितार्थे कृतेऽण्प्रत्ययलोपा द्रष्टव्याः। बहुशब्दोऽन्तोदात्त इति। स हि कुभ्रश्चेत्यनुवर्त्तमाने ( उण्, १।२२ ) बहिमहि वृद्धावित्यस्मात् लङ्घिवंह्योर्नलोपश्चेति ( उण् १।२९ ) कुप्रत्ययं विधाय व्युत्पाद्यते। तेन प्रत्ययस्वरेणान्तोदात्तः। यत्र यणादेश इति। बह्वरत्निरित्यत्र।

## ३१। दिष्टिवितस्त्योश्च।

अबह्वर्थोऽयमारम्भः। पञ्चदिष्टिरिति। पञ्चारत्निरित्यनेन तुल्यम्।

## ३२। सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात्।

साङ्काश्यसिद्ध इति। सिद्धशुष्कपक्वबन्धैश्चेति ( २।१।४१ ) समासः। साङ्काश्यकाम्पिल्यशब्दौ ण्यप्रत्ययान्तत्वादिति। वुञ्छणित्यादिना ( ४।२।८० ) सङ्काशादिलक्षणं चातुरर्थिकप्रत्ययं विधाय व्युत्पादितत्वात्। ऊकशब्द इत्यादि। कृदाधारार्चिकलिभ्यः क (उण्, ३।३२०) इत्यधिकृत्य सृवृभूशुषिमुषिभ्यः कगिति ( उण्, ३।३२१ ) कक्प्रत्ययः किद् विधीयमानोऽवतेरपि भवतीति। तेनोकशब्दः कक्प्रत्ययान्तः। ज्वरत्वरेत्यादिना वते रूट् (६।४।२०)। निधानशब्दो निधाञः क्युप्रत्यये मध्योदात्त इति। निधानशब्दोऽयं कृपृवृजिमन्दिनिधाञः क्युरिति (उण्, २।२३९) क्युप्रत्ययान्तो व्युत्पादितः। तेन गतिकारकोपदात् कृदिति (६।२।१३९) कृदुत्तरपदप्रकृतिस्वरे कृते मध्योदात्तो भवति। क्वचित् कुम्भनिप्रत्ययान्त इति पाठः। तत्र सप्तम्येकवचन इकोऽचि विभक्ताविति (७।१।७३) नुमं कृत्वा शब्दरूपापेक्षया नपुंसकलिङ्गं वेदितव्यम्। कुम्भरित्येतस्मिन् शब्दरूपे प्रत्ययसंज्ञक इत्यर्थः। कुम्भीकलशीशब्दौ ङीषन्ताविति। तेनान्तोदात्ताविति भावः। ङीषन्तता तु जातेरस्त्रीविषया-

दित्यादिना (४।१।६३) विहितेन ङीषा वेदितव्या। भ्राष्ट्रशब्दः ष्ट्रन् प्रत्ययान्त इति। ष्ट्रन्निति (उण्, ४।५९८) वर्त्तमाने भ्रसजिगमिनमिहनिविश्यशां वृद्धिश्चेति (उण् ४।५९९) ष्ट्रन्प्रत्ययान्ततया व्युत्पादितत्वात्। चक्रशब्दो-ऽन्तोदात्त इति। क्रञः कि द्वे चेति (६।१।१२, वा) कप्रत्ययान्तत्वेन व्युत्-पादितत्वात्। चारकशब्दो ण्वुलन्तः। तेन लित्स्वरेणाद्युदात्तः। सप्तमी-स्वर इत्यादि। तत्पुरुष इत्यादिना (६।२।२, वा) सप्तम्याः प्रकृतिभावेन यः स्वरो विधीयते स परत्वात् थाथ (६।२।१४४) घञित्यादिना विहितेन स्वरे-णान्तोदात्तेन बाधितः। तेन पुनर्विधीयते।

२३। परिप्रत्युपपापा वर्जमानाहोरात्रावयवेषु।

परित्रिगर्त्तमिति। अत्र त्रिगर्त्तशब्दो वर्ज्यमानमुत्तरपदं त्रिगर्त्तान् वर्जयित्वेत्यर्थः। अपपरी वर्जने इति परेः (१।४।१२, वा) कर्मप्रवचनीयसंज्ञा। पञ्चम्यपाङ्परिभिरिति (२।३।१०) तद्योगे पञ्चमी। अपपरिबहिरञ्चवः पञ्चम्येति (२।१।१२) तदन्तेनाव्ययीभावः। परिसार्वसेनीति। सार्वसेनि-शब्देन समासः। प्रतिपूर्वाह्णमिति। लक्षणेनाभिप्रती आभिमुख्य इत्य-व्ययीभावः (२।१।१४)। उपपूर्वाह्णमिति। अव्ययं विभक्तीत्यादिना (२।१।६) सामीप्ये। अपत्रिगर्त्तमिति। परित्रिगर्त्तमित्यनेन तुल्यम्। तत्पुरुषे बहुव्रीहौ चेत्यादि। (६।२।२) तत्पुरुषे तुल्यार्थेत्यादिना (६।२।२) पर्य्यादीना मव्ययत्वात् सिद्धम्। बहुव्रीहौ बहुव्रीहौ प्रकृत्यादिना (६।२।१)। तेनाव्ययीभावे यथा स्यादितेवमर्थोऽयमारम्भः। किं पुनः कारण मपपर्य्योरेव वर्ज्यमान उदाहरणम्? ननु प्रत्युपयोरित्याह तत्रेत्यादि। तत्र तेषु पर्य्यादिषु मध्येऽपपरिशब्दावेव वर्ज्यमाने वर्त्तेते। तेन तस्मात् तयोरेव वर्ज्यमानमुत्तर-पदम्। अतस्तयोरेवात्रोदाहरणमुपन्यस्तमितयभिप्रायः। अथाहोरात्रावयवा अपि तयोरेवापपर्य्योः कस्मान्नोदाह्रियन्त इतयाह अहोरात्रावयवा अपीतयादि। वर्ज्यमानार्थयोरेवापपर्य्योः प्रयोग इति। यावत् किञ्चिदुत्तरपदं तेन सर्वेणैव वर्ज्यमानेन भवितव्यम्। अन्यथा तयो र्वर्जमानार्थता न स्यात्। तस्मादहोरा-त्रावयवा अपि तयोर्वर्ज्यमानयोरेव भवन्ति। तेन त्रिगर्त्तादिभ्यो वर्जमानेभ्यः पृथङ् नोदाह्रियन्ते। प्रत्यग्नीति। पूर्ववदाभिमुख्येऽव्ययीभावः। परिवनमित्य-

त्वेत्यादि। परिप्रत्युपापा वर्ज्यमान इत्यस्यावकाशः परित्रिगर्त्तमिति। वनं समास इत्यस्यावकाशः (६।२।१७८) प्रवणमिति। परिवनमित्यत्र वनं समास इत्येतद् (६।२।१७८) भवति। विप्रतिषेधेन।

## ३४। राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु।

राजन्यवाचीनि यान्यसमस्तानि बहुवचनान्तानि तदवयवको यो द्वन्द्वः स राजन्यबहुवचनद्वन्द्व इत्युक्तः। श्वाफल्कचैत्रकरोधका इति। (C) श्वाफल्काश्च चैत्रकाश्च रोधकाश्चेति द्वन्द्वः। तत्र रोधकशब्दमपेक्ष्य चैत्रकशब्दस्य पूर्व्वपदत्वम्। चैत्रकशब्दमपेक्ष्य श्वाफल्कशब्दस्य। तयोरपि प्रकृतिभावः। अतएव तयोर् द्वयोरपि स्वरं दर्शयितुमाह श्वाफल्कशब्दश्चैत्रकशब्दश्चेत्यादि। शिनिशब्द आद्युदात्त इति। सहि वीज्याज्वरिभ्यो निरिति (उण्, ४।४८८) निप्रत्ययेऽनुवर्त्तमाने वहिश्रिस्रुयुद्रुग्लाहात्वरिभ्यो निदिति ( उण्, ४।४९०) विधीयमाने शीङोऽपि भवति। बहुलवचनाद् ह्रस्वत्वञ्च ततएव। तेनाद्युदात्तो भवति नित्स्वरेण। तदपत्येष्विति। तस्य शिनेः क्षत्रियस्य यान्यपत्यानि तेष्वित्यर्थः। अभेदेनेति। उपचारेणेत्यर्थः। द्वैमायना इति। यञिञोश्चेति ( ४।१।१०१ ) फक्। ननु च राजन्यशब्दोऽयं क्षत्रियजातिवचनः। तथाचोक्तं राज्ञोऽपत्ये जातिग्रहणमिति (४।१।१३७ वा) राजन्यो भवति। क्षत्रियश्चेदिति। यश्चान्धकवृष्णिषु वर्त्तते द्वन्द्वः स तु क्षत्रियवाचिनामेव भवति। अन्धकवृष्णीनां क्षत्रियत्वात्। ततश्च द्वैप्यद्वैमायना इत्ययुक्तं प्रत्युदाहरणम्। अयमपि हि राजन्यवाचिनामेव द्वन्द्वः। अन्धकवृष्णिषु वर्त्तमानत्वादित्यत आह अन्धकवृष्णय इत्यादि। अन्धकवृष्णिष्वित्येतावतैव क्षत्रियग्रहणे सिद्धे यद्राजन्यग्रहणं क्रियते तस्यैतत् प्रयोजनम्। विशिष्टा येऽभिषिक्तवंश्यास्तेषां ग्रहणं यथा स्यादित्येवमर्थम्। विद्यया जन्मना वा प्राणिनामेकलक्षणः सन्तानो वंशः। इह तु जन्मना य एकलक्षणः सोऽभिप्रेतः। तत्र भवो वंश्यः। दिगादित्वाद् (४।३।५४)

---

(C) "श्वाफल्कचैत्रकरोधका इति प्रमादपाठोऽयम्। यतं त्रिपदे हि द्वन्द्वे यत् सर्वमपेक्ष्य पूर्व्वपदं तस्यैव भवति। ततश्च चैत्रकशब्दस्य स्वरवचनमनुपपन्नं स्यात्। तस्मात् श्वाफल्कचैत्रका शैत्रकरोधका इति पाठः। एकस्तु चैत्रकशब्दो लेखकैः पुनरुक्तिशङ्कया त्यक्त इति पदमञ्जर्य्यामत्र मिश्रोक्तिः। सा तु न्यासमतविरुद्धेति स्पष्टमेव।

यत् । तत्रैतत् स्यात् । द्वैप्यद्वैमायना अप्यभिषिक्तवंश्याएव क्षत्रिया इत्यत आह एते चेत्यादि । संकर्षणवासुदेवाविति । संकर्षणश्च वासुदेवश्चेत्येक-वचनान्तयोरयं द्वन्द्वः । वृष्णिकुमारा इति । तत्पुरुषोऽयम् । कुरुपञ्चाला इति । अत्र सर्वमस्ति । तथाप्यन्धकवृष्णिग्रहणान्न भवति । तत्रावृत्तेः ।

## ३५ । संख्या ।

एकादश इति । एकश्च दश चेति द्वन्द्वः । द्वादश इति । द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योरित्यात्वम् ( ६।३।४७ ) ।

## ३६ । आचार्योपसर्जनश्चान्तेवासी ।

आचार्य्य उपसर्जनं प्रधानं यस्य स तथोक्तः । अन्ते वसतीत्यन्तेवासी । गौणश्चायं निर्द्देशः । द्वन्द्वस्य यान्यवयवभूतानि तान्याचार्य्योपसर्जनवाचीनि । तस्मादन्तेवासिवाचित्वाच्चाभिधेय उपचारेण तान्याचार्य्योपसर्जनान्तेवासि शब्दाभ्यामुच्यन्ते । तदवयवोऽपि द्वन्द्वावयवधर्मेणाचार्य्योपसर्जनान्तेवासीति चोच्यते । आपिशलिराचार्य्य इति । अत इञ् ( ४।१।९५ ) आपिशलेरेव वा छात्रा आपिशला इति । पूर्ववदण् । उभयथेत्यादि । उभयप्रकारेणापि व्युत्पत्तावाचार्य्योपसर्जनान्तेवासी भवति । तथाह्युभयत्र शिष्या एव प्रधानभूता एवमुच्यन्ते । आचार्य्यस्तु तद्विशेषणत्वादुपसर्जनीभूतः । आपिशलशब्दोऽणन्तत्वात् प्रत्ययस्वरेणान्तोदात्तः । पाणिनिना प्रोक्तमिति वृद्धाच्छः ( ४।२।११४ ) । तदधीत ( ४।२।५९ ) इत्यण् । तस्य लुक् ( ४।२।६४ ) पाणिनीयशब्दःप्रत्ययस्वरेण मध्योदात्तः । पाणिनीयरौढ़ीया इति । रोढ़स्यापत्यं रौढ़िः । अत इञ् ( ४।१।९५ ) रौढ़ेराचार्य्यस्यच्छात्रा इतीञश्चेत्यणः ( ४।२।११२ ) प्राप्तस्य न द्व्यच ( ४।२।११३ ) इति प्रतिषेधे कृते वृद्धाच्छः ( ४।२।११४ ) । अथवा रौढ़िना प्रोक्तं रौढ़ीयम् । ततश्च तदधीत ( ४।२।५९ ) इत्यण् । तस्य पूर्ववल्लुक् । रौढ़ीयाः । रौढ़ीय-शब्दोऽपि पूर्ववन्मध्योदात्तः । काशकृत्स्नेन प्रोक्तमित्यण् । तदधीयते काशकृत्स्नाः । पूर्ववदणो लुक् । छान्दसवैयाकरणा इति । भवत्ययमन्ते-वासिना द्वन्द्वः । नत्वाचार्य्योपसर्जनः । अत्र ह्यन्तेवासिनएव छान्दस-

वैयाकरणाभ्यामुच्यन्ते। नत्वाचार्य्योपसर्जनीभूतः। छन्दोऽधीयतेच्छान्दसाः। व्याकरणमधीयत इति वैयाकरणाः। तत्र ते च यत आचार्य्यादधीयते तस्यान्तेवासिनः। आपिशलपाणिनीये शास्त्रे इति। आपिशलिना प्रोक्त-मापिशलम्। पाणिनिना प्रोक्तं पाणिनीयम्। यत्र शास्त्रं प्राधान्येनोच्येत तत्र प्रत्ययस्य विधानादाचार्य्यः प्रधानभूतः। तद्विशेषणत्वात्। आचार्य्यत्वं तस्येह शास्त्रापेक्षम्। नह्याचार्य्यतान्तेवास्यपेक्षैव भवति। अपि तु शास्त्रापेक्षापि।

## ३७। कार्त्तकौजपादयश्च।

असन्तावेताविति। तेन प्रत्ययस्वरेणान्तोदात्ताविति भावः। उत्तरत्रा-प्यसन्तस्यान्तोदात्तता वेदितव्या। सौवर्णिरिञन्त इति। ञित्स्वरेणाद्युदात्त इत्यभिप्रायः। एवमुत्तरत्रापीञन्तस्याद्युदात्तता वेदितव्या। माण्डूकेयशब्दो ढक् च मण्डूकादिति (४।१।११९) ढगन्तः। अवन्तेरित्यादि। अवन्तेर-पत्यानि बहूनीनि वृद्धेत्कोशलाजादाञ्ञ्यङिति (४।१।१७१) ञ्यङ्। तस्य तद्राजस्येत्यादिना (२।४।६२) लुक्। अवन्तीनां निवासो जनपदस्तस्य निवास इति (४।२।६९) चातुरर्थिकोऽण्। तस्य जनपदे लुबिति (४।२।८१) लुप्। अवन्तयः। तथाश्मका इति। यथावन्तय इति कृतस्तथाश्मका इत्यत्रापि। अत्र क्षत्रियवाचिनो जनपदवाचिनश्च शब्दाः। तद्धितेऽपत्येषु यो बहुषूत्पद्यते तदन्ताच्च निवासे चातुरर्थिकः। तस्य लुप् कृतः। तथाश्मका इत्यत्रापि। एतावन्मात्रमतिदिश्यते। अश्मकस्यापत्यानि बहूनि। साल्वावयवेत्यादिनेञ् (४।१।१७३)। तस्य लुक् पूर्ववत्। तेषां निवासेऽण्। तस्य पूर्ववल्लुप्। अवन्तिशब्दो घृतादित्वादन्तोदात्त इत्येके। चित्स्वरेणेत्य-परे। ते हि भुवो झिच् (उण्, ३।३०) बहुलवचनादवतेरपि झिच् भवतीति वर्णयन्ति। युवद्वन्द्वोऽयमिति। युवसंज्ञकप्रत्ययान्तयोरयं द्वन्द्व इत्यर्थः। पैल इति। पीलाया वेत्यण् (४।१।११८)। श्यापर्णशब्दो बिदादिरिति। तेन ततोऽपत्यविवक्षायामञ् भवतीति भावः। स्त्रीति। शार्ङ्गरवाद्यञो ङीन् (४।१।७३)। श्यापर्णेय इति। स्त्रीभ्यो ढक् (४।१।१२०)। बहुवचनमतन्त्रमिति। अविवक्षितत्वात्। तेनेत्यादिना बहुवचनाविवक्षायाः फलं दर्शयति। कपिरन्तोदात्त इति। प्रातिपदिकस्वरेण। तेनेत्यादि।

यस्मात् कपिशब्दोऽयं लुगन्तत्वेन बहुवचनमत्ताश्रीयत एव। ऋष्ठ्यणिति। ऋष्यन्धकेत्यादिना (४।१।११४)। यूनि य इञिति। अत इञित्यनेन (४।१।९५)। पाञ्चालीति। जनपदशब्दात् क्षत्रियादञित्यञ् (४।१।१६८)। तदन्तात् पूर्ववत् ङीप्। पाञ्चालेयीति। पूर्ववड् ढक्। एवं वार्चलेयीत्यत्रापि। शाकल्य इति। गर्गादित्वाद् यञ्। शाकल्यशब्दो ञित्स्वरेणाद्युदात्तः। शणकबाभ्रवा इति। शणं करोतीति कै गै शब्द इत्यस्माद् धातोरातोऽनुपसर्गे कः (३।२।३)। तेन प्रत्ययस्वरेण शणकशब्दोऽन्तोदात्तः। बाभ्रव इति। ओर्गुणः (६।४।१४६)। आर्चाभिन इति। प्रोक्तार्थे णिनिः। तस्मादध्येतर्य्यण्। तस्य प्रोक्ताल्लुगिति (४।२।६४) लुक्। एवमुत्तरत्रापि प्रोक्तप्रत्ययान्तादध्येतृप्रत्ययस्य लुग् वेदितव्यः। मुद्गलः कण्वादिरिति। गर्गाद्यन्तर्गणः। तदपत्यस्येति। मौद्गल्यस्य। मौद्गला इति। मौद्गल्यशब्दात् कण्वादिभ्यो गोत्र (४।२।१११) इत्यण्। यस्येति चेत्यकारलोपः (६।४।१४८)। आपत्यस्य च तद्धितेऽनातीति (६।४।१५१) यकारस्य। आर्चाभिशब्दः प्रत्ययस्वरेणान्तोदात्तः। कुन्तेः सुराष्ट्रस्येत्यादि। कमु कान्तावित्यस्मात् पूर्ववत् क्तिच्। बहुलवचनादुत्वम्। कुन्तिः। शोभनं राष्ट्रमस्येति सुराष्ट्रः। कुन्तेरपत्यानि बहूनि वृद्धेत्कोशलाजादाञ्ञ्यङ् (४।१।१७१)। सुराष्ट्रस्यापत्यानि बहूनि। जनपदशब्दादिनाञ् (४।१।१६८)। तयोस्तद्राजस्येत्यादिना (२।४।६२) बहुषु लुक्। ततः कुन्तीनां निवासो जनपदः। तस्य निवास इति (४।२।६९) चातुरर्थिकोऽण्। तस्य जनपदे लुबिति (४।२।८०) लुप्। कुन्तयश्च सुराष्ट्राश्च कुन्तिसुराष्ट्राः। एवं कुन्तेः सुराष्ट्रस्य चापत्येषु बहुषु तन्निवासे जनपदद्वन्द्वादयं भवति। कुन्तिशब्दश्चित्स्वरेणान्तोदात्तः। चिन्तिसुराष्ट्रा इति। चिन्तिशब्दोऽप्यन्तोदात्त एव। सोऽपि चिति स्मृत्यामित्यस्मात् क्तिच्प्रत्ययान्तः। केचिदवन्तिकुन्तिशब्दौ क्तिच्क्तौ च संज्ञाया मिति (३।३।१७४) क्तिच्प्रत्ययान्तौ व्युत्पादयन्ति। पचाद्यच्प्रत्ययान्ताविति। तड़ि ताड़न इत्यस्मात् केवलादवपूर्वाच्च पचाद्यच्। वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्यवशब्दाकारस्य लोपः। यञो लुक् क्रियत इति। यञञोश्चेति (२।४।६४)। अविमत्तकामविद्धा इति।

मदी हर्षे इत्यस्मादिपूर्वान्निष्ठा। विमत्तः। न विमत्तोऽविमत्त इति। तत्पुरुषे तुल्यार्थ इत्यादिना (६।२।२) पूर्वपदस्य प्रकृतिभावे कृते नञ्स्वरेणाद्युदात्तः। बह्वच इति। अनेन सूत्रैकदेशेन बह्वच इञः प्राच्यभरतेष्वित्येतत् सूत्रमुपलक्षयति ( २।४।६६ )। शलङ्कु शलङ्कञ्चेति। नडादिष्वेतत् पठ्यते। अस्यायमर्थः। शलङ्कुशब्दः फकमुत्पादयति शलङ्कादेशञ्चापद्यत इति। बाभ्रवदानच्युता इति। बभ्रोरपत्यं बाभ्रवः। अथान्तः। दानच्युतशब्दादिञो बह्वचो लुगिति पूर्ववत्। कठकालापा इति। कठशब्दः पचाद्यचि व्युत्पादितत्वादन्तोदात्तः। लौकाक्षस्यापत्यं लौकाक्षिः। तस्यच्छात्रा लौकाक्षाः। स्त्रीकुमारमिति। स्त्यायते ( उण्, ४।६०५ ) ड्रट्। तदन्ताट्टिड्ढाणञिति ( ४।१।१५ ) ङीप्। तत्र प्रत्ययस्वरेणान्तोदात्ताकारस्य यस्येति चेति ( ६।४।१४८ ) लोपः। अनुदात्तस्य च यत्रोदात्तलोप इति ( ६।१।१६१ ) ङीप उदात्तत्वे कृते स्त्रीशब्दो ह्युदात्तः। तस्य च्छात्रा मौदा इति। इञश्चेत्यण् ( ४।२।११२ )। तथा पैप्पलादा इति। पिप्पलादस्यापत्ये पैप्पलादिः। तस्य च्छात्राः पैप्पलादाः। वत्सजरदिति। वृतृवदिहनिकमिकषिभ्यः स इति ( उण्, ३।३४२ ) वदेः सः। अनेन वत्सशब्दोऽन्तोदात्तः। जीर्यतेरतृन् ( ३।२।१०४ )। जरत्। तयोर्द्वन्द्वः। सौश्रुतपार्थवा इति। सुश्रुतस्य च्छात्राः सौश्रुताः। पृथोश्चच्छात्राः पार्थवा इति। उभयत्र तस्येदमित्यण् ( ४।३।१२० )। जरामृत्यू इति। जृषित्येतस्मात् षिद्भिदादिभ्योऽङित्यङ् ( ३। ।१०४ )। जरा। तस्य प्रत्ययस्वरेणान्तोदात्तत्वम्। म्रियतेर्भुजिमृङ्भ्यां युक्त्युकाविति ( उण्, ३।३०१ ) त्युक्। मृत्युः।

## ३८। महान्व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु।

महच्छब्दोऽन्तोदात्त इति। वर्त्तमाने पृषद्बृहन्महदित्यन्तोदात्तस्य ( उण् २।२४१ ) तस्योणादिषु निपातनात्। अथेह कस्मान्न भवति महतो व्रीहिर्महद्व्रीहिरित्यत आह तस्येत्यादि। एतच्च लक्षणप्रतिपदोक्तपरिभाषया

लभ्यते । अथ किमर्थं प्रवृद्धशब्द इह पठ्यते ? यावता निष्ठान्तोऽसौ । तत्र कर्मधारयेऽनिष्ठेति ( ६।२।४६ ) वक्ष्यमाणेनैव सिद्धमित्यत आह कर्मधारयेऽनिष्ठेत्यादि । तत्रैव हि परिभाषया श्रेण्यादयः कृतादिभिरिति ( २।१।५९ ) तेन प्रतिपदोक्तेनायं समासः । तत्र कर्मधारयेऽनिष्ठेत्यनेन ( ६।२।४६ ) प्रकृतभावस्याविधिः । नच महाप्रवृद्ध इत्ययं प्रतिपदोक्तेन निष्ठान्तेन कर्मधारयः । तत्र यदि प्रवृद्धशब्दोऽत्र न पठ्यते तत्र परतः प्रकृतिभावो न स्यात् । तस्मात् तस्येह पाठः क्रियते । योगश्चायं समासस्वरस्यापवादः ।

३९ । चुल्लकश्च वैश्वदेवे ।

चुधं लातीति चुल्ल इति । आतोऽनुपसर्गे क इति ( ३।२।३ ) कप्रत्ययः । तोर्लीति ( ८।४।६० ) परसवर्णः ।

४० । उष्ट्रः सादिवाम्योः ।

उषेः ष्ट्रन्प्रत्ययान्त इति । सर्वधातुभ्यः ष्ट्रनित्यस्मात् ( उण्, ४।५९८ ) ष्ट्रन्नित्यनुवर्त्तमान उषिखनिभ्यां किदित्येवं (उण्, ४।६०१) व्युत्पादितत्वात् ।

४१ । गौः सादसादिसारथिषु ।

गोः साद इत्यनेन वाक्यशेषेण गोसादशब्दस्य षष्ठीसमासत्वं दर्शयति । गां सादयतीति चेति । एतेनाप्युपपदसमासत्वम् । सदेर्विशरणार्थत्वात् । गोशब्दे कर्मण्युपपदे कृते गोसाद इति भवति । गोशब्दो गमेर्डोसिति ( उण्, २।२२५ ) डोस्प्रत्ययान्तत्वात् प्रत्ययस्वरेणान्तोदात्तः ।

४२ । कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूःपण्यकम्बलो दासीभाराणाञ्च ।

अत्र कुरुगार्हपत इत्येवमादयः पण्यकम्बलपर्यन्ताः समस्ताः । तत्र कुरुगार्हपतरिक्तगुरु इत्येतावविभक्तिकौ । इतरे त्वसूतजरतीत्येवमादयः प्रथमैकवचनान्ताः । सा च प्रथमा सुब्व्यत्ययेन षष्ठ्याः स्थाने वेदितव्या । दासीभाराणामिति बहुवचनं गणस्य सूचनार्थम् । अतएवाह दासीभारादीनाञ्चेति । कुरुशब्दः कुप्रत्ययान्त इति । कुर्भ्रश्चेत्यतः ( उण्, १।२२ )

कुरित्यधिकृत्य कृग्रोरुच्चेति ( उण्, १।२४ ) कुप्रत्ययान्तत्वेन व्युत्पादितत्वात्। कुरुवृज्योर्गार्हपत इति वक्तव्यमिति। कुरुवृजिशब्दयोर्गार्हपतशब्द उत्तरपदे प्रकृतिभावो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। कुरुशब्दस्य तावत् कुरुगार्हपत इति सूत्र एवोपादानाद् भविष्यति। वृजिशब्दस्यापि चकारस्येहानुक्तसमुच्चयार्थत्वादिति। वृजिशब्द आद्युदात्त इति। वृजेरिन्। इगुपधात् किच्चेत्येवं ( उण्, ४।५५८ ) व्युत्पादितत्वात्। रिक्तगुरुरिति। रिक्तगुरुशब्दस्य समानाधिकरणसमासतां दर्शयति। एवमसूता जरतीत्यनेनाप्यसासूतजरतीशब्दस्य। अश्लीला दृढ़रूपेत्यनेनाश्लीलदृढ़रूपशब्दस्य। न सूतेत्यसूताशब्दोऽपि नञ् स्वरेणाद्युदात्तः। एवमश्लीलाशब्दोऽपि। न श्लीलाऽश्लीला। सिध्मादेराकृतिगणत्वाल्लजिति। सिध्मादिभ्यश्चेति ( ५।२।९७ )। प्राणिस्थादातो लजन्यतरस्यामित्यतो ( ५।२।९६ ) लजित्यस्यानुवृत्तेः। कपिलकादित्वाच्च लत्वमिति। कृपो रोल इत्यत्र ( ८।२।१८ ) कपिलकादीनाञ्चोपसंख्यानमिति लत्वस्योपसंख्यानात्। कथं पुनर्ज्ञायते श्रीर्यस्यास्ति तच्छ्लीलशब्देनोच्यत इत्याह अश्लीलदृढ़रूपेत्यादि। न श्लीलमश्लीलमिति। अश्लीलशब्दस्यार्थः प्रतिषिध्यते। तत्र यदि श्लीलशब्दस्य श्रीर्यस्यास्ति स इत्यर्थो न स्यादश्लीलदृढ़रूपेत्यत्र निःश्रीका नोच्येत। उच्यते च। ततो ज्ञायते श्रीमदस्तु श्लीलशब्देनोच्यत इति। संस्थानमात्रेण शोभनेति। दृढ़त्वाच्च संस्थानस्य। श्रीरहितत्वाच्च संस्थानमात्रेण शोभना। मात्रशब्दः श्रीमत्ताया व्यवच्छेदकः। लावण्यरहितेत्यनेन निःश्रीकेत्यस्यार्थं विस्पष्टीकरोति। पारे वड़वेव पारेवड़वेति। केन पुनरत्र समासः? नह्यीवार्थे समासस्य किञ्चिल्लक्षणमस्ति। अथापि कथञ्चित् समासः स्यादेवमपि सुपो धातुप्रातिपदिकयोरिति ( २।४।७१ ) विभक्तिलोपः कस्मान्न भवतीत्याह निपातनादेवेत्यादि। तितिलिनोऽपत्यमिति। एतेनापत्यार्थे तितिलिञ्शब्दात् तद्धितोत्पत्तिमिह दर्शयति। छात्रा वेति। तितिलिन इत्यपेक्षते। एतेनापि तस्येदमित्यत्रार्थे (४।३।१२०) तैतिला इति। पूर्ववदुपसंख्यानाट्टिलोपः। यदन्तत्वादिति। अवद्यपण्येति ( ३।१।१०१ ) यदन्तस्य निपातनात्। आद्युदात्त इति। यतोऽनाव

इत्यनेन ( ६।१।२१२ )। पण्यकम्बलः संज्ञायां वक्तव्यमिति। पण्यकम्बल-शब्दः संज्ञायां पूर्वपदप्रकृतिस्वरो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। पूर्गेष्वन्यतरस्यामित्यतो ( ६।२।२८ ) मण्डूकप्लुति-न्यायेनान्यतरस्यांग्रहणमनुवर्त्तते। सा च व्यवस्थितविभाषा। संज्ञायामेव पण्यकम्बलशब्दः पूर्वपदप्रकृतिस्वरो भवति। नान्यत्रेति। अन्यत्र समासान्तो-दात्तत्वमेवेति। ननु च पण्यशब्दोऽयं कृत्यप्रत्ययान्तः। तत्पुरुष इत्यादिना ( ६।२।२ ) तस्मिन् पठितव्ये पूर्वपदस्य प्रकृतिस्वरेणैव भवितव्यम्। तत् कथं समासान्तोदात्तत्वमित्याह प्रतिपदोक्ते हीत्यादि। कृत्यतुल्याख्या अजात्या इति ( २।१।६८ ) यः कृत्यसमासः प्रतिपदोक्तस्तत्र द्वितीया कृत्या (६।२।२) इति पूर्वपदस्य प्रकृतिभावो विहितः। नचायं प्रतिपदोक्तः समासः। विशेषणं विशेष्येणेति ( २।१।५७ ) सामान्येन विहितत्वात्। कुत एतत् ? कम्बलशब्दस्य जातिशब्दत्वात्। द्वितीया कृत्या ( ६।२।२ ) इत्यनेन सूत्रैक-देशेन तत्पुरुषे तुल्यार्थ इत्यादिकं (६।२।२) सूत्रमुपलक्षयति। दासीभार इति। दासीशब्दः पूर्वमुक्तस्वरः। देवहूतिरिति। पचाद्यजन्तत्वादन्तोदात्तः। ओषशब्दो घञन्तत्वादिति। उष दाह इत्यस्य घञि व्युत्पादितत्वात्। चन्द्रे माडो ( उण्, ४।६६७ ) ड़िदि त्यसिप्रत्ययान्तोऽयम्। मिथुनेऽसिः पूर्ववच्च सर्वमिति ( उण्, ४।६६२ ) इत्यतोऽसिप्रत्ययस्यानुवृत्तेः। चन्द्र-शब्दस्तु रक्प्रत्ययान्तत्वादिति। स्फायितञ्चीत्यादिना सूत्रेण (उण्, २।१७०) रक्प्रत्ययान्तत्वेन व्युत्पादितत्वात्। स सर्वो दासीभारादिषु द्रष्टव्य इति। दासीभारादेराकृतिगणत्वात्।

## ४३। चतुर्थी तदर्थे।

तदर्थ इति। तस्मै इदं चतुर्थ्यन्तं तस्य योऽर्थः स्तदर्थ इत्यर्थः। कथं पुनर्यूपशब्द आद्युदात्त इत्याह कुयुभ्यामित्यादि। पानीविषिभ्यः पइत्यतः ( उण्, ३।३०३ ) पइत्यनुवर्त्तमाने कुयुभ्याञ्चेति ( उण्, ३।३०७ ) यूपशब्दः पप्रत्ययान्तो व्युत्पाद्यते। तत्र सुशृभ्यां निच्चेत्यतो ( उण्, ३।३०६ ) निदिति वर्त्तते। तेनाद्युदात्तो भवति। दीर्घत्वं तु सुवो दीर्घश्चेत्यतो ( उण्, ३।३०५)

दीर्घग्रहणानुवृत्तेः। कलप्रत्ययान्त इति। वृषादिभ्यश्चिदित्यत्र (उण्, १।१०६) कलस्तृपश्चेत्यतः ( उण्, १।१०४ ) कलप्रत्ययानुवृत्तेः। रथशब्द आद्युदात्त इति। हनिकुषिनीरमिकाशिभ्यःक्थन्निति ( उण्, २।१५९ ) क्थन्प्रत्ययान्तत्वात्। वल्मीशब्दो ङीषः स्वरेणान्तोदात्त इति। ङीष्प्रत्ययस्तु गौरादित्वाद् वेदितव्यः। प्रकृतिविकारभाव इत्यादि। कथं पुनः सामान्येनोच्यमानः प्रकृतिविकारभावे लभ्यते? पूर्ववदन्यतरस्यांग्रहणानुवृत्तेः। तस्य च व्यवस्थितविभाषात्वाद् वक्ष्यमाणज्ञापकात्।

४४। अर्थे।

मातृपितृशब्दावन्तोदात्ताविति। नप्तृनेष्ट्रित्यादौ ( उण्, २।२५२ ) तृजन्तयो स्तयोर्निपातितत्वात्। लित्स्वरेण मध्योदात्त इति। देवात् तलिति ( ५।४।२७ ) तल्प्रत्ययान्तत्वात्। किमर्थं पुनरेतत्? न चतुर्थी तदर्थं इत्येवं ( ६।२।४३ ) सिद्धम्। अर्थशब्दोऽपि तदर्थमेवोत्तरपदं भवतीत्याह तदर्थविशेषा एवेत्यादि। एवं मन्यते। अर्थशब्दोऽपि वृत्तौ विशेषवाची भवतीति। युक्तश्चैतत्। यदा मात्रर्थमित्युक्ते मात्रादिभ्यो व्याहृतरूपं विशिष्टमेव मात्रर्थं वस्तु प्रतीयते। अश्ववास इत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति।

४५। क्ते च।

अश्वशब्द आद्युदात्त इति। क्वन्प्रत्ययान्तत्त्वात्। मनुष्यशब्दोऽन्तस्वरित इति। मनोर्जातावञ्यतौ षुक् चेति ( ४।१।१६१ ) यत्प्रत्ययान्तत्वात्। परिशिष्टमन्तोदात्तमिति। तत् पुनर्गोशब्दस्तापसशब्दश्च। तत्र गमेर्डोसिति ( उण्, २।२२५ ) डोस्प्रत्ययान्तत्वाद् गोशब्दः प्रत्ययस्वरेणान्तोदात्तः। तापसशब्दोऽप्यण्प्रत्ययान्तत्वात्। स हि तपःसहस्राभ्यां विनिनी (५।२।१०२)। अण् चेत्यण् प्रत्ययान्तो ( ५।२।१०३ ) व्युत्पाद्यते। अथ गोरक्षितमिति। कथमिदमस्योदाहरणम्? यावता गोभ्यो रक्षितमिति तादर्थ्ये चतुर्थी। तत्र हि शेषगत उत्तरपदेन भवितव्यमित्यत आह गोभ्यो रक्षितमित्यादि। नह्यत्र गवार्थं रक्षित इत्येषोऽर्थो विवक्षितः। किं तर्हि? गोभ्यो रक्षितं दीयते इत्येतदध्याहार्यम्। तस्मात् सम्प्रदान एषा चतुर्थी। तत् कुतस्तादर्थ्यम्?

## ४६ । कर्मधारयेऽनिष्ठा ।

श्रेणिकृता इत्यादि । श्रेण्यादयः कृतादिभिरिति (२।१।५९) समासः । श्रेणिशब्द आद्युदात्त इति । नित्स्वरेण । स हि वीज्याज्वरिभ्यो निरित्यतो (उण्, ४।४८८) निरिति वर्त्तमाने वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो निदित्येवं (उण्, ४।४९०) व्युत्पाद्यते । तेनाद्युदात्तः । पूगशब्दोऽन्तोदात्त इति । मुदिग्रोर्गग्गाविति (उण्, १।१२५) बहुलवचनात् पूञोऽपि गक् । तेन प्रत्ययस्वरेणान्तोदात्तः । कृताकृतमिति । कृतञ्च तदकृतञ्चेति क्तेन नञ्विशिष्टेनानञिति (२।१।६०) समासः । एकदेशस्य कृतत्वात् कृतम् । तदेवैकदेशस्याकृतत्वादकृतम् ।

## ४७ । अहीने द्वितीया ।

हीनं त्यक्तम् । न हीनमहीनम् । कष्टशब्दोऽन्तोदात्त इति । क्तप्रत्ययान्तत्वात् प्रत्ययस्वरेण । कृच्छ्रगहनयोः कष इतीट्प्रतिषेधः (७.२।२२) । बहुव्रीहिस्वरेणाद्युदात्त इति । त्रिशब्दो हि प्रातिपदिकस्वरेणान्तोदात्तः । तत्र बहुव्रीहौ प्रकृत्येति (६।२।१) प्रकृतिस्वरे कृते बहुव्रीहिस्वरेण त्रिशकलशब्द आद्युदात्तः । ग्रामशब्दोऽपि आद्युदात्तएव । तथाह्यसा अर्त्तिस्तुसुहुसृधुक्षी-क्षुभायावापदियक्षिनीभ्यो मन्निति (उण्, १।१३७) मन्प्रत्ययेऽनुवर्त्तमानेऽवतेष्टिलोपश्च (उण्, १।१३९) ग्रसेरा चेति (उण्, १।४०) मन्प्रत्ययान्तो व्युत्पाद्यते । कान्तारातीत इति । कान्तारमतीतवांस्त्यक्तवानित्यर्थः । कान्तारातीतशब्दोऽत्र हीनशब्द-वाची । द्वितीयानुपसर्ग इति वक्तव्यमिति । द्वितीयान्तमनुपसर्गं क्तान्ते प्रकृतिस्वरं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानं त्विहापि तस्यैवान्यतरस्यांग्रहणस्यानुवृत्तिं व्यवस्थितविभाषात्वञ्चाश्रित्य कर्त्तव्यम् ।

## ४८ । तृतीया कर्मणि ।

तत्पुरुषे तुल्यार्थं (६।२।२) इत्येव सिद्धे पूर्व्वपदप्रकृतिस्वरे च कृत्स्वरेण थाथादिस्वरेण (६।२।१४४) बाधिते तत्प्रतिपादनार्थं वचनम् । अहिहत इति । कर्त्तृकरणे कृता बहुलमिति (२।१।३२) समासः । अहिरन्तोदात्तो व्युत्पादित इति । आङ्पूर्वाद्धन्ते र्जनिघसिभ्यामिणिति

( उण्, ४।५६९ ) वर्त्तमाने वातेर्डिच्चेति ( उण्, ४।५७२ ) डिदिति चाडिम्निच्छनिभ्यां क्रश्चेत्यनेनाद्विरिसन्तो ( उण्, ४।५७६ ) व्युत्पादितः। केचिदाद्युदात्तमिच्छन्तीति। ते समाने ख्यः स चोदात्त इत्युदात्तग्रहण-( उण्, ४।५७५ ) मप्यनुवर्त्तयन्ति। रक्प्रत्ययान्त इति। स्फायितञ्ची-त्यादिना ( उण्, २।१७०) रक्प्रत्ययान्तत्वेन व्युत्पादितत्वात्। महाराजष्टच्-प्रत्ययान्त इति। राजाहःसखिभ्यष्टेति ( ५।४।९१ ) टच्प्रत्ययान्तत्वात्। दात्रलूना इति। धः कर्मणि ष्ट्रन्नित्यनुवर्त्तमाने ( ३।२।१८१ ) दाम्नी-शसित्यादिना ( ३।२।१८२ ) ष्ट्रन्प्रत्ययान्तो दात्रशब्दो व्युत्पाद्यते। तेनाद्युदात्तः। सर्वत्र तयोरेव कृत्यक्तखलर्था इति ( ३।४।७० ) कर्मणि क्तः।

## ४९। गतिरनन्तरः।

प्रकृत इति। कुगतिप्रादय इति ( २।२।१८ ) समासः। प्रादयोऽभि-वर्जिता आद्युदात्तगणे निपात्यन्ते। तेन प्रशब्द आद्युदात्तः। अभ्युद्धृतमित्य-त्राभिशब्दस्यानन्तरस्य न भवति। अतोच्छब्दस्य क्तान्तेन समासं कृत्वा पश्चादभिशब्दस्योद्धृतशब्देन समासः कर्त्तव्यः। अथवा कुगतिप्रादय इत्यत्र ( २।२।१८ ) सुब्ग्रहणस्य निवर्त्तितत्वादनेकस्यापि समासो भवति। समुदा-हृत इति। अत्रापि समुदोरन्तरयोर्न भवति। कारकपूर्वस्य त्वित्यादि। दूरादागत इत्यत्राङो गतिसमासे कृते सत्यनेन प्रकृतिस्वरः। तत उदात्तो भवति। ततो दूरादागत इति स्तोकान्तिकेत्यादिना ( २।१।३९ ) पञ्चमी-समासः। तस्मिन् कृते गतिकारकोपपदात् कृदिति ( ६।२।१३९ ) वर्त्तमाने थाथघञित्यादिनोत्तरपदस्यान्तोदात्तत्वं ( ६।२।१४४ ) विधीयते। स च गतिस्वरे सति विधीयत इति शिष्टत्वेन स एव भवति। पञ्चम्याः स्तोकादिभ्य इत्यलुक् ( ६।३।२ )। अथ कथं समुद्धृत इत्यादि प्रत्युदाहरण-मुपपद्यते? यावता कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति ( प, २९ ) गतिरिह निष्ठाग्रहणेनैव गृह्यते। एवञ्चानन्तर एव समुद्धृत इत्यत्र सम्शब्दः। समुदाहृत इत्यत्रापि समुच्छब्दाविष्यत आह अनन्तरग्रहणसामर्थ्यादिति। अनन्तरग्रहणेन ह्येवमर्थः क्रियते। समुद्धृतमित्यादौ मा भूदिति। यदि

परिभाषेयमिहाश्रीयेत तदा इत्थङ्कृत इत्यादौ गतिरनन्तर एवेति व्यावर्त्त्याभावादनन्तरग्रहणमपार्थकं स्यात् । प्रकृतः कटं देवदत्त इति । आदिकर्मणि क्तः । कर्त्तरि चेति ( ३।४।७१ ) कर्त्तरि हि क्तप्रत्ययः ।

## ५० । तादौ च निति कृत्यतौ ।

प्रकर्त्तुमिति । तुमुन् । प्रकर्त्तेति तृन्नन्त इति । तृजन्ताशङ्कां निराकरोति । कृत्स्वरबाधनार्थमित्यादि । अव्ययस्वरापवादो गतिकारकोपपदात् कृदिति ( ६।२।१३९ ) कृत्स्वरः प्राप्नोति । अतस्तद्बाधनार्थं वचनम् । प्रजल्पाक इति । जल्पभिक्षेत्यादिना ( ३।२।१५५ ) षाकन् । तृजन्त इति । तृन्नन्ताशङ्कां निराकरोति । अथ निद्ग्रहणं किमर्थम् ? प्रकृष्टस्तृष्टस्तिका प्रवृश्चिकादित्यत्र मा भूदिति चेत् ? नैतदस्ति । तथाहि यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति । वृश्चिकाशब्दश्चायं नामधेयत्वात् क्रियावाची न भवति । तेन तं प्रत्युपसर्गसंज्ञा नास्त्येवेत्यत आह कृद्ग्रहणमित्यादि । कृतीत्यनेन संज्ञासम्बन्धकालो लक्ष्यते । तेन कृत्संज्ञावेलायां यस्तादिरित्येषोऽर्थः सम्पद्यत इति कृद्ग्रहणमुपदेशतार्थं भवति । कृत्संज्ञाप्रतिपत्तिकालस्योपदेशकालत्वात् । तस्मात् पुनरुपदेशे यस्तादिस्तदर्थं यत्नः क्रियत इत्याह इहेत्यादि । यदि तदुपदेशग्रहणं तादर्थं न क्रियेत तदा प्रलपितेत्यत्र न स्यात् । इटा तादिताया विहतत्वात् । यस्मिंश्च सत्युपदेशएव तादिर्भवतीति । यद्यप्युत्तरकालं तादिता विहन्यते तथापि भवत्येव । आगन्तुरिति । सितनिगमिमसीत्यादिना ( उण्, १।६९ ) तुन्प्रत्ययः ।

## ५१ । तवै चान्तश्च युगपत् ।

अन्त उदात्तो भवतीति । कथं पुनरुदात्तो भवतीत्येषो लभ्यते ? नेहोदात्तग्रहणमस्ति । नह्यत्रापूर्वएव स्वरो विधीयते । किं तर्हि ? गतिकारकोपपदात् कृदिति ( ६।२।१३९ ) प्रकृतिभावेनादेर्यः स्वरः प्राप्नोति सएव । तत् कथं प्रकृतेरति वर्त्तते ? तत्रैवमभिसम्बन्धः क्रियते । तवैप्रत्ययान्तस्य यः प्राप्नोति सोऽन्त्यस्य भवतीति । स चोदात्त एवेति सामर्थ्यादुदात्तो लभ्यते । युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम् । अन्वेतवा इति ।

अनुपूर्वादेतेः कृत्यार्थे तवैकेन्केन्यत्वन इति ( ३।४।१४ ) तवैप्रत्ययः। गुणः। परिपातवा इति। परिपूर्वात् पिवतेः। अभिचरितवा इति। अभिपूर्वाच्चरतेः। अभिरन्तोदात्त इति। प्रातिपदिकस्वरेण।

## ५२। अनिगन्तोऽञ्चतौ वप्रत्यये।

वप्रत्यय इति। वकारः प्रत्ययो यस्य स तथोक्तः। प्राङित्यादि। प्राञ्चतीति ऋत्विगादिना ( ३।२।५९ ) क्विन्प्रत्ययः। स च वकारमात्र एव। ककारादीनामनुबन्धत्वात्। तेषाञ्चानैकान्तत्वात्। उगिदचामिति नुम् ( ७।१।७० )। एकवचने हल्ङ्यादि (६।१।६८) संयोगान्तलोपौ (८।२।२३)। क्विन्प्रत्ययस्य कुरिति ( ८।२।६२ ) नकारस्य कुत्वं ङकारः। द्विवचन-बहुवचनयोस्तु स्तोःश्चुना श्चुरिति ( ८।४।४० ) श्चुत्वं ञकारः। उपसर्गाकारेण सहाकः सवर्णे दीर्घः ( ६।१।१०१ )। पराङित्यादि। पराशब्द आद्युदात्तः। तेन स्वरितो वानुदात्तेऽपदादाविति ( ८।२।६ ) विधिर्न भवति। प्रत्यङिति। अत्र प्रतिशब्दस्येगन्तत्वात् प्रकृतिभावो न भवति। ननु च यणादेशे कृते सोऽप्यनिगन्तएव। स्थानिवद्भावादिगन्तव्यपदेशः। कृतेऽपि यणादेशे भविष्यतीत्यदोषः। स्वरविधौ स्थानिवद्भावः प्रतिषिध्यत इति चेत्? नैतदस्ति। स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत् ( १।१।५८, वा )। अन्यस्तु स्थानिवदेवेतुप्रक्तमितत्। उदङ्न इति। लुप्त्। अत्राप्युत्तरपदप्रकृति-स्वरएव भवति। चोरनिगन्तोऽञ्चताविलयादि। चोरित्यनेन चावित्यनेन ( ६।१।२२२ ) यदन्तोदात्तत्वं विधीयते तदुपलक्षयति। चोरित्यस्यावकाशो ( ६।१।२२२ ) दधीचो यत्र गतिर्न भवति। अनिगन्तस्वरस्यावकाशो यत्राञ्च-तेरकारनकारौ न लुप्येते पराङ् पराञ्चाविति। इहोभयं प्राप्नोति पराचः पराचेति। अनिगन्तः स्वरो भवति विप्रतिषेधेन। विप्रतिषेधशब्दस्तत्रा-ध्याहार्य्यः।

## ५३। न्यधौ च।

इगन्तार्थोऽयमारम्भः। उदात्तस्वरितयोरित्यादि। निरुदात्तः। उपसर्गा-श्चाभिवर्जमिति ( फिट्, ७९ )। तेन तदिकारस्थाने यो यणादेशः स उदात्त

यण् । तेनोदात्तस्वरितयोरित्यादिना ततः परमच्तेरकारः स्वरितो भवति । अध्यङ्ङित्यादौ तु न भवति । आदेशस्याप्युदात्तत्वात् । यणादेश उदात्तयण् न भवतीति कृत्वा ।

## ५४ । ईषदन्यतरस्याम् ।

समासस्वरापवादोऽयं योगः । ईषत्कडार इति । ईषदकृतेति (२।२।७) समासः । यदायं प्रकृतिभावो न भवति तदा समासान्तोदात्तत्वमेव भवति । ईषद्भेद इत्येवमादौ कृत्स्वरएव भवतीति । परत्वादितिभावः । आदि-शब्देनेषत्कर इत्यादीनां ग्रहणम् । ईषद्दुःसुष्वित्यादिना ( ३।३।१२६ ) खल् ।

## ५५ । हिरण्यपरिमाणं धने ।

हिरण्यपरिमाणं परिमाणवद् हिरण्यमित्यर्थः । इह तु तद्वाचिशब्दरूपं गृह्यते । द्विसुवर्णधनमिति । सुवर्णशब्दो हिरण्यपरिमाणविशेषवाची । द्वे सुवर्णे परिमाणमस्येति तद्धितार्थ इति ( २।१।५१ ) समासः । तदस्य परिमाणमिति ( ५।१।५७ ) प्राग्वतेष्ठञ् ( ५।१।१८ ) । तस्याध्यर्द्धपूर्वेत्यादिना ( ५।१।२८ ) लुक् । ततो धनशब्देन सह कर्मधारयः । द्विसुवर्णशब्दः समास-स्वरेणान्तोदात्तः । बहुव्रीहावपीत्यादि । यदा द्विसुवर्णं धनं यस्येति बहुव्रीहिः । तदापि परत्वाद् विकल्पएव भवति । ननु बहुव्रीहौ प्रकृत्येत्येष ( ६।२।१ ) नित्यो विधिः । प्रस्थधनमिति । अयमपि कर्मधारयः । बहुव्रीहिर्वा । प्रस्थशब्दो भवति परिमाणम् । ननु हिरण्यस्य । किं तर्हि ? धान्यादेः । काञ्चनधनमिति । यदि परिमाणग्रहणं न क्रियेत तदा हिरण्यमित्येतावतुच्य-मान इहापि स्यात् । काञ्चनशब्दस्य हिरण्यवाचित्वात् । हिरण्यवाच्यपि परिमाणवाची न भवतीति न भवत्येष प्रसङ्गः । अयमपि समासस्वरापवादो योगः ।

## ५६ । प्रथमोऽचिरोपसम्पत्तौ ।

अचिरोपश्लेष इति । अचिरकालसम्बन्ध इत्यर्थः । अस्यैवार्थं प्रसिद्ध-तरार्थेन प्रदर्शयितुमाह अभिनवत्वमिति । प्रथमवैयाकरण इति । प्रथमश्च वैयाकरणश्चेति पूर्वापरेत्यादिना ( २।१।५८ ) समासः । तत्र यत् तद्

वैयाकरणत्वं व्याकरणस्याध्येतृत्वम्। अनेनाचिरकालसम्बन्धोऽध्येतुर्गम्यते। अभिनववैयाकरणादिनाऽचिरकालोपसम्पत्तिमुदाहरणे दर्शयति। आद्यो मुख्यो यः स इति। अनेनापि प्रत्युदाहरणविषयस्य प्रथमशब्दस्यान्यार्थताञ्च पक्षेऽचिरोपसम्पत्तेरभावञ्च। अयमपि समासस्वरापवादो योगः। एवमुत्तरेऽपि।

## ५७। कतरकतमौ कर्मधारये।

किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् ( ५।३।९२ )। वा बहूनां जातिपरिप्रश्ने डतमजिति ( ५।३।९३ ) कतरकतमशब्दौ व्युत्पाद्येते। तेन तौ चित्स्वरेणान्तोदात्तौ। कतरकठ इति। कतरकतमौ जातिपरिप्रश्न इति ( २।१।६३ ) समानाधिकरणसमासः। एतदर्थमपि कर्मधारयग्रहणं कस्मान्न भवतीत्याह इह त्वित्यादि। कतरकतमशब्दयो र्हि यः प्रतिपदसमासः स एव लक्षणप्रतिपदोक्तपरिभाषया विज्ञायते। स च कर्मधारयएव। तस्मात् प्रतिपदोक्तत्वादेवैतत्समासस्य कर्मधारयत्वम्। तस्मान्नैतदर्थं कर्मधारयग्रहणमुपपद्यते।

## ५८। आर्य्यो ब्राह्मणकुमारयोः।

आर्य्यब्राह्मण इति। आर्य्यश्चासौ ब्राह्मणश्चेति विशेषणसमासः। आर्य्यशब्दो ण्यदन्त इति। ऋहलोर्ण्यदिति ( ३।१।१२४ ) ण्यति व्युत्पादितत्वात्। अन्तस्वरित इति। तित्स्वरेण। प्रत्युदाहरणे तु समासान्तोदात्तत्वमेव भवति।

## ५९। राजा च।

राजब्राह्मणमिति। पूर्ववत् समासः। प्रत्युदाहरणेऽपि पूर्ववत्। राजशब्दः कनिन्प्रत्ययान्तत्वादाद्युदात्तः। पृथग्योगकरणमुत्तरार्थमिति। उत्तरो विधी राजशब्दस्यैव यथा स्यात्। आर्य्यशब्दस्य मा भूदिति।

## ६०। षष्ठी प्रत्येनसि।

राज्ञः प्रत्येना इति। षष्ठ्या आक्रोश इति ( ६।३।२१ ) विभक्तेरलुक्।

## ६१। क्ते नित्यार्थे।

नित्यशब्द आभीक्ष्ण्ये। न कूटस्थे। कुत एतत्? क्त इत्युच्यते। क्तश्च धातो र्विधीयते। धातुश्च क्रियावचनः। क्रियायाश्च कौटस्थ्यं नोपपद्यते। क्षणिकत्वात् क्रियायाः। तस्यास्तु पौनःपुन्याद्यपेक्षया युक्तमाभीक्ष्ण्यम्। काला इति (२।१।२८) द्वितीयासमासोऽयमिति। द्वितीया तु कालाध्वनोरत्यन्तसंयोग (२।३।५) इति। अथवा कर्मण्येव। कर्मसंज्ञा तु कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामिति (१।४।५१,वा) वचनात्। नित्यशब्द इत्यादि। अनेन ध्रुव उपसंख्यानमिति (४।२।१०४ वा) नें नित्यशब्दो व्युत्पाद्यतेऽवन्तः। ततश्च त्यपः पित्त्वेनानुदात्तत्वान्नेश्चोदात्तत्वादाद्युदात्तो भवति। सततमिति। यदा कर्मणि क्त स्तदा थाथादिस्वरेणान्तोदात्त इति (६।२।१४४)। अयुक्तोऽयं पाठः। यदा हि कर्मणि क्त स्तदा गतिरनन्तर इति (६।२।४९) गतेः प्रकृतिभावे सत्याद्युदात्तेन सततशब्देन भवितव्यम्। तस्मात् सततमिति यदा भावे क्त स्तदा थाथादिस्वरेणान्तोदात्त (६।२।१४४) इत्ययं तत्रानवद्यः पाठो वेदितव्यः। तथाहि, सततशब्दोऽपि थाथादिस्वरेणान्तोदात्तः (६।२।१४४)। भावे ह्ययं निष्ठेति गतिस्वरो न भवतीत्युक्तम्। यदा तु कर्मणि क्त स्तदा तु गतिस्वरेण सततशब्द आद्युदात्त एव भवति। समो वा हिततत्तयोरिति समो मकारलोपः। मुहूर्त्तप्रहसित इति। अत्र थाथादिस्वरएव भवति। प्रहसित इति हसेरकर्मकत्वात् कर्त्तरि क्तः। समासस्वरे द्वितीयापूर्वपदप्रकृतिस्वरेण बाधिते सति थाथादिस्वरः प्राप्नोति। अतस्तदपवादो योगः।

## ६२। ग्रामः शिल्पिनि।

सप्तमीनिर्द्दिष्टग्रहणमनुवर्त्तते। तेन शिल्पिनीत्यर्थग्रहणम्। ग्राम इति स्वरूपग्रहणमेव। ग्रामनापित इति। षष्ठीसमासः। समासस्वरापवादो योगः। एवमुत्तरोऽपि।

## ६३। राजा च प्रशंसायाम्।

कर्मधारय इत्यादि। राजनापित इति। कर्मधारयोऽयं वा स्यात् षष्ठीतत्-

पुरुषो वा ? तत्र यदा कर्मधारयस्तदा राजशब्दस्य नापित उपचारेण वृत्तिः। उपचारस्तु राजगुणारोपनिबन्धनः। अतस्तेनैवोत्तरपदस्य प्रशंसा भवति। कथं पुनर्नापितः षष्ठीसमासेन राजनापितशब्देनोच्यत इत्याह राजयोग्यतया तस्येत्यादि। स हि स्वकर्मणि प्रवीणत्वाद् राजानं प्रति योग्यो भवति। अतोऽपि राजनापित इति षष्ठीसमासेनोच्यते। अत्र पक्षे तस्यैव योग्यतयोत्तरपदस्य प्रशंसा वेदितव्या।

६४। आदिरुदात्तः।

आदिरित्यादिनाद्यधिकारस्यावधिं दर्शयति। उदात्त इत्यादिनाप्युदात्ताधिकारस्य।

६५। सप्तमीहारिणौ धर्म्येऽहरणे।

हारीत्यावश्यके णिनिः। सप्तमीत्यनेन साहचर्याद् हारीति स्वरूपग्रहणं न भवति। अतएवाह हारिवाचिपूर्वपदमिति। धर्म्य इत्यत्रापि स्वरूपग्रहणं न भवति। अहरण इति प्रतिषेधाद्। अतएवाह धर्मवाचिनीति। आचारनियतमिति। आचारे नियतमिति। ततोऽन्यत्राभावात्। आचारे नियतमाचारेण वा नियतमाचारनियतम्। यदाचारवशादवश्यकर्त्तव्यं तदाचारनियतं भवति। कथं पुनराचारनियतं धर्म्यमुच्यत इत्याह धर्मो ह्यनुवृत्त इत्यादि। अनुवृत्त इति। व्यवस्थित इत्यर्थः। तस्मादिति। धर्मादनपेतमिति। अनुगतमित्यर्थः। तेनेति। धर्मेण। प्राप्तमिति। लभ्यमित्यर्थः। उभयथाप्यर्थे नौ वयोधर्मेत्यादिना ( ४।४।९१ ) यत्। इतिकरणो हिशब्दस्य हेतौ। यस्मादाचारविशेषो धर्म उच्यते यच्च तस्माद्धर्मादनपेतं यद्वा तेन प्राप्यं तद्धर्म्यम्। तेनाचारनियतं धर्म्यमित्युच्यते। संज्ञायामिति ( २।१।४४ ) सप्तमीसमास इति। यद्येवं विभक्तेर्लुक् प्राप्नोतीत्यत आह कारनाम्नि चेत्यादि। याज्ञिकाश्व इत्यादौ तु षष्ठीसमासः। क्वचिदित्यादिना स्तूपेशाण इत्याद्युदाहरणेषु शाणादेर्देयस्याचारनियततां दर्शयन्नुत्तरपदस्य धर्म्यवाचित्वं दर्शयति याज्ञिकादीनामश्वादीति। क्वचिदयमाचारे व्यवस्थित इत्यनेन दातव्यमित्यनेन च सम्बन्धः। याज्ञिकादयो हि

हारिणः। ते देयमश्वादिकं स्वीकुर्वन्ति। स्तम्बेरम इति। स्तम्बकर्णयो रमिजपोरित्यच् (३।२।१३)। उपपदसमासः। तत्पुरुषे कृति बहुलमिति (६।३।१४) विभक्तेरलुग् भवति। अत्र स्तम्बेरम इत्यत्र स्तम्ब इत्येतत् सप्तम्यन्तम्। नतु रमशब्दो धर्म्यवाची। कर्मकरवर्द्धितक इति। अत्र कर्मकरो हारी भवति। स हि वर्द्धितकं (D) स्वीकरोति। नतु वर्द्धितकशब्दो धर्म्यवाची। नहि क्वचिदयमाचारो व्यवस्थितः कर्मकराय वर्द्धितको दातव्य इति। वड़वाया अयं वाड़व इति। तस्येदमित्यण् (४।३।१२०)। वीज-निषेकादिति। गर्भाधानं वीजनिषेकः। अत्र वाड़वोऽश्वो हारी। स हि हरणं देयं स्वीकरोति। हरणं देयं धर्म्यम्। क्वचिदयमाचारो व्यवस्थितो येनाश्वेन वड़वायां गर्भ-आधीयते तस्य वीजनिषेकादुत्तरकालं शरीरपुष्टयर्थं योग्याशनादिकं दातव्यमिति। तेन हरणशब्दो धर्म्यवाची भवति। तथाप्य-हरण इति प्रतिषेधाद् न भवति। ततश्च कृत्स्वरे प्राप्तेऽनो भावकर्मवचन (६।२।१५०) इत्युत्तरपदं ल्युडन्तमन्तोदात्तं भवति। ननु च परत्वादेवायं स्वरो भविष्यति। तत् किमहरण इति प्रतिषेधेनेनेत्यत आह परोऽपीत्यादि। तेनेत्यादिना ज्ञापनस्य प्रयोजनं दर्शयति। वाड़वहार्य्यमिति। ऋहलो-र्ण्यदिति (३।१।१२४) हरतेर्ण्यद् हार्य्यम्। तत् पुनस्तदेव ग्रहणम्। वाड़वस्य हार्य्यं वाड़वहार्य्यम्। तत्र यदि ज्ञापनार्थमनन्तरोक्तस्यार्थस्य हरणप्रतिषेधो न क्रियेत तदा परत्वाद् गतिकारकोपपदात् कृदिति (६।२।१३९) कृत्स्वरेणो-त्तरपदस्यान्तस्वरितत्वं स्यात्। अस्मिंस्तु सत्ययमेव हारिस्वरो भवति। स्तूपेशाण इत्यादौ यत्र सप्तम्यन्तं पूर्वपदं तत्र समासस्येत्यस्यापवादे (६।१।२२३) तत्पुरुषे तुल्यार्थ इत्यादिना (६।२।२) पूर्वपदप्रकृतिस्वरे प्राप्ते पूर्ववदाद्युदात्त-मिदमुच्यते। पूर्वपदानि च प्रायेणान्तोदात्तानि। तथाहि स्तूप समुच्छ्राय इत्यस्य चौरादिकस्य पचाद्यचि स्तूपशब्दो व्युत्पाद्यते। तेनासावन्तोदात्तः। सप्तम्या सहैकदेशे विकृतेऽन्तोदात्त एव भवति। एकादेश उदात्तेनोदात्त (८।२।५) इति। मकि मण्डन इत्येतस्मादुणादयो बहुलमित्युणादित्वम्

(D) वर्द्धितक ओदनपिण्डविशेषः। स हि मूले स्थूलोऽग्रे सूक्ष्मइत्याहुः। According to some, it is a sort of what is commonly called पेड़ा।

( ३।३।१ ) नलोपश्च। तेन मकुटशब्द आद्युदात्तः। हल विलेखन इत्येतस्मात् खनो घ चेति ( ३।३।१२५ ) चित्करणेनान्यतोऽपि घो भवतीति ज्ञापितत्वाद् घप्रत्ययः। तेन हलशब्दोऽन्तोदात्तः। दृ विदारण इत्यस्माच्च शृदृभसोऽदिरिति ( उण्, १।१२७ ) दृणातेः षुग् ह्रस्वश्चेति ( उण्, १।१२८ ) दृषच्छब्दो व्युत्पाद्यते। तेन सोऽप्यन्तोदात्तः। याज्ञिकाश्व इत्यादयः षष्ठीसमासाः। तत्र समासस्वरे प्राप्ते हारिवाचिनः पूर्वपदस्याद्युदात्तत्वं यथा स्यादित्येव-मर्थमिदम्। अत्र च पूर्वपदानामुत्तरपदानाञ्चासमासावस्थायां यः स्वरः स नाख्यायते। समासे कृते तस्य प्रयोगसमवायित्वात्। नापि समासे कृते तस्य प्राप्तिरस्ति। स प्रकृतिभावेन तस्मिन् प्राप्ते सतीदमारभ्यत इत्यस्यार्थस्य प्रदर्शनार्थमाख्यायते। अतएव च पूर्वत्रापि नाख्यातः।

## ६६। युक्ते च।

युक्तः समाहितः कार्य्ये तत्पर इत्युच्यते। गोवल्लव इति। अधिकारनाम। सोऽस्यास्तीति वप्रकरणेऽन्येभ्योऽपि दृश्यत इति ( ५।२।१०९, वा ) वप्रत्ययः। गवां वल्लव इति षष्ठीसमासः। अत्रापि समासस्वरएव प्राप्ते पूर्वपदाद्युदात्तत्वं विधीयते। गोमणिन्द इति। मणिं ददातीत्यातोऽनुपसर्गे कः ( ३।२।३ )। तत्पुरुषे कृति बहुलमिति ( ६।३।१४ ) विभक्तेरलुक्। ततो गवां मणिन्द इति षष्ठीसमासः। अत्रापि समासस्वरएव प्राप्तेऽयं विधिः। गोसंख्य इति। गां सञ्चष्ट इति समि ख्य इति ( ३।२।७ ) कः। उपपदसमासः। गतिकारकोपपदादिति ( ६।२।१३९ ) कृत्स्वरे प्राप्ते पूर्वपदस्योदात्तार्थ-मिहापि वचनम्। ननु च परत्वात् थाथादिस्वरः ( ६।२।१४४ ) प्राप्नोति। तस्माद् गोवल्लवादौ कथमिदं वचनमिति? युक्तस्वरं कृत्स्वरएव बाधेत। एवं तर्हि पूर्वविप्रतिषेधो वक्तव्यः। परशब्दस्येष्टवाचित्वात्। गोवल्लव इत्येवमादयः समासाः सर्वे युक्तवाचिन इति दर्शयन्नाह युक्त इति समाहित इत्यादि। अनेन युज समाधावित्यस्य निष्ठायां युक्त इत्येतद् दर्शयति।

## ६७। विभाषाध्यक्षे।

अध्यक्षशब्दोऽपि समासे युक्तवाच्येव। तत्र पूर्वेण नित्यमाद्युदात्तत्वे

प्राप्ते विभाषेयमारभ्यते। आद्युदात्तत्वेन मुक्ते समासान्तोदात्तत्वमेव भवति। गवामध्यश्च इति षष्ठीसमासः।

## ६८। पापञ्च शिल्पिनि।

पापमिति स्वरूपग्रहणम्। शिल्पिनीत्यत्रार्थग्रहणम्। अर्थग्रहणं किमर्थम् ? ग्रामशिल्पिनीत्यत्र शिल्पिग्रहणादर्थग्रहणं प्रसिद्धम्। अत इहाप्यर्थग्रहणं विज्ञायते। नित्यं समासस्वरे प्राप्ते विकल्पेन पूर्वपदस्याद्युदात्तत्वं विधीयते। तेन मुक्ते समासस्वरएव भवति। अथेह कस्मान्न भवति पापस्य नापित इत्यत आह पापशब्दोऽस्योक्तः। तस्मात् षष्ठीसमासे न भवति। प्रतिपदोक्ते हि समासे सति लक्षणप्रतिपदोक्तपरिभाषया (प, ११४) तस्यैव ग्रहणं भविष्यति। नान्यस्य।

## ६९। गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे।

गोत्राधिकारादन्यत्र गोत्रग्रहणे लौकिकं गोत्रं गृह्यत इत्युक्तम्। लोके चापत्यमात्रे प्रसिद्धम्। तेनेह तस्य ग्रहणम्। नतु पारिभाषिकस्यैव। अन्तेवासी शिष्यः। तत्रान्तेवासिग्रहणादर्थग्रहणं प्रसिद्धम्। अत इहाप्यर्थ एव गृह्यते। न स्वरूपम्। माणवब्राह्मणयोः स्वरूपमेव। मनोरयं माणवः। अस्मादेव निपातनाण्णत्वम्। अबाधकान्यपि निपातनानि भवन्तीति पक्षे मानव इत्यपि भवन्ति। ब्रह्मणोऽयं ब्राह्मणः। यस्त्वपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृत इति (४।१।१६१, वा) माणवकशब्दो व्युत्पाद्यते यश्च ब्रह्मणोऽपत्यं ब्राह्मण इत्यर्थे ब्राह्मणशब्दस्तयोर्गोत्रग्रहणेनैव सिद्धम्। क्षेपो निन्दा। जङ्घावात्स्य इति। सुप्सुपेति समासः। कथं पुनरत्र क्षेप इत्याह यो जङ्घादानमित्यादि। जङ्घादानं किमप्याचारनियतं देयमुच्यते। तद् ददाम्यहमित्यतोऽभिप्रायेण वात्स्यः सम्पद्यते। वात्स्योऽहमित्यभ्युपगच्छति यःस जङ्घावात्स्य इतीत्थं निन्द्यते (E)। अवात्स्यस्यापि सतो जङ्घादानं प्रति वात्स्यत्वाभ्युपगमात्। वात्स्यशब्दोऽयं गर्गादिः। भार्यासौश्रुत इति।

---

(E) श्राद्धादौ यत्र वात्स्यानामेव पादप्रक्षालनादिकं क्रियते तत्र यद्यवात्स्यः सन् वात्स्योऽहमिति ब्रुवाण लाभाय यतते स एवं क्षिप्यते।

सुश्रुतोऽपत्यं सौश्रुत इत्यण्। भार्य्याप्रधानं सौश्रुतो भार्य्यासौश्रुतः। समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यान (२।१।६९, वा) मुत्तरपदलोपश्चेति समासः। सुश्रुतस्य भार्य्याप्रधानतयेत्यनेन समानाधिकरणेनात्र समास इति दर्शयति। सुश्रुतोऽपत्यमित्यनेनापि सौश्रुतस्याण्प्रत्ययान्तत्वम्। वशाब्राह्मकृतेय इति। तेनैवोपसंख्यानेन समासः। अत्रापि वशाप्रधानतया ब्रह्मकृतापत्यस्य च्चेपः (F)। कुमारीदाक्षा इति सुप्सुपेति समासः। एवं कम्बलचारायणीया इत्यत्रापि। दक्षिणा प्रोक्तं दाक्षं शास्त्रम्। इञश्चेत्यण् (४।२।११२)। दाक्षमधीयते तद्वेत्तीति वा पुनरण्। तस्य प्रोक्ताल्लुगिति (४।२।६४) लुक्। चरशब्दो नड़ादिः। चरस्यापत्यं चारायणः। तेन प्रोक्तं चारायणीयम्। वृद्धाच्छः (४।२।११४)। तदधीत इति (४।२।५९) पूर्ववदण्। पाणिनिना प्रोक्तं पाणिनीयम्। ततः पूर्ववदध्येतर्य्यण्। तस्य च लुक्। कुमार्य्यादिलाभकामा इति। आदिशब्देन कम्बलौदनादीनां ग्रहणम्। अत्रापि सुप्सुपेति समासः। तेनैवोपसंख्यानेन वा कुमारीलाभकामा दाक्षाः कुमारीदाक्षाः (G)। भिक्षामाणव इति। पूर्ववत् समासः। भिक्षालाभकामो माणवो भिक्षामाणवः। दासीब्राह्मण इति। दास्याः कामयिता ब्राह्मणो दासीब्राह्मणः। एवं वृषलीब्राह्मणः। भयब्राह्मण इति (H)। कर्त्तृकरणे कृता बहुलमिति (२।१।३२) बहुलवचनादकृतापि समासः। तृतीयेति (२।१।६०) योगविभागाद्वा। दासीश्रोत्रिय इति। दासीब्राह्मण इत्यनेन तुल्यम्। समासस्वरापवादो योगः।

## ७०। अङ्गानि मैरेये।

अङ्गशब्दोऽयं कारणवाची। आरम्भकं यत् तदङ्गमुच्यते। अङ्गानीति बहुवचनं स्वरूपविधिनिरासार्थम्। सुरावर्ज्यं मद्यं मैरेयमित्यभिधीयते।

(F) वशा वन्ध्या भार्य्येत्यर्थः।

(G) दक्षादिप्रोक्ते ग्रन्थे श्रद्धायामसत्यामपि ये कुमार्य्यादिलाभकामास्तत्र प्रवर्त्तन्ते त एवं क्षिप्यन्ते।

(H) यो ब्राह्मणः सन् समाजच्युतिराजदण्डादिभयेनैव ब्राह्मणाचारमनुतिष्ठति नतु श्रद्धया स एवं निन्द्यते।

गुडमैरेयो मधुमैरेय इति। षष्ठीसमासः। गुड़विकारस्य मैरेयस्य गुडो-ऽङ्गमिति। तत्कारणत्वात्। अयमपि समासस्वरापवादो योगः।

## ७१। भक्ताख्यास्तदर्थेषु।

आख्याग्रहणं स्वरूपविधिनिरासार्थम्। ननु च बहुवचनादेव स्वरूपविधिर्न भविष्यति। नैतदस्ति। बहुवचनं ह्येतदर्थस्यैव बहुत्वमाचक्षीत बह्वर्थवृत्तिर्यो भक्तशब्द इति। अपिच बहुवचनेन स्वरूपविधौ बाधितेऽन्नादय एव ये भक्तशब्देन समासार्थपर्य्यायास्ते गृह्येरन्। नतु भक्तविशेषवाचिनो भिक्षादयः। आख्याग्रहणे तु स्वरूपविधौ बाधिते बहुवचनेन तद्विशेषाणां ग्रहणं सम्पद्यते। तस्मा इदं तदर्थम्। तच्छब्देन भक्ताख्यानामर्थो निर्दिश्यते। भिक्षाकंस इत्येवमादयश्चतुर्थी तदर्थार्थ इति (२।१।३६) चतुर्थीसमासाः। ननु च प्रकृतिविकृतिग्रहणं तत्र चोद्यते। नचेह प्रकृतिविकारभावः। सत्यमेतत्। इदमेव तु वचनं ज्ञापकं भक्ताख्यायां तादर्थ्यमात्रे चतुर्थी समस्यत इति। समशनं समाश इति। अश भोजन इत्यस्मात् संपूर्वाद् भावे घञ्। क्रियामात्रमुच्यत इति। मात्रशब्देन भक्तव्यवच्छेदं करोति। अत्र पूर्वपदमन्तोदात्तमिति। भिक्षाशब्दो गुरोश्च हल (३।३।१०३) इति भिक्षेरप्रत्ययं कृत्वा व्युत्पाद्यते। श्राणाशब्दोपि श्रै पाक इत्यस्मात् क्तप्रत्ययम्। तेन द्वावपि प्रत्ययस्वरेणान्तोदात्तौ। बहुव्रीहौ प्रकृत्येति (६।२।१) प्रकृतिभावे नान्तोदात्तावेव भवतः। समासस्वरापवादो योगः।

## ७२। गोविडालसिंहसैन्धवेषूपमाने।

उपमानशब्दोऽयं गवादिभिः प्रत्येकमभिसम्बध्यते। अन्यथैकवचनान्तस्य बहुवचनान्तैः समानाधिकरणेन विशेष्यविशेषणभावं न स्यात्। अथवा सुब्व्यत्यये बहुवचनस्यैव स्थान इदमेकवचनं द्रष्टव्यम्। धान्यगव इति। गोरतद्धितलुकीति (५।४।९२) टच् समासान्तः। अत्र चित्स्वरे प्राप्ते पूर्वपदस्याद्युदात्तत्वं विधीयते। भिक्षाविडाल इत्येवमादौ समासस्वरे। उपमानार्थोऽपीत्यादि। योऽयमत्रोदाहरन उपमानार्थः सम्भवति स तत्र योजयितव्यः। यथाप्रसिद्धि चेति। यस्योपमानस्यार्थस्य च यथा लोके

प्रसिद्धिः स तथा योजयितव्यः। तत्र दिङ्मात्रमुपमानार्थयोजनस्य दर्शयितुमाह गवाकृति गौसंस्थानम्। तया सन्निवेशितं गोर्यत्संस्थानं तेन सन्निवेशितं व्यवस्थापितं धान्यगवशब्देनोच्यते। तुल्याकृतित्वात्। एवमन्यत्रापि यत् किञ्चित् सादृश्यं योज्यम्। यथा गोरचनाविशेषावयवानामेवं यस्य हिरण्यस्य तद्धिरण्यं हिरण्यगवशब्देनोच्यते। यथा विड़ाला अल्पप्रमाणा स्तथाहि भिक्षा। यथा वा विड़ालाः क्वचिद् भवन्ति न सर्वत्र तथा भिक्षापि। एवं श्राणविड़ालयोः सादृश्यमेवंजातीयकं योजयितव्यम्। सिंहाकृत्या सन्निविष्टं तृणं तृणसिंहः। यथा वा सैन्धवं शुक्लमेवं सक्तुः सक्तुसैन्धवः। एवं पानसैन्धवः।

## ७३। अके जीविकार्थे।

अक इति प्रत्ययग्रहणम्। तत्र प्रत्ययग्रहणपरिभाषया ( प, २४ ) तदन्तस्य ग्रहणं विज्ञायत इत्याह अकप्रत्ययान्त उत्तरपद इति। जीविकावाचिनीति। जीविका जीवकः। तद्वाचिनीत्यर्थः। जीविकाशब्दो ह्यर्श आदे राकृतिगणत्वान् ( ५।२।१२७ ) मत्वर्थीयाकारान्तः सूत्र उपात्तः। अतएव वृत्तौ दन्तलेखनादिभिर्येषां जीविका त एवमुच्यन्त इत्याह। दन्तलेखक इति। लिखेर्ण्वुल्। षष्ठीसमासः। षष्ठी पुनः कर्त्तृकर्मणोः कृतीति ( २।२।६५ ) कर्मणि। अवस्करशोधक इति। शुध शौचकर्मणीत्यस्माण्ण्यन्तात्ण्वुल्। रमणीयकारक इत्यत्रापि करोतेः। रमणीयकर्त्तेति। पूर्ववत् समासः। अत्र गतिकारकोपपदात् कृदिति (६।२।१३९) प्रकृतिभावेनोत्तरपदमन्तोदात्तम्। इक्षुभक्षिकामित्यादि। पर्य्यायार्हर्णोत्पत्तिषु ण्वुजिति (३।३।१११) भक्षयतेर्ण्वुच्। अत्र षष्ठीति (२।२।८) समासलक्षणेनैव समासः। अत्रापि पूर्ववदुत्तरपदमन्तोदात्तम्। कृत्स्वरापवादो योगः। एवमुत्तरत्रापि योगाः। युक्तारोह्यादयश्चेत्यतः (६।२।८१) प्राक् कृत्स्वरापवादो वेदितव्यः।

## ७४। प्राचां क्रीड़ायाम्।

प्राग्देशवर्त्तिनां क्रीड़ेति। एतेन प्राग्ग्रहणमिह न विभाषार्थं किन्तु क्रियाविशेषणमिति दर्शयति। उद्दालकपुष्पभञ्जिकेत्यादि। उद्दालकपुष्पादिषु

कृद्‌योगे कर्मणि षष्ठी । जीवपुत्रप्रचायिकेति । अत्रापि प्रपूर्वाच्चिनोतेः संज्ञायां ण्वुल् । पूर्ववत् समासः । लित्स्वरेणोत्तरपदं मध्योदात्तम् । तव पुष्पप्रचायिकेति । षष्ठीत्यनेनैवात्र ( २।२।८ ) समासः । चित्स्वरेणोत्तरपदं मध्योदात्तम् ।

## ७५ । अणि नियुक्ते ।

छत्रधार इति । कर्मण्यण् (३।२।१) । किमर्थं पुनरिदम् ? यावता युक्तोऽभिमतः । तद्वाची न भवति । नियुक्तोऽधिकृत इत्यादि । युक्ते चेत्यनेन (६।२।६६) हि यः कर्त्तव्ये युक्तः समाहित स्तस्य पूर्वपदस्याद्युदात्तत्वम् । तेनाधिकृतवाचिनि न सिध्यति । तस्मादधिकृतच्छत्रादिषु यः सहनियुक्तोऽभिप्रेतः स च कस्मिंश्चिच्छत्रधारणे तत्परो न भवति । तेनच्छत्रधार इत्यादि समासो यादृशो युक्ते चेत्यत्र ( ६।२।६६ ) युक्तोऽभिमत स्तद्वाची न भवति । नियुक्तोऽधिकृत इत्यनेन युजिर् योग इत्यस्य निष्ठायां नियुक्त इत्येतद्रूपमिति दर्शयति । काण्डलाव इति । अत्र काण्डलवनक्रियां प्रति कर्त्तृत्वमात्रं गम्यते । नाधिकृतत्वम् । तेनैष स्वरो न भवति ।

## ७६ । शिल्पिनि चाकृञः ।

अनियुक्तार्थं वचनम् । अकृञ इति शिल्पिविशेषे प्रतिषेधं वक्ष्यामीत्येवमर्थञ्च । तन्तुवाय इति । वेञ् तन्तुसन्तान इति । तन्तून् वयतीति ह्वावामश्चेत्यण् ( ३।२।२ ) । आतो युक् चिण्कृतोरिति युक् ( ७।३।३३ ) । अयस्कार इति । अतः कृकमीत्यादिना ( ८।३।४६ ) विसर्जनीयस्य सकारः । प्रत्युदाहरणेषु कृत्स्वर एव भवति ।

## ७७ । संज्ञायाञ्च ।

## ७८ । गोतन्तियवं पाले । (I)

गोपाल इति । पा रक्षणे । पूर्ववदण् । अनियुक्तार्थ आरम्भ इति । नियुक्तेऽणि नियुक्त ( ६।२।७५ ) इत्यनेनैव सिद्धत्वात् । गोरक्ष इति । रक्ष पालने ।

(I) तन्तिर्वत्सानां बन्धनरज्जुरित्यर्थः ।

७९ । णिनि ।

पुष्पहारीति । पुष्पाणि हरतीति हरतेर्व्रते (३।२।८०) बहुलमाभीक्ष्ण्ये इति वा ( ३।२।८१ ) णिनिः । (J)

८० । उपमानं शब्दार्थप्रकृतावेव ।

शब्दार्थप्रकृताविति । शब्दार्थः प्रकृति र्यस्मिन्निति बहुव्रीहिः । उपमानं नियम्यत इति । यत एवकार स्ततोऽन्यत्रावधारणं भवति । इह च शब्दार्थ-प्रकृतेरेवकारः । तस्मादुपमाननियमो भवति । अतस्तन्नियम्यते । उष्ट्र-क्रोशीति । क्रुश आह्वान इत्यस्मात् कर्त्तर्युपमान ( ३।२।७९ ) इति णिनिः । णिनिनैव सादृश्यस्योक्तत्वाद् वृत्ताविवशब्दो न प्रयुज्यते । ध्वाङ्क्षरावीति । रु शब्दे । पूर्वलक्षणाण्णिनिः । खरनादीति । णद अव्यक्ते शब्दे । उपमान ग्रहणमित्यादि । यद्युपमानग्रहणं न क्रियेत तदा पूर्वस्य योगस्यास्य च विषय-विभागो न ज्ञायेत । यदि योगविभागकरणसामर्थ्याद् विषयान्तरमस्य कल्प्येत तथापीष्टो विषयविभागो न ज्ञायेत । उपमानग्रहणे तु सति पूर्वस्य सामान्यं विषयः । अस्य तु विशेष उपमानमिति विषयविभागो निश्चीयते । तेन विषयविभागार्थमुपमानग्रहणम् । वृकवञ्चीति । वञ्चु प्रलम्भने । वृक-प्रेक्षीति । ईक्ष दर्शने प्रपूर्वः । अत्र कृत्स्वर एव भवति । प्रकृतिस्वर एवेत्यादि । यदि प्रकृतिग्रहणं न क्रियेत तदा शब्दार्थात् परो यो णिनि स्तदन्त उत्तरपद इत्येवं विज्ञायेत । ततश्च गर्दभोच्चारी कोकिलाभिव्याहारीत्यस्यापि स्यात् । भवति ह्यत्रापि धातूपसर्गसमुदायाच्छब्दार्थात् परो णिनिः । अतस्तदन्त-मुत्तरपदम् । तस्मादिह मा भूदिति प्रकृतिग्रहणं क्रियते । तेनेह न भवति । प्रकृतिग्रहणे सति यत्रोपसर्गनिरपेक्षा प्रकृतिरेव केवलः शब्दार्थस्तत्र भवि-तव्यम् । यश्चात्र धातुरुपसर्गात् परो नासौ शब्दार्थः । चरतेरुपसर्ग-निरपेक्षस्य गत्यर्थत्वात् । हरतेश्च हरणार्थत्वात् । यद्वा योऽत्र शब्दार्थो धातूपसर्गसमुदायो न तस्माण्णिने र्विधानम् । यदि पूर्वेणैव सिद्धे नियमार्थं

---

(J) पुष्पहारीत्युदाहरणं मुद्रितकाशिकायां परस्मिन् सूत्रे दत्तम् । एतच्च मुद्राकरप्रमादादेवेति प्रतिभाति ।

वचनमेवं सति सिद्धे विधिरारभ्यमाणो नियमाय भवतीत्यनर्थकमेवकारकरण-मित्याह एवकारकरणमित्यादि । असति ह्येवकार उपमानएव शब्दार्थ-प्रकृतावित्येवमवधारणं स्यात् । ततश्च शब्दार्थप्रकृतिरेव नियम्येत शब्दार्थ-प्रकृतौ यदि भवत्युपमानएव भवति । नानुपमान इति । ततश्चानुपमाने न स्यात् । तस्मादुपमानावधारणं यथा स्यादित्येवमर्थमेवकारः क्रियते । किं कारणमित्याह शब्दार्थप्रकृतौ त्वित्यादि । तुशब्दो हेतौ । तस्मात् शब्दार्थ-प्रकृतावुपमानमनुपमानञ्चाद्युदात्तं भवति । तस्मादुपमानावधारणार्थमेव-कारकरणम् । उपमाननियमे हि सति शब्दार्थप्रकृतेरनियतत्वात् तत्राविशेषेण सर्वस्याद्युदात्तत्वं लभ्यते । सिंहविनर्दीति । उपमानस्योदाहरणम् । पुष्कलजल्पीति । अनुपमानस्य । पुष्कलजल्पीत्यत्र व्रते ( ३।२।८० ) बहुल-माभीक्ष्ण्ये इति ( ३।२।८१ ) वा णिनिः ।

## ८१ । युक्तारोह्यादयश्च ।

युक्तारोहीत्यादिषु यत्र कृदन्तमुत्तरपदं तत्र कृत्स्वरापवादो योगः । अन्येषु तु समासस्वरापवादः । युक्तारोहीतिप्रभृतिष्वागतप्रहारीत्येवंपर्यन्तेषु रुह जन्मनि युध संप्रहारे वञ्चु प्रलम्भने टुणदि समृद्धौ हृञ् हरणे प्रपूर्व इतेभ्यो धातुभ्यो यथायोगं युक्तागतपूर्वेभ्यः सुप्यजातौ णिनिस्ताच्छील्य इति (३।२।७८) णिनिः । यद्येते णिन्यन्तास्तत् किमर्थमिह पठ्यन्ते ? यावता णिनीत्यनेनैव ( ६।२।७९ ) सिद्धमित्यत आह णिनीत्यस्यैवोदाहरणार्थं ( ६।२।७९ ) पठ्यन्त इति । पूर्वोत्तरपदेत्यादिना केषाञ्चिन्मतेन तेषामिह पाठस्य प्रयोजनान्तरं दर्शयति । पूर्वोत्तरपदयोर्नियमोऽर्थो येषां ते तथोक्ताः । यत्र युक्तादीन्येव पूर्वपदान्यारोह्यादीन्येव चोत्तरपदानि तत्रैव यथा स्यादितीह मा भूत् ध्वाङ्क्षारोही वृक्षारोहीत्यत्रान्यत् पूर्वपदम् । युक्ताध्यायीत्यत्रान्यदुत्तरपदम् । इङ् अध्ययन इत्यस्माणिनिः । आगतमत्स्या इति । विशेषणसमासः । क्षीरहोतेति । क्षीरस्य होता । अस्मादेव निपातनात् षष्ठीसमासः । याजकादित्वाद्वा । हु इत्येतस्मात् तृच् । भगिनीभर्त्तेति । अयमपि पूर्ववत् षष्ठीसमासः । भृञस्तृच् । ग्रामगोधुगिति । दुहेः क्विप् ।

दादेर्धातोर्घः ( ८।२।३२ )। एकाचो बशो भषित्यादिना ( ८।२।३७ ) दकारस्य धकारः। झलाञ्जशोऽन्त इति ( ८।२।३९ ) घकारस्य गकारः। तस्य वावसान इति ( ८।२।५६ ) चर्त्वं ककारः। त्रिरात्र इति। तिस्रो रात्रयः समाहृता इति समाहारे द्विगुः। अहःसर्वैकदेशेत्यादिनाच् (५।४।८७) समासान्तः। एकशितिपादिति। पादस्य लोपोऽहस्त्यादिभ्य ( ५।४।१३८ ) इत्यकारलोपः (K)। ननु चैकशब्दोऽयमिण्भीकापाशल्यतिमर्चिभ्यः कन्निति ( उण्, ३।२२० ) कन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः। तत्रैकः शितिः पादोऽस्येति बहुव्रीहिः। तत्र कृते प्रकृतिभावेनैव ( ६।२।१ ) सिद्धमिहाद्युदात्तत्वम्। ततो नार्थ इहास्य पाठेनेत्यत आह एकः शितिः पादोऽस्येति। द्विपदे बहुव्रीहावेष दोषः स्यात्। नचायं द्विपदः। किं तर्हि ? त्रिपदः। अत्र पादशब्द उत्तरपदे परत स्तद्धितार्थोत्तरपद इति ( २।१।५१ ) पूर्वपदयोरेकशितिशब्दयोस्तत्पुरुषसंज्ञा भवति। यद्येवं ततः किमित्यत आह तस्येत्यादि। तस्येति तत्पुरुषसंज्ञकस्यैकशितिशब्दस्यान्तोदात्तत्वं प्राप्तमिति समासस्येत्यनेन ( ६।१।२२३ )। इतिकरणो हेतौ। यस्मात् तस्यान्तोदात्तत्वं प्राप्तं तस्मात् तस्याद्युदात्तत्वं विधीयते। ततो नापार्थक एकशितिपाच्छब्दस्येह पाठ इत्यभिप्रायः। कस्मात् पुनस्तस्यान्तोदात्तत्वं प्राप्नोति ? बहुव्रीहिस्वरेणैव हि परत्वादन्तोदात्तत्वं बाधित्वा युक्तं भवितुमित्याह निमित्तस्वरबलीयस्त्वादिति। निमित्तपदं द्विगोस्त्रिपदबहुव्रीहिः। तत्र हि कृते द्विगुरुत्तरपदे परतः पूर्वपदयो र्भवति। यच्च यस्मिन्त् सति भवति तत् तस्य निमित्तम्। तस्य निमित्तस्य बहुव्रीहिस्वरो निमित्तस्वरः। तस्माद् बलीयस्त्वं निमित्तस्वरबलीयस्त्वम्। पञ्चमीति ( २।१।३७ ) योगविभागात् समासः। तदेतदुक्तं भवति। तस्माद् बहुव्रीहिस्वरात् समासान्तोदात्तत्वस्य बलीयस्त्वम्। तस्मात् तत् प्राप्नोतीति। बलीयस्त्वं तु तस्य सतिशिष्टत्वात्। तद्धि बहुव्रीहेराद्युदात्तत्वे सति भवति। तस्मात् सति शिष्टस्य बलीयस्त्वमुक्तम्। वक्ष्यमाणज्ञापकाद्वा निमित्तस्वरबलीयस्त्वम्। एवमपीत्यादि।

(K) संख्यासुपूर्वस्येत्यनेनेत्येके ( ५।४।१४० )।

एवमपि त्रिपदे बहुव्रीहौ कल्प्यमानेऽपि । नार्थ एतेनेति । एकशितिपाच्छब्देनेह भवति नार्थः । कस्मादित्याह इगन्तेत्यादि । त्रिपदे हि बहुव्रीहावेकशितिशब्दयोरुत्तरपदे यः समासः संख्यापूर्वो द्विगुरिति (२।१।५२) द्विगुसंज्ञः स इगन्तश्च भवति । ततश्चेगन्ते द्विगावित्याद्युदात्तत्वं (६।२।२९) सिद्धम् । ततो नार्थ एतेन । एवं तर्हीत्यादिनैकशितिपाच्छब्दपाठस्य ज्ञापकत्वं दर्शयति । किं पुनस्तज्ज्ञापयतीत्याह एतदित्यादि । तेनेत्यादिना प्रयोजनं दर्शयति । यद्येषोऽर्थो न ज्ञाप्यते तेन द्वौ शिती पादावस्येति त्रिपदे बहुव्रीहौ कृते तत्र चोत्तरपदे परतः पूर्वपदयो र्द्विगौ सतीगन्ते द्विगाविति (६।२।२९) पूर्वपदप्रकृतिस्वरे कृते तिशब्दो द्विशितिपादित्यत्रोदात्तः स्यात् । अस्मिंस्त्वर्थे ज्ञापित इगन्ते द्विगावित्येष (६।२।२९) स्वरो न भवति । तस्मिंश्चासति समासस्वरेण तिशब्द उदात्तो भवति । निमित्तस्वरबलीयस्त्वं न स्यात् । ततश्च त्रिपदे हि बहुव्रीहौ परत्वात् समासस्वरं बाधित्वा बहुव्रीहिस्वरएव भवति । ततस्तेनैव सिद्धत्वादेकशितिपाच्छब्दस्येह पाठो न क्रियेत । कृतश्च । तस्मात् स एव ज्ञापयति निमित्तस्वरबलीयस्त्वमिति ।

## ८२ । दीर्घकाशतुषभ्राष्ट्रवटं जे ।

कृत्स्वरापवादो योगः । कुटीज इति । कुट्यां जात इति सप्तम्यां जनेर्ड इति (३।२।९७) डप्रत्ययः ।

## ८३ । अन्त्यात् पूर्वं बह्वचः ।

अयमपि कृत्स्वरापवादो योगः । दग्धजानीति । अत्र कृत्स्वरएव भवति ।

## ८४ । ग्रामेऽनिवसन्तः ।

निवसन्तशब्दोऽयमौणादिको गृह्यते । तॄविशिभ्यां झजिति वर्त्तमाने (उण्, ३।४०६) तॄभूवहिवसिभासिसाधिगतिमण्डिजिनन्दिभ्यश्चेति (उण्, ३।४०८) वसेर्निपूर्वाज् झच् । निवसतीति निवसन्तः । केचिच्छत्रन्तस्य वसच्छब्दनस्य ग्रहणं वर्णयन्ति । मल्लग्राम इति । षष्ठीसमासः । देवग्राम

इति। वाटकपरिच्छिन्ने गृहसमुदाये ग्रामशब्दो वर्त्तते। तस्मात् देवस्वामिक इत्यर्थः। एतेन स्वस्वामिभावसम्बन्धा या सात्र षष्ठी समस्यते। नतु क्रियावाससम्बन्धेति दर्शयति। अन्यथा देवशब्दःपूर्वपदं निवसन्तवाच्येव स्यादित्यभिप्रायः। दाक्ष्यादयो निवसन्ति यस्मिन्नित्यादिना प्रत्युदाहरणे पूर्वपदस्य निवसन्तवाचित्वं दर्शयति।

## ८५। घोषादिषु च।

समासस्वरापवादो योगः। एवमुत्तरेऽपि। न भूताधिकसञ्जीवेत्यादेः (६।२।९१) सूत्रात् ये योगास्ते समासस्वरापवादा द्रष्टव्याः। दाक्षिघोष इत्येवमादयः षष्ठीसमासाः। यान्यत्रेत्यादि। कथं पुनरेतल्लभ्यते ? यावताऽनिवसन्त इति प्रकृतमित्यत आह अनिवसन्त इति। अपर इत्यादि। तेषां मतेन यान्यत्र निवासनामधेयानि तेषु निवसद्वाचीन्यपुरदात्ता भवन्ति।

## ८६। छात्र्यादयः शालायाम्।

यदा शालान्त इत्यादि। विभाषा सेनासुरेत्यादिना (२।४।२५) शालान्तस्य तत्पुरुषस्य विभाषा नपुंसकत्वमुक्तम्। इह च शालाशब्दस्य स्त्रीलिङ्गस्य ग्रहणम्। तत्र यथा समासो नपुंसकलिङ्गो न भवति तथा तत्पुरुषे शालायां नपुंसक इत्यनेन (६।२।१२३) परत्वादुत्तरपदाद्युदात्तत्वेन भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्। अतस्तन्निरासाय यदा शालान्त इत्यादे ग्रन्थस्योपन्यासः। यो नपुंसकलिङ्गः शालान्ततत्पुरुषो न भवति सोऽस्यावकाशश्छात्रिशाला ऐलिशालेति। यश्च नपुंसकलिङ्गो न छात्र्यादिपूर्वपदस्तत्पुरुषः स शालायां नपुंसक इत्यस्यावकाशः (६।२।१२३) ब्राह्मणशालं क्षत्रियशालमिति। इहोभयं प्राप्नोति च्छात्रिशालमिति। पूर्वविप्रतिषेधेनायमेव स्वरो भवति।

## ८७। प्रस्थेऽवृद्धमकर्क्यादीनाम्।

प्रस्थशब्दो यदि व्युत्पाद्यते घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थमिति (३।३।५८ वा) तदा थाथादिस्वरे (६।२।१४४) प्राप्ते। अथ न व्युत्पाद्यते तदा समासान्तोदात्तत्वे। इन्द्रप्रस्थ इत्यादयः षष्ठीसमासाः।

८८ । मालादीनाञ्च ।

८९ । अमहन्नवं नगरेऽनुदीचाम् ।

सुह्मनगरमित्यादयोऽपि षष्ठीसमासाएव । किमर्थं प्राचामित्येवं नोच्येत । लघु हि प्राचामिति वचनमनुदीचामिति वचनात् । नैवं शक्यम् । मध्यदेशनगरे विराटनगरमित्यत्र न स्यात् । पूर्वपदाद्युदात्तत्वे प्राप्ते प्रतिषेधोऽयमुच्यते । न समासएव भवति ।

९० । अर्मे चावर्णं द्व्यच्त्र्यच् ।

९१ । न भूताधिकसञ्जीवमद्राश्मकज्जलम् ।

मद्राश्मग्रहणमित्यादि । उभयत्रापि द्व्यच् त्र्यजिति च प्राप्तिरस्ति । तस्मात् सङ्घातार्थं विगृहीतार्थञ्च वचनम् । कथं पुनः संघातविगृहीतार्थत्वं लभ्यते ? एकशेषं कृत्वा मद्राश्म इति निर्देशात् । मद्राश्मा च मद्राश्मानौ चेत्येकशेषः । एकशेषे सति मद्रशब्दस्य केवलस्य मद्रशब्दस्य च संघातस्य प्रतिषेध उपपद्यते । आद्युदात्तस्य प्रकरणमित्याद्युदात्तप्रकरणम् । प्रक्रान्तं तत्र दिवोदासादीनां छन्दस्याद्युदात्तो भवतीत्येतदर्थंरूपं व्याख्येयमित्यर्थः । व्याख्यानं तु शुक्ते चेत्येवमादौ (६।२।६६) येऽस्मिन् प्रकरणे चकारा स्तेषामन्यतमस्यानुक्तसमुच्चयार्थतामाश्रित्य कर्त्तव्यम् ।

९२ । अन्तः ।

९३ । सर्वं गुणकार्त्स्न्ये ।

गुणकार्त्स्न्ये इति । गुणकार्त्स्न्ये गुणस्य सर्व्वत्र भावः । सर्वश्वेत इति । पूर्वकालैकेत्यादिना (२।१।४९) समानाधिकरणसमासः । अत्र समुदायगुणस्य सर्वत्र भावः । नतु तदवयवे तत्र सर्वशब्दो वर्त्तत इति गुणकार्त्स्न्यस्य वृत्तिर्भवति । परमश्वेत इति । कथं पुनरत्र गुणकार्त्स्न्ये परमशब्दो वर्त्तते ? यावतासौ प्रकर्षवाची । अन्यश्च प्रकर्षः । अन्यच्च गुणकार्त्स्न्य मित्यत आह आश्रयव्याप्तेरित्यादि । इतिकरणो हेतौ । यस्मादाश्रयव्याप्त्या परमत्वमुत्कर्षं भवति । नान्यथा । एवं हि तस्योत्कर्ष उपपद्यते यदि

सर्व्वमाश्रयं व्याप्नोति। तस्माद् गुणकात् स्त्र इह परमशब्दो वर्त्तते। सर्वसौवर्णः सर्वराजत इति। सुवर्णस्य विकारः सौवर्णः। रजतस्य विकारो राजतः। नात्र गुणकात्स्त्रम्। किं तर्हि? जातियुक्तस्य विकारविषयं कात् स्त्रम्। सर्वं हि विकारद्रव्यं प्रकृतिभावेन व्याप्नोतीति द्रव्यकात् स्त्रमिह। तत्र च सर्वशब्दो वर्त्तते। सर्वेषां श्वेततरः सर्वश्वेत इति। अत्र गुणकात् स्त्रे। कथं पुनरत्र समासः? यावता पूरणगुणसुहितेत्यादिना (२।२।११) गुणवचनेन षष्ठीसमासः प्रतिषिद्धः। अथापि कथञ्चित् समासः स्यादेवमपि श्वेततरशब्देन समासे कृते सर्वश्वेततरमिति वक्तव्यमित्यत आह गुणात् तरेण समास इत्यादि। औपसंख्यानिकाविह समासतरलोपाविति दर्शयति। समासस्वरापवादो योगः। एवमुत्तरेऽपि योगाः। न हास्तिनफलकमार्देया इत्यतः (६।२।१०१) प्राक् समासस्वरापवादो वेदितव्यः।

## ९४। संज्ञायां गिरिनिकाययोः।

अञ्जनागिरिरित्येवमादयः षष्ठीसमासाः। अञ्जनभञ्जनशब्दयोर्वनगिर्य्योः संज्ञायामिति (६।३।११७) दीर्घत्वम्। शापिण्डिमौण्डिशब्दाविञन्तौ। चिखिल्लिशब्दो मत्वर्थीयेनिप्रत्ययान्तः।

## ९५। कुमार्य्यां वयसि।

वृद्धकुमारीति। विशेषणं विशेष्येणेति (२।१।५७) समासः। जरत्-कुमारीति। जरती चासौ कुमारी चेति पूर्वकालेत्यादिना (२।१।४९) समासः। उभयत्र पुंवत् कर्मधारयेत्यादिना (६।३।४२) पुंवद्भावः। ननु च कुमारीशब्दः प्रथमे वयसि वर्त्तते। तथाहि वयसि प्रथम इति (४।१।२०) ङीवत्र विहितः। वृद्धाजरतीशब्दो चरमे वयसि वर्त्तेते। तत्कथमिह सामानाधिकरण्यमित्यत आह कुमारीशब्दः पुंसा सहासंप्रयोगमात्रमुपप्रयुक्त इति। असंप्रयोगः असम्बन्धः। तन्मात्रप्रवृत्तिनिवृत्तिसमुदायावयवः सामान्ये प्रवृत्तः। कुमारीशब्दो यथा वृद्धादिभिर्वयोविशेषवचनैर्विशिष्यते तदा तैः समानाधिकरणो भवति। वयोविशेषोऽन्त्यं वयः। कथं पुनर्विशेषवचनं सामान्ये वर्त्तते? वयोग्रहणसामर्थ्यात्। यदि वृद्धकुमारीशब्दः प्रथमे वयसि

वर्त्तते वयोग्रहणमनर्थकं स्यात् । यत्र कुमारीशब्दः प्रयुज्यते प्रथमवयोवाची तत्र नियोगतो वयो गम्यत एवेति किं वयोग्रहणेन ? तस्माद् वयोग्रहण-सामर्थ्याद् यथोक्तेन प्रकारेण वय.सामान्ये प्रवर्त्तते । वयोग्रहणेन हि तस्माद् विशेषादपनीयासौ सामान्यवृत्तिराश्रीयते । तच्च वय इह गृह्यत इति । यत्र वर्त्तमानो विशेषवचनैः सह समानाधिकरणो भवति तच्च वयो गृह्यते । चशब्दादन्यच्च यौवनाधीनकुमारत्वमेवेति । न प्रथमवय इत्यर्थः । परम-कुमारीति । अत्र समासात् पूज्यमानता । पूज्यमानत्वं तु दर्शनीयत्वात् । दर्शनीया कन्येत्यर्थः । नह्यत्र समासो वयोऽभिधानपरः । नापुरुत्तरपदं वयःसामान्ये वर्त्तते ।

## ६६ । उदकेऽकेवले ।

मिश्रमिति । द्रव्यान्तरसंपृक्तमित्यर्थः । गुड़मिश्रमिति । शाकपार्थि-वादित्वादुत्तरपदलोपिसमासः । शीतोदकमिति । विशेषणसमासः । पूर्व-पदमत्र गुणोपसर्जनमुदकं ब्रूते । उत्तरपदमपि जात्युपसर्जनम् । तथैव तेनैकमेव वस्तु जातिगुणाभ्यामुच्यत इति केवलोदकवाचिसमासः ।

## ६७ । द्विगौ क्रतौ ।

गर्गत्रिरात्रादयः षष्ठीसमासाः । तिसृणां रात्रीणां समाहारस्त्रिरात्रः । अहःसर्वैकदेशेत्यादिनाच् ( ५।४।८७ ) समासान्तः । अतिरात्र इति । रात्रिमतिक्रान्त इति प्रादिसमासः ।

## ६८ । सभायां नपुंसके ।

गोपालसभमित्येवमादयोऽपि षष्ठीसमासाः । सभाऽराजामनुष्यपूर्वेति ( २।४।२३ ) (L) नपुंसकत्वम् । राजसभा ब्राह्मणसभेत्यत्रामनुष्यपूर्वेति प्रतिषेधान्नपुंसकता न भवति । अथेह कस्मान्न भवति रमणीया सभास्य ब्राह्मणकुलस्य रमणीयसभमित्यत आह प्रतिपदोक्तमित्यादि । लक्षणप्रतिपदोक्त-परिभाषया यत् प्रतिपदोक्तं नपुंसकं तदिह गृह्यते । नचेह तथाविधं

(L) अशाला चेति ( २।४।२४ ) नपुंसकत्वमेवेत्यन्ये ।

नपुंसकत्वम् । अत्र त्वभिधेयवल्लिङ्गवचनानि भवन्तीति ब्राह्मणकुलस्याभिधेयस्य नपुंसकत्वात् समासस्य नपुंसकत्वम् । न तत् प्रतिपदोक्तम् ।

९९ । पुरे प्राचाम् ।

ललाटपुरमित्येवमादयः षष्ठीसमासाः ।

१०० । अरिष्टगौड़पूर्वे च ।

अरिष्टपुरं गौड़पुरमित्येतावपि षष्ठीसमासावेव । पूर्वग्रहणं किमिति ? एवं मन्यते । अरिष्टगौड़ादयोरिति वक्तव्यम् । एवमप्युच्यमानेऽरिष्टगौड़ादयोः पुरशब्द उत्तरपदेऽन्तोदात्तत्वं सिध्यत्येवेति । इहापि यथा स्यादिति । यदि पूर्वग्रहणं न क्रियेत तदारिष्टं श्रितस्तस्य पुरमरिष्टश्रितपुरमिति । गौड़ानां भृत्या गौड़भृत्याः । तेषां पुरं गौड़भृत्यपुरमित्यत्र न स्यात् । अत्र पूर्वपदमरिष्टश्रितशब्दो गौड़भृत्यशब्दश्च । नत्वरिष्टगौड़शब्दौ । पूर्वग्रहणे तु सति बहुव्रीहिर्लभ्यते । अरिष्टगौड़ादी पूर्वौ यस्मिन् समासे सोऽरिष्टगौड़पूर्व इति । तेनारिष्टश्रितपुरं गौड़भृत्यपुरमित्यत्रापि यदुत्तरपदं तस्याप्यन्तोदात्तत्वं भवत्येव । अत्रापि ह्यरिष्टशब्दो गौड़शब्दश्च पूर्वः । पूर्वश्चायमवयववचनः ।

१०१ । न हास्तिनफलकमार्देयाः ।

१०२ । कुसूलकूपकुम्भशालं बिले ।

कुसूलबिलमित्येवमादयः षष्ठीसमासाः । समासस्वरापवादो योगः । एवमुत्तरेऽपि बहुव्रीहौ विश्वं संज्ञायामित्यतः ( ६।२।१०६ ) प्राग् योगाः समासस्वरापवादा वेदितव्याः ।

१०३ । दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ।

पूर्वेषुकामशमीति । दिक्संख्ये संज्ञायामिति ( २।१।५० ) समासः । एवमपरेषुकामशमीत्यत्रापि । पूर्वकृष्णमृत्तिकेति । पूर्वा चासौ कृष्णमृत्तिका चेति पूर्वापरेत्यादिना ( २।१।५८ ) समासः । एवमपरकृष्णमृत्तिकेत्येवमादावपि । अधिराममधिकृत्य कृतो ग्रन्थ आधिरामम् । अधिकृत्य कृते ग्रन्थ इत्यण् ( ४।३।८७ ) । अथ यथा चानराटे रूपग्रहणं तथा ग्रामादिष्वपि कस्मान्न भवति ? अर्थप्रधानत्वान्निर्देशस्य । शब्दप्रधाने हि निर्देशस्य

स्वरूपग्रहणं भवतीत्युक्तम् । इह चानराट एव शब्दप्रधानो निर्देशः । ग्रामादिष्वर्थप्रधान एव । अथ शब्दग्रहणं किमर्थम् ? न दिगित्येवोच्येतेत्यत आह शब्दग्रहणमित्यादि । असति हि शब्दग्रहणे पूर्वाधिराममपूर्वैयायातमित्यत्र न स्यात् । कस्मात् ? इह कालवाची पूर्वशब्दः । दिग्वाचिशब्दग्रहणे सति दिक्शब्दमात्रग्रहणं भवति । तस्मात् कालवाचिनोऽपि दिक्शब्दस्य परिग्रहो यथा स्यादित्येवमर्थं शब्दग्रहणम् ।

## १०४ । आचार्य्योपसर्जनश्चान्तेवासिनि ।

आचार्य्योपसर्जनश्चेति । सुपां सुर्भवतीति ( ७।१।३९ ) सप्तम्येकवचनस्य स्थाने प्रथमैकवचनम् । एतच्चान्तेवासिविशेषणम् । आचार्य्योपसर्जनान्तेवासिवाचिन्युत्तरपद इति । आचार्य्य उपसर्जनं प्रधानं यस्यान्तेवासिनः स तथोक्तः । आचार्य्योपसर्जनश्चान्तेवासी चाचार्य्योपसर्जनान्तेवासी । तं वक्तुं शीलं यस्योत्तरपदस्य तदाचार्य्योपसर्जनान्तेवासिवाचि । पूर्वपाणिनीया इति । पूर्व्वापरेत्यादिना ( २।१।५८ ) समासः । पाणिनेराचार्य्यस्यान्तेवासिनः पाणिनीयाः । अत्रान्तेवासिनः प्राधान्येनोच्यन्ते प्रत्ययान्तेन । आचार्य्यस्तु तद्विशेषणत्वादुपसर्जनभावेनेत्याचार्य्योपसर्जनान्तेवासिवाच्युत्तरपदं भवति । पूर्वकाशकृत्स्ना इति । कशकृत्स्नस्येमे काशकृत्स्नाः । औत्सर्गिकोऽण् । पूर्वपाणिनीयं शास्त्रमिति । पाणिनिना प्रोक्तं पाणिनीयम् । अत्राचार्य्योपसर्जनशास्त्रवाच्युत्तरपदम् । नत्वाचार्य्योपसर्जनान्तेवासिवाचि ।

## १०५ । उत्तरपदवृद्धौ सर्वञ्च ।

उत्तरपदवृद्धाविति । उत्तरपदाधिकारविहिता वृद्धिरुत्तरपदवृद्धिः । इह तु तद्वदुत्तरपदं गृह्यते । तमेवार्थं दर्शयितुमाह उत्तरपदस्येत्येवमित्यादि । कथं पुनरुत्तरपदवृद्धावित्युच्यमान एषोऽर्थः शक्यते विज्ञातुम् ? तदुच्यते । उत्तरपदं स्वर्य्यते । स्वरितेनाधिकारो लक्ष्यते । तेनोत्तरपदस्येधिकृत्य या विहिता वृद्धिस्तस्यास्तावद् ग्रहणं विज्ञायते । पूर्वपदस्येदमन्तोदात्तत्वं विधीयते । पूर्वपदञ्च सम्बन्धिशब्दत्वादुत्तरपदमुपस्थापयति । नच वृद्धिमात्र उत्तरपदमुपपद्यत इति सामर्थ्याद् वृद्धिशब्दसाहचर्य्यादुत्तरपदं वृद्धिमुप-

लक्षयति। तेनोत्तरपदाधिकारे वृद्धिमत्युत्तरपद एष स्वरो भवतीति विज्ञायते। सर्वपाञ्चालक इति। पूर्वकालैकेत्यादिना ( २।१।४९ ) समासः। पूर्वपाञ्चालक इत्यादौ पूर्वापरेत्यादिना ( २।१।५८ )। जनपदलक्षणो वुञ्-प्रत्यय इति। धन्वयोपधाद् वुञित्यनुवर्त्तमाने ( ४।२।१२१ ) जनपदतदवध्यो-श्चेत्यतो ( ६।१।१२४ ) जनपदग्रहणे चावृद्धादपि बहुवचनविषयादित्यनेन ( ४।२।१२५ ) वुञ्। सुसर्वार्द्धादित्यादि। सर्वपाञ्चालक इति। सुसर्वार्द्धा-ज्जनपदस्येत्युत्तरपदवृद्धिः ( ७।३।१२ )। पूर्वपाञ्चालक इत्यादौ तु दिशो-ऽमद्राणामिति ( ७।३।१३ )। एषा चोत्तरपदाधिकारविहिता। तत्र चोत्तर-पदस्येत्यनुवृत्तेः ( ७।३।१० )। किं पुनःकारणमुत्तरपदाधिकार उत्तरपद-ग्रहणेन लक्ष्यत इत्येवं विज्ञायत इत्याह अधिकारलक्षणादित्यादि। यद्युत्तर-पदग्रहणेनोत्तरपदाधिकारो लक्ष्येत तदा वृद्धिमात्रवत्युत्तरपदे वैतद् वुञो ह्युदात्तत्वं भवतीत्युक्तं स्यात्। तथाच सर्वभासः सर्वकारक इत्यत्रापि स्यात्। अधिकारलक्षणे तु न भवति। नह्युत्तरपदाधिकारविहिता वृद्धिः। भासृ दीप्तौ। भासत इति भासः। पचाद्यच्। करोतीति कारकः। ण्वुल्। अचो ञ्णितीति ( ७।२।११५ ) वृद्धिः। सा चोत्तरपदाधिकारविहिता न भवति।

## १०६। बहुव्रीहौ विश्वं संज्ञायाम्।

पूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं प्राप्तमिति। बहुव्रीहौ प्रकृत्येत्यादिना ( ६।२।१ )। विश्वे च ते देवा विश्वदेवा इति विशेषणसमासः। तत्पुरुषो-ऽयम्। अत्र समासान्तोदात्तत्वमेव भवति। विश्वदेव इति। अत्र पूर्वपद-प्रकृतिस्वरत्वेनाद्युदात्तत्वमेव भवति। विश्वशब्दस्य क्वन्प्रत्ययान्तस्य नित्-स्वरेणाद्युदात्तत्वम्। विश्वामित्र इति। बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदान्तोदात्तस्यावकाशो विश्वदेवो विश्वयशा इति। संज्ञायां मित्राजिनयो-( ६।२ १६५ ) रित्युत्तरपदान्तोदात्तत्वस्यावकाशः कुलमित्रं कुलाजिनमिति। विश्वामित्रो विश्वाजिन इत्यत्रोभयं प्राप्नोति। संज्ञायां मित्राजिनयो-रित्येतत्तु भवति ( ६।२।१६५ )। विप्रतिषेधेन।

## १०७। उदराश्वेषुषु ।

वृकस्येवोदरमस्य वृकोदरः । दाम उदरे यस्येति दामोदरः । हरिरश्वो यस्येति हर्यश्वः । यौवनमेवाश्वो यस्य स यौवनाश्वः । शोभनो वर्णो येषां ते सुवर्णाः । सुवर्णाः पुङ्खा येषामिषूणां ते सुवर्णपुङ्खाः । सुवर्णपुङ्खा इषवो यस्य स सुवर्णपुङ्खेषुः । महान्त इषवो यस्य स महेषुः । आन्महत इत्यात्त्वम् ( ६।३।४६ ) । अत्र पूर्वपदानां बहुव्रीहौ प्रकृत्येति ( ६।२।१ ) प्रकृतिभावः । यत्र स्वरे प्राप्तेऽयं विधिरारब्धः स आख्यायते । सृदाधारार्चिकलिभ्यः कइत्यतः ( उण्, ३।३२० ) कइत्यनुवर्त्तमानेऽजिवरीभ्यो निच्चे-( उण्, ३।३१८ ) त्यतो निद्ग्रहणे सृवृभूशुषिमुषिभ्यः कगिति ( उण्, ३।३२१ ) कक्प्रत्ययान्तो वृकशब्दो व्युत्पाद्यते । तेनायमाद्युदात्तः । एवं दामञ्शब्दोऽपि । मनिन्प्रत्ययान्तत्वात् । हृञित्येतस्मात् सर्वधातुभ्य इन्निति ( उण्, ४।५५६ ) हरिशब्द आद्युदात्तः ।

## १०८। क्षेपे ।

कुण्डोदर इति । शकिशम्योर्नित्दिति ( उण्, १।१०९ ) वर्त्तमाने क्रादिभ्यः किदित्यतः ( उण्, १।११२ ) किद्ग्रहणे च कुड़ि दाह इत्येतस्माञ् ञमन्ताड्ड इति (उण्, १।१११) डप्रत्यये कुण्डमाद्युदात्तम् । घटोदर इति । घटशब्दोऽयं घट चेष्टायामित्यस्य पचाद्यचि व्युत्पादितत्वादन्तोदात्तः । तस्मात् पूर्वपदप्रकृतिस्वरेणैव सिद्धे सति तस्यान्यार्थं आरम्भोऽपवादत्वाद् पचाद्यजन्ताद-नेनैवान्तोदात्तत्वं युक्तमिति मन्यमानो वृत्तिकार एतदप्युदाहरति । कटुकाश्व इति । कटुकोऽश्वो यस्य स कटुकाश्वः । कटुशब्दात् संज्ञायां कन्निति ( ५।३।८७ ) कन् । तेन कटुकशब्द आद्युदात्तः । स्पन्दितोऽश्वोऽस्य स्पन्दिताश्वः । स्पदि किञ्चिच्चलन इत्यस्मात् क्तः । तेन स्पन्दितशब्दः प्रत्ययस्वरेणान्तोदात्तः । अनिघात इषुरस्येत्यनिघातेषुः । निहन्यतेऽनेनेति निघातः । हलश्चेति ( ३।३।१२१ ) घञ् । न निघातोऽनिघातः । तत्पुरुषे ( ६।२।२ ) तुल्यार्थेत्यादिना व्ययप्रकृतिभावादनिघातशब्द आद्युदात्तः । चलाचल इषुरस्य चलाचलेषुः । चल कम्पने । तस्य पचाद्यचि चरिचलि

प्रतिपदीनां वा द्वित्वमच्चाक्चाभ्यासस्येति (६।१।१२, वा) द्विर्वचनम्। अभ्यासस्यागागमश्च। एतेन चलाचलशब्दोऽन्तोदात्तः। अनुदर इत्यादि। उदराश्वेषु चेप इत्यस्यावकाशः कुण्डोदरो घटोदर इति। नञ्सुभ्या-(६।२।१७२) मित्युत्तरपदान्तोदात्तस्यावकाशोऽयवः सुयव इति। इहोभयं प्राप्नोति। अनुदरः सुदर इति। नञ्सुभ्या (६।२।१७२) मित्येतद् भवति। विप्रतिषेधेन।

## १०९। नदी बन्धुनि।

बन्धुनीति शब्दरूपापेक्षया नपुंसकलिङ्गनिर्देशः। अन्यथा बन्धुशब्दस्य पुंलिङ्गत्वाद् बन्धाविति निर्देशं कुर्य्यात्। गार्गीबन्धुर्वात्सीबन्धुरिति। गर्गवत्सशब्दाभ्यां गर्गादित्वाद् यञ्। तदन्ताद् यञश्चेति (४।१।१६) ङीप्। गार्गीवात्सीशब्दौ ञित्स्वरेणाद्युदात्तौ। ब्रह्मबन्धुरिति। अत्र प्रकृतिभावएव भवति पूर्वपदस्य। ब्रह्मशब्दश्चायं मनिन्नित्यनुवर्त्तमाने बृंहेर्नोच्चेति (उण्, ४।५८५) मनिन् प्रत्ययान्तो व्युत्पाद्यते। तेनाद्युदात्तः। गार्गीप्रिय इति। गार्गीशब्दोऽपि प्रकृतिभावेनाद्युदात्तएव भवति।

## ११०। निष्ठोपसर्गपूर्वमन्यतरस्याम्।

प्रक्षालितपाद इति। क्षल शौचकर्मणि। अस्मात्ण्यन्तात् क्तः। प्रक्षालित-शब्दो गतिरनन्तर (६।२।४९) इत्याद्युदात्तः। प्रधौतमुखमिति। धावु गतिशुद्धयोः। अस्मात् क्तः। च्छ्वोः शूडनुनासिके चेत्यूट्। (६।४।१९) एत्येधत्यूठ्स्विति (६।१।८९) वृद्धिः। यदि मुखशब्द इत्यादि। मुखशब्दोऽयं स्वाङ्गवाच्यपि। तत्र यद्ययमिह स्वाङ्गवाची तदानेन पूर्वपदा-न्तोदात्तत्वमेव। मुक्ते पक्षे मुखं (६।२।१६७) स्वाङ्गमितुत्तरपदाद्युदात्तत्वं भवति। अत्र निष्ठोपसर्गपूर्वमन्यतरस्यांग्रहणानुवृत्तेर्यदान्तोदात्तत्वं भवति तदा गतिरनन्तर (६।२।४९) इतेग्रतत्। तेन स्वाङ्गवाचिनि मुखशब्दे त्रयः स्वरा भवन्ति। अनेन पूर्वपदान्तोदात्तत्वम्। मुखं स्वाङ्गमित्यने-(६।२।१६७) नोत्तरपदान्तोदात्तत्वम्। गतिरनन्तर (६।२।४९) इति प्रकृतिभावात् पूर्वपदस्याद्युदात्तत्वम्। नचेत्यादि। यदि मुखशब्दोऽत्र

स्वाङ्गवाची न भवति तदा मुखं स्वाङ्गमित्यस्यायं (६।२।१६७) विषयो न भवतीति गतिरनन्तर इति (६।२।४९) विधिना मुक्ते प्रवर्त्तते। तेन स्वाङ्गवाचिनि मुखशब्दे द्वौ स्वरौ भवतः पूर्वपदस्याद्युदात्तत्वमन्तोदात्तत्वञ्च। प्रसेचकमुखमिति। अत्र पूर्वपदप्रकृतिस्वरएव भवति। प्रसिच्यत इति प्रसेचकः। कृत्यल्युटो बहुलमिति (३।३।११३) कर्मणि ण्वुल्। कुगतिप्रादय (२।२।१८) इति समासः। ततपुरुषे तुल्यार्थेत्यादिना (६।२।२)ऽव्यय-प्रकृतिभावः। तेन प्रसेचकशब्द आद्युदात्त इति। शुष्कमुख इति। शुषः कइति (८।२।५१) निष्ठायां कादेशः। प्रत्ययस्वरेण शुष्कशब्दोऽन्तो-दात्तः (M)। बहुव्रीहौ प्रकृतिभावेन नित्यमेवान्तोदात्तो भवति।

## ११९। उत्तरपदादिः।

## ११२। कर्णो वर्णलक्षणात्।

वर्णं शुक्लादि। लक्ष्यतेऽनेनेति लक्षणं चिह्नम्। वर्णञ्च लक्षणञ्च वर्ण-लक्षणम्। द्वन्द्व एकवद्भावः। अर्थग्रहणञ्चेह वर्णलक्षणयोः। अर्थप्रधानत्वा-न्निर्देशस्य। श्वेतकर्णः कृष्णकर्ण इति। श्वेतकृष्णशब्दावन्तोदात्तौ। तथाहि श्विता वर्ण इत्यस्मात् पचाद्यचि श्वेतशब्दो व्युत्पाद्यते। कृष्णशब्दोऽपि इण सिञ्जिदीङ्युष्यविभ्यो नगित्यनुवर्त्तमाने (उण्, ३।२८२) कृषेर्वर्णे इति (उण्, ३।२८४) नक्प्रत्यये। दात्राकर्ण इति। धः कर्मणि ष्ट्रन्निति (३।२।१८१) वर्त्तमाने दाम्नीशसित्यादिना (३।२।१८२) ष्ट्रन्प्रत्ययः। तेन दात्रशब्द आद्युदात्तः। शङ्कुकर्ण इति। कृग्रोरुच्चेत्यनुवर्त्तमाने (उण्, १।२४) खरुशङ्कुपीयुनीलङ्गुलिग्विति (उण्, १।३६) कुप्रत्ययान्तः शङ्कुशब्दो ऽन्तोदात्तो निपात्यते। धाप्टवस्यज्यतिभ्यो न इत्यधिकृत्य (उण्, ३।२८६) कृवृच्छसिद्रुपन्यनिस्वपिभ्यो निदिति (उण् ३।२९०) कर्णशब्दो व्युत्पाद्यते। तेनायमाद्युदात्तः। लक्षणस्येति दीर्घत्वमिति। लक्षणस्येत्यनेन सूत्रैकदेशेन कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्येति सूत्रमुपलक्षयति (६।३।११५)। श्वेतपाद इत्यादि। पूर्वपदस्य प्रकृतिस्वर

(M) शुष्कधृष्टावित्यनेनायमाद्युदात्त इत्यन्ये (६।१।२०६)।

एव भवति। अथेह कस्मान्न भवति स्थूलकर्ण इति। स्थूलेनापि हि कर्णेन लक्ष्यत एव। ततश्च लक्षणादित्येव सिद्धमित्यत आह पशूनां विभागज्ञापनार्थमित्यादि। तेन स्थूलकर्ण इत्यत्र न भवतीति भावः। कथं पुनः सामान्येनोक्तौ विशेषस्य ग्रहणं लभ्यते ? वर्णग्रहणाज् ज्ञापकात्। यदि लक्षणमात्रस्येह ग्रहणमभिमतं स्याद् वर्णग्रहणं न क्रियेत। वर्णो हि लक्षणं भवत्येव। तेनापि लक्ष्यत इति कृत्वा। कृतश्च। तस्मात् तदेव ज्ञापयति विशिष्टमिह लक्षणं गृह्यत इति। यत् पुनर्विशिष्टं व्याख्यानात् तद् विज्ञेयम्। श्वेतपाद इति। श्विता वर्णे इत्यस्मात् पचाद्यचि श्वेतशब्दो व्युत्पाद्यते। तेनान्तोदात्तोऽयम्। कूटशृङ्ग इति। कूट दाहे इति। अस्मादिगुपधलक्षणः कः (३।१।१३५)। तेन कूटशब्दोऽप्यन्तोदात्तएव। शोभनकर्ण इति। शुभ शुम्भ शोभार्थे। अस्मादनुदात्तश्च हलादेरिति (३।२।१४९) युच्। चित्स्वरेण शोभनशब्दोऽप्यन्तोदात्तः। पूर्वपदप्रकृतिस्वरापवादो योगः। एवमुत्तरेऽपि योगाः प्रागव्ययीभावसंशब्दनात् (६।१।१२१)। तेन सर्वत्र प्रत्युदाहरणेषु पूर्वपदप्रकृतिस्वरः प्रत्युदाहार्यः।

## ११३। संज्ञौपम्ययोश्च।

कुञ्चिकर्णो मणिकर्ण इति। कुचि शब्दे तारे। अण रण वण भण मणेति मणिर्भ्वादौ पठ्यते। आभ्यां सर्वधातुभ्य इन् (उण्, ४।५५६)। इगुपधात् किदितीन्प्रत्ययः। किच्च (उण्, ४।५५८)। तेन कुञ्चिमणिशब्दावाद्युदात्तौ। गोकर्ण इति। गोरिव कर्णोऽस्येति विग्रहः। गोशब्द उक्तस्वरः। खरकर्ण इति। खरस्येत्यादि विग्रहः। खमस्यास्तीति रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानाद्रप्रत्ययः (५।२।१०७, वा)। तेन खरशब्दोऽन्तोदात्तः।

## ११४। कण्ठपृष्ठग्रीवाजङ्घञ्च।

कणेष्ठ इति (उण्, १।१०३) ठप्रत्ययान्तत्वात् कण्ठशब्दोऽन्तोदात्तः। तिष्ठपृष्ठगूथयूथप्रोथा इति (उण्, २।१६९) पृष्ठशब्दोऽन्तोदात्तो निपात्यते। इण्शीभ्यां वन्नित्यतो (उण्, १।१५०) वन्प्रत्ययेऽनुवर्त्तमाने ग्रीवयह्वजिह्वाग्रीवाप्वमीवा इति (उण्, १।१५२) ग्रीवाशब्दोऽन्तोदात्तो निपात्यते।

अत्यन्तं हन्ति गच्छतीति हन्तेर्यङ् । द्विर्वचनम् । नुगतोऽनुनासिकान्तस्येति (७।४।८५) नुक् । अभ्यासाच्चेति (७।३।५५) कुत्वम् । जङ्घन्य इति स्थिते पचाद्यच् । यङोऽचि चेति (२।४।७४) यङो लुक् । टाप् । चित्स्वरेण जङ्घाशब्दोऽन्तोदात्तः । अथवा हन्तेरच् । जङ्घचेति हन्तेरच्प्रत्ययो जङ्घ इत्ययमादेश इत्येवं वा जङ्घाशब्दो व्युत्पाद्यते । एषां कण्ठादीनां समाहारे द्वन्द्वः । शितिकण्ठ इति । सर्वधातुभ्य इन्निति (उण्, ४।५५६) वर्त्तमाने क्रमितमिशडिस्तम्भामत इच्चेति (उण्, ४।५६०) शितिशब्द आद्युदात्तः । नीलकण्ठ इति । नील वर्णे । अस्मात् घञ् । तेन नीलशब्दोऽप्याद्युदात्तः । खरकण्ठ इति । खरस्येव कण्ठोऽस्येति विग्रहः । खमस्यास्तीति रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानाद्रप्रत्ययः (५।२।१०७, वा) । तेन खरोऽन्तोदात्तः । उष्ट्रकण्ठ इति । उष्ट्रस्येव कण्ठोऽस्येति । ष्ट्रन्निति (उण्, ४।५९८) वर्त्तमाने उषिखनिभ्यां किदिति (उण्, ४।६०१) उष दाह इत्यस्मात् ष्ट्रन् । किच्च । तेनोष्ट्रशब्द आद्युदात्तः । काण्डपृष्ठ इति । काण्डं पृष्ठमस्येति । काण्डशब्दो नब्विषयस्यानिसन्तस्येत्याद्युदात्तः । (फिट्, २।२६) नाकपृष्ठमिति । नास्याकमस्तीति न भ्राड़ित्यादिना (६।३।७५) प्रकृतिभावान्नलोपाभावः । नञ्सुभ्यामित्युत्त-(६।२।१७२) त्तरपदान्तोदात्तविधानान्नाकशब्दोऽन्तोदात्तः । गोपृष्ठमिति । गोरिव पृष्ठमस्येति । गोशब्द उक्तस्वरः । अजपृष्ठमिति । अजस्येव पृष्ठमस्येति । अज गतिक्षेपणयोः । अस्मात् पचाद्यच् । अजादिष्वजाशब्दस्य पाठाद् वीभावो न भवति । चित्स्वरेणाजशब्दोऽन्तोदात्तः । सुग्रीव इति । शोभना ग्रीवास्येति । निपाता आद्युदात्ता (फिट्, ४।८०) इति सुशब्द आद्युदात्तः । नीलग्रीव इति । नीला ग्रीवास्येति । नील वर्णे । अस्मात् घञ् । तेन नीलशब्द आद्युदात्तः । दशग्रीव इति । दशग्रीवा अस्येति । दशशब्दो न्नः संख्याया (फिट्, २।२८) इत्याद्युदात्तः । अश्वग्रीव इति । अश्वस्येव ग्रीवास्येति । गोशब्दोऽश्वशब्दश्चोक्तस्वरः । नारीजङ्घ इति । नारी जङ्घा यस्येति (N) । शार्ङ्गरवादिषु नृनरयोश्चेति पठ्यन्ते । तेनाद्युदात्तः ।

(N) मुद्रितकाशिकायां मिश्रग्रन्थे च नाड़ीजङ्घ इत्येव पाठः । नाड्याकारे जङ्घे यस्येति च मिश्रः ।

तालजङ्घ इति तालो जङ्घा यस्येति। तल प्रतिष्ठाकरणे चुरादिः। तस्मात् पचाद्यच्। तेन तालशब्दोऽन्तोदात्तः। गोजङ्घ इति। गोरिव जङ्घा यस्येति। अश्वजङ्घ इति। अश्वस्येव जङ्घा यस्येति। एणीजङ्घ इति। एण्या इव जङ्घा यस्येति। एणीशब्दोऽस्त्रीविषयादिति (४।१।६३) ङीषन्तः। तेनान्तोदात्तः।

## ११५। शृङ्गमवस्थायाञ्च।

उन्नतशृङ्ग इति। गन्गम्यद्योरित्यधिकृत्य (उण्, १।२०) भृञः किन्नुट्चेति (उण्, १।१२२) च शृणाते र्ह्रस्वश्चेति (उण्, १।१२३) गन्प्रत्ययान्तः शृङ्गशब्दो व्युत्पाद्यते। तेनायमाद्युदात्तः। उन्नतशब्द स्थाथादिस्वरेणान्तोदात्तः (६।२।१४४)। द्व्यङ्गुलशृङ्ग इति। द्वे अङ्गुली प्रमाणमस्येति तद्धितार्थे द्विगुः। प्रमाणे द्वयसजित्यादिना (५।२।३७) विहितस्य मात्रच आगतस्य लोपः। प्रमाणे लो द्विगोर्नित्यमिति (५।२।३७, वा)। तत्पुरुषस्याङ्गुलेः संख्याव्ययादे (५।४।८६)रित्यच् समासान्तः। तेन द्व्यङ्गुलशब्दोऽन्तोदात्तः। द्व्यङ्गुलं शृङ्गमस्येति। त्र्यङ्गुलशृङ्ग इति। पूर्वेण तुल्यम्। अत्रेत्यादि। आदिशब्देन द्व्यङ्गुलादिग्रहणम्। ऋष्यशृङ्ग इति। ऋष्यं शृङ्गं यस्येति। अर्घ्यादयश्चेत्याद्युदात्त ऋष्यशब्दो निपात्यते। मेषशृङ्ग इति। मेषस्येव शृङ्गो यस्येति। मिष स्पर्द्धायामस्मात् पचाद्यच्। तेन मेषशब्दोऽन्तोदात्तः। स्थूलशृङ्ग इति। स्थूलशब्दः प्रातिपदिकस्वरेणान्तोदात्तः।

## ११६। नञोऽजरमरमित्रमृताः।

अजर इति जरणं जरः। ऋदोरप् (३।३।५७)। तेनायं धातुस्वरेणाद्युदात्तः। अविद्यमानो ज्वरोऽस्येति। अमर इति। मरणं मरः। कृत्यल्युटो बहुलमित्यप् (३।३।११३)। तेनायमपि पूर्ववदाद्युदात्तः। अमित्र इति। अमिचिमिदिशसिभ्यः क्त्र इति (उण्, ४।६०३) मिदेः क्त्रः। तेन मित्रशब्दोऽन्तोदात्तः। अमृत इति। मृङ् प्राणत्यागे। मरणं मृतम्। नपुंसके भावे क्तः। (३।३।११४)। तेन मृतशब्दोऽन्तोदात्तः। ब्राह्मणमित्र इति। ब्राह्मणशब्दोऽणन्तादन्तोदात्तः। अत्र पूर्वपदप्रकृतिस्वरएव भवति।

अश्वत्थुरिति । दृशातिभ्यां क्नुन्निति ( उण्, ४।५४२ ) क्नुनन्तः शत्रुशब्द आद्युदात्तः । नञ्सुभ्या ( ६।२।१७२ )मित्युत्तरपदान्तोदात्तत्वापवादो योगः । एवमुत्तरेऽपि योगाः प्राक्कूलतीरतुलेत्यतः ( ६।२।१२१ ) सूत्राद् द्रष्टव्याः ।

११७ । सोर्मनसी अलमोषसी ।

सुकर्मेति । कृहृचरिभ्यो मनिन् । सर्वनाम स्थाने चेति दीर्घः (६।४।८) सुप्रथिमेति । पृथो र्भावः प्रथिमा । पृथादिभ्य इतीमनिच् ( ५।१।२२ ) । रऋतो हलादे लंघो ( ६।४।१६१ )रिति ऋकारस्य रेफः । सुपया इति । असुन्निति वर्त्तमाने ( उण्, ४।६२८ ) पिबतेरिच्चेति पयःशब्दो व्युत्पाद्यते । तेनायमाद्युदात्तः । अत्वसन्तस्येति ( ६।४।१४ ) दीर्घः । सुयशा इति । अश भोजने । अशेर्देवने युट्चेत्यसुन्येव यशःशब्दो व्युत्पाद्यते । तेनायमाद्युदात्तः ( उण्, ४।६३० ) । पूर्ववद्दीर्घः । सुस्रोता इति । सर्वधातुभ्योऽसुन्निति वर्त्तमाने ( उण्, ४।६२८ ) स्रुरिभ्यां तुट् चेति ( उण्, ४।६४१ ) । सुस्रत् सुध्वदिति । स्रन्सुध्वनुसुभ्यां क्विप् । वसुस्रंस्वित्यादिना ( ८।२।७२ ) दत्वम् । तस्यासिद्धत्वादत्वासन्तत्वम् । सुराजा सुतक्षेति । राजन् तक्षन्निति कनिन्नन्तः । सुलोमेति । लुनातेर्मनिनि लोमेति । सूषेति । उष दाहे । मिथुनेऽसिरिति ( उण्, ४।६६२ ) वर्त्तमान उषः किदिति ( उण्, ४।६७३ ) कित् । अथ कथं सुप्रथिमेत्यत्र सुस्रोताः सुस्रदसुध्वदित्येतेषु चोत्तरपदमाद्युदात्तं भवति ? यावतार्थवतोर्मनसोरर्थवद्ग्रहणपरिभाषयेह ग्रहणम् । नचेह तावर्थवन्तावित्यत आह अनिनस्मन्नित्यादि । अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्तीति (प,१७) ब्रुवता वाक्यकारेणानिनस्मन्प्रभृतीनामनर्थकानामपि ग्रहणं भवतीत्युक्तं भवति । अन्यथाप्येतत् तदन्तविधेः प्रदर्शनार्थं स्यात् । कपि तु परत्वादित्यादि । सोर्मनसी इति सूत्रस्यावकाशः सुकर्मा सुवयाः । कपि पूर्वं ( ६।२।१७३ ) मित्यस्यावकाशोऽयवकः सुयवक इति । शेषाद्विभाषेति (५।४।१५४) कप् । इहोभयं प्राप्नोति सुकर्मकः सुस्रोतस्क इति । कपि पूर्वं ( ६।२।१७३ ) मित्येतद् भवति । विप्रतिषेधेन ।

(O) मंथ अश मनसी इति विग्रहः ।

## ११८। क्रत्वादयश्च।

क्रञः क्रतुः (उण्, १।७७)। तेन नित्स्वरेण क्रतुराद्युदात्तः। इषीक-प्रतीकशब्दावर्घ्यादयश्चेत्याद्युदात्तौ। सुपूर्वस्य त्वरतेः क्तिन्। तादौ च निति कृत्यताविति (६।२।५०) गतिस्वरेण प्रतूर्त्तिशब्द आद्युदात्तः। ज्वर-त्वरेत्यादिनोट् (६।४।२०)। जुहोते रचो यत् (३।१।९७)। यतोऽनाव (६।१।२१३) इत्याद्युदात्तो भवति हव्यशब्दः। भजेः खनो घ चेति (३।३।१२५) घः। अत्र हि घित्करणेन ज्ञापितमन्येभ्योऽपि घो भवतीति। वृषादित्वाद् भगशब्द आद्युदात्तः।

## ११९। आद्युदात्तं द्व्यच्छन्दसि।

नित्स्वरेणाध्वरथशब्दावाद्युदात्ताविति। अध्वशब्दस्याशिपुषीत्यादिना (उण्, १।१४९) क्वन्प्रत्ययान्तस्य व्युत्पादितत्वात्। रथशब्दस्यापि हनिकुषिनीरमिकाशिभ्यः क्थन्निति (उण्, २।१५९) क्थन्प्रत्ययान्तस्य। बाहुशब्दः प्रत्ययस्वरेणान्तोदात्त इति। कृभ्वश्चेत्यतः (उण्, १।२२) कुरिति वर्त्तमानेऽर्जिदृशिकम्यमिपशिबाधामृजिपशितुग्धुग्दीर्घहकारश्चेति (उण्, १।२७) कुप्रत्ययान्तस्य व्युत्पादितत्वात्। सुहिरण्य इति। हिरण्यशब्दो नञ्विषयस्यानिसन्तस्येत्याद्युदात्तः (फिट्, २६)।

## १२०। वीरवीर्यौ च।

स्फायितञ्चीत्यादिना (उण्, २।१७०) ऽजे रक्प्रत्यये वीरशब्दो व्युत्पाद्यते। तेनान्तोदात्तः। अथवा वीर विक्रान्ताविल्यस्य पचाद्यचि व्युत्पादितत्वात्। वीर्य्यमिति यत्प्रत्ययान्तमिति। वीरे साधुः। तत्र साधुरिति (४।४।९८) प्राग्घितीयो यत्। अथवा वीर इत्यस्माच्चौरादिकाद् (३।१।९७) अस्मादेव निपातनादचो यत्। तेन वीर्य्यमिति यत्प्रत्ययान्तम्। एवं सति यतोऽनाव इत्याद्युदात्तत्वम् प्राप्नोतीत्यत आह तत्रेत्यादि। कथं पुनर्वीर्य्यग्रहणं ज्ञापकमित्याह तत्र हीत्यादि। यद्याद्युदात्तं स्यात् तदाद्युदात्तं द्व्यच्छन्दसीत्यनेनैव (६।२।११९) सिद्धं स्यात्। ततश्चेह वीर्य्यग्रहणं न कुर्य्यात्। कृतञ्च। तस्मात् तदेव ज्ञापयति वीर्य्यशब्दस्य यदन्तस्याप्याद्यु-

दात्तत्वं न भवतीति। तस्मिन्नसति तित् स्वरित (६।१।१८५) मित्यन्त-स्वरितमेव भवति।

१२१। कूलतीरतूलमूलशालाक्षसममव्ययीभावे।

कूल संवरणे। पार तीर कर्मसमाप्तौ। तूल निष्कर्षे। मूल प्रतिष्ठायाम्। एभ्यो घञ्। तेनैते कूलादय आद्युदात्ताः। शल हुल पत्लृ गतौ। अस्माद् घञ्। शालाप्याद्युदात्ता। स्त्रीत्वं तत्पुरुषे शालायामिति (६।२।१२३) निपातनात्। तृवदिहनिकमिकषिभ्यः स इति (उण्, ३।३४२)। अशेर्देवन इति (उण्, ४।६३०) च सप्रत्ययान्तत्वादक्षशब्दोऽन्तोदात्तः। योऽप्यक्ष्णो-ऽदर्शनादित्यचि (५।४।७६) समासान्ते कृतेऽक्षशब्दः सम्पद्यते सोऽपि चित्स्वरेणान्तोदात्तः। तस्यापीह ग्रहणम्। षमु ष्टमु वैकल्ये। अस्मात् पचाद्यच्। तेन समोऽन्तोदात्तः। यस्तु सर्वादिषु समशब्दः सोऽनुदात्त स्तत्रैव पठ्यते। तस्यापीह ग्रहणम्। उपकूलमिति। कूलसमीपमित्यव्ययं विभक्ती-त्यादिनाव्ययीभावः (२।१।६)। परिकूलमिति। अपपरी वर्जन इति (१।४।८८) परिशब्दः कर्मप्रवचनीयसंज्ञः। तेन योगे पञ्चम्यपाङ्परिभि (२।३।१०) रिति कूलात् पञ्चमी। अपपरिबहिरञ्चवः पञ्चम्येत्यव्ययीभावः (२।१।१२)। सुषममित्यादौ सुषामादिषु चेति (८।३।९८) षत्वम् (M)। तस्यासिद्धत्वात् समशब्द एवायम्। तिष्ठद्गुप्रभृतिष्वेते पठ्यन्त इति। तेन तिष्ठद्गुप्रभृतीनि चेत्येते (२।१।१७)ऽव्ययीभावा इति दर्शयति। उपकुम्भ-मिति। अत्र समासान्तोदात्तत्वमेव। परमकूलमुत्तमकूलमिति। परमं कूलमस्योत्तमं कूलमस्येति बहुव्रीहिः। अत्र पूर्वपदप्रकृतिस्वरएव भवति। यौ तु तत्पुरुषौ परमकूलोत्तमकूलशब्दौ तत्र बहुव्रीह्यधिकारादेव न भविष्यतीति तन्निवृत्त्यर्थमव्ययीभावग्रहणमयुक्तम्। पर्यादिभ्य इत्यादि। परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेष्वित्यस्यावकाशो (६।२।३३) यत्र कूलादयो न सन्ति परित्रिगर्त्तमिति। कूलादीनामाद्युदात्तस्यावकाशो यत्र पर्यादयो न विद्यन्तेऽपकूलमिति। परिकूलमित्यत्र तूभयं प्राप्नोति। तत्र

(M) सुविनिर्दुर्भ्यः सुपिसूतिसमा इति षत्वम् (८।३।८८)।

विप्रतिषेधेनेदमेवाद्युदात्तत्वं भवति। समासस्वरापवादो योगः। एवमुत्तरेऽपि नाचार्य्यराजेत्यादेः ( ६।२।१३३ ) सूत्रात् प्राक्।

## १२२। कंसमन्थशूर्पपाय्यकाण्डं द्विगौ।

वृतॄवदिहनिकमिकषिभ्यः स इति ( उण्, ३।३४२ ) कमेः सः। तेन कंसोऽन्तोदात्तः। मन्थ विलोड़ने। अस्मादकर्त्तरि च कारके संज्ञायामिति ( ३।३।१९ ) घञ्। तेन मन्थ आद्युदात्तः। पानीविषिभ्यःप इति ( उण्, ३।३०३ ) वर्त्तमाने सुशॄभ्यां निच्चेति ( उण्, ३।३०६ ) शृणातेः पः। निच्च। बाहुलकादूत्वञ्च। अथवा शूर्प माने। अस्माद् घञ्। तेन शूर्पशब्द आद्युदात्तः। पाय्यशब्दो ण्यति पाय्यसान्नाय्येति ( ३।१।१२९ ) निपात्यते। तेनायमन्तस्वरितः। कुण्डशब्दः पूर्वमेवोक्तस्वरः। द्विकंस इति। द्वाभ्यां कंसाभ्यां क्रीत इति तद्धितार्थे समासः। ततः प्राग्वतेः संख्यापूर्वपदानां तदन्तविधेरभ्युपगमात् ( ५।१।१९, वा ) कंसाट्टिठन्निति टिठन् ( ५।१।२५ )। तस्य चाध्यर्द्धपूर्वेत्यादिना ( ५।१।२८ ) लुक्। त्रिकंस इति। पूर्वेण तुल्यम्। द्विमन्थ इति। आर्हादगोपुच्छेत्यादिना ( ५।१।१९ ) ठक्। शेषं समासादि पूर्ववत्। द्विशूर्प इति। शूर्पादन्यतरस्यामित्यञ् ( ५।१।२६ )। शेषं पूर्ववत्। द्विपाय्य इति। प्राग्वतीयष्ठञ्। शेषं पूर्ववत्। द्विकाण्डमिति। द्वे काण्डे प्रमाणमस्येति। प्रमाणे द्वयसज्दघ्नञ्मात्रचः ( ५।२।३७ ) मात्रजादयः। तेषां प्रमाणे लो द्विगोर्नित्यमिति ( ५।२।३७, वा ) लोपः। समासः पूर्ववत्। परमकंस इति। अत्र समासस्वरएव भवति।

## १२३। तत्पुरुषे शालायां नपुंसके।

शालाशब्दः कूलतीरेत्यत्रोक्तस्वरः ( ६।२।१२१ )। ब्राह्मणशालं क्षत्रियशालमिति। ब्राह्मणशब्दोऽणन्तत्वादन्तोदात्तः। क्षत्रियशब्दस्तु मध्योदात्तः। क्षत्राद्घ इति ( ४।१।१३८ ) घप्रत्ययान्तत्वात्। दृढ़शालमिति। बहुव्रीहिरयम्। तेन पूर्वपदप्रकृतिस्वर एव भवति। पूर्वपदञ्च निष्ठान्तत्वादन्तो-

दात्तम् । ननु च लक्षणप्रतिपदोक्तपरिभाषया विभाषा सेनेति ( २।४।२५ ) प्रतिपदोक्ता या नपुंसकलिङ्गता सैव ग्रहीष्यते । नहि दृढशालमित्यत्र प्रतिपदोक्ता नपुंसकता । किं तर्हि ? अभिधेयवशेन लक्षणोक्ता । अभिधेयवल्लिङ्गवचनानि भवन्तीति । तत् किमेतन्निवृत्त्यर्थेन तत्पुरुषग्रहणेन ? एवं तर्ह्युत्तरार्थं तत्पुरुषग्रहणम् । चेलखेटकटुककाण्डं गर्हायामि-(६।२।१२६) त्यनेन दधि च तत् कटुकञ्चेति दधिकटुकमित्यत्रैव यथा स्यात् । दधिकटुकमुदश्वित्कटुकमिति । उत्तरार्थं तु तत् क्रियमाणं विस्पष्टार्थत्वमुपपादयेदित्येतदर्थमपि भवति । लक्षणप्रतिपदोक्तपरिभाषा चेह नाश्रयितव्या भवतीत्येतदर्थं तत्पुरुषग्रहणस्य दृढशालमित्येतत् प्रत्युदाहरणमुपन्यस्तम् ।

## १२४ । कन्या च ।

कनि क्लेशने । अस्माद् गुरोश्च हल इत्यकारः ( ३।३।१०३ ) । तेन कन्यान्तोदात्ता । सौशमिकन्यमिति । शोभनः शमोऽस्य सुशमः । तस्यापत्यमित्यत इञ् ( ४।१।९५ ) । तेनाद्युदात्तः सौशमिशब्दः । आह्वकन्यमिति । आङ्पूर्वस्य ह्वयतेरातश्चोपसर्गे इति ( ३।१।१३६ ) कः । तेनाह्वशब्द स्थाथादिस्वरेणा( ६।२।१४४ )न्तोदात्तः । चप्पकन्यमिति । चप सान्त्वने अस्मात् पानीविषिभ्यः प इति ( उण्, ३।२०३ ) बहुलवचनाच्चपोऽपि भवति । तेन चप्पशब्दोऽन्तोदात्तः ।

## १२५ । आदिश्चिहणादीनाम् ।

पूर्वेणोत्तरपदस्य सिद्धेऽयं पूर्वपदस्याद्युदात्तत्वार्थ आरम्भः । चिनोतेः क्विप् चित् । हन्तेः पचाद्यच् हनः । निपातनात् तलोपो णत्वञ्च चिहणः । मल मल्ल धारणे । आभ्यां रप्रत्ययः । लस्य निपातनात् डत्वम् । मडरमड्डरशब्दौ मध्योदात्तौ । विगता तुला यस्य स वितुलः । तस्यायं वैतुलः । अणन्तत्वादन्तोदात्तः । पटदिति कायतीति कै गै शब्दे । आतोऽनुसर्गे कः (३।२।३) । पटत्कोऽन्तोदात्तः । चित्तमादत्त इति ला आदान इत्यस्मादाङ्पूर्वादस्मादेव निपातनात् कः । चित्तालः । तस्यापत्यमित्यत इञ् ( ४।१।९५ ) चैत्तालिः । स कर्णावस्य चैत्तालिकर्णः । बहुव्रीहिरयं

पूर्वपदप्रकृतिस्वरेणाद्युदात्तः। पूर्वपदं हि ञित्स्वरेणाद्युदात्तम्। अन्ये लि-अन्तं चैत्तालिकर्णिरिति समुदायमधीयते। (N) कुक वृक आदाने। अस्मात् क्विप् कुक्। कुट कौटिल्य इत्यस्मादिगुपधलक्षणः कः। कुटः। कुकः कुटः कुक्कुटः। समासस्वरेणान्तोदात्तः। चिनोतेः क्विप् चित्। कणतेः पचाद्यचि कणः। चितः कणश्चिक्कणः। तकारस्य ककारो निपातनात्। चित्कण इत्यपरे पठन्ति। चिहणादयश्चैते मनुष्यनामधेयानि गोत्रनामधेयानि चेति स्मर्य्यते। अथादिग्रहणं किमर्थम्? यावतादिरनुवर्त्तत एवेत्यत आह आदिरितिवर्त्तमान इत्यादि। पूर्वकं ह्यादिग्रहणमुत्तरपदाभिसम्बद्धम्। पूर्वपदानां चिहणादीनामाद्युदात्तत्वमिष्यते। तस्मात् पूर्वपदभूतानां तेषामाद्युदात्तत्वं यथा स्यादित्येवमर्थं पुनरादिग्रहणम्।

## १२६। चेलखेटकटुककाण्डं गर्हायाम्।

चेलृ चेलृ कीलृ चलने। अस्मात् संज्ञायां घञ्। चेलं वस्त्रमुच्यते। खिट उत्त्रासने। अस्मादपि भावे घञ्। खेटः। तृणनामैतत्। ञित्स्वरेण चेलखेटशब्दावाद्युदात्तौ। कटुशब्दात् संज्ञायां कन्। गुणवचनमेतदाद्युदात्तम्। काण्डमप्याद्युदात्तमेवेत्युक्तम्। चेलादीनां सादृश्येन पुत्रादीनां गर्हेति। यथा चेलमकुलीनेन तन्तुवायेनोपजनितमेवं पुत्रोऽप्यकुलीनजो यः स पुत्रचेलमित्युच्यते। यथा(O) खेटमदृढमेवमुपानद् याऽदृढा सोपानत्खेटम्। यथा कटुकमस्वादु तथा दध्यपि यदस्वादु तद् दधिकटुकम्। यथा काण्डं सत्त्वपीड़ाकरमेवं भूतमपि। तत्र पुत्रशब्दः प्रत्ययस्वरेणान्तोदात्तः। साद्यमिचिमिदिशसिभ्यः क्त इत्यनु ( उण्, ४।६०२ ) वर्त्तमाने पुरो क्तस्चेति ( उण्, ४।६०४ ) पुत्रशब्दः क्तप्रत्ययान्तो व्युत्पाद्यते। भार्य्याशब्द ऋहलोर्ण्यदिति ( ३।१।१२४ ) ण्यदन्तत्वादन्तस्वरितः। णह बन्धने। अस्मादुपपूर्वात् क्विप्। नहिवृतीत्यादिना ( ६।३।११६ ) पूर्वपदस्य

---

(N) मुद्रितकाशिकायां तु "वैड़ालिकर्णः। वैड़ालिकर्णिरित्यन्ये पठन्तीति" पाठः। तत्र च पदमञ्जरी—"विड़मादत्ते विड़ालः। ला आदाने। सोपसर्गादप्यस्मादेव निपातनात् कः। तस्यापत्यं वैड़ालिः। तस्येव कर्णावस्य वैड़ालिकर्णः। अपरे लिकारान्तं पठन्ति वैड़ालिकर्णिरिति।" इति।

(O) यथा खेट तृणवद दुर्बलं तद्वदुपानदढ़ं दुर्बलमित्यर्थः। काण्डं शरः।

दीर्घत्वम्। नह्रो ध इति (८।२।३४) नकारस्य धकारः। तस्य चर्त्वं तकारः। उपानच्छब्दः कृत्स्वरेणान्तोदात्तः। नगा अस्मिन् विद्यन्त इति नगरात् कुत्सनप्रावीण्ययो (४।२।१२८) रित्यस्मादेव निपातनाद्रप्रत्ययः। तेन नगरमन्तोदात्तम्। दधीति। आदृगमेत्यादिना (३।२।१७१) किन्-प्रत्ययान्तो दधातेर् व्युत्पाद्यते। तेनाद्युदात्तः। उदकेन श्वयत इत्युदश्वित्। क्विप्। क्विब्वचिप्रच्छीत्यादिना (उण्, ३।२१५) बहुलवचनाद् दीर्घोऽस्य न भवति। उदकस्योदः संज्ञाया (६।३।५७) मित्युदभावः। कृत्स्वरेणान्तो-दात्तः। भूतशब्दोऽपि निष्ठान्तत्वादन्तोदात्तः ? प्रजाशब्द उपसर्गे च संज्ञाया (३।२।९९) मिति डप्रत्ययान्तः। तेन कृत्स्वरेणान्तोदात्तः। परमचेलमिति। अत्र पूजा गम्यते। न गर्हा।

## १२७। चीरमुपमानम्।

शुसूधाग्टधिभ्यः क्रन्निति (उण्, २।१८२) वर्त्तमाने शुसिचिमीनां दीर्घश्चेति (उण्, २।१८३) क्रन्प्रत्ययान्तश्चीरशब्दः। तेनाद्युदात्तः। वस्त्रचीरमिति। पूर्ववद्व्याघ्रादित्वात् समासः। वसेराच्छादनार्थात् ष्ट्रन् वस्त्रम्। तेनाद्युदात्तम्। कम्बलचीरमिति। घृतादीनाञ्चेति (फिट्, १।२१) कम्बलशब्दोऽन्तोदात्तः।

## १२८। पललसूपशाकं मिश्रे।

पल रक्षणे। कलस्तृपश्चेति (उण्, १।१०४) वर्त्तमाने वृषादिभ्यश्चिदिति (उण्, १।१०६) कलप्रत्ययस्य चित्त्वात् पललशब्दोऽन्तोदात्तः। रोदेर्णि लुक् चेति विद्यमाने (उण्, २।१७९) बहुलमन्यत्रापि संज्ञाच्छन्दसोरिति (उण्, २।१८०) बहुलवचनाण्णिलुक् च। पानीविषिभ्यः प इत्यधिकृत्य (उण्, ३।३०३) सुवो दीर्घश्चेति (उण्, ३।३०५) च सुशृभ्यां निच्चेति (उण्, ३।३०६) सूपशब्दः पप्रत्ययान्तो व्युत्पाद्यते। तेनाद्युदात्तः। इण्भीकापाशल्यतिमर्चिभ्यः कन्निति (उण्, ३।३२३) बहुलवचनाच्छो तनूकरण इत्यस्मादपि भवति। तेन शाकशब्द आद्युदात्तः। गुडपललमिति गुडघनत्वे। अस्मादिगुपधलक्षणः कः। तेन गुडशब्दोऽन्तोदात्तः। घृ क्षरण

इत्यस्मादञ्जिघृसिभ्यः क्त इति ( उण्, ३।३६८ ) क्तः। तेन घृतमन्तोदात्तम्। मुदिग्रोर्गग्गौ ( उण्, १।१२५ ) इति मुदेर्गक्। तेन मुद्गोऽन्तोदात्तः।

## १२९। कूलसूदस्थलकर्षाः संज्ञायाम्।

कूलशब्द उत्तरस्वरः। षूद क्षरण इत्यस्मादिगुपधात् कः। तेन सूदोऽन्तोदात्तः। स्थल स्थान इत्यस्मात् पचाद्यच्। तेन स्थलमन्तोदात्तम्। कर्षशब्दः कर्षात्वतो घञोऽन्तउदात्त ( ६।१।१५९ ) इत्यन्तोदात्तः। दाक्षि-कूलमित्यादि। दाक्षिमाहकिशब्दाविञन्तादाद्युदात्तौ। देवशब्दः पचा-द्यजन्तत्वादाद्युदात्तः। भाजीशब्दो जानपदादिसूत्रेण ( ४।१।४२ ) ङीषन्तत्वादन्तोदात्तः। दाण्डायनशब्दो नडादित्वात् फगन्तः। तेन कित ( ६।१।१६५ ) इत्यन्तोदात्तः। ननु च सूत्रे स्थलशब्द उपात्तः। तत्कथं स्थलीशब्द उत्तरपदमाद्युदात्तञ्चोदाक्रियते इत्याह स्थलग्रहणमित्यादि।

## १३०। अकर्मधारये राज्यम्।

राज्ञो भावः कर्म वा राज्यम्। ष्यञन्तत्वादाद्युदात्तम्। ब्राह्मण-क्षत्रियशब्दा उत्तरस्वरौ। चेलराज्येत्यादि। चेलराज्यस्वरस्यावकाशो भार्य्या-चेलं ब्राह्मणराज्यमिति। तत्पुरुषे तुल्यार्थेत्यादिना ( ६।२।२ ) विहितस्य स्वरस्यावकाशो निष्कौशाम्बिरिति। इहोभयं प्राप्नोति कुचेलं कुराज्यमिति। अव्ययस्वरो भवति पूर्वविप्रतिषेधेन। आदिशब्देन वर्ग्यादिस्वरपरिग्रहः।

## १३१। वर्ग्यादयश्च।

वर्ग्यादयो दिगादियदन्ताः। तेषु ये द्व्यचस्ते यतोऽनाव ( ६।१।२१३ ) इत्याद्युदात्ताः। परिशिष्टास्तु तित् स्वरितमित्यन्तस्वरिताः ( ६।१।१८५ )। वसुदेवस्यापत्यमृष्यन्धकेत्यादिनाण् (४।१।११४)। तेन वासुदेवशब्दोऽन्तोदात्तः। अर्ज अर्जन इत्यस्माच्चुरादिणिजन्तादर्जेर्णिलुक् ( उण्, ३।३२८ ) चेत्युनण्-प्रत्ययः। तेनार्ज्जुनो मध्योदात्तः। इत्येवमादय इति। आदिशब्देन पक्षशब्दात् परे ये पठ्यन्ते तेषां ग्रहणम्।

१३२ । पुत्रः पुम्भ्यः ।

कौनटिपुत्र इति । पुत्रशब्द उन्तस्वरः । कुनटस्यापत्यं कौनटिः । तेनायमाद्युदात्तः । दामकमाहिषकशब्दावपि कन्नन्तावाद्युदात्तौ । गार्गीपुत्रो वात्सीपुत्र इति । गार्ग्यवात्स्यशब्दाभ्यां यञश्चेति (४।१।१६) ङीप् । तेन गार्गीवात्सीशब्दौ ञित्स्वरेणाद्युदात्तौ । सर्वत्रास्मिंस्तत्पुरुषाधिकारे प्रत्युदाहरणे समासस्येत्यन्तोदात्तत्वं (६।१।२२३) वेदितव्यम् ।

१३३ । नाचार्य्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ।

पूर्व्वेणाचार्य्यादिभ्योऽपि परस्य पुत्रशब्दस्याद्युदात्तत्वे प्राप्ते प्रतिषेधोऽयमुच्यते । तथाच समासान्तोदात्तत्वमेव भवति । आख्याग्रहणादित्यादि । आख्याग्रहणमाचार्य्यादिभिः प्रत्येकमभिसम्बध्यते । तथाचाख्याग्रहणेऽनिरस्ते तस्याचार्य्यादेः पर्य्यायाणां विशेषाणाञ्च ग्रहणं भवति । आचार्यपुत्र इति । स्वरूपस्योदाहरणम् । उपाध्यायपुत्र इति पर्य्यायस्य । शाकटायनपुत्र इति विशेषस्य । राजपुत्र इति स्वरूपस्य । ईश्वरपुत्र इति पर्य्यायस्य । नन्दपुत्र इति विशेषस्य । ऋत्विक्पुत्र इति स्वरूपस्य । याजकपुत्र इति पर्य्यायस्य । होतुःपुत्र इति विशेषस्य । संयुक्तपुत्र इति स्वरूपस्य । सम्बन्धिपुत्र इति पर्य्यायस्य । स्यालपुत्र इति विशेषस्य । ज्ञातिपुत्र इति स्वरूपस्य । भ्रातुष्पुत्र इति विशेषस्य । कस्कादिषु चेति (८।३।४८) षत्वम् । तत्राचार्य्यशब्दः कृत्स्वरेणान्तस्वरितः । स हि चरेराङ्पूर्व्वस्य ण्यति व्युत्पाद्यते । उपाध्यायशब्दोऽन्तोदात्तस्थाथादिस्वरेण (६।२।१४४) । स हीङश्चेति (३।३।२१) घञन्तो व्युत्पाद्यते । राजशब्द आद्युदात्तः । कनिन्प्रत्ययान्तत्वात् । ईश्वरशब्दोऽन्तोदात्तः । स्थेशभासेत्यादिना (३।२।१७५) वरच् प्रत्ययान्तत्वात् । नन्दशब्दोऽप्यन्तोदात्तः । अजन्तत्वात् । ऋत्विग्शब्द ऋत्विग् दधृगित्यादिना ( ३।२।५९ ) क्विन्प्रत्ययान्तः । कृत्स्वरेणान्तोदात्तः । याजकशब्दो ण्वुलन्तः । तेन लित्स्वरेणाद्युदात्तः । होतृशब्दस्तृन्नन्तादाद्युदात्तः । संयुक्तशब्दो गतिरनन्तर (६।२।४९) इत्याद्युदात्तः । स्यल वितर्के । अस्माच्चुरादिणिजन्तात् पचाद्यचि स्यालशब्दोऽन्तोदात्तः । ज्ञाइत्यस्मात् क्तिच्

क्तौ च संज्ञायामिति (३।३।१७४) ज्ञातिशब्दोऽन्तोदात्तः। तृन्तृचौ शंसिक्ष-दादिभ्य इति (उण्, ३।२५०) प्रकृत्य भ्रातृशब्द स्तृन्नन्तो व्युत्पाद्यते। तेना-द्युदात्तः। संयुक्तशब्दोऽयमस्त्येव रूढ़िशब्दो यो विवाहकृतेन सम्बन्धेन श्यालश्वशुरादिषु वर्त्तते। अस्ति क्रियाशब्दो यः सर्वत्र केनचित् सम्बन्धेन वर्त्तते। तत्रेह रूढ़िशब्दस्य ग्रहणम्। कुत एतत्? आचार्य्यादीनां पृथग्ग्रहणात्। यदि हि क्रियाशब्दस्य ग्रहणं स्यात् तदा संयुक्तग्रहणेनैव निषिद्धत्वादाचार्य्यादीनां पृथग्ग्रहणं न कुर्य्यात्। तेऽपि हि विद्यादिकृतेन सम्बन्धेन संयुक्ता भवन्त्येव। तस्माद्रूढ़िशब्दस्य ग्रहणम्। तेन क्रियाशब्दो यः संयुक्तशब्दस्तस्मात् प्रतिषेधो न भवति।

## १३४। चूर्णादीन्यप्राणिषष्ठ्याः।

चूरी दाहे। अस्मान्निष्ठा। तेन चूर्णमन्तोदात्तम्। करिणः पातीत्या-तोऽनुपसर्गे कः (३।२।३)। पकारस्य पक्षे वकारो निपात्यते। करिपः करिवः कृत्स्वरेण थाथादिस्वरेण वान्तोदात्तः। महेरिनण् च (उण्, २।२१४)। बहुलवचनाच्छकेरपि भवति। शाकिनं प्रत्ययस्वरेण मध्योदात्तम्। शकादिभ्योऽटच् (उण्, ४।५२१) शकटम्। तद्वहतीति शकटादण् शाकटम्। प्रत्ययस्वरेणान्तोदात्तः। द्राग् द्रुतं चीयत इति द्राचा। पृषोदरादित्वात्। अन्तोदात्तोऽयं शब्दः। तुस ह्रस ह्लस रस शब्दे। ततो बहुलवचनाद् हसिमृग्रिण्वामिदमिलूपूधुर्वीभ्यस्तन्निति (उण्, ३।२६६) तन्। निपातनाद्दीर्घश्च। तूस्तमाद्युदात्तम्। कुत्सितं दुनोतीति क्विब् वचिप्रच्छीत्यादौ (३।२।१७८) सूत्रे क्विबिति योगविभागः। टुदु उपतापे इत्यस्मादपि क्विप्। बहुलवचनादनित्यत्वादागमशासनस्य तुगभावः। पूर्वपदस्य च बहुलवचनादेव मुम्। कुन्दु। तन्मिमीत इति माङ्माने इत्यस्मात् कः। कुन्दुमोऽन्तोदात्तः। उषिकुटिदलिकचिखजिभ्यः कपन् (उण्, ३।४२२)। तेन दलप आद्युदात्तः। अत्यविचमितमिनमीत्यादिना (उण्, ३।३९२) असच्। चमसः। ततो जातिलक्षणे ङीष्, चमसी। चक तृप्ता-वित्यस्मात् क्विप्। चक्। कनी दीप्तिकान्तिगतिषु। तस्मादच्। कनः।

चक्कनः । चोलस्यापत्यं चौलः । द्व्यच्मगधेत्यादिनाण् (४।१।१७०)। एते चूर्णादयः । मुद्गचूर्णमिति । मुदिग्रोर्गग्गाविति (उण्, १।१२५) मुद्गोऽन्तोदात्तः । मसूरचूर्णमिति । मसेरूरन् (उण्, ५।६८१) मसूर आद्युदात्तः । मत्स्यचूर्णमिति । मत्स्यः प्रातिपदिकस्वरेणान्तोदात्तः । तत्रोपग्रहमिति षष्ठ्यन्तमेवेति । अनेन तुल्यार्थतां सूत्रयोर्दर्शयति । कथं पुनरुपग्रहः षष्ठ्यन्तमेव गृह्यत इत्याह पूर्वाचार्य्योपचारेणेति । पूर्वाचार्य्या हि षष्ठ्यन्तमुपग्रह इत्येवमुपचरन्ति स्म । तेनेह पूर्वाचार्य्योपचारेण (P) हेतुना षष्ठ्यन्तमेवोपग्रह इति गृह्यते । समासस्वरापवादो योगः । एवमुत्तरेऽपि त्रयः ।

## १२५ । षट् च काण्डादीनि ।

चेलखेटकटुककाण्डमित्यादिषु चतुर्षु योगेषु सन्निविष्टानि काण्डादीनि षट् गृह्यन्ते । यद्येवं तैरेव योगैरेषामाद्युदात्तत्वं सिद्धम् । तत् किमर्थमिदम् ? यत्र तैर्विहितं ततोऽन्यत्रापि यथा स्यात् । प्राणिषष्ठ्याश्च मा भूदित्येवमर्थञ्च । दर्भकाण्डमिति । दृदलिभ्यां भ इति (उण्, ३।४३१) भप्रत्ययान्तो दर्भशब्दोऽन्तोदात्तः । तृणधान्यानाञ्च द्व्यषामिति (फिट्, २७) वा । शरकाण्डमिति । शरशब्दोऽप्यनन्तरेणैव द्व्यषामित्याद्युदात्तः । एवं कुश-शब्दोऽपि । तथा तिलशब्दोऽपि । पललमूलकशब्दावुक्तस्वरौ । नदड़िति पचादिषु पठ्यते । तेन टित्त्वान्नदशब्दात् ङीप् । यस्येति चेत्यकार (६।४।१४८) लोपः । अनुदात्तस्य च यत्रोदात्तलोप इति (६।१।१६१) ङीप उदात्तत्वम् । तेन नदीशब्दोऽन्तोदात्तः । पाटलापालङ्काम्बासागरार्थानामिति (फिट्, २) फिषा समुद्रशब्दोऽन्तोदात्तः । राजसूद इति । सूदशब्दः षड्भ्यः परः पठ्यते । तेनात्र समासान्तोदात्तत्वमेव भवति । सर्वे च ते दर्भ-काण्डादयः षष्ठीसमासाः ।

## १२६ । कुण्डं वनम् ।

कुण्डशब्दोऽत्र कुण्डसादृश्येन वने वर्त्तत इति । यथा कुण्डं कस्यचिदु-दकादेराश्रयस्तथा वनमपि । अतः कुण्डसादृश्येनात्र कुण्डशब्दो वने वर्त्तते ।

---

(P) उपचारः प्रयोग इत्यर्थः ।

भवति हि साहचर्येण ताच्छब्द्यं यथाग्निर्माणवक इति। मृत्कुण्डमिति। अत्र कुण्ड आकारविशेषो मृद्विकारे वर्त्तते। न वने। तेन समासान्तो-दात्तत्वमेव भवति।

## १३७। प्रकृत्या भगालम्।

भगालमित्यर्थग्रहणम्। अर्थप्रधानत्वान्निर्देशस्य। अर्थप्रधाने हि निर्देशे स्वरूपग्रहणं न भवतीत्युक्तम्। अर्थग्रहणे च सति तद्वाचिनामितत् कार्यं विज्ञायते। अतएवाह भगालवाचीत्यादि। कुम्भीभगालमिति। कुम्भीशब्दो जातेरस्त्रीविषयादयोपधादिति (४।१।६३) ङीषन्तत्वादन्तोदात्तः। भगालादयो मध्योदात्ता इति। लघावन्ते द्वयोश्च बह्वषो गुरुरिति ( फिट्, ४२ ) फिषेषामाकारस्योदात्तत्वविधानात्।

## १३८। शितेर्नित्याबह्वज् बहुव्रीहावभसत्।

शितिपाद इति। शितिशब्दो वर्णानां तणतिनितान्तानामिति ( फिट्, ३३ ) फिषाद्युदात्तः। अंसोष्ठशब्दावित्यादि। अम रोग इत्यस्मादमः सन्निति ( उण्, ५।६८ ) सन्प्रत्ययान्तोऽंसशब्दो व्युत्पाद्यते। ओष्ठ-शब्दोऽप्युषिकुषिगार्त्तिभ्यस्थन्निति ( उण्, २।६१ ) थन्प्रत्ययान्तः। तेनैतौ प्रत्ययस्य नित्त्वादाद्युदात्तौ। दर्शनीयपाद इति। दर्शनीयशब्दो-ऽनीयर्प्रत्ययान्तः। तेनोपोत्तमं रितीति ( ६।१।२१७ ) मध्योदात्तः। ततोऽत्र पूर्वपदस्य प्रकृतिस्वर एव भवति। एवमुत्तरेष्वपि प्रत्युदाहरणेषु। कथं पुनः ककुदशब्दो नित्यं बह्वज् न भवतीत्याह ककुदस्यावस्थायां लोप इत्यादि। शितिललाट इति। लल ईप्सायाम्। अस्मादुणादयो बहुल ( ३।३।१ ) मित्याटप्रत्ययः। तेन ललाटशब्दो मध्योदात्तः। शितिपाद इति। शितिः पाद इत्यत्र समासस्वर एव भवति। शितिभसदिति। शृदृभसोऽदिरिति ( उण्, १।१२७ ) भसच्छब्दो व्युत्पाद्यते। ततोऽय-मन्तोदात्तः।

## १३९ । गतिकारकोपपदात् कृत् ।

प्रकारकः प्रहारक इति ण्वुल् । प्रकरणमित्यादिषु ल्युट् । ईषत्कर इत्यादिष्वीषद्दुःसुष्विति खल् (३।३।१२६) । यदत्राव्ययपूर्वपदं तत्र तत्पुरुषे तुल्यार्थेत्यादिना (६।२।२) प्राप्तेऽव्ययस्वरे तदपवादार्थं वचनम् । अन्यत्र तु समासस्वरे प्राप्ते । प्रकारक इत्यादौ तु कुगतिप्रादय (२।२।१८) इति समासः । कारकादिति । षष्ठी तु कर्त्तृकर्मणोः कृतीति (२।३।६५) कर्मणि कारके वेदितव्या । इध्मादयो हि व्रश्चनक्रियाया व्याप्तुमिष्टतमत्वात् कर्मभावमनुभवन्ति । ईषत्कर इत्यादौ तूपपदमतिङिति (२।२।१९) समासः । तत्र प्रशब्द उपसर्गाश्चाभिवर्जमित्याद्युदात्तः ( फिट्, ८० ) । इध्मशब्दो हि इषियुधीन्धीत्यादिना (उण्, १।१४२) मक्प्रत्ययान्तत्वादन्तोदात्तः । शो तनूकरणे । पलं श्यतीत्यातोऽनुपसर्गे कः (३।२।३) । पलाशः कृत्स्वरेण थाथादिस्वरेण वान्तोदात्तः । शदेर्णिजन्तस्य शदेरगतौ त इति (७।३।४२) तकारे कृते ल्युटि शातन इति भवति । श्मनि श्रयतेर् डुन्निति (उण्, ५।७०६) नित्स्वरेण श्मश्रुशब्द आद्युदात्तः । कृपू सामर्थ्ये इत्यस्य ल्युटि कृपो रो ल इति (८।२।१८) लत्वे कृते कल्पन इति भवति । ईषच्छब्दोऽन्तोदात्तः । स्वरादिषु तथाभूतेषु तथाभूतस्यैव पाठात् । सुदुरावाद्युदात्तौ । प्रादिषु तथाभूतयोः पाठात् । सर्वत्रैवात्र लित्स्वर इति । स पुनः प्रत्ययात् पूर्वस्योदात्तत्वम् । देवदत्तस्येति शेषलक्षणा षष्ठीति । कर्मणि षष्ठीत्वं निराकरोति । कर्मषष्ठ्यां ह्यस्यां कारकमेव देवदत्तःस्यात् । तथाच प्रत्युदाहरणं नोपपद्यते । अथ कारकग्रहणं किमर्थम् ? निर्गतः कौशाम्ब्या निष्कौशाम्बिरित्यत्र मा भूदिति चेत् ? नैतदस्ति । तथाहि यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति । नहि कौशाम्बीशब्दः क्रियावाची । तत् कुतस्तं प्रति निसोऽत्र गतिसंज्ञेत्यत आह कृद्ग्रहणं विस्पष्टार्थमिति । यदि तर्हि कृद्ग्रहणं क्रियते प्रपचतितरामित्यत्र प्रकृतिस्वरो न प्राप्नोति । ततश्च समासस्वरं बाधित्वाव्ययस्वर एव स्यादित्यत आह प्रपचतितरामित्यादि । अत्र हि पचतिशब्दादतिशयविवक्षायां तरप्तमपौ । ततस्तरबाद्यन्तेन कुगतिप्रादय इति (२।२।१८) प्रशब्दस्य समासः । समासे तु

कृते पूर्वपदस्य तत्पुरुषे तुल्यार्थेत्यादिना (६।२।२) प्रकृतिस्वरः। पश्चात् किमेत्तिङव्ययादिनामुः ( ५।४।११ )। आमन्तस्य चाद्युदात्तश्चेति (३।१।३) प्रत्ययस्वरः प्राप्तः। सोऽव्ययस्वरे सति भवतीति सतिशिष्टः। सतिशिष्टस्य च बलीयस्त्वमुक्तम्। तेन यद्यप्यनेनामन्तस्य कृद्ग्रहणे क्रियमाणे सति प्रकृतिस्वरो भवति तथाप्यामुस्वरो भवत्येव। तस्य सतिशिष्टत्वात्। अथ कथं तरबाद्यन्तेन समासः? कथञ्च न स्यात्? गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति वचनात्। नैष दोषः। अत्र हि द्वे दर्शने। गतिकारकोपदात् कृद्भिरेव समासो भवति। स च प्राक् सुबुत्पत्तेरित्येकं दर्शनम्। गतिकारकोपपदानामविशेषेण समासो भवति। कृद्भिस्तु प्राक् सुबुत्पत्तेरिति द्वितीयम्। तत्र द्वितीये दर्शने युज्यत एव तरबाद्यन्तेन समासः। तत्र कृद्ग्रहणं विस्पष्टार्थमित्यनेन सम्बद्धम्। एक आचार्याः कृद्ग्रहणं विस्पष्टार्थमित्येव व्याचक्षत इत्यर्थः। प्रपचतिदेश्याद्यर्थं त्वित्यादि। तुशब्दः पूर्वस्माद् व्याख्यानाद् विशेषद्योतनाय। प्रपचतिदेश्य आदि यस्य स प्रपचतिदेश्यादिः। आदिशब्देन प्रपचतिदेशीय इत्यस्य ग्रहणम्। प्रपचतिदेश्यादावर्थः प्रयोजनं यस्य तत् प्रपचतिदेश्याद्यर्थम्। कृद्ग्रहणं इष्यत इति। एवमीषदसमाप्तौ कल्पब्देश्यदेशीयर इत्यत्र ( ५।३।६७ ) तिङश्चेत्यनुवृत्तेः ( ५।३।५६ ) प्रपचतिशब्दाद् देश्यदेशीयरौ। तदन्तेन च प्रशब्दस्य गतिसमासे कृद्ग्रहणं न क्रियेत तथा प्रपचतिदेश्यः प्रपचतिदेशीय इत्यत्राप्युत्तरपदस्य प्रकृतिस्वरः स्यात्। न चेष्यते। तस्मादिह मा भूदित्येवमर्थं कृद्ग्रहणं इष्यत एव। तस्मादेतत्र विस्पष्टार्थम्। तदपि तु प्रपचतिदेश्य इत्यादौ तु विषये मा भूदित्येवमर्थमित्यभिप्रायः।

## १४०। उभे वनस्पत्यादिषु युगपत्।

वनशब्दो नब्विषयस्यानिसन्तस्येत्याद्युदात्तः ( फिट्, २६ )। पतिशब्दोऽपि प्रत्ययस्वरेण। स हि पातेर्डतिरिति ( उण्, ४।४८७ ) डतिप्रत्ययान्तः। बृहदित्यन्तोदात्तमित्यादि। बृहच्छब्दो वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्चेति ( उण्, २।२४१ ) केवलमन्तोदात्तो यद्यपि निपात्यते तथापि बृहस्पतिरित्यत्राद्युदात्तत्वं निपातयति। तनोतेरौणादिक अप्रत्यय इति।

कषिचमितनिधनिसर्जिखर्जिभ्य ऊरित्यनेन ( उण्, १।८१ ) तनूशब्दोऽन्तोदात्तः । न पाति न पालयतीत्यनेन पा रक्षण इत्यस्मान्नपादित्येतन्निपात्यतइति दर्शयति । न पातयतीत्यनेनापि । नलोपो नञ (६।३।७३) इति नलोपः प्राप्नोति । न भ्राण्नपादित्यादिना (६।३।७५) प्रकृतिभावान्न भवति । नरा अस्मिन्नासीनाः शंसन्तीति । एतेनाधिकरणसाधनं शंसशब्दं दर्शयति । एवं शंसन्तीत्यनेनापि कर्म्मसाधनम् । शंस स्तुतावित्यस्मादकर्त्तरि च कारके (३।३।१९) इति घञ् । अवन्त इति । ऋदोरबित्यनेन (३। ।५७) । शुनः शेपइति । बहुव्रीहिरयम् । तेनात्र पूर्वपदस्य प्रकृतिभावे प्राप्ते वचनम् । उभावाद्युदात्ताविति । तत्र श्वन्शब्दः श्वन्नुक्षन्नित्यादिना ( उण्, १।१५७ ) कनिन्प्रत्ययान्तो व्युत्पाद्यते । शेपशब्दो वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् ( उण्, ४।६४० ) चेत्यसुन्प्रत्ययान्तो व्युत्पाद्यते । तेन द्वावपि तावाद्युदात्तौ । शण्डपर्कशब्दाविति । शडि रुजाया मित्यस्य घञि शण्ड इति भवति । पृचो सम्पर्क इत्यस्यापि तत्रैव पर्कइति भवति (Q) । तृष्णाशब्द आद्युदात्त इति । सहि तृषेर्निष्ठायां व्युत्पाद्यते । तेन निष्ठा च द्व्यजनादि-(६।२।२०६) त्याद्युदात्तः । वस्वशब्द इति । लवि अवस्रंसने । अस्य पचाद्यचि व्युत्पादितत्वादस्मादेव निपातनाद्वत्वम् । विश्ववयःशब्द इति । विश्वं वयो यस्येति बहुव्रीहिः । तत्र बहुव्रीहौ विश्वं संज्ञायामिति (६।२।२०६) विश्वशब्दोऽन्तोदात्तः । तयोरिति । वस्वविश्ववयःशब्दयोः । मृडो विच्प्रत्यय इति । विजुपे छन्दसीत्यतो (३।२।७३) विजित्यनुवर्त्तमानेऽन्येभ्योऽपि दृश्यत इति विच् (३।२।१७८) । मृत्युशब्दोऽन्तोदात्त इति । भुजिमृङ्भ्यां युक्त्युकाविति ( उण्, ३।२०१ ) त्युक्प्रत्ययान्तत्वात् । द्वन्द्वानामित्यादि । येऽत्र द्वन्द्वा स्तेषामदेवताद्वन्द्वार्थः पाठः । देवताद्वन्द्वे हि देवताद्वन्द्वे चेत्यनेनैव (६।२।१४१) सिद्धम् । अनुदात्ताद्युत्तरपदार्थश्चेति । द्वन्द्वानां पाठः । यदि हि तेषामिह पाठो न स्यात् तदा नोत्तरपदेऽनुदात्ताविति प्रतिषेधादन्तोदात्तत्वं स्यात् (६।२।१४२) ।

---

(Q) मुद्रितकाशिकायां शण्डामर्काविति पाठः । मिश्रेण स एवानुसृतः ।

## १४१। देवताद्वन्द्वे च।

इन्द्रासोमाविति। देवताद्वन्द्वे चेति पूर्व्वपदस्यानङ् (६।३।२६)। ऋज्रेन्द्रेत्यादि। ऋत्वृधिवपिभ्यां रन्नित्यतो (उण्, २।१८५) रन्नित्यनुवर्त्तमान ऋज्रेन्द्रेतीन्द्रशब्दो (उण्, २।१८६) रन्प्रत्ययान्तो निपात्यते। तेनाद्युदात्तः। सोमइति मन्प्रत्ययान्त इति। तेन सोऽप्याद्युदात्तएवेत्यभिप्रायः। मन्प्रत्ययान्तत्वञ्च तस्य षुञ् अभिषव इत्यस्मादर्त्तिस्तुसुहु्स्रित्यादिना (उण्, १।१३७) मन् प्रत्ययमुत्पाद्य व्युत्पादितत्वात्। वरुण उनन्प्रत्ययान्त इति। कृवृदारिभ्यउनन्निति (उण्, ३।२३३)। बृहस्पतिशब्दो हि वनस्पत्यादिषु पठ्यते। तत्र च पूर्वोत्तरपदयोर्युगपदाद्युदात्तत्वं विधीयते। तेन द्वावुदात्तौ। तेनेन्द्राबृहस्पती इत्यत्र त्रय उदात्ता इति। इन्द्रशब्दाद्यादयः। प्लक्षन्यग्रोधाविति। अत्र समासान्तोदात्तत्वमेव भवति। एवमग्निष्टोम इत्यत्रापि। षष्ठीसमासश्चायम्। समासस्वरापवादो योगः।

## १४२। नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु।

अग्निवायुशब्दावन्तोदात्ताविति। अग्निशब्दो वीज्याज्वरिभ्यो निरिति (उण्, ४।४८७) वर्त्तमानेऽङ्गेर्नलोपश्चेति (उण्, ४।४९०) निप्रत्ययान्तः। वायुशब्दोऽपि कृपाजीत्यादिनोण्प्रत्ययान्तः (उण्, १।१)। तेन प्रत्ययस्वरेण द्वावप्यन्तोदात्तौ। अथोत्तरपदग्रहणं किमर्थम्? यावतानुदात्ताविति सप्तम्येवात्रानुदात्तादेरपदत्वं बोधयिष्यतीत्यत आह उत्तरपदग्रहणमित्यादि। इह हि प्रकरणे द्वन्द्वः सप्तम्या निर्दिष्टः। नोत्तरपदम्। तत्रानुदात्ताविति सप्तमी द्वन्द्वस्यैव विशेषणमापद्यते। अनुदात्तादौ द्वन्द्वे स्वरोऽयं न भवतीति। ततश्चेह प्रतिषेधः स्याच्चन्द्रसूर्य्याविति। चन्द्रशब्दस्यान्तोदात्तत्वादनुदात्तादिरयं द्वन्द्वः। उत्तरपदग्रहणे तु सति द्वन्द्वे सप्तम्यां विहितायामनुदात्ताविव्येतदुत्तरपदस्य विशेषणं सम्पद्यते। तस्मादुत्तरपदविशेषणमेतद् यथा स्याद् द्वन्द्वविशेषणं मा भूदित्येवमर्थमुत्तरपदग्रहणम्। अनुदात्तादाविति। असत्येतस्मिन् विशेषणे विधिरपि देवताद्वन्द्व उच्यते प्रतिषेधोऽपि। ततश्च तयोर्विषयविभागो न स्यात्। एवञ्च समानविषयत्वाद्विकल्पः प्रसज्येत।

अनुदात्तादावित्यस्मिंस्तु सति यत्रानुदात्ताद्युत्तरपदो देवताद्वन्द्वस्तत्र प्रतिषेधः स्यात् । ततोऽन्यस्तु विधिरिति विधिप्रतिषेधयोर्विषयविभागो भवति । अतो विषयविभागार्थमनुदात्तादावित्युच्यते । पृथिवीशब्दो ङीष् प्रत्ययान्त इति । गौरादिषु पाठात् । रोदेर्णिलुक् चेति । रुदिर् अश्रुविमोचन इत्यस्मादस्मात् स्फायितञ्चीत्यादि- ( उण्, २।१७० ) सूत्राद्रगित्यनुवर्त्तमाने रोदेर्णिलुक् चेति ( उण्, २।१७९ ) रक् । तेन रुद्रोऽन्तोदात्तः । शुक्रामन्थिनाविति । शुक्रशब्द ऋज्रेन्द्रेत्यादिना ( उण्, २।१८६ ) रन्-प्रत्ययान्तः । तेनाद्युदात्तः ।

१४३ । अन्तः ।

१४४ । थाथघञ्क्ताजबित्रकाणाम् ।

अत्र कृदुत्तरपदप्रकृतिस्वरत्वेनाद्युदात्तमुत्तरपदं स्यादिति । यदीदं नारभ्येतेति भावः । उपसर्गे वसेरित्यथप्रत्यय इति । तत्र शीङ्शपिरुगमिवञ्चीत्यादिना ( उण्, ३।२९३ ) थप्रत्ययानुवृत्तेः कृदुत्तरपदप्रकृतिस्वरत्वेन मध्योदात्तमुत्तरपदं स्यात् । दूरादागत इति । गमेः क्तः । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः ( ६।४।३७ ) । आगतशब्देन स्तोकान्तिकार्थेत्यादिना ( २।१।३९ ) समासः । पञ्चम्याः स्तोकादिभ्य ( ६।३।२ ) इत्यलुक् । शुष्क इति । शुषः क इति ( ८।२।५१ ) कादेशः । उभयत्रात्र कर्मणि निष्ठा । तत्र गतिरनन्तर ( ६।२।४९ ) इति प्राप्ते तदपवाद उत्तरपदान्तोदात्तत्वं विधीयते । यदा तु कर्त्तरि क्त स्तदा तु कृत्स्वरेणोत्तरपदस्य प्रकृतिभावे सत्यन्तोदात्तत्वं सिद्धमेव । ननु च शुषिरकर्मकः । तस्य कुतः कर्मणि निष्ठा ? अन्तर्भावितण्यर्थः सकर्मको भवतीत्यदोषः । आतपशुष्कमिति । कर्त्तृकरणे कृता बहुलमिति ( २।१।३२ ) समासः । अत्र तत्पुरुषे तुल्यार्थेत्यादिना ( ६।२।२ ) पूर्वपदं पूर्वपदप्रकृतिस्वरं स्यात् । पूर्वपदं पुनरत्र पचाद्यजन्तत्वात् कृत्स्वरेणान्तोदात्तः । प्रच्चयः प्रजय इति । एरच् ( ३।३।५६ ) । ननु च कृदुत्तरपदप्रकृतिस्वरत्वेनैवात्रोत्तरपदान्तोदात्तत्वं भविष्यतीत्यत आह चयो निवास इत्यादि । यथा चयो निवासे

( ६।१।२०१ ) जयः करणमिति ( ६।१।२०२ ) चाद्युदात्तौ क्षयजयशब्दौ भवतस्तदा क्रत्स्वरेण मध्योदात्तत्वं स्यात्। प्रलवित्रं प्रसवित्रमिति। अर्त्तिलूधूस्वनेत्यादिनेत्रः ( ३।२।१८४ )। अत्र कृत्स्वरे सति प्रत्ययस्वरं स्यात्। तेनोत्तरपदं मध्योदात्तं स्यात्। गोष्पप इति। षृषु वृषु मृषु सेचने। अत्रोपपदमतिङिति ( २।२।१९ ) समासः। गतिकारकोपपदात् कृदित्युत्तरपदाद्युदात्तत्वं स्यात्। सुस्तुतमिति। सुः पूजायाम् ( १।४।९४ )। अतिरतिक्रमणे चेति ( १।४।९५ ) स्वती कर्मप्रवचनीयसंज्ञौ। अत्राव्ययस्वरएव भवतीति। तत्पुरुषे तुल्यार्थेत्यादिना ( ६।२।२ )।

## १४५। सूपमानात् क्तः।

सुपीतमिति। घुमास्थेत्यादिसूत्रेणेत्त्वम् ( ६।४।६४ )। वृकावलुप्तमिति। लुप्लृ छेदने। शशप्लुतमिति। च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ। सिंहविनर्दितमिति। नर्द शब्दे। सर्वत्र कर्त्तृकरणे कृता बहुलमिति (२।१।३२) समासः। वृकेणेवावप्लुतमित्यादिर् विग्रहः।

## १४६। संज्ञायामनाचितादीनाम्।

उपहूत इति। ह्वेञो निष्ठा। वचिस्वपीत्यादीना ( ६।१।१५ ) संप्रसारणम्। हल ( ६।४।२ ) इति दीर्घः। परिजग्ध इति। अदो जग्धिर्ल्यप्ति कितीत्यदेर्जग्धिरादेशः ( २।४।३६ )। झषस्तथोर्धोऽध इति ( ८।२।४० ) धत्वम्। कर्मणि क्त इति। भवतेरकर्मकत्वात् कर्मनिष्ठा नोपपद्यत इति सम्भूत इति कर्त्तरीयं निष्ठेति कस्यचिद् भ्रमः स्यात्। अतस्तन्निराकरणायाह सम्भूतइति। अनेकार्थत्वाद्धातुनां भवतिरत्र प्राप्तौ वर्त्तते। ये च प्राप्त्यर्थास्ते नियोगतः प्राप्तेरव कर्मणा सकर्मका भवन्ति। यथा णीञ् प्रापणइत्येवमादयः। तस्मात् प्राप्तत्यर्थाद् भवतेः सम्भूत इत्यत्र कर्मणि क्तः। किं पुनः कारणं कर्मणि क्त इष्यत इत्याह गतिरनन्तर ( ६।२।४९ ) इत्यत्र कर्मणीत्यनुवर्त्तते। ततः किमित्याह तद्बाधनार्थं चेदमिति। गतिरनन्तर इत्यत्र हि ( ६।२।४९ ) कर्मणीत्यनुवर्त्तते। इदञ्च सूत्रं तद् गतिरनन्तर इत्यस्यैव ( ६।२।४९ ) बाधनार्थम्। एवञ्चैतद् गतिस्वरस्य बाधकं भवति यदि

कर्मणि क्तो विहितः। तदन्तस्योत्तरपदस्यानेनान्तोदात्तत्वं विधीयते। नान्यथा। तस्मात् सप्तम्यन्तत्वेन कर्मणि क्तो द्रष्टव्य इत्यभिप्रायः। धनुष्खातेति। खनु अवदारणे। जनसनखनामित्यात्त्वम् (६।४।४२)। कर्तृकरणे कृता बहुलमिति (२।१।३२) समासः। एवं कुद्दालखातेत्येवमादावपि। धनुःशब्दो नब्विषयस्यानिसन्तस्येत्याद्युदात्तः (फिट् २६)। कुद्दालशब्दो लघावन्तेत्यादिना (फिट् ४२) मध्योदात्तः। हस्तिमृदितेति। मृद क्षोदे। हस्तिशब्दो हस्ताज् (५।२।१३३) जातावितीनिप्रत्ययान्तत्वादन्तोदात्तः। आस्थापितमिति। तिष्ठतेर् णिच्। अर्त्तिह्रीत्यादिना (७।३।३६) पुक्। परिग्रहीतम्। ग्रहोऽलिटि दीर्घः (७।२।३७)। निरुक्तम्। वच परिभाषणे। वचिस्वपीत्यादिना (६।१।१६) संप्रसारणम्। चोः कुः (८।२।३०)। प्रतिपन्नमिति। पद गतौ। रदाभ्यामिति (८।२।४२ नत्वम्। प्रश्लिष्टमिति। श्लिष आलिङ्गने। उपद्रुतमिति। द्रु द्रु गतौ। स्थितमिति। द्यतिस्यतीत्यादिनेत्त्वम् (७।४।४०)। संहितेति। दधातेर्हिरादेशः।

## १४७। प्रवृद्धादीनाञ्च।

गतिस्वरे प्राप्त इदं वचनम्। प्रवृद्धमिति। वृधु वृद्धौ। प्रयुता इति। यु मिश्रणे। अवहितमिति। पूर्ववद्धातेर्हिरादेशः। खट्वारूढ इति। रुह बीजजन्मनि। झषस्तथोर्धोऽधः (८।२।४०)। ढो ढे लोपः (८।३।१३)। ढ्रलोपे पूर्वस्य दीर्घोऽणः (६।३।१११)। खट्वा क्षेप इति (२।१।२६) समासः। अस्वाङ्गे द्वितीयेति (६।२।४७) पूर्वपद प्रकृतिस्वरे प्राप्त इह पाठः। कविशस्त इति। शसु हिंसायाम्। कर्तृकरणे कृता बहुलमिति (२।१।३२) समासः। अत्रापि तृतीया कर्मणीति (६।२।४८) पूर्वपदप्रकृतिस्वर एव। यानादीनामिति। आदिशब्देन वृषादीनां ग्रहणम्। यानादीनामर्थानां य इह पाठः स प्रवृद्धादीनां यानादिष्वर्थेषु प्रायो बाहुल्येन या वृत्तिस्तस्याः प्रदर्शनार्थम्। ननु प्रवृद्धस्य यानवृषलयोरेवार्थयोरन्तोदात्तत्वं भवति। प्रयुतशब्दस्य संकुब्धेवेतीत्येवमादिषु विषयनियमार्थः। तेन किं भविष्यती-

त्याह यानादिभ्योऽन्यत्रापीत्यादि। नियमविषयार्थं इत्येक इति। तेषामनेन यानादिभ्योऽन्यत्र न भवितव्यम्। असंज्ञार्थोऽयमारम्भ इति। संज्ञायां पूर्व्वेणैव सिद्धत्वात्। आकृतिगणश्च प्रव्रज्यादिर्द्रष्टव्य इति। कुत एतत्? आकृतिगणतां तस्य सूचयितुमनुक्तसमुच्चयार्थस्य चकारस्येह करणात्। आकृतिगणत्वे यत् सिद्धं भवति तत् दर्शयितुमाह पुनरुत्स्यूतं वास इत्यादि। षिवु तन्तुसन्ताने। च्छ्वोः शूडनुनासिके चेत्यूट् ( ६।४।१९ )। यणादेशः। पुनर्निष्कृत इति। इदुदुपधस्य चाप्रत्ययस्येति ( ८।३।४१ ) विसर्जनीयस्य षत्वम्।

## १४८। कारकाद् दत्तश्रुतयोरेवाशिषि।

देवदत्त इति। आशिषि लिङ्लोटाविति (३।३।१७३) वर्त्तमाने क्तिच् क्तौ च संज्ञायामिति ( ३।३।१७४ ) क्तः। दो दद् घोरिति ( ७।४।४६ ।) ददादेशः। पूर्ववत् तृतीयासमासः। देवशब्दः पचाद्यजन्तत्वाच्चित्स्वरेणान्तोदात्तः। विष्णुशब्दोऽपि प्रातिपदिकस्वरेण। ब्रह्मशब्दो मनिन्प्रत्ययान्तत्वादाद्युदात्त इत्युक्तम्। सम्भूतो रामायण इति। कारकादित्यनुच्यमाने गतिकारकोपपदात् कृदित्यधिकाराद् (६।२।१३९) यथैव कारकान्नियमो भवत्येवं गतेरपि स्यात्। कारकग्रहणे तु सति न भवति। तेन गतेः परस्य संज्ञायामनाचितादीनामन्तोदात्तत्वं भवेदेव। अस्मिंस्तूच्यमाने सत्येष विषयो न भवति। नियमेन व्यावर्त्तितत्वात्। तृतीया कर्मणीति ( ६।२।४८ ) पूर्वपदप्रकृतिस्वर एव भवति। एवकारकरणं किमिति। सिद्धे विधिरारभ्यमाणोऽन्तरेणाप्येवकारकरणं नियमार्थो भविष्यतीत्यभिप्रायः। कारकावधारणमित्यादि। असति ह्येवकारे कारकादेवेत्येषोऽपि नियमः स्यात्। तथाचैवकारस्ततोऽन्यत्रावधारणमिति दत्तश्रुतावधारणं स्यात् कारकादेव दत्तश्रुतयोरिति। एवञ्च कारकाद् दत्तश्रुतयोरनन्तरं क्रियमाणे कारकावधारणमिष्टं भवति। न दत्तश्रुतावधारणमिष्टम्। तेनैवकारः कृतः। किं पुनः कारणं कारकावधारणमिष्यते। न दत्तश्रुतावधारणमित्याह अकारकादपि हीत्यादि। देवैः खाता देवखातेति। नात्राशीर्विद्यते। तेनाशिषीति वचनान्नियमो न भवति। ततश्च संज्ञाया-

मित्यादिनान्तोदात्तत्वं (६।२।१४६) भवत्येव। कारकाद् दत्तश्रुतयोराशि-
ष्येवेत्ययमप्यत्र नियम इति। कथं पुनरेकेन योगेन हि नियमद्वयं लभ्यते ?
एकः पुनरत्र योग इति। यथैव हि श्वेतो धावतीति कश्चित् तन्त्रेण वाक्यद्वय-
मुच्चारयति तथेहाप्याचार्य्यस्तन्त्रेण वाक्यमुच्चारितवान्। तत्रैकेन योगेन
कारकाद् दत्तश्रुतयोरेवाशिषीत्येव नियमो भवति। अपरेण तु कारकाद्
दत्तश्रुतयोराशिष्येवेत्येषः। तेनानाहतो नदति देवदत्तइत्यत्रानाशिषि न
भवति। देवदत्त इति कस्यचिच्छङ्खस्य नामेति। यदृच्छाशब्दता देवदत्तस्य
दर्शयन्नाशीरिह न दत्त इति प्रकाशयति।

## १४९। इत्थम्भूतेन कृतमिति च।

इतिकरणोऽर्थनिर्देशार्थः। आपन्न इति। प्राप्त इत्यर्थः। सुप्तप्रल
पितमिति। रप लप व्यक्तायां वाचि। अत्र सुप्तत्वं प्रकारमापन्नम्। तेन
प्रलपितं कृतम्। तत्र समासो वर्त्तते। उन्मत्तप्रलपितमिति। अत्रा-
प्युन्मत्तत्वं प्रकारमापन्नं येन प्रलपितं कृतम्। प्रमत्तगीतमिति। अत्रापि
प्रमत्तत्वं प्रकारमापन्नं तेन गीतं कृतम्। कै गै शब्दे। घुमास्थादिसूत्रे-
(६।४।६६)णेत्वम्। विपन्नश्रुतमिति। अत्रापि विपन्नत्वं प्रकारमापन्नं तेन
श्रुतं कृतम्। सर्वत्र कर्त्तृकरणे कृता बहुलमिति (२।१।३२) समासः।
तत्र सुप्तशब्दः प्रत्ययस्वरेणान्तोदात्तः। प्रलपितशब्दो यदि कर्मणि निष्ठा
ततो गतिरनन्तर (६।२।४९) इति गतिस्वरेणाद्युदात्तः। अथ भावे तत-
स्थाथादिस्वरेणान्तोदात्तः (६।२।१४४)। एवमुत्पन्नप्रकारा आपन्नविपन्नादि-
शब्दा अपि थाथादिस्वरेणैवान्तोदात्ताः। गतिरनन्तर इत्येतत् (६।४।४९)
त्विह न प्रवर्त्तते। तत्र कर्मणीत्यनुवृत्तेः। इणाकर्मकाद्धातोः कर्मणि क्त-
प्रत्ययस्यानुपपत्तेः। गीतश्रुतशब्दौ सुप्तशब्दवदन्तोदात्तौ। अथ कथमेता-
न्युदाहरणान्युपलभ्यन्ते ? यावतेत्थम्भूतेन कृतमित्येतस्मिन्नर्थे एतत् कार्य्य-
मुच्यते। नचायमत्रार्थः सम्भवति। प्रलपितादीनामकृतार्थत्वात्। प्रकृतं
प्रलपनादौ करोतेरप्रवृत्तेः। अभूतप्रादुर्भाव(R) एव हि करोतिर् वर्त्तते। न

(R) अभूतप्रादुर्भावो निष्पादनम्।

प्रलपनादौ। कस्मान्न प्रलपनादिकृतमित्येतच्चोद्यमपाकर्तुमाह कृतमिति क्रियासामान्यमित्यादि। नहि करोतिरभूतप्रादुर्भाव एव वर्तते? किं तर्हि? क्रियासामान्येऽपि। तच्च क्रियासामान्यं प्रलपनादिष्वस्ति। तेन प्रलपनाद्यपि कृतं भवति। तृतीया कर्मणीत्यस्येति। पूर्वपदप्रकृतिस्वरभाव इति। यदीत्यादिना यदा भावे निष्ठा तदास्य योगस्यानुपयोगं दर्शयति।

१५०। अनो भावकर्मवचनः।

कारकादिति वर्तते। अन इति प्रत्ययग्रहणम्। तेन प्रत्ययग्रहण परिभाषया तदन्तस्य ग्रहणं विज्ञायत इत्याह अनप्रत्ययान्तमित्यादि। ओदनभोजनमित्यादौ सर्वत्र षष्ठीसमासः। षष्ठी तु कृद्योगलक्षणा कर्मणि। राजभोजना इत्यादौ तु कर्तरि। ओदनशब्दो लघावन्त ( फिट्, ४२ ) इत्याद्युदात्तः। भोजनमित्यादिकं तूत्तरपदं लित्स्वरेणाद्युदात्तम्। पयः शब्दो नब्विषयस्येत्याद्युदात्त ( फिट्, २६ ) एव। चन्दनप्रियङ्गुकाशब्दो द्वन्द्वः। तेन समासस्वरेणान्तोदात्तः। लेपनमिति। लिप उपदाह इत्यस्यैवं रूपम्। राजशब्द उक्तस्वरः। आच्छादनशब्दश्छद अपवारण इत्यस्य रूपम्। कर्मणि च येनेत्यादिनैकेनैव ( ३।३।११६ ) योगेन भाववचनः कर्मवचनश्च ल्युड् भवतीति दर्शयति। हस्तधार्यमिति। हस्तशब्दो हसिमृग्रिण्वामिदमिपूधुर्वीभ्यस्तन्निति (उण्, ३।३६६ ) तन्प्रत्ययान्तः। तेनाद्युदात्तः। धार्यशब्दस्तु ऋहलोर्ण्यदिति (३।१।१२४) ण्यदन्तस्तित्स्वरेणान्तस्वरितः। दन्तधावनमिति। धावु गतिशुद्ध्योरित्यस्मात् करणे ल्युट्। दन्तशब्दः स्वाङ्गशिटामितरादुदात्तः ( फिट्, २९ )। निदर्शनमिति। दृशेर्भावे ल्युट्। अवलेखनमिति। अत्रापि लिखेः। सर्वेषु प्रत्युदाहरणेष्वित्यादि। एतेन गतिकारकोपपदानां कृदित्यस्यायमपवाद ( ६।२।१३९ ) इति दर्शयति।

१५१। मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः।

मन्क्तिन्निति प्रत्ययग्रहणम्। तत्र प्रत्ययग्रहणपरिभाषया ( प, २४ ) तदन्तस्य ग्रहणं विज्ञायत इत्याह मन्नन्तं क्तिन्नन्तञ्चेति। रथवर्त्मेत्यादयः षष्ठीसमासाः। रथशब्दः क्थन् प्रत्ययान्त आद्युदात्त इत्युक्तम्। वृतु वर्तन इत्यस्मान्

मनिन् । तेन वर्त्मशब्द आद्युदात्तः । शकटशब्दः पयःशब्दश्च निर्त्वादाद्युदात्तः । पाणिन्यापिशलिशब्दाविञन्तत्वात् । कृतिशब्दोऽपि क्तिन्नन्तत्वात् । करणसाधनश्चायं व्याख्यानशब्दो ल्युडन्तः । कृत्स्वरेण मध्योदात्तः । छन्दःशब्दः सर्वधातुभ्योऽसुन्निति प्रत्ययग्रहणम् ( उण्, ४।६२८ )। तत्र कृते चन्देरादेश्चछ इत्यसुन्-( उण्, ४।६५८ ) प्रत्ययान्तत्वादाद्युदात्तः । अयन्त्यनेनेत्ययनम् । ऋचामयनम् । ऋचामिति कर्मणि षष्ठी । ऋगयनशब्दः कृत्स्वरेण मध्योदात्तः । राजशयनमित्यादि । शेरतेऽस्मिन्निति शयनम् । आसतेऽस्मिन्नित्यासनम् । ताभ्यां राजब्राह्मणशब्दयोः षष्ठीसमासः । राजब्राह्मणशब्दावुक्तस्वरौ । शयनासनशब्दौ लित्स्वरेणाद्युदात्तौ । अत्र कृद्योगलक्षणा पूर्ववदेव कर्त्तरि षष्ठी । एवं गोस्थानमश्वस्थानमित्यत्रापि । गवाश्वशब्दावुक्तस्वरौ । तिष्ठत्यस्मिन्निति स्थानं लित्स्वरेणाद्युदात्तम् । ब्राह्मणयाजक इत्यादौ कृत्योगलक्षणा कर्मणि षष्ठी । याजकादिषु ये ण्वुलन्ताः पठ्यन्ते तेषु येऽनुपसर्गा याजकपूजकस्नापका इति त आद्युदात्ताः । ये तु सोपसर्गाः परिवेषकाध्यापकोद्वर्त्तकोत्सादका इति ते कृत्स्वरेण मध्योदात्ताः । होतृभर्तृशब्दौ तृन्नन्तौ प्रयोजयतः । यौ तु तृन्नन्तौ तयोः कृत्स्वरेणान्तोदात्तत्वं सिद्धम् । गोक्रीतोऽश्वक्रीत इत्यादि । कर्तृकरणे कृतेति ( २।१।३२ ) समासावेतौ । क्रीतशब्दः प्रत्ययस्वरेणान्तोदात्तः । कृत्स्वरापवादो योग इति । क्रीतशब्दादनेषु । मन्क्तिन्व्याख्यानादिषु । क्रीतशब्दे तु तृतीया कर्मणीत्यस्येति ( ६।२।४८ )। पूर्वपदप्रकृतिस्वरस्य व्याख्यानशयनस्थानानामभावकर्मार्थं ग्रहणमिति । भावकर्मवचनस्थानत्वस्यानो भावकर्मवचन ( ६।२।१५० ) इत्यनेनैव सिद्धत्वात् । प्रकृतिः प्रकृतिरिति । अत्र तत्पुरुषे तुल्यार्थेत्यादिना ( ६।२।२ ) (S) पूर्वपदस्य प्रकृतिस्वरत्वमेव भवति । गतिसमासावेतौ ।

## १५२ । सप्तम्याः पुण्यम् ।

अध्ययनपुण्यमित्यादि । अध्ययनशब्दो ल्युडन्तः कृत्स्वरेण मध्योदात्तः ।

---

(S) गादौ च कृति नित्यत्वाचि-( ६।२।५० ) त्यनेनेति तु मिश्रः ।

पुच्छं नञ्विषयस्येत्याद्युदात्तम् (फिट्, २६)। विद्यतेऽनेनेति वेदः। घञ्। तेन वेदशब्द आद्युदात्तः। तत्पुरुषे तुल्यार्थेत्यादि। एतदुणादयोऽव्युत्पन्नानि प्रातिपदिकानीत्येवं पक्षमाश्रित्योक्तम्। इदानीं व्युत्पत्तिलक्षणमाश्रित्याह उणादीनां त्वित्यादि। व्युत्पत्तिपक्षे हि पुच्छशब्दः पूङो यण् धुग् ह्रस्वश्चेति (उण्, ५।६९३) यत्प्रत्ययान्तो व्युत्पाद्यते। तत्र यदीदं नारभ्येत तदा गतिकारकेति (६।२।१३९) कृत्स्वरेणाद्युदात्तोऽध्ययनमित्यादौ पुच्छशब्दस्य स्यात्। तस्मात् तदपवादोऽयमन्तोदात्तविधिरित्यभिप्रायः। वेदेन पुच्छं वेदपुच्छमिति। व्युत्पत्तिपक्षे तृतीयेति (२।१।३०) योगविभागात् समासः। पूर्वपदप्रकृतिस्वरत्वञ्च। अव्युत्पत्तिपक्षे कर्तृकरणे कृतेति (२।१।३२) समासः। कृत्स्वरेण पुच्छशब्दस्याद्युदात्तत्वञ्च।

## १५३। ऊनार्थकलहं तृतीयायाः।

माषोनमिति। पूर्वसदृशेत्यादिना (२।१।३१) तृतीयासमासः। एवं कार्षापणोनमित्यादावपि। कष खष शिष जष झष शष वष मषेत्यस्माद् घञ्। तेन माषशब्द आद्युदात्तः। इण्सिञ्जिदीङ्युष्यविभ्यो नगिति (उण्, ३।२।८२)। तेनोनशब्दोऽन्तोदात्तः। कार्षस्यापणः कार्षापणः। कार्षापणशब्दः समासस्वरेणान्तोदात्तः। विगतः कलोऽस्येति विकलः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन विकलशब्द आद्युदात्तः। असिकलह इति। अचइरिति वर्त्तमाने (उण्, ४।५७८) खनिकष्यज्यसीत्यादिना (उण्, ४।५७९) सिरन्तोदात्तः। कल गतौ। अस्मात् पचाद्यच्। कलयतीति कलः। कलं हन्तीत्यन्येष्वपि दृश्यत इति (३।२।१०१) डः। तेन कलहशब्दोऽन्तोदात्तः। अत्र केचिदित्यादि। तदर्थे इति स्वरूपग्रहणम्। एवं सत्यूनशब्देऽपि स्वरूपग्रहणम् प्रसज्येत। ततश्च तदर्थानामन्येषां ग्रहणं न स्यादित्यत आह ऊनशब्देनेत्यादि। ऊनशब्दोऽन्यमतानां विशेषं दर्शयति। अन्ये ह्यर्थग्रहणे नानर्थकानां ग्रहणं भवतीति मन्यन्ते। केचिदूनशब्देनैवार्थनिर्देशार्थेनार्थनिर्देशः प्रयोजनं यस्य स तथोक्तः। शब्दप्रधाने हि निर्देशे स्वरूपं ग्रहणं भवतीत्युक्तम्। इह चोन इत्यर्थप्रधाननिर्देशः।

तेनोनशब्दोऽर्थनिर्देशार्थ इत्याहुः । तस्मात् तेनैव तदर्थानां ग्रहणम् । इति-करणो हेतौ । यस्मादूनशब्देनैवार्थनिर्देशार्थेन तदर्थानां ग्रहणं तस्मादत्र केचिदर्थ इतिस्वरूपग्रहणमिच्छन्ति । धान्यार्थ इति । तृतीया तत्कृतार्थेनेति समासः ( २।१।३० ) । धन धान्ये । अस्माद्यत् । धान्यमन्तस्वरितम् । अथ धाने साधु धान्यम् । प्राग्घिताद् यत् ( ४।४।७५ ) । तेन यतोऽनावइति ( ६।१।२१३ ) धान्यमाद्युदात्तम् । अत्रार्थशब्दो ग्रामादीनाञ्चे-( फिट्, २८ ) त्याद्युदात्तः । तृतीयाग्रहणं किमर्थम् ? अनूनमकलह इत्यत्र मा भूदिति चेन्नैतदस्ति । इह हि प्रतिपदोक्तपरिभाषयो-( प, ११४ ) नार्थकलहादीनां प्रतिपदोक्तो यः समासः स एव परिगृह्यते । तत् किमनूनमकलह इत्येतन्नि-वृत्त्यर्थेन तृतीयाग्रहणेनेत्यत आह प्रतिपदोक्तत्वादित्यादि । गतार्थम् ।

## १५४ । मिश्रञ्चानुपसर्गमसन्धौ ।

गुड़मिश्रा इति । पूर्ववत् पूर्वसदृशेत्यादिना समासः ( २।१।३१ ) । गुड़शब्द इगुपधेति ( ३।१।१३५ ) गुड़ रक्षायामित्यस्मात् कः । तेना-न्तोदात्तः । स्फायितञ्चीत्यादिना ( उण्, २।१७० ) रग् विधीयमानो बहुलवचनान् मिश्रेरपि रग् भवति । तेन मिश्रशब्दोऽन्तोदात्तः । तिलशब्द स्तृणधान्यानाञ्च द्व्यषामित्याद्युदात्तः ( फिट्, ४६ ) । प्रमिश्रं सम्मिश्र-मित्यस्य प्राप्नोति । अतस्तन्निवृत्तयेऽनुपसर्गग्रहणं क्रियत इत्याह इहेत्यादि । अथवा मिश्रशब्देन तृतीयासमास उच्यमानः कथं नोपसर्गे लभ्यत इत्याह इहेत्यादि । यदि तदिहानुपसर्गग्रहणं क्रियते तर्ह्यन्यत्र मिश्रशब्दग्रहणे सोपसर्गस्य ग्रहणं नास्तीतीहानुपसर्गग्रहणमनर्थकं स्यात् । तेनेतज्ज्ञादि ज्ञापनस्य प्रयोजनं दर्शयति । ब्राह्मणमिश्रो राजेति । पूर्वसदृशेतज्ञादिनैव ( २।१।३१ ) समासः । ब्राह्मणैः सह संहत इत्यनेन प्रत्युदाहरणे सन्धिं दर्शयति । ऐकार्थ्यमापन्न इति । अनन्तरोक्तमेवार्थं विस्पष्टीकरोति । एकोऽर्थो यस्य स एकार्थः । तद्भाव ऐकार्थ्यम् । तदापन्नः प्राप्त इत्यर्थः । कथं पुनर्ज्ञायते सन्धिशब्दस्यायमर्थ इत्याह सन्धिरितीत्यादि । पणबन्धः प्रतिभाषणं यदि मे भवानिदं कुर्य्यात् ततोऽहमपि भवत इदं करिष्यामी-

त्वेवंजातीयकम्। तेन पणबन्धेन यदैकार्थ्यं तत् सन्धिरुच्यते। तस्मात् प्रत्युदाहरणे सन्धौ सति ब्राह्मणैः सह संहित ऐकार्थ्यमापन्न इत्ययमर्थो विज्ञायते। केचित् पुनराहुरित्यादि। गृह्यमाणो विशेषो यस्यां प्रत्यासत्तौ सा गृह्यमाणविशेषा। सन्धिरिति केचिदेवमाहुः। तत्रैव स्यात्। एवंविधः सन्धिःप्रत्युदाहरणे नास्तीत्यत आह अत्र राज्ञो ब्राह्मणैः सहेत्यादि। यद्यपि राज्ञा ब्राह्मणैः सह प्रत्यासत्ति र्देशसामीप्यमस्ति तथापि सत्यामपि तस्यां मूर्त्तिविभागो मूर्त्तिविशेषो राज्ञो ब्राह्मणानाञ्च गृह्यत इत्येव। इतिकरणो हेतौ। यत एवं तेन ब्राह्मणैः सह मिश्रो राजेति प्रत्युदाह्रियते। उदाहरणेष्वपि विभागापत्तिरेवेति। एतेन गुड़मिश्रा इत्यादौ तु सन्धेरभावं दर्शयति। यथाहि विलीनेन मिश्रा धानादयो भवन्ति तथास्य गुड़ाः। तेषां च मूर्त्तिविभागो न गृह्यते। न तत्र सन्धेः। अविभागापत्तिरिति। न विभागोऽविभागः। तस्यापत्तिः प्राप्तिः। यदा पणबन्धेनैकार्थ्यं सन्धिस्तदोदाहरणेषु तस्याभावो वेदितव्यः। सहि परिभाषणविशेषणलक्षणः। न चासौ गुड़मिश्रेषु धानास्वचेतनेषु विद्यते। तस्य प्राणिधर्मत्वात्।

## १५५। नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः।

सम्पाद्याद्यर्था स्तद्धिता इति। तद्धितप्रत्ययाः। तस्मात् प्रत्ययग्रहणपरिभाषया (प, २४,) तदन्तविधिर्विज्ञायते। गुणप्रतिषेध इति। यस्मिन् वाक्यार्थे तद्धित उत्पद्यते स तद्धितस्य प्रवृत्तिनिमित्तं विधीयते। यथोक्तम्— उपकारि सिद्धमङ्गम्। साध्योऽनुपकारकस्त्वङ्गीति। अङ्गि गुण इति पर्य्यायावेतौ। गुणस्य प्रतिषेधो गुणप्रतिषेधः। एतच्च नञो विशेषणं गुणप्रतिषेधे चेन्नञ् वर्त्तत इत्यर्थः। कार्णवेष्टकिकमिति। कर्णवेष्टकाभ्यां शोभत इत्यर्थः। सम्पादिनीति ( ५।१।९९ ) प्राग्वते ठञ् ( ५।१।१८ )। न कार्णवेष्टकिकमकार्णवेष्टकिकमिति। अत्र कर्णवेष्टकाभ्यां सम्पद्यत इति वाक्यार्थे तद्धितान्तस्य प्रवृत्तिनिमित्तं यो गुण स्तस्य प्रतिषेधेन नञ् वर्त्तते। तत् पुनः प्रवृत्तिनिमित्तत्वम्। छैदिक इति। छेदमर्हतीति। आर्हादगोपुच्छेत्यादिना (५।१।१९) ठक्। वत्सीय इति। प्राक् क्रीताच्छः (५।१।१)।

सान्तापिक इति। तस्मै प्रभवति सन्तापादिभ्य इति (५।१।१०१) प्राग्वते ठञ् (५।१।१८)। विगार्दभरथिक इति। तदर्हतीत्यार्हीय ठञ् (५।१।६३)। विशब्देन प्रादिसमासः। विशब्दोऽयमिह गार्दभरथिक इत्यस्य गुण-प्रतिषेधे वर्त्तते। अत्र तत्पुरुषे तुल्यार्थेत्यादिना (६।२।२) पूर्वपदस्य प्रकृति-स्वर एव भवति। एव मुत्तरत्रापि। नञ्यसत्यस्मिन् प्रत्युदाहरणेऽपि यत् पूर्वपदं तस्य प्रकृतिस्वरः प्रत्युदाहार्यः। गार्दभरथिकादन्योऽगार्दभरथिक इति। अत्र गार्दभरथिकादन्यत्र नञ् वर्त्तते। नतु गार्दभरथिकत्वस्य प्रतिषेधे। पर्य्युदासत्वादस्य। गुण इति तद्धितार्थप्रवृत्तिनिमित्तमित्यादि। तद्धितार्थः कर्णवेष्टकाभ्यां सम्पादीतेत्यवमादिवाक्यार्थः। तत्र यत् प्रवृत्तिनिमित्तं तद्धि-तान्तस्य शब्दस्य सम्पादित्वादि तद् गुण इत्युच्यते। आदिशब्देन तदर्हत्वादेर् ग्रहणम्। तद्धितान्तमलमर्थञ्च परिच्छिनत्ति। तत्प्रतिषेध इत्यादि। तस्य प्रतिषेधो यत्र समास उच्यते तत्रायं विधिः। कथं तस्य गुणस्य प्रतिषेध उच्यत इत्याह कर्णवेष्टकाभ्यां न संपादि (T) मुखमिति। एतेन सर्वेण प्रसज्य-प्रतिषेधेऽयं विधि र्न पर्य्युदास इति दर्शयन्नगार्दभरथिक इत्यत्र प्रत्युदाहरणे ऽस्य विधेरभावं दर्शयति। पाणिनीयमिति। वृद्धाच्छः (४।२।११४)। अपाणिनीय इति। अत्राध्येतव्यर्थे य स्तद्धित स्तदन्तमुत्तरपदम्। न सम्पाद्य र्हहितालमर्था ये तद्धिता स्तदन्तम्। वोढ़ेति। पूर्ववत्धत्वष्टुत्वढलोपा विधेयाः। सहिवहोरोदवर्णस्येतयोत्त्वम् (६।३।११२) अवोढ़ेति। अत्रार्हार्थी य कृदन्तः स उत्तरपदम्। तेन तद्धितग्रहणादन्तोदात्तत्वमुत्तरपदस्य न भवति। अव्ययपूर्वपदप्रकृतिस्वर एव भवति। पूर्वपदप्रकृतिस्वरापवादो योगः। एवमुत्तरेऽपि योगा द्रष्टव्याः। प्राग्बहुव्रीहाविदमेतदि-(६।२।१६२) त्यादियोगात्।

## १५६। ययतोश्चातदर्थे।

पाश्येति। प्रत्ययस्वरेणान्तोदात्तत्वम्। अदन्त्यमिति। यतोऽनाव इत्याद्युदात्तत्वम् (६।१।२१३)। एवं कर्ण्यमित्येतदपि तद्वदेवाद्युदात्तम्।

---

(T) सम्पादि शोभनमित्यर्थः।

पाद्यमिति। पादार्घाभ्यांचेति (५।४।२५) यत्। दन्त्यादन्यददन्त्यमिति। अत्र दन्त्यादन्यत्र नञ् वर्त्तते। नतु तदन्तस्य प्रतिषेधे। अदेयमिति। अर्ह-कृत्यतृचश्चेत्यचार्हार्थे (३।३।१३९) यत्। ईद् यतीतीत्वम् (६।४।६५)। अथेह कस्मान्न भवति वामदेवेन दृष्टं साम वामदेव्यमित्यत आह निरनुबन्ध-केत्यादि। गतार्थम्।

## १५७। अच्कावशक्तौ।

अपच इति। पचाद्यच्। अविक्षिप इति। इगुपधज्ञाप्रीकिरः कः (३।१।१३५)। अपचोऽदीक्षित इत्यादि। दीक्षितपरिव्राजकौ शास्त्रे प्रतिषिद्धत्वान्न पचतः। नत्वशक्तत्वात्। तेनात्र व्रतं गम्यते। नत्वशक्तिः।

## १५८। आक्रोशे च।

अत्राक्रोशे दोषवचनमाक्रोशः। अगम्यमानायामप्यशक्तौ यथा स्यादिति वचनम्।

## १५९। संज्ञायाम्।

अदेवदत्तोऽयज्ञदत्त इति। देवदत्तयज्ञदत्तशब्दावन्तोदात्तौ। प्राति-पदिकस्वरेण। यो देवदत्तः संस्तत् कार्य्यं न करोति स एवमाक्रुश्यते। एवमविष्णुमित्र इत्यत्रापि वेदितव्यम्।

## १६०। कृत्योकेष्णुच्चार्वादयश्च।

कृत्य उक इष्णुजिति प्रत्ययग्रहणम्। तत्र प्रत्ययग्रहणपरिभाषया (प,२४) तदन्तोपस्थानं भवति। चार्वादीनि प्रातिपदिकान्येव। अकर्त्तव्यमिति। यदा तव्यदन्तस्तदा कर्त्तव्यशब्दोऽन्तस्वरितः। यदा तव्यान्तस्तदा मध्योदात्तः। अकरणीयमिति। अनीयर्प्रत्ययान्तत्वादुपोत्तमं रितीति (६।१।२१७) रित्स्वरेण मध्योदात्तः करणीयशब्दः। अनागामुकमनपलाषुकमिति। लषपतपदेत्यादिनोकञ् (३।२।१५४) आगामुकापलाषुकशब्दौ कृत्स्वरेण मध्योदात्तौ। अनलङ्करिष्णुरिति। अलंकृञित्यादिनेष्णुच् (३।२।१३६)। अलङ्करिष्णुशब्द श्चित्स्वरेणान्तोदात्तः। एवं निराकरिष्णुशब्दोऽपि। एकानुबन्धकग्रहणपरिभाषयेष्णुज्ग्रहणे (प, ८२) द्व्यनुबन्धकस्य खिष्णुचो

ग्रहणेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अत स्तन्निरा-कर्त्तुमाह इष्णुज्ग्रहणे कर्त्तरि भुवः खिष्णुजित्यस्य (३।२।५७) इत्यनुबन्धक-स्यापि ग्रहणं भवतीति वक्ष्यमाणेन सम्बन्धः। अत्रैव कारणमाह इकारादे-र्विधानसामर्थ्यादिति। खिष्णुच इकारादेर्विधानस्यैतदेव प्रयोजनमिह सूत्रे सामान्येन ग्रहणं यथा स्यात्। अन्यथा तदपार्थकं स्यात्। उदात्तत्वाद् भवतेः। ततः परस्य खिष्णुच इटैवेकारादित्वात्। अचारुरित्यादि। दृसनिजनिचरिचटिभ्यो ञुनिति (उण्, १।३) ञुण्। तेनाद्युदात्त-श्चारुशब्दः। साधुशब्दोऽन्तोदात्तः। कृवापेत्यादिनोण् (उण् १।१) प्रत्ययान्तत्वात्। युधा चरति यौधिकः। प्राग्वहतेष्ठक् (४।४।१)। कित इत्यन्तोदात्तः (६।१।१६५)। अनङ्गमेजय इति। अव्ययस्वरेणाद्युदात्तः। अत्र द्वितीये नञ्समासे समासान्तोदात्तत्वमिति नञ्समासः स्यात्। अत्रापीत्यादि। कस्माच्छब्दस्य नञ उत्तरस्याद्युदात्तत्वविधानात्। अत्रापि द्वितीयेन नञ्समासेनान्तोदात्तत्वमिति। वर्त्तमान वर्द्धमान इत्येवमादयः शानजन्तत्वादन्तोदात्ताः। विकारसदृशशब्दः समासस्वरेणान्तोदात्तः। गृहपतिकशब्दः संज्ञायां कनिति (५।३।८७) कन्नन्तत्वादाद्युदात्तः। वदेरान्यो (उण् ३।२८४) वदान्यशब्दः प्रत्ययस्वरेण मध्योदात्तः।

## १६१। विभाषा तृन्नन्नतीक्ष्णशुचिषु।

तृनिति प्रत्ययग्रहणम्। तेन पूर्ववत् तदन्तस्योपस्थानम्। अन्नादीनि प्रातिपदिकानि। अकर्त्तेति। ताच्छीलिकस्तृन्। तेन नित्स्वरेणाद्यु-दात्तः कर्त्तृशब्दः। अन्नशब्दोऽपि नब्विषयस्येति (फिट्, २६)। क्षत्य-शूभ्यां क्स्न (उण् ३।२८७) इति तिजेर् दीर्घश्चेति (उण् ३।२८८) तीक्ष्ण-शब्दोऽन्तोदात्तः। इन्निति वर्त्तमाने (उण्, ४।५४६) इगुपधात् कित् (उण्, ४।५५८)। तेन शुचिशब्द आद्युदात्तः।

## १६२। बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने।

प्रथमपूरणयोरिति। प्रथमे स्वरूपग्रहणम्। पूरणग्रहणे पूरणेऽर्थे ये प्रत्यया विहितास्ते गृह्यन्ते। प्रथमसाहचर्यात्। अथवा पूरणग्रहणं

स्वर्य्यते। स्वरितेन चाधिकारगतिर्भवति। तेन तस्य पूरणे डड़ित्यधिकृत्य (५।२।४८) ये प्रत्यया विहितास्तेषां ग्रहणं भवति। इदम्प्रथम इति। प्रथमोऽन्तोदात्तः। प्रथेरमजित्यमच्प्रत्ययान्तत्वात् (उण् ५।७४६)। इदमादय स्त्यदादिष्वन्तोदात्ता निपात्यन्ते। इदंद्वितीय इदंतृतीय इति। द्वे स्तीयः (५।२।५४)। त्रेः संप्रसारणं चेति (५।२।५५) तीयप्रत्ययान्तत्वाद् मध्योदात्तौ द्वितीयतृतीयशब्दौ। अनेन प्रथम इदंप्रथम इति। अत्र तत्पुरुषे तुल्यार्थेत्यादिना (६।२।२) पूर्वपदप्रकृतिस्वर एव भवति। यत्प्रथमा इति। यत् प्रथममेषा मिति बहुव्रीहिः। अत्र बहुव्रीहौ प्रकृत्येति (६।२।१) पूर्वपदप्रकृतिस्वर एव भवति। एवमुत्तरेष्वप्यस्मिन् बहुव्रीह्यधिकारे प्रत्युदाहरणेषु वेदितव्यम्। इदंप्रधाना इत्यर्थ इति। एतेनानन्तरोक्ते प्रत्युदाहरणे प्रथमशब्दः प्रधानवचनः। नत्वेकसंख्यावचन इति दर्शयन् गणनाभावं दर्शयति। उत्तरपदस्येत्यादि। इह सूत्रे प्रथमपूरणयोरिति त्वन्यविभक्त्योरुत्तरपदनिर्देशः कृतः। न बहुव्रीहिनिर्देशः कृतः। तेनोत्तरपदस्यैव कार्य्यित्वम्। न बहुव्रीहेः। ततश्च यदा कबुत्पद्यते तदा कपि पूर्वं (६ २।१७३) मन्तोदात्तं भवति। कप्रत्ययो हि समासाधिकारे विहितत्वात् समासस्यैवान्तो भवति। नोत्तरपदस्य। नह्युत्तरपदं समासः। तेन कबुत्तरपदक्रमेण गृह्यत इत्युत्तरपदस्यान्तोदात्तत्वं विधीयमानं कपो न भवति। किं तर्हि? पूर्वस्य। इदंप्रथमका इति। शेषाद्विभाषेति (५।४।१५४) कप्। बहुव्रीहौ प्रकृतेरति (६।२।१) पूर्वपदप्रकृतिस्वरापवादो योगः। एवमुत्तरेऽपि बहुव्रीह्यधिकारेऽस्मिन् योगा द्रष्टव्याः।

## १६३। संख्यायाः स्तनः।

द्विस्तना त्रिस्तनेति। द्वित्रिशब्दौ प्रातिपदिकस्वरेणान्तोदात्तौ। स्तनगदी देवशब्दे। चुरादिरदन्तः। तस्माद् घञ्। तेन स्तनशब्द आद्युदात्तः। चतुस्तनेति। चतेरुरन्नितुग्ररन् (उण्, ५।७३६) प्रत्ययान्तत्वाच्चतुःशब्द आद्युदात्तः। दर्शनीयशब्दोऽनीयर् प्रत्ययान्त उपोत्तमं रितीति (६।१।२१७) मध्योदात्तः। द्विशिरा इति। शिरःशब्दो नब्विषयस्येत्याद्युदात्तः (फिट्, २६)।

१६४ । विभाषा छन्दसि ।

१६५ । संज्ञायां मित्राजिनयोः ।

देवमित्रो ब्रह्ममित्र इति । देवब्रह्मशब्दावुक्तस्वरौ । अमिचिमिदिशसिभ्यः क्त्र इति ( उण्, ४।१६०२ ) मित्रशब्दोऽन्तोदात्तः । वृकाजिन इति । प्रकृतिविकारयोर्भेदस्याविवक्षितत्वाद् वृकविकारे वृकशब्दोऽत्र वर्त्तते । वृकमजिनमस्य वृकाजिनः । वृकशब्दः प्राणिनां कुपूर्वाणा (फिट् ३०) मित्याद्युदात्तः । श्यास्त्याह्वञविभ्य इनजित्यधिकृत्या-( उण्, २।३०४ ) जेरजचेती- ( उण्, २।२०६ ) नजादेशश्च । तेनाजिनमन्तोदात्तम् । कूलाजिन इति । कु इति निपातः । तस्मिन्नुपपदे ला दानइत्येतस्मादन्येष्वपि दृश्यत इति डः ( ३।२।१०१ )। अन्येषामपि दृश्यत इति पूर्वपदस्य ( ६।३।१३७ ) दीर्घत्वम् । तेन कूल इत्यन्तोदात्तः । कृष्णाजिन इति । इण्सिञ्जिदीङ्उष्यविभ्यो नगित्यधिकृत्य ( उण्, ३।२८२ ) कृषेर्वर्ण इति ( उण्, ३।२८४ ) नक् । तेन कृष्णोऽन्तोदात्तः । प्रियमित्र इति । प्रीणातीति प्रियः । इगुपधेत्यादिना ( ३।१।१३५ ) कः । तेन प्रियोऽन्तोदात्तः । महाजिन इति । वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्चेति ( उण्, २।२४१ ) महच्छब्दोऽन्तोदात्तः ।

१६६ । व्यवायिनोऽन्तरम् ।

१६७ । मुखं स्वाङ्गम् ।

गौरमुख इति । गुरी उद्यमे । एतस्मादच् । तदन्तादपि प्रज्ञादेरवृत्करणात् प्रज्ञादिभ्यश्चेत्यण् ( ५।४।३८ )। तेन गौरोऽन्तोदात्तः । उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्चेति ( उण्, ५।६६७ ) प्रकृत्य डित् खनेर्मुट् स चोदात्त इति ( उण्, ५।६६८ ) खनेरजलावित्येतौ प्रत्ययौ भवतः । तौ च डितौ । मुट् चोदात्तः । तेन मुखशब्द आद्युदात्तः । भद्रमुख इति । ऋज्रेन्द्रेत्यादि ( उण्, २।१८६ ) सूत्रेण भद्रशब्दो व्युत्पाद्यते । तेन भद्र इत्यन्तोदात्तः । दीर्घमुखा शालेति । मुखशब्देनात्र द्वारप्रदेशः शालाया उच्यते । स्वाङ्गमद्रवलक्षणमिह गृह्यत इति । अद्रवं मूर्त्तिमत् स्वाङ्गमित्यादि

यत् परिभाषितं स्वाङ्गमद्रवादिलक्षणं तदिह गृह्यते । तेन दीर्घमुखा शालेत्यत्र न भवतीति भाव: ।

## १६८। नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्य:।

पूर्वेण प्राप्तस्यान्तोदात्तत्वादयं प्रतिषेध उच्यते। उच्चैर्मुख इति। उच्चैरित्येते ये स्वरादौ पठ्यन्ते तेऽन्तोदात्ता इति निपात्यन्ते। प्राङ्मुख इति। प्राङित्येतत् क्विन्नन्तमाद्युदात्तम्। तत्रानिगन्तोऽञ्चतौ वप्रत्यय इति ( ६।२।५२ ) पूर्वपदस्य प्रकृतिस्वर:। प्रत्यङ्मुख इति। अत्र कृदुत्तरपदप्रकृतिस्वर:। गोमुखो महामुख इति। गोमहच्छब्दावन्तोदात्तावित्युक्तम्। स्थूलमुख इति। स्थूल परिबृंहणे। चुरादि:। तस्मात् पचाद्यच्। तेन स्थूलशब्दोऽन्तोदात्त:। मुष्टिमुख इति। मुषि:क्तिच्। तेन मुष्टिशब्दोऽन्तोदात्त:। पृथुमुख इति। कु भ्रश्चेत्यधिकृत्य ( उण्, १।२२ ) प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्चेति ( उण्, १।२८ ) कुप्रत्यय:। तेन पृथुरन्तोदात्त:। वत्समुख इति। वृतॄवदिहनीत्यादिना ( उण्, ३।४४२ ) स:। तेन वत्सोऽन्तोदात्त:। गोमुष्टीत्यादि। उत्तरसूत्रेण निष्ठादिपूर्वपदस्योपमानलक्षणोऽपि य: प्राप्नोति सोऽप्यनेन बाध्यते। अस्य प्रतिषेधस्यावकाशो यत्र गवाद्युपमानं न। गौर्मुखमिव यस्य मुष्टिर्मुखमिव यस्य वत्सो मुखमिव यस्येति सर्वत्र गवाद्युपमेयम्। नोपमानम्। उत्तरसूत्रेण निष्ठादिपूर्वपदस्योपमानलक्षणस्य विकल्पस्याव..शो यत्र गवादेरन्यदुपादानं सिंहमुखो व्याघ्रमुख इति। यत्र गवाद्युपमानं तद् यत्र पूर्वपदं तत्रोभयप्राप्तावुपमानलक्षणं विकल्पं बाधित्वायमेव प्रतिषेधो भवति। पूर्वविप्रतिषेधेन।

## १६९। निष्ठोपमानादन्यतरस्याम्।

मुखं स्वाङ्गमिति ( ६।२।१६७ ) नित्ये प्राप्ते विकल्पवचनमेतत्। यदैतदुत्तरपदान्तोदात्तत्वमित्यादि। अन्यतरस्यां ग्रहणाद्विकल्पेनैतदुत्तरपदान्तोदात्तत्वं विधीयते। तेन यदैतन्न भवति तदा निष्ठोपसर्गपूर्वपदस्यान्यतरस्यामिति ( ६।२।११० ) पक्षे पूर्वपदान्तोदात्तत्वं भवति। तस्यापि विकल्पेन विधानाद् यदास्याभावस्तदा गतिरनन्तर इति ( ६।२।४९ ) पूर्वपदस्य

प्रकृतिभावविधानाद् गतिस्वरएव। तेनाद्युदात्तत्वं भवति। यत एवं तत-स्त्रीण्युदाहरणानि भवन्ति। एकमनेन सूत्रेणोत्तरपदस्यान्तोदात्तत्वविधानम्। द्वितीयं निष्ठोपसर्गपूर्वादन्यतरस्यामित्यादिना (६।२।११०) पूर्वपदान्तो-दात्तत्वविधानम्। तृतीयं गतिरनन्तर इति गतेः (६।२।४९) प्रकृतिस्वर-विधानम्। सिंहमुख इति। सिंहशब्दः पचाद्यजन्तत्वादन्तोदात्तः। तृहि हिसि हिंसायाम्। हिनस्तीति सिंहः। पृषोदरादित्वाद् वर्णव्यत्ययः। व्याघ्रमुख इति। घ्रा गन्धोपादान इत्यस्माद् व्याङ्पूर्वादातश्चोपसर्गे कः (३।१।१३६)। तेन व्याघ्रशब्दोऽप्यन्तोदात्त एव।

## १७०। जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः।

शाङ्गरजग्ध इति। शृणातेर्गिरतेर्वा शमिधातोः संज्ञाया (३।२।१४) मित्यच्। (U) शङ्गरः। ततोऽपि प्रज्ञादेराकृतिगणत्वादण्। तेन शाङ्गर-शब्दोऽन्तोदात्तः। पलाण्डुभक्षित इति। पल गतौ। उणादयो बहुलमित्याण्डु-प्रत्ययः (३।३।१)। तेन पलाण्डुशब्दो मध्योदात्तः। सुरापीत इति। सुसूधागृधिभ्यः क्रन्निति (उण्, २।८२) सुराशब्द आद्युदात्तः। मासजात इति। मसी परिमाणे। अस्माद् घञ्। तेन मास आद्युदात्तः। संवत्सरजात इति। अशेःसर इत्यधिकृत्य (उण, ३।२५०) वसेश्च (उण, ३।२५१) संपूर्वाच्चिदिति (उण, ३।२५२)। तेन संवत्सरोऽन्तोदात्तः। द्यह्जात त्र्यह्जात इति द्विशब्दावन्तोदात्तावित्युक्तम्। सुखजात इति। खनतेः सुपूर्वादन्येष्वपि दृश्यत (३।२।१०१) इति डः। तेन सुखशब्दो ऽन्तोदात्तः। एवं दुःखशब्दोऽपि वेदितव्यः। अयं तु विशेषोऽत्र दुष्पूर्वात् खनेर्ड इति। तृप्रे स्फायितञ्चीत्यादिना (उण, २।१७०) रप्रत्ययः। तेन तृप्रशब्दोऽन्तोदात्तः। कृच्छ्रजात इति कृते च्छः क्रूचेति (उण्, २।१७८)

---

(U) मुद्रितकाशिकायां तु सारङ्गजग्ध इति पाठः। तत्र शकन्ध्वादित्वम्। सारङ्गः पशुपक्षिणोरिति। अन्यत्र शङ्गरा नाम शर्कमिकेति च काशिकायां शमिधातोः संज्ञाया मित्यत्र (३।२।१४)।

कृच्छ्रशब्दोऽन्तोदात्तः। (U) असु क्षेपणे। अस्माद् बहुलमन्यत्रापीति रक् ( उण्, २।१९० )। तेनास्रमन्तोदात्तम्। वृतॄवदिहनिकमिकषिभ्यः स इति ( उण्, ३।३४२ ) बहुलवचनादमेरपि भवति। अंसो वृषादित्वादाद्युदात्तः। अलकमिति। अलतेः पुंसि संज्ञायां घः प्रायेण (३।३।११८)। ततः कन्निति कन्नन्तोऽलकशब्दः। तेनाद्युदात्तः। कॄवृदारिभ्य उनन् (उण्, ३।३१२)। तेन करुणशब्द आद्युदात्तः। ऋज्ञेः क्युन्निति (उण्, २.२३७) बहुलवचनात् क्षपेरपि भवति। तेन क्षपणमाद्युदात्तम्। सोढ़ इति क्तान्तम्। तेनैतदन्तोदात्तम्। पूर्व्ववद् धत्व ढत्वादयः कर्त्तव्याः। प्रतीपमिति। प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः। ऋक्पूरित्यादिना (५।४।७४) ऽकारःसमासान्तः। द्व्यन्तरुपसर्गेभ्यो ऽपईदितीत्वम् (६।३।९७)। पुत्रजात इति। अत्र बहुव्रीहिस्वर एव भवति। अमिचिमिदिशसिभ्यः क्तः (उण् ४।६०३)। पुवो ह्रस्वश्च (उण्, ४।६०४)। तेन पुत्रशब्दोऽन्तोदात्तः। कथं पुत्रजातशब्दस्य परनिपातः ? यावता निष्ठेति (२।२।३६) पूर्व्वनिपातेनात्र भवितव्यमित्यत आह आहिताग्न्यादित्वादित्यादि। पुत्रजातशब्दोऽयमाहिताग्न्यादिषु पठ्यते। तेन वाहिताग्न्यादिष्विति (२।२।३७) जातादिशब्दस्य परनिपातः। वस्त्रच्छन्न इति। वस्त्रमाच्छादनम्। आच्छाद्यतेऽनेनेति कृत्वा। वस्त्रशब्द उक्तस्वरः। छन्नशब्दश्छद अपवारण इत्यस्य ण्यन्तस्य निष्ठायां वा दान्तशान्तेत्यादिना (७।२।२७) निपातितः। वसनच्छन्न इति। वसेराच्छादनार्थाल्ल्युट्। तेन वसनमाद्युदात्तम्। कुण्डकृत इति। कुण्डशब्दोऽयं नब्विषयस्येत्याद्युदात्तः ( फिट्, २६ )। कुण्डमित इति। माङ् माने। द्यतिस्यती (७।४।४०) त्यादिनेत्त्वम्। अथ कथमेतेषु बहुव्रीहिषु निष्ठत्यनेन (२।२।३६) निष्ठान्तस्य पूर्व्वनिपातो न भवतीत्याह एतेष्वित्यादि। यस्मादेतत् कृतं तस्माज्जात्यादिभ्यः परस्यान्तोदात्तत्वविधानम्। एतस्मादेव ज्ञापकान्निष्ठान्तस्य पूर्व्वनिपातो न भवति। अन्यथा ह्येतदन्तोदात्तत्वविधानं नोपपद्यते।

---

(U) सुखादयो व्युत्पाद्यन्ते। न्यासकारमते सुखादयश्च-सुखदुःखतृप्रकृच्छ्रास्रासावलकं तथा। करुणक्षपणे सोढ़ः प्रतीपश्च सुखादयः॥ १॥ इति।

## १७१ । वा जाते ।

जातशब्दोऽपि क्तान्त इति तस्यापि जात्यादिभ्यः परस्य पूर्व्वेण नित्य-मन्तोदात्तत्वे विकल्पोऽयमुच्यते । दन्तजात इति । हसिमृग्रिण्वामीत्यादिना (उण्, ३।३६६) तन् दन्तः । तेनायमाद्युदात्तः । स्तनजात इति । स्तनशब्द उक्तस्वरः ।

## १७२ । नञ्सुभ्याम् ।

अयवो देश इत्यादि । यवव्रीहिमाषास्तृणधान्यानाञ्च इत्येषामि-त्याद्युदात्ताः ( फिट्, २७ ) । समासस्येत्यादि । इह समासः प्रकृत उत्तर पदञ्च । तत्र यद्युत्तरपदस्यैतदन्तोदात्तत्वं स्यादनृचो बह्वृच इत्यत्र ऋक् पूरित्यादिना-(५।४।७४) कारे समासान्ते कृते ततः पूर्व्वस्य ऋक्शब्दस्यो-त्तरपदस्यान्तोदात्तत्वं प्रसज्येत । समासस्य त्वन्तोदात्तत्वं विधीयमानम-कारस्यैव भवति । तस्य समासावयवत्वात् । समासावयवत्वं तु समासान्ता (५।४।६८) इत्यधिकृत्य विधानात् । तस्मात् समासावयवस्यैतदन्तोदात्तत्व-मिष्यते । कथं पुनरिष्यमाणमपि लभ्यते ? कपि पूर्व्वमित्यत्र (६।२।१७३) पूर्व्वग्रहणात् । तद्धि पूर्व्वग्रहणमनेन समासस्यान्तोदात्तत्वं विधीयमानं समासावयवस्य कप एव मा भूदित्येवमर्थं क्रियते । यदि तूभयपदस्यैतद-न्तोदात्तत्वं स्यात् तदान्तरेणापि कपिपूर्वग्रहणं कपिपूर्वस्योत्तरपदस्य स्यात् । न कपः । नहि कबुत्तरपदस्यावयवः । ततश्च पूर्व्वग्रहणमनर्थकम् । इदं तावत् समासान्ताः प्रत्ययाः समासस्यैवावयवाः । नोत्तरपदस्येत्येतद् दर्शन-मङ्गीकृत्योक्तम् । इदानीमुत्तरपदस्यापि तेऽवयवा इत्येतद् दर्शनमाश्रित्याह समासान्तस्येत्यादि । उत्तरपदस्येति शेषः । एतदन्तोदात्तत्वमिष्यत इति प्रकृतेन सम्बन्धः । इतिकरणो हेतौ । अथवोत्तरपदस्यैवैतदन्तोदात्तत्व-मिष्यते । कुतः ? समासान्ता उत्तरपदावयवा भवन्तीत्यतो हेतोः । तेनानृचो बह्वृच इत्यत्र कृते समासान्तेऽन्तोदात्तत्वं भवति । तच्चोत्तरपदस्य भवेत् । तस्यैव समासान्तस्य भवति । तस्योत्तरपदावयवत्वादिति भावः । यदि हि समासान्ता उत्तरपदावयवा न स्युस्तत उत्तरपदावयवस्यान्तोदा-

त्तव विधीयमानं समासान्तस्य न स्यात्। उत्तरपदावयवत्वे हि समासान्तानां तस्यैव समासान्तस्य भवति। कथं पुनः समासान्तानामुत्तर पदावयवत्वम्? समासार्थादुत्तरपदात् पूर्वं समासान्तं विधाय पश्चात् तदन्तेन समासविधानात्। तथाहि न कपीत्यत्र (७।४।१४) वक्ष्यति गोस्त्रियोरुपसर्जनस्येत्यय (१।१।४८) मपि ह्रस्वः कपि न भवति। समासार्थे ह्युत्तरपदे कपि कृते पश्चात् कबन्तेन सह समासेन भवितव्यमिति स्त्रीप्रत्ययान्तं समासप्रातिपदिकं न भवतीति। समासान्तप्रत्ययान्तेन च पदेन यदि समासः क्रियते तदा तन्मध्यपतित स्तद्ग्रहणेन गृह्यन्त इति समासान्ताः प्रत्यया उत्तरपदावयवा भवन्ति। यद्येवं समासावयवत्वं तेषां नोपपद्यते। नैतदस्ति। अवयवावयवोऽपि हि समुदायावयवो भवति। तथाहि देवदत्तायाः सर्वेऽवयवा अलङ्क्रियन्तामित्युक्ते देवदत्तावयवस्य येऽवयवा अङ्गुल्यादयस्तेऽप्यलङ्क्रियन्ते।

## १७३। कपि पूर्वम्।

पूर्वेण कप एवान्तोदात्तत्वे प्राप्ते कपि पूर्वस्योदात्तत्वमनेन विधीयते। अकुमारीक इत्यादि। शेषाद्विभाषेति (५।४।१५४) कप्। कुमारीशब्द उदात्तनिवृत्तिस्वरेणान्तोदात्तः। वृषलीशब्दोऽपि जातिलक्षणेन ङीषा। ब्रह्मबन्धूरपूरुङन्तत्वात् प्रत्ययस्वरेण।

## १७४। ह्रस्वान्तेऽन्त्यात् पूर्वम्।

ह्रस्वोऽन्तोऽस्येत्यादि। अनेन ह्रस्वान्त इत्यस्यैव बहुव्रीहेरन्यपदार्थे उत्तरपदं समासो वेति दर्शयति। अयवको देश इति। अत्र कपि परतो यव इत्येतद् ह्रस्वान्तमुत्तरपदम्। अयव इत्ययं वा समासः। तत्रान्त्याद् वकारात् पुर्व्वमक्षरं यकाराकार उदात्तो भवति। अनया दिशान्यत्रापि वेदितव्यम्। अथ पूर्वग्रहणं किम्? यावता कपि पूर्वमित्यतः (६।४।१७३) पूर्वमिति वर्त्तत एवेत्यत आह पूर्वमिति वर्त्तमान इत्यादि। द्वितीये हि पूर्वग्रहणे क्रियमाणे वाक्यभेदेन प्रवृत्तिभेदो भवति। पूर्वग्रहणसामर्थ्यात्। अन्यथा हि तदपार्थकं स्यात्। तत्रैकया प्रवृत्त्या ह्रस्वान्तेऽन्त्यात् पूर्वमन्तो-

दात्तं विधीयते। अपरया तु कृत्स्नान्तेऽन्यत्वात् पूर्वमन्तोदात्तं न भवतीति नियमः। तेन कपि पूर्वमन्तोदात्तं न भवति। तेनेत्यादिना नियमे सति यदिष्टं सम्पद्यते तद् दर्शयति। नास्य ज्ञो विद्यत इत्यज्ञकः शोभनो ज्ञोऽस्येति सुज्ञकः। अत्र यद्येष नियमो न स्यात् तदात्रान्यत्वात् पूर्वं उदात्तभावी नास्तीति कपि पूर्वमन्तोदात्तं स्यात्। कपि पूर्वमित्यनेन (६।२।१७०) नियमे तु सति न भवति। तेन नञ्सुभ्यामिति (६।२।१७२) कबन्तस्यैवान्तोदात्तत्वं भवति। यथा च स भवति तथात्रैवोपपादितम्।

## १७५। बहोर्नञ्वदुत्तरपदभूम्नि।

नञ्सुभ्यामित्यादिभिर्योगै (६।२।१७२) र्नञ उत्तरस्य यत् स्वरविधानं तद्बहोरपि यथा स्यादित्येवमर्थमिदम्। नञ इव नञ्वत्। बहोर्भावो भूमा। पृथ्वादित्वादिमनिच्। बहोर्लोपो भू च बहोरिति (६।४।१५८) भूभावः। उत्तरपदस्य भूमेति षष्ठीसमासः। अथातिदेशः किमर्थः? न नञ्सुबहुभ्य उत्तरपदभूम्नीत्येवोच्यते? न चैवं योगे क्रियमाणे नञ्स्वोरप्युत्तरपदभूम्नीत्येतद् विशेषण मापाद्यते। सम्भवापेक्षत्वादस्य। यथैव हि हल्ङ्याब्भ्यो दीर्घादित्यत्र (६।१।३८) दीर्घग्रहणं सम्भवापेक्षं विशेषणं ङ्यापोरेव भवति न हल स्तथैतदपि बहोरेव भविष्यति। न नञ्स्वोः। नहि तयोरुत्तरपदार्थबहुत्वे वृत्तिः सम्भवतीति। एवं तर्हि यदपि विदेशस्थं नञोपलक्षितं बहुव्रीहेः स्वरविधानं तदप्यस्मादतिदेशाद् यथा स्यादित्येवमर्थोऽयमतिदेशः क्रियते। तेन नञो जरमरमित्रमृता (६।२।११६) इत्युत्तरपदाद्युदात्तत्वमपि बहोरतिदिश्यते। बहुमना इति। अत्रोत्तरपदबहुत्वे बहुशब्दो न वर्त्तते।

## १७६। न गुणादयोऽवयवाः।

पूर्वेणातिप्रसक्तोऽतिदेश इति गुणादीना प्रतिषिध्यते बहुगुणा रज्जुरिति। बह्ववयवा इत्यर्थः। गुण आमन्त्रणे चुरादिः। तस्माद् घञ्। तेन गुणशब्द (V) आद्युदात्तः। अशेः सर (उण्, ३।३१०) इत्यनेनाक्षरशब्दोऽन्तोदात्तः। (X)

(V) सतात्सरे चुरादेरदन्तस्येरजित्यच् (३।३।५६)। ततोऽयमन्तोदात्तः।
(X) अक्षरशब्दो मध्योदात्त इत्यन्ये।

छन्दो मीयतेऽनेनेति च्छन्दोमानम्। कृत्स्वरेण (६।२।१३९) छन्दोमाने मानशब्द आद्युदात्तः। तस्य चञन्तत्वात्। शोभनमुक्तं सूक्तम्। प्रादिसमासः। थाथादिस्वरेण (६।२।१५४) सूक्तशब्दोऽन्तोदात्तः। अधीयतेऽस्मादित्यध्यायः। इङश्चेति (३।३।२१) घञ्। सूक्तवदध्यायोऽन्तोदात्तः।

## १७७। उपसर्गात् स्वाङ्गं ध्रुवमपर्शु।

उपसर्गग्रहणं प्राद्युपलक्षणं वेदितव्यम्। स्वाङ्गं प्रति क्रियायोगाभावात्। प्रादिग्रहणमेव तु न कृतम्। वैचित्र्यार्थम्। ध्रुवशब्दोऽयमवयवेऽप्यस्ति। यथा ध्रुवमपायेऽपादानमिति (१।४।२४)। एकस्वरूपेऽप्यस्ति। यथा ध्रुवमस्य शीलमिति। तदिहैकस्वरूपे वर्त्तमानो गृह्यत इति दर्शयितुमाह ध्रुवमित्येकरूपमुच्यत इत्यादि। सततमित्यादिना ध्रुवत्वं पृष्ठस्य दर्शयति। पृष्ठशब्दोऽन्तोदात्तः। पृषु मृषु वृषु सेचन इत्यस्य थकि व्युत्पादितत्वात्। दर्शनीयललाट इति। दर्शनीयशब्द उपोत्तमं रितीति (६।१।२१७) मध्योदात्तः। लल ईप्सायामित्यस्मादुणादयो बहुल (३।३।१) (३।३।१) मित्याटप्रत्ययः। तेन ललाटशब्दो मध्योदात्तः। प्रशाखो वृक्ष इति। उणादयो बहुलमिति (३।३।१) वचनाच्छो तनूकरण इत्यस्मात् खः। टाप्। सवर्णदीर्घत्वम्। एकादेश उदात्तेनोदात्तः (८।२।५)। तेन शाखाशब्दोऽन्तोदात्तः। उद्बाहुः क्रोशतीति। अत्र बाहोरेकरूपता नास्तीत्यध्रुवत्वम्। नह्यसौ नित्यमूर्द्ध्वबाहुरेव क्रोशति। अपि तु कदाचिदधोबाहुरपि। उत्पर्शुरिति। स्पृशेः श्वण् शुनौ पृ चेति (उण्, ५।७०५) शुन् प्रत्ययान्तः पर्शुः। तेनायमाद्युदात्तः। (Y)

## १७८। वनं समासे।

समासमात्र इति। मात्रग्रहणेन बहुव्रीहेर्निवृत्तिं सूचयति। प्रवण इति। यदायं बहुव्रीहिस्तदा प्रकृष्टं प्रकृतं वा वनमस्येति विग्रहः। यदा तु तत्पुरुष स्तदा प्रकृष्टं वनं प्रगतं वा वनमिति विग्रहः। निर्वण इति। अत्रापि यदा बहुव्रीहिस्तदा निर्गतं वनमस्येति विग्रहः। यदा तु तत्-

(Y) स्पृशेःश्वण् पार्श्वः। पार्श्वोऽस्त्री कक्षयोरध इत्यमरः। एवं पर्शुः। पर्शुरायुधश्च।

पुरुष स्तदा निर्गतो वनादिति। तत्पुरुषस्तु कुगतिप्रादय (२।२।१८) इति। किं पुनः स्यात् यदि समाससमासपरिग्रहार्थं समासग्रहणं न क्रियेतेत्यत आह बहुव्रीहाविव हि स्यादिति। रञ्जेः क्युन् (उण्, २।२।२२)। बहुलवचनात् वनु याचन इत्यस्मादपि भवति। तेन वनमाद्युदात्तम्।

१७९। अन्तः।

अन्तरिति। स्वरादिष्वन्तोदात्तो निपात्यते। अन्तर्वणो देश इति। अन्तर्वनं यस्मिन्निति बहुव्रीहिः। वनेऽन्तरिति शौण्डादिपाठात् सप्तमीसमासो वा। प्रनिरन्तरित्यादिना (८।४।५) णत्वम्। अनुपसर्गार्थं आरम्भ इति। उपसर्गात् पूर्वेणैव सिद्धत्वात्।

१८०। अन्तश्च।

अन्तःशब्दो हसिमृग्रिण्वामिदमिलूपूधुर्वीभ्यस्तन्निति (उण्, ३।३६६) तन्प्रत्ययान्तत्वादाद्युदात्तः।

१८१। न निविभ्याम्।

पूर्वेण निविभ्यामप्युत्तरस्यान्तोदात्तत्वे प्राप्ते प्रतिषेधोऽयमुच्यते। पूर्वपदप्रकृतिस्वरत्वे कृत इति। यदा बहुव्रीहि स्तदा बहुव्रीहौ प्रकृत्या पूर्वपदमिति (६।२।१) प्रकृतिस्वरत्वम्। यदा तु तत्पुरुष स्तदा तत्पुरुषे तुल्यार्थेत्यादिना (६।२।२)।

१८२। परेरभितोभावि मण्डलम्।

परिकूलं परितीरमिति। कूलतीरशब्दावुक्तस्वरौ कूलतीरतूलमूलेत्यादौ सूत्रे (६।२।१२१)। परिमण्डल मिति। परितः सर्वतो मण्डलं परिमण्डलम्। मडि भूषायाम्। अस्मात् कल स्तृपश्चेति (उण्, १।१४०) बाहुलकात् कलप्रत्ययः। वृषादिभ्यश्चिदिति (उण्, १।१०६) च। तेन मण्डलमन्तोदात्तम्। बहुव्रीहिरयमित्यादि। यदा बहुव्रीहि स्तदा परितः कूलमस्य परित स्तीरमस्येति विग्रहः। यदा तु प्रादिसमास स्तदा परिगतं कूलं परिगतं तीरमिति। यदा पुनरव्ययीभाव स्तदा परि कूलात् परि तीरादिति। अव्ययीभावस्त्वपपरिबहिरञ्चवः पञ्चम्येत्यनेन (२।१।१२)। परि

कूलादिति पञ्चमी पञ्चम्यपाङ् (२।३।१०) परिभिरिति कर्मप्रवचनीययोगे। कर्मप्रवचनीयत्वं तु परे रपपरी वर्जने इति (१।४।८८)। युक्तं यद् बहुव्रीहौ तत्पुरुषे चेदमन्तोदात्तत्वं विधीयते। तत्र हि समासान्तोदात्तत्वस्यापवादः पूर्वपदप्रकृतिस्वरः प्राप्नोति। अव्ययीभावे त्वयुक्तम्। तत्र हि समासान्तोदात्तत्वेनैव सिद्धम्। नहि तस्यापवादः पूर्वपदप्रकृतिस्वरः केनचित् प्राप्त इत्यत आह अव्ययीभावपक्षेऽपि हीत्यादि। यदाप्यव्ययीभावपक्ष स्तदापि परिप्रत्युपेत्यादिना (६।२।३३) पूर्वपदप्रकृतिस्वरः प्राप्तोऽनेनान्तोदात्तत्व-विधानेन बाध्यत इति किमत्रायुक्तम्? यद्येवंस्वभावमित्यादि। अभितो भवनं यस्य स्वभाव स्तदभितोभाविग्रहणेन गृह्यते। नतु तद्विपरीत-स्वभावम्।

## १८३। प्राद्स्वाङ्गं संज्ञायाम्।

प्रकोष्ठमिति। उषिकुषिगार्त्तिभ्य स्थनिति (उण्, २।१६१) कुषेस्थन्। तेन कोष्ठशब्द आद्युदात्तः। प्रगृहमिति। गेहे क इति (३।१।१४४) ग्रहेः कप्रत्ययः। तेन गृहमन्तोदात्तम्। प्रद्वारमिति। नब्विषयस्यानि-सन्तस्येति ( फिट्, १।२६) द्वारमाद्युदात्तम्। प्रपदमिति। पदं द्वारवदेवाद्यु-दात्तम्। प्रहस्तमिति। हसिमृग्रिण्वित्यादिना (उण्, ३।२६६) हसेस्तन्। तेन हस्तशब्द आद्युदात्तः।

## १८४। निरुदकादीनि च।

निरुदकमिति। निष्क्रान्तमुदकमस्मादिति बहुव्रीहिः। निष्क्रान्त-मुदकादिति वा प्रादिसमासः। उदकं कायतीत्यातोऽनुपसर्गे कः (३।२।३)। उदकस्योदः संज्ञायामित्युदभावः (६।३।५७)। तेनोदकमन्तोदात्तम्। निरुलपमिति। विटपपिष्टपविशिपोलपा इत्युलपशब्दोऽ (उण्, ३।२२५) न्तोदात्तो निपात्यते। निरुपलमित्यन्य इति। उपपूर्वाल्लातेरातश्चोपसर्गे इति (३।१।१३६) कः। तेनोपलशब्द स्थाथादिस्वरेणाद्युदात्तः (६।२।१४४)। निर्मक्षिकं निर्मशकमित्यादीनामिति। मशकमक्षिकाशब्दावाद्युदात्तान्तो-दात्तौ। तत्र स्थथादिः प्राक् शकटेः ( फिट्, २४)। अथ द्वितीयः प्राथी-

षादिति ( फिट् ,५० ) वर्त्तते। एषामित्यादि। यदि प्रादिसमास स्तदा निर्गतमुदकं निर्गतं वोदकादिति विग्रहः। यदा तु बहुव्रीहि स्तदा निर्गत-मुदकमस्मादिति। अथाव्ययीभावोऽप्येषां कस्मान्न भवतीत्याह अव्ययीभावे त्वित्यादि। बहुव्रीहिप्रादिसमासयोस्तु समासान्तोदात्तत्वेन न सिध्यति। तथाहि बहुव्रीहौ प्रकृत्या पूर्वपदमिति (६।२।१) समासस्वरापवादः पूर्वपद-प्रकृतिस्वरो बहुव्रीहावुक्तः। प्रादिसमासेऽपि तत्पुरुषे तुल्यार्थेत्यादिना (६।२।२)। निष्कालक इति। कालकशब्दः कन्प्रत्ययान्तत्वादाद्युदात्तः। निष्कालिक इति। निष्क्रान्तःकालिकाया इति प्रादिसमासः। कालीति जनपदादिसूत्रेण (४।१।४२) ङीषन्तत्वादन्तोदात्तः। ततः स्वार्थिके कनि कृतेऽप्याद्युदात्त एव भवति। निष्पेष इति। पिष्लृ सञ्चूर्णने। अस्माद् घञ्। तेन पेषशब्द आद्युदात्तः। तरीं पातीति। आतोऽनुपसर्गे क (३।२।३) इति तरीपशब्दोऽन्तोदात्तः। कुत्सित स्तरीप इति कुत्सित-ग्रहणेन दुस्तरीपशब्दे दुःशब्दः कुत्सायां वर्त्तत इति दर्शयति। निस्तरीप इति केचिदिति। ते च निर्गत स्तरीप इति विगृह्य प्रादिसमासं कुर्वन्ति। अपरे निस्तरीक इतीति। पठन्तीति सम्बन्धः। निरजिनमित्यादि। अजिनमन्तोदात्तमित्युक्तम्। परेरित्यादि। हस्तपादकेशाः स्वाङ्गशिटाम-दन्तानामित्याद्युदात्तः (फिट् ,२८)। शिटां सर्वनाम्नामित्यर्थः। कर्षशब्दः कर्षात्वतो घञोऽन्त उदात्त (६।१।१५९) इत्यन्तोदात्तः।

## १८५। अभेर्मुखम्।

अभिमुख इति। मुखशब्द उक्तस्वरः। अभिशब्दोऽन्तोदात्तः ( फिट् ८१ )। बहुव्रीहिरयमित्यादि। यदा बहुव्रीहिस्तदाभिगतं मुखमनेनेति विग्रहः। यदा तु प्रादिसमास स्तदाभिगतो मुखमभिगतो वा मुखेनेति। कस्मादय-मव्ययीभावो न भवतीत्याह अव्ययीभावे त्वित्यादि। वचनमिदमबहुव्रीह्यर्थ-मिति। यदा मुखं ध्रुवं भवति तदाऽध्रुवार्थमस्वाङ्गार्थं चेति। अध्रुवम-स्वाङ्गञ्च मुखं बहुव्रीहावपि यदा भवति। अभिमुखा शालेति। अभिगतं

मुखं यस्या इति बहुव्रीहिः। अत्रोपसर्गात् स्वाङ्गमिति (६।२।१७७) न सिध्यति। मुखशब्दस्यास्वाङ्गवाचित्वात्।

१८६। अपाच्च।

अव्ययीभावोऽप्यत्र प्रयोजयतीति। न केवलं बहुव्रीहितत्पुरुषावित्यपि-शब्दस्यार्थः। तत्र यदा बहुव्रीहि स्तदापगतं मुखमस्मादिति विग्रहः। यदातु प्रादिसमासस्तदापगतं मुखमिति। यदा पुनरव्ययीभाव स्तदाप मुखादिति। मुखं वर्जयित्वेत्यर्थः। अव्ययीभावस्त्वपपरिबहिरञ्चवः पञ्चम्येत्यनेन (२।१।१२)। कथं पुनरव्ययीभावः प्रयोजयति ? यावता समासान्तोदात्तत्वेनैव सिद्धमित्याह तत्रापि हीत्यादि। प्रकृतिस्वरत्वमित्यत्रा-ध्याहार्य्यम्। तत्राप्यव्ययीभावे परिप्रत्युपेत्यादिना (६।२।३३) पूर्वपदस्य प्रकृतिस्वरत्वमुक्तं समासस्वरापवादः। तस्मादव्ययीभावोऽपि प्रयोजयति। योगविभाग उत्तरार्थं इति। उत्तरसूत्रेऽपादित्यस्यैवानुवृत्तिर्यथा स्यात्। अभेर्मा भूत्। अव्ययपूर्वादपि प्रकृतिस्वरापवादो योगः। एवमुत्तरेऽपि योगा द्विभिर्भ्यां पाद्दन्मूर्धसु बहुव्रीहावित्यतो (६।२।१९७) योगात् प्राग् वेदितव्याः।

१८७। स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च।

स्फिगादीनां नामपर्य्यन्तानां समाहारे द्वन्द्वः। सीरनामानि चेति। हलादीनि। अपस्फिगमपपूतमिति। प्रादिसमासो बहुव्रीहिर्वा। स्फिगपूतशब्दौ स्वाङ्गशिटामदन्तानामित्याद्युदात्तौ (फिट्, २९)। केचित्तु स्फिगशब्दं (फिट्, २१) घृतादित्वादन्तोदात्तमिच्छन्ति। रास्नासास्ना-स्थूणावीणा इति (उण्, ३।२९५) वीणाशब्द आद्युदात्तो निपात्यते। अञ्जू इत्येतस्मादसुन्। तेनाञ्ज आद्युदात्तः। शोङ्क्रुशिरुहिजिचिस्थभ्यः (उण्, ४।५५२) क्वनित्यधिकृत्यादेर्ध्व चेत्यध्वा (उण्, ४।५५४)। तेनायमाद्युदात्तः। उपसर्गादध्वन इति (५।४।८५) यदा समासान्तो नास्ति तदानेनान्तोदात्तत्वं भवतीत्यत्र कारणमाह तस्मिन् हि सतीत्यादि। अच्प्रत्यन्ववपूर्वात् सामलोम्न (५।४।७५) इत्यतोऽज्ग्रहणेऽनुवर्त्तमान

उपसर्गादध्वन (५।४।८५) इत्यनेनाच् समासान्तो विधीयते। तेन तस्मिन् समासान्तेऽच्प्रत्ययस्य चित्त्वादेव सिद्धमन्तोदात्तत्वम्। ननु च नित्यः समासान्तः। तत् किमुच्यते यदा समासान्तो नास्तीत्यत आह अनित्य-स्त्वेत्यादि। यदि नित्यः समासान्तः स्यादध्वग्रहणमिह न कृतं स्यात्। अच् प्रत्ययस्य चित्त्वादेवान्तोदात्तस्य सिद्धत्वात्। कृतञ्च। तस्मादेतदेव ज्ञापयति समासान्तविधिरनित्य इति। तेन तत्रोपासितस्त्रोकभर्त्तरीत्येव-मादयः प्रयोगा उपपन्ना भवन्ति। प्लुषिकुषिशुषिभ्यः क्सिरिति (उण्, ३।४३५) कुक्षिः। तेन कुक्षिशब्दोऽन्तोदात्तः। हलसीरशब्दौ नब्विषयस्या-निसन्तस्येत्याद्युदात्तौ (फिट्, २६)। नामशब्दोऽपि नामन्सीमन्नित्यादिना ऽऽद्युदात्तो (उण्, ४।५९०) निपात्यते। स्फिगपूतकुक्षीणां ग्रहणमबहु-व्रीह्यर्थमिति। यदेतानि ध्रुववाचीनि भवन्ति। अस्वाङ्गार्थञ्चेति। बहुव्रीहावपि यदाऽस्वाङ्गवाचीनि भवन्ति। यदा ह्येतानि स्वाङ्गवाचीनि ध्रुवाणि च भवन्ति बहुव्रीहिश्च समास स्तदोपसर्गात् स्वाङ्गं ध्रुवमपर्श्वित्येव सिद्धम् (६।२।१७७)।

## १८८। अधेरुपरिस्थम्।

उपरिस्थमिति। उपरि तिष्ठतीति सुपि स्थ इति (३।२।४) कः। अधिदन्त इत्यादि। दन्तादयः स्वाङ्गशिटामित्याद्युदात्ताः (फिट्, २८)। अध्यारूढो वा दन्त इति। वाशब्देन समानाधिकरणो वोत्तरपदलोपी समास इति सूचयति। स पुनः समानाधिकरणाधिकारे शाकपार्थिवादीना-मुपसंख्यानमुत्तरपदलोपश्चेत्युपसंख्यानेन (२।१।६९, वा) वेदितव्यः। दन्तस्योपरीत्यादि। एतेनोपरिस्थत्वं दर्शयति। एवं कर्णस्योपरि योऽन्यः कर्णो जायते स उच्यतेऽधिकर्ण इति। तथा केशस्योपरि योऽन्यः केशोऽधिकेशः स उच्यते। उपरिस्थमिति किम्? अधिकरणमिति। अत्राव्ययपूर्वपदप्रकृतिस्वरएव भवति। (६।२।२)। (Z)

(Z) अत्र कृदुत्तरपदप्रकृतिस्वरेण (६।२।१३९) ककाराकार उदात्त इत्यन्ये।

## १८९। अनोरप्रधानकनीयसी।

अनुज्येष्ठ इति। वृद्धस्य चेतीष्ठनि (५।३।६२) परतो वृद्धस्य ज्यादेशः। ज्येष्ठशब्दो नित्स्वरेणाद्युदात्तः। अनुमध्यम इति। मध्यान्म इति (४।३।८) मध्यमः प्रत्ययस्वरेणान्तोदात्तः। पूर्वपदार्थप्रधानः प्रादिसमासोऽयमिति। अत्र हि योऽसौ ज्येष्ठमनुगतो मध्यमश्च स प्राधान्येन प्रादिसमासेनोच्यते। ज्येष्ठमध्यमौ तु गुणभावेन। तस्मात् पूर्वपदार्थप्रधानोऽयम्। अनुकनीयानिति। ईयसुनि परतो युवशब्दस्य युवाल्पयोः कनन्यतरस्यामिति (५।३।६४) कनादेशः। कनीयःशब्दो नित्स्वरेणाद्युदात्तः। अनुगतो ज्येष्ठोऽनुज्येष्ठ इति। उत्तरपदार्थप्रधानोऽयम्। तेन प्रधानवाचित्वं ज्येष्ठशब्दस्यास्ति।

## १९०। पुरुषश्चान्वादिष्टः।

पॄ पालनपूरणयोः। अस्मात् पुरः कुषन्निति (उण्, ४।५१२) कुषन् प्रत्ययः। तेन पुरुषशब्द आद्युदात्तः। अन्वादिष्टोऽन्वाचित इति। अप्रधान-शिष्ट इत्यर्थः। यथा भिक्षामट गाश्चानयेत्यत्र गोरानयनम्। यथा वा कर्त्तुः क्यङ् सलोपश्चेत्यत्र (३।१।११) सलोपः। कथितानुकथितो वेति। यः कथितात् पश्चात् कथितः स कथितानुकथितः। यो वा किञ्चित् प्राक् कथयित्वा पश्चात् कथ्यते स कथितानुकथित इत्युच्यते। अनुगतः (AA) पुरुषोऽनुपुरुष इति। यः पश्चाद्भवः पुरुष स एवमुच्यते।

## १९१। अतेरकृत्पदे।

अकृत्पद इति। अकृच्च पदञ्चाकृत्पदे। प्रथमाद्विवचनान्तमेतत्। अत्यङ्कुशो नाग इति। अङ्कुशशब्दः सानसपर्णसीत्यादिना (उण्, ४।५४५) अकि लक्षण इत्यस्मादुशच् प्रत्ययेनान्तोदात्तो निपात्यते। अतिकशोऽश्व इति। कश गतिशासनयोः। अस्मात् पचाद्यच्। टाप्। एकादेश उदात्तेनोदात्तः (८।२।५)। तेन कशान्तोदात्ता। अतिपदा शक्करीति (BB)।

---

(AA) हरदत्तमते अनुगत इत्यस्य पश्चाद्गत इत्यर्थः।

(BB) शक्करीति च्छन्दोविशेषः। तथाहि ऋक् प्रातिशाख्ये षट्पञ्चाशत् तु शक्करीति। षट्पञ्चाशदक्षरा शक्करी भवति। यथा प्रोष्वस्मै पुरो रथ मित्यादि। अतिशक्करी च षष्ट्यक्षरा। यथा साकं जातः

खनो घ चेति (३।३।१२५) पदेषु:। वित्करणेन हि ज्ञापितं तत्र वोऽन्यस्मादपि भवतीति। तेन पदमन्तोदात्तम्। अतिकारक इति। करोतेर्ण्वुल्। अत्र तत्पुरुषे तुल्यार्थेत्यादिना (६।२।२) पूर्वपदस्याव्ययस्वरो भवति। अते र्धातुलोप इति। यत्र धातोर्लोपस्तत्रातेरुत्तरपदमन्तोदात्तं भवतीति वक्तव्यम्। किमर्थमित्याह इहेत्यादि। यद्यतेर्धातुलोप इति नोच्येत तदिहापि स्याच् शोभनो गार्ग्योऽतिगार्ग्य इति। भवति ह्यत्रातेरुत्तरपदमकृदन्तम्। इह च न स्यादतिक्रान्तः कारकादतिकारक इति। निरादयः क्रान्ताद्यर्थे पञ्चम्येति (२।२।१८, वा) प्रादिसमासः। अत्र हि कृदन्तं कारकशब्दमुत्तरपदम्। तत्र यद्यतेर्धातुलोप इति नोच्यते तदिहापि न स्यात्। एवं तूच्यमान इहापि भवति। अस्ति ह्यत्र क्रमेर्धातोर्लोपः। लोपः पुनस्तस्य समासे गम्यमानार्थत्वादप्रयुज्यमानस्यादर्शनम्।

## १९२। नेरनिधाने।

निधानमप्रकाशतेति। न निधानमनिधानम्। निमूलं न्यक्षमिति। मूल प्रतिष्ठायाम्। अस्मात् पचाद्यच्। तस्मान् मूलशब्दोऽन्तोदात्तः। वृतृवदिहनिकमिकषिभ्यः (उण्, ३।३४२) स इत्यधिकृत्याशेर्देवन इति (उण्, ३।३४५) सप्रत्ययान्तत्वादक्षशब्दोऽप्यन्तोदात्तः। निवृणमिति। न्यङ्विषयस्येति (फिट्, २६) तृणमाद्युदात्तम्। बहुव्रीहिरयमित्यादि। यदा बहुव्रीहिस्तदा निगतानि मूलान्यस्येति विग्रहः। यदा प्रादिसमासस्तदा निगतं मूलमिति। अव्ययीभावः कस्मादयं न भवतीत्याह अव्ययीभावे त्वित्यादि। बहुव्रीहौ तु समासान्तोदात्तत्वापवादो बहुव्रीहौ प्रकृत्येत्यादिना (६।२।१) पूर्वपदस्य प्रकृतिस्वर उक्तः। तत्पुरुषेऽपि तत्पुरुषे तुल्यार्थेत्यादिना (६।२।२)। तेन तयो र्विनानेन वचनेनान्तोदात्तत्वं न सिध्यति। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्। नहि तत्र

---

ऋतुना साकं सोमस्य इत्यादि। तथाच शौनकः षड्भिरेवातिशक्करीति। षडक्षराणि अतिशक्करी भवतीति तद्भाष्ये। अक्षर मित्यस्यावाजित्यर्थः।

तस्यापवाद उक्तः। निवाग् वृषलो निदण्ड इति। अत्र पूर्वपदस्य प्रकृतिस्वर एव भवति। वाक्शब्दः क्विब्वचिप्रच्छीत्यादिना (उण्, २।२१५) क्विबन्तो व्युत्पादित आद्युदात्तः। दमु उपशमे। अस्माज् ञमन्ताड्ड इति (उण्, १।१११) डः। तेन दण्डशब्दोऽप्यन्तोदात्तः। निशब्दोऽत्र निधानार्थं ब्रवीतीति। अप्रकाशतां ब्रवीतीत्यर्थः। कथं पुनरत्र निशब्दो निधानार्थं ब्रवीतीत्याह प्रादयो हीत्यादि। वृत्तिशब्देनेह समासवृत्त्यादिर्गृह्यते। प्रादयो हि स्वभावेनैव वृत्तिविषये ससाधनां क्रियामाहुः। तस्मादिह समासवृत्तौ विषये यासावप्रकाशनात्मिका क्रिया निधानशब्दवाच्या वाक्साधना दण्डसाधना च तां निशब्दो ब्रवीति।

## १९३। प्रतेरंश्वादयस्तत्पुरुषे।

पूर्वपदप्रकृतिस्वरापवादो योगः। प्रत्यंशुरिति। प्रादिसमासः। कुभ्रश्चेत्यधिकृत्य (उण्, १।२२) मृगय्वादयश्चेत्यंशुशब्दो (उण्, १।६७) निपातितः। तेनान्तोदात्तः। जनेर्घञ्। तेन जन आद्युदात्तः। राजन्शब्दोऽपि कनिन्प्रत्ययान्तत्वात्। राजशब्द इत्यादि। राजाहःसखिभ्यष्टजिति (५।४।९१) यदाऽनित्यत्वाट्टज् नास्ति तदा राजशब्द इह पाठे प्रयोजयति। अथ तस्मिन् समासान्ते सति कस्मान् न प्रयोजयतीत्याह तस्मिन् हि सतीत्यादि। अनित्यत्वं तु समासान्तविधेः पूर्वमेव ज्ञापितम्। राजशब्दस्य चेह पाठः समासान्तविधेरनित्यत्वं ज्ञापयति। उष दाह इत्यस्मात् ष्ट्रन्। तेन उष्ट्रशब्द आद्युदात्तः। खिट सन्तापे अस्माण्वुल्। तेन खेटकशब्दोऽप्याद्युदात्तः। अजिरशिशिरेत्यादिना (उण्, १।५३) किरच्प्रत्ययान्तोऽजिरशब्दो निपातितः। तेनान्तोदात्तः। द्रा कुत्सायां गतौ। अस्मादाङ्पूर्वादातश्चोपसर्गे इत्यङ् (३।३।१०६)। निपातनात् पूर्वपदस्य रेफान्तता। ततश्चाव्ययरूपहानादसत्यस्मात् पूर्वपदप्रकृतिस्वरत्वे आर्द्रेत्यन्तोदात्ता भवति। श्रु श्रवण इत्यस्माल्ल्युट्। तेन श्रवणशब्दो लित्स्वरेणाद्युदात्तः। वृतेस्तिकन्निति प्रकृते (उण्, ३।४२६) कृतिभिदि

लतिभ्यः किदिति ( उण्, ३।४२७ ) तिकन् । टाप् । तेन कृत्तिकाशब्द आद्युदात्तः । ऋध वृद्धावित्येतस्मादच् । घञ् वा । तेनार्धशब्दोऽन्तोदात्त आद्युदात्तो वा । पुर अग्रगमने । अस्मादिगुपधलक्षणः कः । तेन पुरशब्दोऽन्तोदात्तः । प्रतिगता अंशवोऽस्येत्यादि । अत्र बहुव्रीहौ पूर्वपद प्रकृतिस्वरो भवति ।

## १६४ । उपाद् द्व्यजजिनमगौरादयः ।

उपदेव इति । प्रादिसमासोऽयम् । देवशब्दः पचाद्यजन्तत्वादन्तोदात्तः । उपसोम इति । अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्नित्यादिना ( उण्, १।१३७ ) मन् । तेन सोमशब्द आद्युदात्तः । हुड् ह्रुड् गतौ । अस्मात् पचाद्यच् । तेन ह्रोड़ शब्दोऽन्तोदात्तः । अजिनमन्तोदात्तमित्युक्तम् । अद्व्यजर्थञ्चास्य ग्रहणम् । गौरशब्दः प्रज्ञाद्यणन्तादाद्युदात्तः । तिष्येण युक्तः कालस्तैषः । प्राग्-दीव्यतोऽण् ( ४।१।८३ ) । सूर्यतिष्येति ( ६।४।१४९ ) यलोपः । तैष-तैटावसन्तौ । तेनान्तोदात्तौ । रट परिभाषणे । अस्मादच् । रलयो रेकत्वाद्रेफस्य लकारः । लटः । लुट विलोड़ने । अस्मात् पचाद्यच् । तेन लटलोटावप्यन्तोदात्तौ । शेवयह्वजिह्वाग्रीवापूमीवा इति ( उण्, १।५२ ) जिह्वान्तोदात्ता निपात्यते । इण्सिञ्जीत्यधिकृत्य ( उण् ३।२८२ ) कृषेर्वर्णे इति ( उण्, ३।२८४ ) कृषेर्नक् । टाप् । सवर्णदीर्घत्वम् । एकादेश उदात्तेनोदात्तः ( ८।२।५ ) । तेन कृष्णाशब्दोऽन्तोदात्तः । अघ्न्यादयश्चेति ( उण्, ४।५५१ ) कन्याशब्दोऽन्तस्वरितो निपात्यते । गुड़ घनत्वे । अस्मादिगुपधलक्षणः कः । तेन गुड़ोऽन्तोदात्तः । कल्पवाह्रशब्दौ वृषादित्वा-दन्तोदात्तौ (CC) ।

## १६५ । सोरवक्षेपणे ।

सुस्थण्डिल इति । स्थानं स्थिरमस्मिन्निति स्थण्डिलम् । पृषोदरादित्वात् ।

---

(CC) मुद्रितकाशिकायामत्र तैष तैल लट कल्प पाद इति गणे पाठः । न तैट लट कल्प वाह्र इत्येतेषाम् । पदमञ्जर्यां तैष तैट गुध इति । तैट कल्प वाह्र इति तत्र नास्ति ।

आद्युदात्तः (DD) । सुस्फिगा स्यामिति । स्फिगशब्द आद्युदात्तः (EE) सुप्रत्यवसित इति । प्रत्यवसितशब्दस्थाथादिस्वरेणान्तोदात्तः ( ६।२।१४४ ) । ननु च सुशब्देनापि सह समासे कृते थाथादिस्वरेणैवान्तोदात्तत्वं ( ६।२।१४४ ) भविष्यति । तत् किमर्थमुदाहृतम् ? एवं मन्यते । सत्यन्यार्थेऽस्यारम्भे परत्वादनेनैवात्राप्यन्तोदात्तत्वं युक्तमिति । यदि सुशब्दोऽत्र पूजायामेव वर्त्ततेऽवक्षेपणं तर्हि कस्यार्थ इत्याह वाक्यार्थस्त्ववक्षेपणमिति । अत्रैव कारणमाह असूयया तथाभिधानादिति । इह खल्विदानीमास्स्व सुस्थण्डिल इत्येवंप्रकारं वाक्यं यस्मादसूयया प्रयुज्यते तस्माद् वाक्यार्थस्यैवावक्षेपणम् । सुतृणेष्विति । अत्र गुणोद्भावनेच्छयाभिधानम् । नासूयया । तेनावक्षेपणं नास्ति । पूजैव तु विद्यते ।

## १९६ । विभाषोत्पुच्छे ।

उत्पुच्छ इति । पुच्छशब्दो नब्विषयस्येत्याद्युदात्तः ( फिट् २६ ) । सेयमुभयत्र विभाषा भवतीति । यदोत्पुच्छशब्दोऽच्प्रत्ययान्तो न भवति तदा समासान्तोदात्तत्वम् । यदा समासान्तोदात्तत्वापवाद स्तत्पुरुषे तुल्यार्थेत्यादिना ( ६।२।२ ) पूर्वपदस्याव्ययस्य प्रकृतिस्वर स्तदा तेनाप्राप्ते ऽस्मिन्नन्तोदात्तत्वे विभाषेयम् । यदा तु पुच्छमुदस्यतीत्यस्यार्थस्य विवक्षायां पुच्छभाण्डचीवराण्णिङिति ( ३।१।२० ) णिङं विधाय तदन्तादुत्-पुच्छयतेः पचाद्यचि कृते उत्पुच्छ इत्येतच्छब्दरूपम् भवति तदा थाथादि-स्वरेण ( ६।२।१४४ ) नित्य मन्तोदात्तत्वे प्राप्ते ऽयं विकल्पः । तेन प्राप्ते विभाषेयम् । उदस्तं पुच्छ मस्योत्पुच्छ इति । बहुव्रीहिप्रकृतिस्वर एव भवति ।

## १९७ । द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ।

द्वित्रिभ्यामिति । दिग्योगलक्षणा (FF) पञ्चमी । पाद्दन्मूर्धस्विति ।

---

(DD) लघावन्ते द्वयोश्च बह्वषो गुरुरित्यनेन । ( फिट् ४२ ) ।

(EE) खाङ्गशिटामदन्तानामित्यनेन । ( फिट्, २९ ) ।

(FF) दिग्योगलक्षणेति पूर्वापरादिदिग्वाचिशब्दयोगादन्यारादितरर्त्ते इत्यादिना ( २।३।२९ ) पञ्चमी । एवं हि द्वित्रिभ्यामित्यनेन द्वित्रिभ्यां परत इति ज्ञायते ।

यस्य च भावेन भावलक्षण मिति (२।३।६७) भावलक्षणा सप्तमी । बहुव्रीहिः कार्यौ । अत आह द्वित्रि इत्येताभ्यामित्यादि । द्विपात् त्रिपादिति । संख्या सुपूर्वस्येत्यकारलोपः (५।४।१४०) समासान्तः । द्विदन् । त्रिदन्निति । वयसि दन्तस्य दतृ (५।४।१४१) इति ददादेशः । द्विमूर्धा त्रिमूर्धेति । नन्वत्र द्वित्रिभ्यां षो मूर्ध्न इति (५।४।११५) समासान्तेन षप्रत्ययेन भवितव्यम् । तेन द्विमूर्ध स्त्रिमूर्ध इत्येव स्यात् । कथं द्विमूर्धा त्रिमूर्धेत्याह मूर्धन्नित्यादि । अकृतसमासान्तस्य नान्तस्यैव निर्देशस्तु मूर्ध्नस्वित्यनेनैव ज्ञायते । अन्यथा मूर्धेष्विति ब्रूयात् । नन्वकृत-समासान्तस्य सम्भव इत्यत आह तस्यैतत् प्रयोजनमित्यादि । कृतसमासान्तस्य निर्देशे सत्येव समासान्तेऽन्तोदात्तत्वं स्यात् । असति न स्यात् । तस्माद् असत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्यात् तदर्थोऽयं निर्देशोऽकृतसमा सान्तस्य । ननुच नित्यमेव समासान्तेन भवितव्यतया यदिदमस्य प्रयोजनस्य सम्पादनार्थं मकृतसमासान्तस्योपादानं तज् ज्ञापकमनित्यः समासान्तो भवतीति । तेन द्विमूर्धेत्यादिः प्रयोग उपपद्यते । यदि तर्ह्यकृतसमासान्त इह मूर्धशब्द उपात्त एवं सति यदि समासान्तः क्रियते तदान्तोदात्तत्वेन न भवितव्यमिति । कृतसमासान्तस्य शब्दान्तरत्वादित्यत आह यदापीत्यादि । बहुव्रीहिरत्र कार्यौ । तदेकदेशत्वञ्च समासान्तस्य । एकदेशोऽस्यास्ती-त्येकदेशी । स बहुव्रीहि रेकदेशी अवयवी यस्य समासान्तस्य स तदेक-देशी । तद्भावस्तदेकदेशित्वम् । एतेन समासान्तस्य बहुव्रीह्यवयवत्वं दर्शयन् कृतसमासान्तस्य शब्दान्तरत्वं निरस्यति । तदेवं यस्मादेतन्न शब्दान्तरं बहुव्रीहिः कार्यौ तदेकदेशित्वं च समासान्तस्य तस्माद् यदापि समासान्तः क्रियते तदापि पक्षे तस्यान्तोदात्तत्वं भवत्येव । कल्याणमूर्धेति । कल्याणशब्दो नब्विषयस्ये त्याद्युदात्तः । (फिट् २६) (GG) अत्र

(GG) वस्तुतस्तु लघावन्ते द्वयोश्च बह्वषो गुरुरिति (फिट् ४२) कल्याणशब्दो मध्योदात्तः ।

पूर्वपदप्रकृतिस्वर एव। द्वयोर् मूर्धा द्विमूर्धेति। अनेन नित्यमेव समासान्तोदात्तत्वमाह।

### १९८। सक्थं चाक्रान्तात्।

सक्थमितीति। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षजित्यनेन (५।४।११३) षच् समासान्तो यस्य स सक्थिशब्दोऽत्र गृह्यते। अक्रान्तादिति। क्रशब्दोऽन्तो यस्य स क्रान्तः। न क्रान्तोऽक्रान्तः। गौरसक्थ इति। गौरशब्दः प्रज्ञाद्यन्तत्वादन्तोदात्तः। श्लक्ष्णसक्थ इति। श्लिषशूभ्यां क्स्न इति (उण्, ३।२९७) प्रकृते श्लिषेरच्चोपधाया (उण्, ३।२९८) इति क्स्नप्रत्ययान्तः श्लक्ष्णशब्दः। तेनान्तोदात्तः। चक्रसक्थ इति। करोतेः किन् द्वे चेति (३।२।१७१, वा) चक्रशब्द आद्युदात्तः।

### १९९। परादिश्छन्दसि बहुलम्।

परशब्देनात्र सक्थशब्द एव गृह्यत इति। प्रत्यासत्तेः। स हि पूर्वसूत्रे सन्निहितत्वात् प्रत्यासन्नः। यद्येवं परशब्दग्रहणमनर्थकम्। सक्थशब्द एव ह्यत्रानुवर्त्तिष्यते। नैतदस्ति। अत्र यथा सक्थशब्दस्तथा बहुव्रीहिरपि प्रकृतः। एवं बहुव्रीहेरप्यनुवृत्तिः स्यात्। तत्र तस्याद्युदात्तत्वं शङ्कनीयं स्यात्। ननु विभाषाग्रहणमत्र प्रकृतम्। कथं पुनर्बहुलं गृह्यते? तस्य प्रयोजनमन्यदपि यथा स्यादिति। अतः पदान्तरे समासान्तरे च परादिरुदात्तो भवतीति दर्शयति ऋजुबाहुरित्यादि। ऋजुबाहुरिति बहुव्रीहिः। वाक्पतिश्चित्पतिरिति षष्ठीसमासौ। एवञ्च बहुलग्रहणसिद्धमर्थं परादिश्च परान्तश्चेत्यादिश्लोकेन दर्शयन्नाह व्यत्ययो बहुलं तत्र (HH) इति। यत एवं बहुलग्रहणात् परादौ परान्तादौ च स्वरव्यत्ययो भवति। ननु पूर्वमेव स्वराणां व्यत्ययो

---

(HH) भाष्ये तु व्यत्ययो बहुलं स्मृत इति हि श्लोकस्य चरमः पादः। तस्य बहुलग्रहणजन्य स्वरव्यत्यय इत्यर्थः।

विहितः (II)। सत्यमेतत्। भाषाविषये तु पत्यावैश्वर्य्ये (६।२।१८) इत्यस्य न भूवाक्चिद्दिधिष्विति (६।२।१९) प्रतिषेधे समासान्तोदात्तत्वं भवति। अत्र तु बहुलग्रहणेन व्यत्यय इति। वाक्पतिश्चित्पतिरिति। अत्र परग्रहणेन सक्थान्त मुदाहरणम्। बहुलग्रहणेनान्यत्। एवञ्च परान्त उदात्त त्वाथवञ्क्राजबिन्नकाणामित्यादौ (६।२।१४४)। पूर्वपदमन्तोदात्तं सर्वं गुणकात्स्न्ये इत्यादौ (६।२।९३)। पूर्वपदादुदात्तत्वं सप्तमी-हारिणौ धर्म्येऽहरण इत्यादौ (६।२।६५)। एवमादि सर्वं संगृहीतं भवति बहुलग्रहणेन। विभाषाग्रहणे प्रकृति स्वरव्यत्ययार्थं बहुलग्रहणं कृतमित्यभि-प्रायः। धिषणादीनां बहुव्रीहित्वात् पूर्वमेव पूर्वपदप्रकृतिस्वर उक्त इति। पुनरिह छन्दसि बहुलमिति स्वरव्यत्यय स्तेषामन्तोदात्तत्वप्रदर्शनार्थमुक्तः।

---

(II) व्यत्ययो बहुल मिति (३।१।८५) सूत्रेण। तत्रेयमिष्टिः—

'सुप्तिङुपग्रहलिङ्गनराणां
कालहलच्स्वरकर्तृयङाञ्च।
व्यत्ययमिच्छति शास्त्रकृदेषां
सोऽपि च सिद्ध्यति बाहुलकेन ॥ १ ॥ (३।१।८५ सूत्रभाष्ये।)

शास्त्रकृत् पाणिनि राचार्य्य श्छन्दसि विषये सुप्तिङुपग्रहलिङ्गनरकालहलच्स्वरकर्तृयङां व्यत्ययं व्यतिगमन मन्यविषयावगाहनं विषयान्तरे विधान मिति यावदिच्छति। एवां स्यतासिशप्श्नुप्रभृति-विकरणानामपि व्यत्ययमिच्छति। स च व्यत्ययो बाहुलकेन बहुलग्रहणेनेत्यर्थः सिध्यति। बहूनर्थांल्लात्यादत्त इति बहुलम्। तस्य भावो बाहुलकम्। इन्वमनीज्ञादिभ्यश्चेति (५।१।१३३) मनोज्ञादित्वाद्वुञ्। यस्मादेवं बाहुलकेन प्रकृतानां विकरणाना मप्रकृतानाञ्च सुप्तिङादीनां व्यत्ययः सिद्ध्यति तस्मादेव बहुलग्रहणं कृतमिति भावः। उपग्रहः परस्मैपदात्मनेपदे इत्यर्थः। नरः पुरुषः। कर्तृशब्दः कारकमात्रपरः। यङिति प्रत्याहारः सार्वधातुके यगिति (३।१।६७) यको यशब्दादारभ्य लिङ्याशिष्यङित्यस्य (३।१।८६) ङकारेण। अतो यतः पूर्वमेव स्वराणां व्यत्ययो विहित स्ततः कथ पुनरत्र तस्य विधान मिति प्रश्नः। तत् समाधानमाह सत्यमेतदित्यादि।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां षष्ठस्याध्यायस्य
द्वितीयःपादः समाप्तः ॥ ६।२॥ (JJ)

---

(JJ) काश्मीराहृतपुस्तके त्वत्र "स्थविरजिनेन्द्रबुद्धपरचितायां"मिति पाठः। The MS in the Government Library at Madras also gives स्थविरजिनेन्द्र। There are many treatises called the Nyasas; as काशिकान्यास, शाकटायनन्यास, बोधिन्यास, जैनेन्द्रन्यास &c. The काशिकान्यास वा जिनेन्द्रबुद्धिन्यास वा जिनेन्द्रन्यास appears to be more celebrated. As जिनेन्द्र was probably prior to the authors of other Nyasa, it is likely that he is called the स्थविर i.e. old, ancient. Or it is because that he was a very revered personage amongst the members of the Buddhistic persuasion. His title viz. the बोधिसत्त्वदेशीयाचार्य्यं, expresses that he was a preceptor (आचार्य्य) who was almost a बोधिसत्त्व। The word is by the तद्धित affix देशीयर् (5. 3. 67) in the sense of ईषद्-समाप्तः i.e. ईषदसम्पूर्णः बोधिसत्त्व.—Some form the word with the affix छ by गहादिभ्यश्च (4. 2. 128) meaning a preceptor of the बोधिसत्त्वदेश i.e. of the बोधिसत्त्व country.

अथ

# काशिकाविवरणपञ्जिका।

——(०)——

## षष्ठाध्यायस्य

## तृतीयः पादः।

——०——

### १। अलुगुत्तरपदे।

स्तोकान्मुक्तः। अल्पान्मुक्त इति। करणे स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्येति (२।३।३३) पञ्चमी। स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेनेति (२।१।३९) समासः। ननु च वनं समास (६।२।१७८) इत्यतः समासग्रहणमनुवर्त्तिष्यते। समासे च नियतं सन्निहितमुत्तरपदम्। अतोऽन्तरेणाप्युत्तरपदग्रहणमुत्तरपदं लभ्यत इत्यभिप्रायेणाह उत्तरपदमिति किमिति। निःस्तोक इति। निरादयः क्रान्ताद्यर्थे पञ्चम्येति (२।१।१८, वा) प्रादिसमासः। एवम्मन्यते। असत्युत्तरपदग्रहणे समासे ये स्तोकादय उत्तरपदभूताः पूर्वपदभूता वा तेभ्य उत्तरस्याः पञ्चम्या अलुग् भवतीत्येतावन्मात्रं लभ्यते। नतूत्तरपदे परतो ये स्तोकादय इत्येष विशेषः। ततश्च निःस्तोक इत्यत्राप्यलुक् स्यात्। भवति ह्यत्रापि समासवर्त्तिनः स्तोकादेः शब्दादुत्तरा पञ्चमीति। नन्वेवमपि न कर्त्तव्यमेवोत्तरपदग्रहणम्। लक्षणप्रतिपदोक्तपरिभाषया (प, ११४) प्रतिपदं

स्तोकादिभ्यः करणे चेत्यादि सूत्रेण ( २।३।३३ ) या पञ्चमी विहिता तस्या एव ग्रहणम्। न त्वपादाने पञ्चमीत्यनेन (२।३।१८) सामान्यलक्षणेन या पञ्चमी विहिता तस्याः। अवश्यञ्च लक्षणप्रतिपदोक्तपरिभाषाऽऽश्रयितव्या ( प, ११४ )। अन्यथा हि स्तोकादपेतः स्तोकापेत इत्यत्राप्यलुक् स्यात्। एवं सति निस्तोक इत्यत्रालुक् प्राप्तिरेव नास्ति। नह्यत्र स्तोकशब्दात् प्रतिपदविहिता पञ्चमी। किं तर्हि? सामान्यलक्षणविहिता। ततु किं तन्निवृत्त्यर्थेनोत्तरपदग्रहणेनेत्याह अन्यार्थमित्यादि। आनङाद्यर्थ मिदमुत्तरपदग्रहणम्। असति चैतस्मिन्नानङ् ऋतो द्वन्द्व इत्यानङ् (६।३।२५) होतापोतृभ्यामित्यत्र यथा पूर्वपदस्य भवति तथोत्तरपदस्यापि स्यात्। तथेको ह्रस्वोऽङ्यो गालवस्येति ( ६।३।६१ ) ह्रस्वो यथेह भवति ग्रामणिपुत्र इति तथेहापि स्यात् ग्रामणीरिति। ननु यद्यनुत्तरपदेऽपि ह्रस्वः स्यात् तदा ह्रस्वो नपुंसके प्रातिपदिकस्येति (१।२।४७) वचनमनर्थकं स्यात्। अनेनैव सिद्धत्वात्। नानर्थकम्। अनिगन्तार्थत्वान्नित्यार्थत्वाच्च। किञ्चा-सत्युत्तरपदग्रहणे नलोपो नञ इति (६।३।७३) प्रत्ययेऽपि नलोपः स्यात्। नतरामिति। तस्मादन्यार्थमिदमुत्तरपदग्रहणं कृतम्। यद्येवं यदर्थमिदं तद्विधावेव कर्त्तव्यं। इह किमर्थं क्रियत इत्याह इहाप्यलुको निवृत्ति-मित्यादि। इतिकरणो हेतौ। अन्यार्थं तावदवश्यमिदमुत्तरपदग्रहणम्। इह तु क्रियमाणे सत्ययं विशेषः। निःस्तोक इत्यत्राप्यलुङ् निवृत्तः क्रियते। तेन ( प, १४४ ) लक्षणप्रतिपदोक्तपरिभाषा नाश्रयितव्या भवति। अथ कुतः प्रागिमावधिकाराविल्याह अलुगधिकार इत्यादि। विधेयान्तरं विधेयान्तरस्य निवर्त्तकम् भवतीत्यानङ् विधीयमान उत्तरपदेऽलुकं निव-र्त्तयति। तस्मादलुगधिकारः प्रागानङः। उत्तरपदाधिकारः प्रागङ्गाधि-कारादिति। उत्तरपदे परतो यत् कार्य्यं विधीयते तस्य सम्बन्धिशब्दत्वात्

पूर्वपदं विधिभाक्। अतोऽङ्गं विधिभाक्त्वेन विज्ञायमान मुत्तरपदाधिकारं निवर्त्तयति। अङ्गस्य हि यत् कार्य्यं तत् प्रत्यये परतो विधीयते। नोत्तरपदे। नह्युत्तरपदेऽङ्गसंज्ञा भवति। अथवोत्तरपद इति सप्तमीनिर्देशादनन्तर एवोत्तरपदे भवितव्यमानङा। यदि चात्र विभक्तेरलुक् स्यात् तदा व्यवधानादानन्तर्य्यं न स्यात्। न च व्यवधानेऽपि वचनसामर्थ्यादानङ् स्यादिति शक्यते परिकल्पयितुम्। एवं हि तस्मिन्निति निर्द्दिष्टे पूर्व्वस्येति (१।१।६६) निर्द्दिष्टग्रहणमानन्तर्य्यार्थं बाध्येत। अनिष्टञ्च रूपमापद्येत। न चानिष्टार्था शास्त्रे प्रक्लृप्तिर्युक्ता। तस्मादलुगधिकारः प्रागानङः। अङ्गस्य प्रत्यये परतोऽभावादुत्तरपदे परतस्तन्न भवत्येव। अतउत्तरपदाधिकारः प्रागङ्गाधिकारात्।

२। पञ्चम्याः स्तोकादिभ्यः।

स्तोकादय इति प्रातिपदिकगणेषु न पठ्यन्ते। तस्मात् सूत्रपरिपठिता एवेह ग्रहीतव्या इति दर्शयन्नाह स्तोकान्तिकदूरार्थकृच्छ्राणीत्यादि। अथ करणे चेत्यादौ सूत्रे (२।३।३३) ये परिपठिताः स्तोकादयस्ते कस्मान्न गृह्यन्ते? एवं मन्यते। ङसेः स्तोकादिभ्य इति वक्तव्ये पञ्चम्या इति बहुतराक्षरनिर्देशेनैतत् सूचितं येषु स्तोकादिषु गृह्यमाणेषु बहुतरलक्ष्यसंग्रहो भवति ते ग्रहीतव्या इति। स्तोकान्तिककृच्छ्राणीत्येतेष्वेव गृह्यमाणेषु बहुतरलक्ष्यसंग्रहो भवति। तन्त्रार्थग्रहणात्। नत्वितरेषु। तस्मादेषामेव ग्रहणं न्याय्यमिति। कथं पुनरत्र लुक् प्राप्नोति यस्मिन् प्राप्ते प्रतिषेधोऽयं क्रियत इत्याह समासे कृत इत्यादि। समासे कृते सति तस्य कृत्तद्धितसमासाश्चेति (१।२।४६) प्रातिपदिकत्वम्। अतः सुपो धातुप्रातिपदिकयोरिति (२।४।७१) सुपो लुकि प्राप्ते प्रतिषेधोऽयमुच्यते। किं पुनः कारणमेकवचनान्तानां स्तोकादीनामलुगुदाह्रियते? न द्विवचन-

बहुवचनान्तानामित्याह द्विवचनबहुवचनान्तानामित्यादि। वृत्तौ (A) हि विशेषणपदान्येकत्वादिकां संख्यां विहायाभेदैकत्वसंख्यां प्रतिपद्यन्ते। सा पुनः संख्यानमात्र मनुपात्तसंख्याविशेषं सामान्यभूतम्। यत एवमतो विवक्षितार्थानभिधानाद् द्विवचनबहुवचनान्तानां समासो न भवत्येव। अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्तीति। तेनेत्यादि। यत एवं द्विवचनबहुवचनान्तानां स्तोकादीनां समासो न भवति तेन स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इत्यत्र न कदाचिदप्येकपद्यमैकस्वर्यंञ्च भवति। स्तोकाभ्यामित्यस्माद्धि पदान्मुक्त इत्येतत् पदमन्यदेवात्यन्तभिन्नम्। तथा स्तोकेभ्य इत्यस्मान् मुक्त इत्येतत्। स्वरोऽप्यत्रानेक एव। तथाहि स्तोकाभ्याम् इत्येतत् प्रातिपदिकस्वरेण मध्योदात्तम्। मुक्त इत्येतत् प्रत्ययस्वरेणान्तोदात्तम्। एवं स्तोकेभ्यो मुक्त इत्यत्रापि नानास्वरता वेदितव्या। मूलोदाहरणे तु समासे सत्येकपद्यं भवति। स्वरोऽप्येक एव। तथाहि थाथादि- (६।२।१४४) सूत्रेणात्रान्तोदात्तत्वम्। यदि द्विवचनबहुवचनान्तानां समासो न भवतीह तर्हि कथम्भवति गोषुचरो वर्षासुज इति? विवक्षितार्थाभिधानात्। अनभिधानं ह्यसमासे हेतुरुक्तः। इह तु विवक्षितार्थस्यार्थस्य बहुवचनस्याभिधानमस्त्येव। यत्र ह्यभेदैकत्वसंख्योपजायते तत्र संख्याविशेषस्याभिधानं न भवति। न चात्राभेदैकत्वसंख्योपजायते। ततश्च विवक्षितार्थाभिधानादभेदैकत्वसंख्या नोपपद्यते। तथाहि गोषुचर इत्यत्र गोशब्दोऽप्सु वर्त्तते। स चापोऽभिदधानो बहुत्वसंख्याविशिष्ट एवाभिदधाति। अप्शब्दवत्। वर्षासुज इति। वर्षाशब्दोऽपि कालविशेषे बहुत्वसंख्याविशिष्ट एव वर्त्तते। अतः प्रातिपदिकेनैव बहुत्वसंख्याया आश्रितत्वान्नात्राभेदैकत्वसंख्योपजायते। यदि तु जायेत तदा बहुत्व-

---

(A) वृत्ती समास इत्यर्थः।

संख्या निवर्त्तेत। ततश्च गोशब्दस्य वर्षाशब्दस्य च यः प्रातिपदिकार्थोऽभिप्रेतः स इह न गम्येत। तस्मान् मा भूद् गोशब्दवर्षाशब्दयो रभिप्रेतस्यार्थस्यानवगतिरिति नानाभिदैकत्वसंख्योपजायते। ततश्च विवच्चितार्थाभिधानाद् गोषुचरो वर्षासुज इत्यत्र भवत्येव समासः। ब्राह्मणाच्छंसिन उपसंख्यानं कर्त्तव्यमिति। ब्राह्मणाच्छंसीति योऽयं शब्दस्तस्योपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः। किं पुनरत्र न सिध्यति? पञ्चमीति। ब्राह्मणशब्देनात्राध्ययनविशेष (B) उच्यते। तं शंसति कथयति यः स ब्राह्मणाच्छंसीति। ताच्छीलिको णिनिः। अत्र ब्राह्मणशब्दात् कर्मणि द्वितीयेति (२।३।२) द्वितीयायां प्राप्तायां पञ्चम्युपसंख्येया। अलुक् पुन स्तत्पुरुषे कृति बहुलमित्येवं (६।३।१४) सिद्धः। यदा तु ब्राह्मणादाकृष्यावयवमर्थं वा शंसतीति विवच्यते तदा पञ्चम्यपि नोपसंख्येया। अपादाने पञ्चमीत्येव (२।३।२८) मेव तस्याः सिद्धत्वात्। कथं पुनरत्रासता पञ्चम्यर्थेन व्युत्पत्तिः क्रियत इत्याह ऋत्विग्विशेष इत्यादि। रूढ़िः प्रसिद्धिः संज्ञेति यावत्। तस्या इत्यनेन रूढ़िमात्रं प्रत्यवमृश्यते। न तु ब्राह्मणाच्छंसीत्ययं रूढ़िशब्दः। रूढ़िशब्दा हि नावश्यं सतैवावयवार्थेन व्युत्पाद्यन्ते। अपित्वसतापि। तैलपायिकाशब्दवत्। ब्राह्मणाच्छंसीति शब्दश्चायं रूढ़िशब्दः कस्यचिदेव ऋत्विग्विशेषस्य वाचकः। तत्रैव तस्य संज्ञात्वेन प्रणीतत्वात्। तस्मात् तस्याप्यसता सता वावयवार्थेन व्युत्पत्तिः क्रियते। तत्र यदि ब्राह्मणं शंसतीत्ययमर्थो विवच्यते तदा पञ्चम्यर्थस्यापादानस्याभावादसतावयवार्थेन व्युत्पत्तिः क्रियते। यदा तु ब्राह्मणादवयवार्थं वा गृहीत्वा शंसतीत्ययमर्थो विवच्यते तदा पञ्चम्यर्थस्य भावात् सता।

---

(B) ग्रन्थविशेष इति पाठान्तरम् in the 23rd MS.

३ । ओजःसहोऽम्भस्तमस स्तृतीयायाः ।

ओजसाकृतमित्यादौ कर्त्तृकरणे कृता बहुलमित्यनेन (२।१।३२) समासः। अञ्जसउपसंख्यानमिति। अञ्जस उत्तरस्या स्तृतीयाया अलुक उपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्। आज्ञायिनि (२।३।५) चेत्यत्र चकारोऽनुक्तसमुच्चयार्थः। तेनाञ्जःशब्दादुत्तरस्या स्तृतीयाया अलुग् भवतीति। अन्यदपि चात्र प्रतिपादन मुत्तरत्र करिष्यामः। पुंसानुज इत्यादि। पुंसानुजो जनुषान्ध इत्यत्रापि तृतीयाया अलुक्प्रतिपादनं कर्त्तव्यमित्यर्थः। प्रतिपादनन्तु पूर्ववत्। पुंसा हेतुनानुजः पुंसानुजः। जनुषा हेतुनान्धः जनुषान्धः। तृतीयेति (२।१।३०) योगविभागात् समासः। जनुरिति जन्मनो नामधेयमेतत्।

४। मनसः संज्ञायाम्।

५। आज्ञायिनि च।

मनसाज्ञायीति। ताच्छीलिको णिनिः। आतो युक् चिण्कृतोरिति (७।३।३३) युगागमः। उपपदसमासः।

६। आत्मनश्च पूरणे।

पूरणग्रहणमिह स्वर्य्यते। स्वरितेन चाधिकारावगति र्भवति। तेन पूरणग्रहणमधिकृत्य ये पूरणप्रत्यया विहिता स्त एव पूरणग्रहणेन गृह्यन्ते। नतु स्वरूपम्। उत्तरपद इत्यनुवर्त्तते च। ततः प्रत्ययग्रहणपरिभाषया (प,२४) पूरणप्रत्ययान्त उत्तरपदे कार्य्यं विज्ञायत इत्यालोच्याह पूरणप्रत्ययान्त उत्तरपद इत्यादि। पञ्चम इति। पञ्चानां पूरण स्तस्य पूरणे डड़िति(५।२।४८)डट्। तस्य नान्तादसंख्यादेर्मट् (५।२।४९)। षष्ठ इति। षणां पूरण इति। षट्कतिकतिपयचतुरां थुक् (५।२।५१)। ष्टुत्वम्। आत्मनापञ्चम इत्यादौ केन तृतीया? नह्यत्र करणादि स्तृतीयार्थोऽस्ति। करणादि हि कारकम्। क्रियायाञ्च कारकं भवति। नचेह काचित् क्रिया विद्यत इत्याह तृतीयाविधान इत्यादि। भवत्वेवम्। तृतीयासमासस्तु कथम्? नह्यत्र समासलक्षण मस्तीत्यत आह तृतीयेति चेत्यादि। अथवा कर्त्तृकरणयो (२।३।१८) स्तृतीयेत्यनेनैवात्र

तृतीया। कर्तृकरणे कृता बहुल मिति (२।१।३२) समास इति दर्शयन्नाह आत्मना वेत्यादि। अत्र कर्त्तरि करणे वैषा तृतीया। आत्मना कृतः पञ्चम इति। कृते समासे कृतशब्दो न प्रयुज्यते। तदर्थस्य वृत्तावन्तर्भावात्। कथमित्यादि। अत्राप्यात्मनाचतुर्थ इति भवितव्यमिति भावः। बहुव्रीहिरय-मित्यादि परिहारः। तत्पुरुषे ह्यात्मनाचतुर्थ इति स्यात्। नचायं तत्पुरुषः। किं तर्हि? बहुव्रीहिः। स च प्रथमान्तयोरेव पदयोरिति न भवत्यनिष्टप्रसङ्गः। ननु चान्यपदार्थे बहुव्रीहि रुच्यते। अन्यपदार्थश्च व्यतिरिक्तो भवति। यथा चित्रा गावो यस्य स चित्रगुरिति। नचेह कश्चिद् व्यतिरिक्तोऽन्यपदार्थोऽस्ति। नैष दोषः। अव्यतिरिक्तोऽप्यन्यपदार्थो भवति व्यपदेशिवद्भावेन। यथा शोभनशरीरः शिलापुत्रक इति।

## ७। वैयाकरणाख्यायां चतुर्थ्याः।

वैयाकरणानामिति। व्याकरणमधीयते विदन्ति वा वैयाकरणाः। का पुन वैयाकरणानामाख्येत्याह ययेत्यादि। अथैवं कस्मान्न व्याख्यायते व्याकरणे भवा वैयाकरणी। अणृगयनादिभ्यइत्यण् (४।३।७३)। वैयाकरणी चासावाख्या चेति वैयाकरणाख्या। पुंवत् कर्मधारयेत्यादिना (६।३।४२) पुंवद्भावः। तस्यां वैयाकरणाख्यायामिति। अशक्यमेवं व्याख्यातुम्। इह हि न स्यात्। आत्मनेभाषः। परस्मैभाष इति। व्याकरणे हि का भवा? या व्याकरणे कृता। नचैते क्वचित् व्याकरणे कृते। पूर्वत्र व्याख्याने सतीहापि भवति। एते अपि वैयाकरणानामाख्ये। तथा ह्याभ्यामपि वैयाकरणा व्यवहरन्त्येव। आत्मनेपदमिति। आत्मार्थं पदम्। तादर्थ्ये चतुर्थी। चतुर्थीति (२।१।३६) योगविभागात् समासः। ननु चतुर्थी तदर्थेत्येवं (२।१।३६) समासः सिद्धः। न सिध्यति। प्रकृतिविकारभावे हि स इष्यते॥

## ८। परस्य च।

## ९। हलदन्तात् सप्तम्याः संज्ञायाम्।

युधिष्ठिर इति। संज्ञायामिति (२।१।४४) समासः। गवियुधिभ्यां स्थिर (८।३।९५) इति षत्वम्। अथ गविष्ठिर इत्यत्र कथमलुक्? नहि गोशब्दो

हलन्तः। नाप्यदन्तः। स्यादेतत्। गो इ स्थिर इति स्थिते ऽन्तरङ्गत्वादवादेशे कृते हलन्तत्वाद् भविष्यति। एतच्च नास्ति। यतोऽन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति। अवश्यञ्चैतदभ्युपेयम्। अन्यथा हि नद्यां कुक्कुटिका नदीकुक्कुटिका। भूम्यां पाशो भूमिपाश इत्यत्रापि यणादेशे कृते ऽलुक् प्रसज्येतेत्यत आह गविष्ठिर इत्यत्र त्वित्यादि। हृद्द्युभ्यामिति। असंज्ञार्थमिदम्। वक्तव्यमिति व्याख्येयमित्यर्थः। व्याख्यानञ्चोत्तरत्र करिष्यते। अथवेहापि क्रियते। इहान्तग्रहणं न कर्त्तव्यम्। विनापि तेन सप्तम्या प्रातिपदिके सन्निधापिते हलदन्तता लभ्यत एव। तस्मादधिकमिहान्तग्रहणं क्रियते। तदधिकं क्रियमाण मेतत् सूचयति। अधिकेनायमलुग् भवतीति। तेन क्वचिदसंज्ञायामलुग् भवतीति। हृदिस्पृग्दिविस्पृगिति। स्पृशोऽनुदके क्विन् (३।२।५८)। क्विन् प्रत्ययस्य कुरिति (८।२।६२) शकारस्य खकारः। तस्य झलां जशोऽन्त (८।२।३९) इति जश्त्वं गकारः। तस्यापि वावसान इति (८।४।५६) चर्त्वं ककारः। अत्र चायमर्थो हृदयं स्पृशति दिवं स्पृशतीति। तथाहि भाष्य उक्तम्। द्वितीयार्थे सप्तमी चैषा द्रष्टव्या। हृदयं स्पृशति। दिवं स्पृशतीति हृदिस्पृग् दिविस्पृगिति। कथं पुनर्द्वितीयार्थे सा भवति? अतएव भाष्यकारवचनात्। अथवा हृदयं यः स्पृशति स हृदये स्पृशत्येव। दिवं यः स्पृशति स दिवि स्पृशत्येव। अत्राधिकरण इत्येवं (२।३।३६) भविष्यति सप्तमी। आख्याग्रहणे प्रकृते पुनः संज्ञाग्रहणं विस्पष्टार्थम्।

## १०। कारनाम्नि च प्राचां हलादौ।

वणिग्भिः कर्षकैः पशुपालैश्च राज्ञे देयो भागो रक्षानिबन्धनः कारः। तस्य नाम कारनाम। कूपेशाण मित्यादौ संज्ञायामिति (२।१।४४) समासः। द्वैद्विपदिकेति। द्वौ द्वौ पादौ देयौ द्विपदिका। पादशतस्येत्यादिना(५।४।१) वुन्। अलोऽन्त्यलोपश्च। पादः पदिति (६।४।१३०) पदादेशः। कारविशेषस्येत्यादिनास्य सूत्रस्य नियमार्थतां दर्शयति। नियमविकल्पा नियमविशेषा इत्यर्थः। कारनाम्नि चेत्यादिना तेषां नियमविकल्पानां स्वरूपं दर्शयति। एते च नियमविकल्पाः कारनाम्नि प्राचां हलादावित्येषां पदानामिह नियमवाक्य

उपादानाल्लभ्यन्ते। यद्याद्यो नियमो नाभिप्रेतः स्यात् तदा कारनाम्नीति न ब्रूयात्। एवं यदि द्वितीयो नियमो नाभिप्रेतः स्यात् तदा प्राचामित्येवं नोक्तं स्यात्। तथा यदि तृतीयो नियमो नाभीष्टःस्यात् हलादावित्येवं नोक्तं स्यात्। अथ किमर्थं नामग्रहणम् ? न पूर्वयोगात् संज्ञाग्रहणमनुवर्त्तते। पूर्वयोगे संज्ञाया उपाधेः प्रायिकत्वसूचनार्थं नामग्रहणम्। तेन हृदिस्पृग्दिविस्पृगित्यत्रासंज्ञायामप्यलुक् सिद्धो भवति।

## ११। मध्याद्गुरौ।

अन्ताच्चेति वक्तव्यमिति। अन्तशब्दाच्चोत्तरस्याः सप्तम्या अलुग् भवतीत्येतदर्थरूपं व्याख्येय मित्यर्थः। तत्रेदं व्याख्यानम्। पूर्वयोगाच्चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेनान्तशब्दादप्युत्तरस्याः सप्तम्या अलुग् भवतीति।

## १२। अमूर्धमस्तकात् स्वाङ्गादकामे।

स्वाङ्गमद्रवादिलक्षणं परिभाषिकं यत् तदिह गृह्यते। कण्ठेकाल इति बहुव्रीहिः। व्यधिकरणानामपि बहुव्रीहिर् भवत्येवेति बहुव्रीहिः। समानाधिकरण इत्येतत् प्रायिकम्। अक्षशौण्ड इति। सप्तमी शौण्डैरिति (२।१।४०) समासः। अङ्गुलित्राणजङ्घावली सप्तमीतत्पुरुषौ।

## १३। बन्धे च विभाषा।

स्वाङ्गादिति निवृत्तम्। सामान्येन विधिः। बन्ध इति बध्नाते रेतद्रूपम्। नेन्सिद्धबध्नातिषु चेत्यनेन (६।३।१९) तत्पुरुषे बध्नातौ प्रतिषेधं वक्ष्यन्ति। तत्र विषयविभागो न ज्ञायते तत्पुरुषे क्व च प्रतिषेध इत्यत स्तत्परिज्ञानार्थमाह बन्ध इति घञन्तो गृह्यत इति। बन्धनं बन्धः। भावे घञ्। अनेन घञन्ते बध्नातौ विभाषा। प्रत्ययान्तरे तु प्रतिषेध इति दर्शितं भवति। कथं पुनर्ज्ञायते घञन्तोऽयमिति। आद्युदात्तत्वात्। हस्तेबन्ध इति तत्पुरुषो बहुव्रीहिर्वा। उभयत्रेति प्राप्ते चाप्राप्ते च। कथं पुन रुभयत्र विभाषेयमित्याह स्वाङ्गाद्धीत्यादि।

## १४। तत्पुरुषे कृति बहुलम्।

स्तम्बेरमः। कर्णेजप इति। स्तम्बकर्णयोरमिजपोरित्यच् (३।२।१३) उपपदमतिङिति (२।२।१९) तत्पुरुषः। कुरुचरः। मद्रचर इति। चरेष्टः (३।१।१६)। विभाषायां प्रकृतायां बहुलग्रहणं क्वचित्प्रवृत्त्यादीनामर्थानां (C) संग्रहार्थम्। तेनालुक्प्रवृत्तिः क्वचिदेव भवति स्तम्बेरम इत्यादौ। क्वचिदप्रवृत्तिरेव कुरुचर इत्यादौ। क्वचिदुभयं सरसिजं सरोजमित्यादौ। क्वचिदन्यदेव ब्राह्मणाच्छंसीत्यादौ। सप्तम्या अलुगुक्तः पञ्चम्या अपि भवति। तथा कृदन्त उत्तरपदे ऽलुगुक्त स्तङितेऽपि भवति। अप्सु भवोऽप्सव्य इति। दिगादित्वाद् यत्। ओर्गुण इति (६।४।१४६) गुणः। वान्तो यि प्रत्यय इति (६।१।७९) वान्तादेशः। तदेवं सर्व्वत्र बहुलग्रहणेन सिद्धमिति। ब्राह्मणाच्छंसिन उपसंख्यानमित्यादि यदुक्तं यच्च वक्ष्यते ऽपो योनियन्मतुषु सप्तम्या अलुगित्यादि तत् सर्वं न वक्तव्यं भवतीति। यद्येवं स्तोकान्मुक्त इत्याद्यपि सर्वमनेनैव सिद्धमिति पञ्चम्याः स्तोकादिभ्य इति (६।३।२) न वक्तव्यं भवति। सत्यमेतत्। अस्यैव प्रपञ्चार्थं तद् वेदितव्यम्। एवञ्च सति सुसंगृहीतं लक्षणम्भवति। तथाचाह तएव विषयाः सुसंगृहीता भवन्ति येषां लक्षणं प्रपञ्चश्च।

## १५। प्रावृट्शरत्कालदिवां जे।

प्रावृषिज इति। सप्तम्यां जने डः (२।३।९७)। टेरिति (६।४।१४३) टिलोपः। उपपदमतिङिति (२।२।१९) समासः।

## १६। विभाषा वर्षक्षरशरवरात्।

## १७। घकालतनेषु कालनाम्नः।

घ इति तरप्तमपो ग्रहणम्। काल इति कालवाचिनः शब्दस्य। तन इति। ट्युट्युलोरनादेशस्य सतुट्कस्य। पूर्वाह्णेतरामिति। अह्नः पूर्वमिति विगृह्य पूर्वापरेत्यादिनैकदेशिसमासः (२।२।१)। राजाहःसखिभ्यष्ट-

---

(C) "क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा विलोक्य चतुर्विधं बाहुलकं वदन्ति" ॥ १ ॥ इति।

जिति (५।४।१९)टच् समासान्तः । अह्नोऽह्न एतेभ्य (५।४।८८) इत्यह्नादेशः । अह्नोऽदन्तादिति (८।४।७) णत्वम् । ऽस्मिंश्च पूर्वाह्णे अस्मिंश्च पूर्वाह्णे । अस्मिंस्त्वनयो रतिशयेन पूर्वाह्णे पूर्वाह्णेतर इति । द्विवचनेत्यादिना तरप् (५।३।५७)। पूर्वाह्णेतमामिति । अतिशायनेत्यादिना (५।३।५५) तमप् । कृत्तद्धितसमासाश्चेति (१।२।४६) प्रातिपदिकत्वे सति सुब्लुक् प्राप्तः पक्षे प्रतिषिध्यते । पूर्वाह्णेतन इति पूर्वाह्णेतर इत्यत्रार्थे विभाषा पूर्वाह्णापराह्णाभ्यामिति (४।३।२४) टुट्युलौ तुडागमश्च । युवोरनाकावित्यनादेशः (७।१।१) । रात्रितरायामिति । अस्याञ्च रात्रावस्याञ्च रात्रावनयो रतिशयेन रात्राविति विग्रहः । ननुच प्रत्ययग्रहणे यस्मात् स विहित स्तदादे स्तदन्तस्येति (प,२४) तदन्तग्रहणं भवतीति घसंज्ञकप्रत्ययान्ते तनप्रत्ययान्ते चोत्तरपदे परतोऽलुगुदाहर्त्तव्यः । तत् कस्मात् प्रत्ययमात्रे सउदाहृत इत्याह उत्तरपदाधिकार इत्यादि । कुतःपुनरेतदित्याह लेखग्रहणादित्यादि । हृदयस्य(६।४।५०) हृल्लेखयदण्लासेष्वित्यत्राणो लेखशब्दस्य चाणन्तस्य भेदेनोपादानम् । तत्र यद्युत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिरिष्यते तदालेखग्रहणं न कुर्य्यात् । अण्ग्रहणेनैव तद्ग्रहणस्य सिद्धत्वात् । क्रियते च । तस्माल्लेखग्रहणाद् विज्ञायत उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नेष्यत इति । तेनेति । तदन्तविधेरिहानिष्टत्वेन । काल इति न स्वरूपग्रहणमिति । नामग्रहणात् । तस्य ह्येतदेव प्रयोजनम् ।

## १८ । शयवासवासिष्वकालात् ।

खेशय इति । अधिकरणे शेतेरित्यच् (३।२।१५) । ग्रामेवास इति । वसनं वासः । भावे घञ् । ग्रामेवासीति । ताच्छीलिको णिनिः । व्रते वा । पूर्वाह्णशय इति । ननुच स्वरूपग्रहणे सति कालशय इति प्रत्युदाहार्य्यम् । नैवेदं स्वरूपग्रहणम् । किं तर्हि ? ह्यर्थग्रहणम् । अतएव वृत्तावुक्तम् अकालवाचिन इति । कथं पुनरर्थग्रहणं लभ्यते ? पूर्व्वसूत्रादिह नामग्रहणानुवृत्तेः । यद्येवं तदा नार्थः कालग्रहणेन । कालनाम्न (६।३।१७) इत्येतदनुवर्त्तिष्यते । तस्य च नञा सह सम्बन्धं करिष्यामः । कालनाम्नो नेति ।

तत्रायमर्थः। नेन्सिद्धबध्नातिषु चेत्यत्र (६।३।१९) नेति वक्तव्यं न भवति। नेत्येतदेव ह्यनुवर्त्स्यते। नैवं शक्यम्। न शयवासवासिष्वित्युच्यमाने ह्यलुक एवायं प्रतिषेधो विज्ञायेत। तस्यात्र विधेयतया प्रस्तुतत्वात्। तस्मात् कालस्यैव प्रतिषेधो यथा स्यादित्येवमर्थं कालग्रहणं कर्त्तव्यम्। वक्तव्यमिति व्याख्येय मित्यर्थः। व्याख्यानन्तु पूर्वमेव कृतम्।

## १९। नेन्सिद्धबध्नातिषु च।

तत्पुरुषे कृति बहुल मिति (६।३।१४) प्राप्तस्यालुकोऽयं प्रतिषेधः। इनन्तउत्तरपद इति। ननुचोत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नेष्यत इति ज्ञापितमेतत्। तत् कथमिह तदन्तमुत्तरपदं गृह्यते? सप्तम्याः परस्येन्प्रत्ययस्यासम्भवात्। द्विविध एव ह्येन्प्रत्ययः कृत् तद्धितश्च। तत्र कृद् धातोरेवोत्पद्यत इति न सप्तम्याः परः सम्भवति। तद्धितोऽपि नैव कश्चित् सप्तमीसमर्थादुत्पद्यत इत्यसावपि नैवं सप्तम्याः परः सम्भवति। तस्मादिनन्तमेव गृह्यत इति युक्तमुक्तमेतत्। स्थण्डिलवर्त्तीति। व्रतइति (३।२।८०) णिनिः। उपपदमतिङिति (२।२।१९) समासः। साङ्काश्यसिद्ध इति। सिद्धशुष्केत्यादिना (२।१।४१) समासः। चक्रबद्ध इति बद्धशब्दो निष्ठान्तः। सप्तमीति योगविभागात् (२।१।४०) समासः। बन्धशब्देन चक्रबन्ध इति। सिद्धेत्यादिना (२।१।४१) समासः। तत् पचाद्यच् प्रत्ययान्तं द्रष्टव्यमिति। अथ बन्धइत्येतच्छब्दरूपं घञन्तं कस्मान्न गृह्यत इत्याह घञन्ते हीत्यादि।

## २०। स्थे च भाषाया।

अयमपि तत्पुरुष इत्यादिना (६।३।१४) प्राप्तस्यालुकः प्रतिषेधः। समस्थ इति। समे तिष्ठतीति कः। आतो लोप इटि चेत्याकारलोपः (६।४।६४)। कृष्णोऽस्याखरेष्ठा इति। स्थःक चेति (३।२।७७) क्विप् प्रत्ययः॥

## २१। षष्ठ्या आक्रोशे।

चौरस्यकुलमिति। आक्रोशप्रतिपादनपरमेतत्। न त्वनेन तस्य सम्बन्धो विवक्षितः। वक्तव्य इति। व्याख्येय इत्यर्थः। व्याख्यानन्तु पूर्व-

मेव कृतम् । पश्यतोहर इति । पश्यत इति षष्ठी चानादर इति (२।३।३८) षष्ठी । हरतीति हरः । पचाद्यच् । अमुष्येति । अदस स्त्यदाद्यत्वम् । अदसोऽसेर्दादु दो मइत्युत्वमत्वे (८।२।८०) । उत्वस्यासिद्धत्वात् टाङसिङसामिनात्स्या इति (७।१।१२) ङसःस्यादेशः । तथामुष्यकुलिकेति । यथामुष्यपुत्रिकेत्यत्र मनोज्ञादित्वाद्वुञ् तथात्रापीत्यर्थः । देवानांप्रिय इति । प्रीणातीति प्रियः । इगुपधज्ञाप्रीकिरः क (३।१।१३५) इति कप्रत्ययः । इयङादेशः । शुनःशेफ इति । श्वयुवमघोनामतद्धित इति (६।४।१३३) संप्रसारणम् ।

## २२ । पुत्रेऽन्यतरस्याम् ।

## २३ । ऋतो विद्यायोनिसम्बन्धेभ्यः ।

विद्या च योनिश्चेति विद्यायोनी । तत्कृतः सम्बन्धो येषां ते विद्यायोनिसम्बन्धाः । कृतशब्दस्य वृत्तावप्रयोगः । गम्यमानार्थत्वात् । यथा गुड़धाना इत्यत्र मिश्रशब्दस्य । ऋतो विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणं कर्त्तव्यमिति । तदित्यनेन विद्यायोनिसम्बन्धा उभयेऽपि निर्दिश्यन्ते । तेषां पूर्वपदभूतानामुत्तरपदभूतानाञ्च ग्रहणं कर्त्तव्यम् । गृह्यते येन तद् ग्रहणम् । येन ते गृह्यन्ते तादृशं व्याख्यानं कर्त्तव्यमित्यर्थः । किं पुनस्तद् व्याख्यानम् ? किमर्थं तत् कर्त्तव्यमित्याह विद्यायोनिवाचिन्येवेत्यादि । तदेदं व्याख्यानम् । इहेङ्गितेनोन्मिषितेन महता सूत्रप्रबन्धेनाचार्य्याणामभिप्राया लक्ष्यन्ते । ऋतो विद्यायोनिसम्बन्धेभ्य इत्येष महान् सूत्रप्रबन्धः । यदि ह्यविद्यायोनिसम्बन्धवाचिन्युत्तरपदेऽलुगभीष्टः स्यादेवं सत्यविद्यायोनिसम्बन्धादित्येवं ब्रूयात् । अथवा सम्बन्धग्रहणमपि न कुर्य्यात् । नहि किञ्चिदृकारान्तं विद्यावाचि योनिवाचि वाऽसम्बन्धमस्ति । तत्रान्तरेणापि सम्बन्धग्रहणं विद्यायोनिसम्बन्धवाचिन इति विज्ञास्यते । तत् किं सम्बन्धग्रहणेन ? तदेतस्मान्महतः सूत्रप्रबन्धाद्विद्यायोनिसम्बन्धवाचिन्युत्तरपद आचार्य्यस्यायमलुगभीष्ट इति लक्ष्यत इति । होतुरिति । ऋत उदित्युत्त्वम् (६।१।१११) । रपरत्वम् । रात् सस्य इति सकारलोपः (८।२।२४) ।

२४। विभाषा स्वसृपत्योः।

२५। आनङ् ऋतो द्वन्द्वे।

ऋकारान्तानां विद्यायोनिसम्बन्धवाचिनां यो द्वन्द्व इत्यादि। अथ ऋकारान्तस्य द्वन्द्व आनङ् भवतीत्येवं कस्मान्न विज्ञायते? अशक्यमेवं विज्ञातुम्। इहापि प्रसज्येत पितृपितामहाविति। ङकारोऽन्त्यादेशार्थः। इह हि वर्णाना मुपदेशः कार्य्यार्थः श्रवणार्थो वेति। नकारश्चायं न क्वचिच् श्रूयते। सर्वत्रैव ह्यस्य नलोपः प्रातिपदिकान्तस्येति (८।२।७) लोपेन भवितव्यम्। नापि किञ्चित् कार्य्यमस्योपलभ्यते। तत् किमर्थं नकारस्योच्चारणमित्याह नकारोच्चारण मित्यादि। असति नकार ऋकारस्य स्थानेऽणेव शिष्यते। तत उरण् रपर (१।१।५१) इति रपरत्वं स्यात्। नकारे तु सति नायमणेव शिष्यते। अपितण् चानङ् चेति न भवति रपरत्वप्रसङ्गः। नहि यत्राण् अनण् चेति शिष्यते तत्र रपरत्वं भवति। यथा सुधातुरकङ् चेति (४।१।९७) सौधातकिरित्यत्र। तस्मादत्र रपरत्वनिवृत्त्यर्थं नकारोच्चारणम्। अथ पितापुत्रौ मातापुत्रौ इत्यत्र कथमानङादेशः। नह्यत्र ऋकारान्तानां द्वन्द्व इत्याह पुत्र इत्यत्रानुवर्त्तत इति। पुत्रेऽ (६।३।२२) न्यतरस्यामित्यतः पुत्र इत्येतदत्रानुवर्त्तत इत्यभिप्रायः। यदि तु पुत्र इत्यनुवर्त्तते तदा विभाषा स्वसृपत्योरित्यत्र पुत्रे (६।३।२४) ऽपि विभाषा प्राप्नोति। नैष दोषः। मण्डूकप्लुतिन्यायेन तदनुवर्त्तते। अतएवात्रेत्युक्तं तत्रैवानुवर्त्तते। न पूर्वत्रेति प्रतिपादनार्थम्। नन्वेवमपि पुत्रशब्द उत्तरपदे पूर्वपदमात्रस्यानङ् प्राप्नोति। कार्य्यिणोहानिर्देशादुत्तरपदशब्देन च पूर्वपदमात्रस्याच्छिप्तत्वात्। न च शक्यते वक्तुम् ऋत इति वचनादृकारस्य भविष्यतीति। तस्मादेकमिह ऋत इति वचनं द्वन्द्वस्य विशेषणम्। न कार्य्यिण इत्याह ऋत इति चेति। अत्रानुवर्त्तत इति सम्बन्धः। ऋतो विद्यायोनिसम्बन्धेभ्य इत्यत ऋत इत्यनुवर्त्तते। तत् कार्य्यिणो विशेषणं भविष्यति। ननु तत् पञ्चमीनिर्दिष्टम्। षष्ठीनिर्दिष्टेन चेहार्थः। नैष दोषः। पुत्र इत्येषा सप्तमी ऋत इत्यस्याः पञ्चम्याः षष्ठीत्वं प्रकल्पयिष्यति।

तस्मिन्निति निर्दिष्टे पूर्वस्येति (१।१।६६)। नन्वेवमपि विरोधः। तथाहि यदि पुत्रशब्द उत्तरपदं कथं तदा ऋकारान्तानां द्वन्द्वः। अथ ऋकारान्तानां द्वन्द्वो न तर्हि पुत्रशब्द उत्तरपदमिति। नैतदस्ति। अन्यएव हि स द्वन्द्वो यस्य ऋत इत्येतद् विशेषणम्। अन्यश्च स यस्य पुत्रशब्द उत्तरपदमिति कोऽत्र विरोधः।

## २६। देवताद्वन्द्वे च।

अनङ्कारार्थमविद्यायोनिसम्बन्धार्थञ्च वचनम्। ननुचानङृतो द्वन्द्वइत्यतो (६।३।२५) द्वन्द्वग्रहण मनुवर्त्तत एव। तत् किमर्थमिह पुनर्द्वन्द्वग्रहणमित्याह द्वन्द्व इत्यनुवर्त्तमान इत्यादि। पूर्वकं हि द्वन्द्वग्रहणं समासविशेषप्रतिपत्त्यर्थम्। इदन्तु प्रसिद्धसाहचर्य्यार्थम्। येषां लोके वेदे च प्रसिद्धं साहचर्य्यमेषां पुनः परिग्रहो यथा स्यादित्येवमर्थम्। अथ क्रियमाणेऽपि पुनर्द्वन्द्वग्रहणे कथमयमर्थो लभ्यत इत्याह अत्यन्तसहचरित इत्यादि। द्वन्द्वं (८।१।१५) रहस्यमर्य्यादावचनव्युत्क्रमेत्यत्रेदमुच्यते। अत्यन्त सहचरिते लोकविज्ञाते द्वन्द्वमित्येतन्निपात्यत इति। तेनायमर्थो लभ्यत इति दर्शयति। वेदे च ये सहवापनिर्दिष्टा (D) इति। सहवापः सहदानं तत्र निर्दिष्टाः। सहवापनिर्दिष्टाः। के पुनरेकहविःसम्बन्धिनः। य एकं हूयमानं हविः प्रति संप्रदानत्वेन निर्दिष्टा एकत्र मन्त्रे इन्द्रावरुणाभ्यां छागं हविर् निर्वपामीत्यादौ ते वेदितव्याः। उभयत्रेत्यादि। पूर्वपदत्व उत्तरपदत्वे च सति वायोरानङादेशस्य प्रतिषेधो वक्तव्यो व्याखेयः। तत्रेदं व्याख्यानम्। विभाषा स्वसृपत्यो (६।३।२४) रित्यतो विभाषाग्रहण मनुवर्त्तते। सा च व्यवस्थितविभाषा। तेन वायोरुत्तरपदत्वे पूर्वपदत्वे च सति न भविष्यतीति॥

## २७। ईदग्नेः सोमवरुणयोः।

आनङादेशापवादोऽयमीकारो विधीयते। तकार उच्चारणार्थः।

## २८। इद्वृद्धौ।

अग्नेरित्यनुवर्त्तते। देवताद्वन्द्व इति च। सोमवरुणयोरिति निवृत्तम्।

(D) In the printed काशिका the reading is "ये च सहभावेन निर्दिष्टाः।" सहवापः सहनिर्वापः सहदानमित्यर्थः।

वृद्धिशब्देन साहचर्य्यात् कृतवृद्ध्युत्तरपदं गृह्यते। अतएवाह कृतवृद्धावुत्तर-पद इति। आग्निवारुणीति। औत्सर्गिकेऽपि कृते टिड्ढाणञिति (४।१।१५) ङीप्। अत्रापि तकार उच्चारणार्थः।

## २९। दिवो द्यावा।

देवताद्वन्द्व उत्तरपद इति। देवताद्वन्द्वे यदुत्तरपदं तत्र परतइत्यर्थः।

## ३०। दिवसश्च पृथिव्याम्।

आनङोऽपवादः। अथाकारः किमर्थमुच्चार्य्यते? सकारस्येत्संज्ञापरित्राणार्थं इति चेत्? न। प्रयोजनाभावादेवेत्संज्ञा न भविष्यतीत्याह अकारोच्चारणमित्यादि। असति ह्यकारेऽन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पद-संज्ञायां सत्यां सकारस्य ससजुषोरुरिति (८।२।६६) रुत्वं विकारः स्यात्। तस्यापि खरवसानयोर्विसर्जनीयः (८।३।१६)। तस्यापि कुप्वोः ᳵक ᳶपौ (८।३।३७)चेतुग्रपध्मानीयः स्यात्। अकारस्योच्चारणे तु सति न भवति। कथम्? अकारस्योच्चारणेन यद् विकृतस्य सकारस्योपादानं तस्यैतदेव प्रयोजनम्। अविकृतस्यास्य प्रयोगो यथा स्यादिति? द्यावा दिवसमित्यादिकम्। वाक्य मेतत्। इहच सूत्रे द्वन्द्वग्रहण मुत्तरपदग्रहणञ्चानुवर्त्तते। तेन द्यावा इत्ययमादेशो वाक्ये न प्राप्नोतीत्याह कथमित्यादि। कर्त्तव्योऽत्र यत्न इति। तत्रायं यत्नः। तत्पुरुषे कृति बहुलमित्यतो (६।३।१४) बहुलग्रहण मनु-वर्त्तते। तेन द्यावा इत्ययमादेशश्छन्दसि वाक्येऽपि भविष्यतीति (E)। अथवा चकारोऽत्र क्रियते। तस्यानुक्तसमुच्चयार्थत्वाद्भविष्यति। द्यावाशब्दस्तु स्वरित-त्वादेवानुवर्त्तिष्यत इति नार्थस्तदनुकर्षणार्थेण चकारेण। अथवा दिव्शब्देन समानार्थो द्यावाशब्दः प्रकृत्यन्तरमस्ति। तस्यायं प्रयोगः। आदेशवचनं तु दिवःप्रयोगनिवृत्त्यर्थमिति।

## ३१। उषासोषसः।

आनङोऽपवाद इति। एवमुत्तरावपि योगौ। उषासानक्तमिति। उषाश्च नक्तञ्चेति विग्रहः।

---

(E) "द्यावा चिदस्मै पृथिवी नमेते।" इति मूलोद्धृतेयमृक् गार्त्समदी। "दृष्टानुविधिश्छन्दसी-त्येषोऽत्र यत्न" इति तु मिश्रः।

३२। मातरपितरावुदीचाम् ।

३३। पितरामातरा च च्छन्दसि ।

३४। स्त्रियाः पुंवद् भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ।

अत्र त्रयः पक्षाः सम्भाव्यन्ते । स्त्रिया इति । स्त्रीशब्देन प्रत्ययग्रहणं वा । अर्थग्रहणं वा । शब्दग्रहणं वेति । तत्र यदि स्त्रिया इति स्त्रीप्रत्ययग्रहणं स्वर्य्यते तदा स्वरितेनाधिकारावगतिर्भवतीति (१।३।११) स्त्र्यधिकारविहिताः प्रत्यया गृह्यन्ते यथा गोस्त्रियोरुपसर्जनस्येत्यत्र (१।२।४८)। अथ तु स्त्रीत्यनेन स्त्रीत्वविशिष्टं द्रव्यमभिधीयते तदार्थग्रहणम् । यदि तु स्त्र्यर्थवाची शब्दः स्त्रीत्यनेनोच्यते तदा शब्दग्रहणम् । तत्राद्यपक्षेऽयं सूत्रार्थः । भाषितपुंस्कात् परः स्त्रीप्रत्ययोऽनूङ् उत्तरपदे पुंवद्भवति । निवर्त्तत इति यावत् । तदा स्त्रिया इति प्रथमार्थे षष्ठी । कथं पुनः पुंवदित्यनेन स्त्रीप्रत्ययस्य निवृत्तिः शक्यते विज्ञातुम् ? भवतीति वाक्यशेषाध्याहारात् । अत्र च पक्षे पट्वी भार्य्यास्येति पटुभार्य्य इत्यत्र स्त्रीप्रत्ययनिवृत्तेरुत्तरपदनिमित्तायाः पूर्वस्मिन् यणादेशे विधातव्ये सत्यचः परस्मिन् पूर्वविधा (१।१।५७) इति स्थानिवद्भावे सति यणादेशः स्यात् । इह च गार्ग्यौ वृन्दारिका गर्गवृन्दारिका इत्यत्र तद्राजस्य बहुषु तेनैवास्त्रिया (२।४।६२) मित्यनुवर्त्तमाने यञञोश्चेति (२।४।६४) यञो लुङ् न प्राप्नोति । पुंवद्भावेन हि स्त्रीप्रत्ययस्य निवृत्तिः क्रियते । नत्वर्थस्य स्त्रीत्वस्य । ततश्चार्थस्यानिवर्त्तितत्वात् केन पुनर्यञ् न श्रूयेतेत्येवमादयः प्रत्ययपक्षे दोषा भाष्ये विस्तरेणोक्ताः । इह चातिग्रन्थविस्तरभयान्नोच्यन्ते । अर्थपक्षे तूत्तरपदे परतो भाषितपुंस्कस्यानूङ् प्रत्ययान्तस्य स्त्रीशब्दस्य योऽर्थस्तस्य पुमर्थोऽतिदिश्यते । भाषितपुंस्कादिति पञ्चमी षष्ठ्यर्थे । स्त्र्यर्थः पुंवद्भवतीति । पुमर्थे चातिदिष्टे तद्वचनः शब्दः प्रवर्त्तते । अत्र पक्षे खित्यनव्ययस्येति (६।३।६६) ह्रस्वत्वस्यास्य च पुंवद्भावस्य विप्रतिषेधो न प्राप्नोति । भिन्नविषयत्वात् । तथाहि शब्दस्य ह्रस्वत्वम् । अर्थस्य पुंवद्भावः । ततश्च कालिम्मन्येत्यत्र विप्रतिषेधे परं कार्य्यमिति (।४।२) ह्रस्वत्वं न प्राप्नोति । इष्यते च विप्रतिषेधः । तथाहि पुंवद्भावस्यावकाशो यत्र

ष्विद्न्तमुत्तरपदं नास्ति दर्शनीयभार्य्य इति। ङ्खस्यावकाशो यत्र पुंवद्भावो नास्ति कालिम्मन्यः पुमानिति। कालिम्मन्या स्त्रीत्यत्रोभयं प्राप्नोति। तत्र परत्वाद् ङ्खत्वं भवति। तदेवमाद्ययोः पक्षयोर्दोषवत्तां मन्यमान स्तृतीयं पक्षमाश्रित्याह भाषितः पुमान् येनेत्यादि। यो ह्यविशेषेण क्वचिद् भाषित-पुंस्कः शब्दः स इहाश्रीयेत तदा द्रोणीभार्य्य इत्यत्रापि पुंवद्भावः स्यादिति मनसि कृत्वाह समानायामाकृतावित्यादि। एकस्मिन् प्रवृत्तिनिमित्त इत्यनेन समानायामाकृतावित्यस्यार्थं विस्पष्टीकरोति। आक्रियते व्यज्यते परिच्छिद्यते येनार्थस्तच् शब्दस्य प्रवृत्तिनिमित्तं जात्यादिक मिहाकृतिशब्दे-नोच्यते। भाषितपुंस्कादित्येतावत्युक्ते समानाया माकृतावित्येष विशेषो न शक्यो लब्धुमित्यभिप्रायेणाह तदेतदेवमित्यादि। तदिति वाक्योपन्यासे। एतस्य वचनस्यार्थरूपमेवंप्रकारम्। कथं भवति ? नैवं कथञ्चिदित्यर्थः। यदि भाषितपुंस्कशब्दस्य बहुव्रीहेः शब्दोऽन्यपदार्थत्वेनाश्रीयेत भाषितः पुमान् येन शब्देन स भाषितपुंस्कःशब्द इति तदा समानायामाकृतावित्येष विशेषो न लभ्यते। सर्व एव हि शब्दः क्वचिदाकृतौ पुमांसं भाषित्वा-ऽकृत्यन्तरे स्त्रियं भाषत इति कृत्वा। अर्थे त्वन्यपदार्थत्वेनाश्रीयमाणे लभ्यत एव इत्येष विशेष इत्यालोच्याह भाषितः पुमान् यस्मिन्नर्थे इत्यादि। शब्दस्य यत् प्रवृत्तिनिमित्तं जात्यादिकं तदन्यपदार्थः। केन पुनः शब्देन तत्र भाषितः पुमान् ? प्रत्यासत्ते र्यत् तस्य प्रवृत्तिनिमित्तं तेनैवेति (F) विज्ञायते। अन्यथाहि भाषितपुंस्कग्रहणमनर्थकं स्यात्। व्यवच्छेद्या-भावात्। सर्व्वत्रैवाभिधेयेऽर्थे येन केनचिच् शब्देन पुमान् भाष्यते। अन्ततोऽर्थशब्देनापि तस्यार्थस्य भाषितपुंस्कस्य यः प्रतिपादकः शब्दः सोऽप्यभिधेयधर्मस्याभिधान उपचाराद् भाषितपुंस्क इत्युच्यते। स पुनः प्रत्यासत्तेर्यस्य योऽर्थः प्रवृत्तिनिमित्तं तत्र येन पुमान् भाषित इति स एव वेदितव्यः। यश्च भाषितपुंस्कस्य प्रवृत्तिनिमित्तस्य वाचकः स नियोगत एकस्मिन् प्रवृत्तिनिमित्ते पुमांसं भाषित्वा स्त्रियं भाषते। यथा मूलोदा-हरणेषु दर्शनीयादयः शब्दा इति। सामर्थ्याद् येन शब्देन समानायामाकृतौ

(F) प्रत्यासत्तिर्यस्य तत् प्रवृत्तिनिमित्तं तत्र तेनैवेति is the reading in the MS. X.

पुमान् भाषित इत्येष विशेषो लभ्यते। अनूङिति। यद्ययं पर्युदासः स्यात् ऊङोऽन्योऽनूङिति ततो नञिवयुक्तन्यायेन (प् ७५) तत्सदृशानां टावादीनां प्रत्ययानां ग्रहणे सति तदन्तस्यैव पुंवद्भावः स्यात्। ऐड़विड़वृन्दारिका दारदवृन्दारिकेत्यत्र न स्यात्। इड़विड़ोऽपत्यं स्त्रीति जनपदशब्दात् (४।१।१६८) क्षत्रियादञित्यञ्प्रत्ययः। दरदोऽपत्यमिति द्व्यञ्मगधेत्यादिना ( ।१।१७०) तयोरतश्चेति (४।१।१७७) लुक्। तत इड़विट् चासौ वृन्दारिका चेति। दरच्चासौ वृन्दारिका चेति वृन्दारकनागकुञ्जरैरिति (२।१।६२) समासः। तत्रेदानीं पुंवत्कर्मधारयेत्यादिना (६।३।४४) पुंवद्भावो न प्राप्नोति। ऊङ्-सदृशप्रत्ययान्तराभावात्। ततश्चेड़विट्शब्दस्यैड़विड़शब्दो दरच्छब्दस्य दारदशब्दो न स्यात्। प्रसज्यप्रतिषेधे सति तु भवति। अत्राप्युङभावस्य भावादित्यालोच्य प्रसज्यप्रतिषेधोऽयमिति दर्शयन्नाह ऊङोऽभावोऽनूङिति। भाषितपुंस्कादनूङिति। यद्ययमसमासः स्यान् न बहुव्रीहि स्तदायमर्थः स्यात्। भाषितपुंस्कादुत्तरस्याविद्यमानोङः स्त्र्यर्थवृत्तेः शब्दस्योत्तरपदे परतः पुंवद्भवतीति। एवञ्च सति यथाभूतार्थवाची स्त्रीशब्द स्तथा-भूतार्थवाच्येव पुंशब्दस्यादेशो भवतीति सामर्थ्यादुक्तं भवति। ततश्चानिष्ट-प्रसङ्गः। अङ्गारका नाम शकुनयः। तेषां कालिका नाम स्त्रियः। तत एताश्च कालिकावृन्दारिकाश्चेति समासे कृते सत्येतच्छब्दो भाषितपुंस्क इति तस्मादुत्तरस्य कालिकाशब्दस्यानूङोऽर्थतो ऽन्तरतमोऽङ्गारकशब्दः पुंशब्दादेशः प्रसज्येत। अन्यस्यान्तरतमस्याभावात्। ततश्चैतदङ्गारकवृन्दारिका इति हि स्यात्। एतत् कालिकावृन्दारिका इतीष्यते। बहुव्रीहौ तु सत्यनिष्टप्रसङ्गो न भवति। तन्नहि भाषितपुंस्कस्य शब्दस्यानूङः पुंवद्भावेन भवितव्यम्। नच कालिकाशब्दो भाषितपुंस्क इत्येतत् सर्वमालोच्य बहुव्रीहिरयमिति दर्शयन्नाह भाषितपुंस्कादनूङ् यस्मिन् स्त्रीशब्द इति। यदि बहुव्रीहि-रयमितीत्थं सति सुपो धातुप्रातिपदिकयोरिति ( २।४।७१ ) पञ्चम्या लुक् प्राप्नोति। अत आह अलुङ् निपातनादित्यादि। ननुचालौकिकत्वा-दस्य वाक्यस्य निपातनादित्ययमपरीहारः। निपातनं हि लौकिकं भवति। तद्येवं लुकाप्यत्र न भाव्यम्। अथ लुग् भविष्यतीत्येवावसीयते ऽलुगपि

भवतीत्यवसीयताम्। दर्शनीयभार्य्य इति। दर्शनीया भार्य्यास्येति बहुव्रीहिः। गोस्त्रियोरुपसर्जनस्येति (१।२।४८) ह्रस्वत्वमुत्तरपदस्य। दर्शनीयत्वं नामात्र सामान्ये विशेषो दर्शनीयशब्दस्य प्रवृत्तिनिमित्तम्। तमेकमेवार्थमुपादायासौ पुंसि स्त्रियाञ्च वर्त्तते। दर्शनीयो देवदत्तः। दर्शनीया भार्य्येति। तस्मात् समानायां माकृतौ दर्शनीयशब्दो भाषितपुंस्को भवति। स्त्रियाञ्च वर्त्तते। नचास्मादूङ्। अतो भार्य्याशब्दे स्त्रीलिङ्ग उत्तरपदेऽस्य स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवति। एवं श्लक्ष्णचूड इत्यादावपि योजनीयम्। ग्रामणिदृष्टिरिति। अत्र सर्वमस्ति। नतु ग्रामणीशब्दः स्त्रियां वर्त्तते। किं तर्हि? नपुंसक इति न भवति पुंवद्भावः। द्रोणीभार्य्य इति। द्रोणशब्देन भाषितः पुमान्। नतु समाने प्रवृत्तिनिमित्ते। यस्मात् परिमाणविशेषं प्रवृत्तिनिमित्तमुपादाय पुंसि परिमाणिनि वर्त्तते। जातिविशेषं तूपादाय स्त्रियां गवादन्यां वर्त्तते। यत्र गावोऽदन्ति सा गवादनी द्रोणीशब्देनोच्यते। तस्मान्न द्रोणशब्दः समानायामाकृतौ भाषितपुंस्कः। कथमित्यादि। यदि समानायामाकृतौ यो भाषितपुंस्कस्तस्य पुंवद्भाव उच्यत एवञ्च गर्भिभार्य्य इत्यादौ पुंवद्भावो न प्राप्नोति। गर्भप्रभृतीनां शब्दानां भिन्नायामाकृतौ भाषितपुंस्कत्वादित्यभिप्रायः। अनवयवभूतान्तर्वर्त्तिवस्तुविशेषसम्बन्धे हि सति स्त्री गर्भिणीत्युच्यते। व्रीहिस्त्वन्तर्वर्त्त्यवयवस्तु विशेषसम्बन्धे सति गर्भीत्युच्यते। तस्मात् पुंसि स्त्रियाञ्च वर्त्तमानस्य गर्भिशब्दस्य प्रवृत्तिनिमित्तं भिद्यते। प्रसूतप्रजातशब्दयोरपि प्रवृत्तिनिमित्तं क्रियाकृति भिन्ना। स्त्रियां हि वर्त्तमानौ तौ गर्भविमोचनं प्रवृत्तिनिमित्तमुपादाय वर्त्तेते। पुंसि तु गर्भाधानम्। कर्त्तव्योऽत्र प्रयत्न इति। केचिद्व्याचक्षत उपसंख्यानं कर्त्तव्यमिति। अपरे पुनराहुः स्त्रियाः पुंवदिति योगविभागः कर्त्तव्यः। अथवा कर्त्तव्योऽत्र प्रयत्न इत्यनेनेदं दर्शयति। यद्यपि स्त्रियां व्रीहौ च गर्भत्वभेद स्तथापि स नाश्रयितव्यः। यत् तु तत्रावयवानवयवभेद मुत्सृज्य सामान्येनान्तर्वर्त्तिवस्तुविशेषसम्बन्धमात्रं तदेवाश्रयितव्यम्। अत स्तदपेक्षया स्त्रियां व्रीहौ च वर्त्तमानस्य गर्भिशब्दस्य तुल्यमेव प्रवृत्तिनिमित्तमिति। एवं प्रसूतप्रजातशब्दयोरप्यपत्याधानविमोचनभेदं त्यक्त्वा ऽथ मपत्य-

वानियमपत्यवतीत्यपत्यवत्सम्बन्धमात्र माश्रितमित्येतद्व्याख्यानमिति प्रयत्नः कर्त्तव्य इति । ब्रह्मबन्धूभार्य्य इति । ब्रह्मबन्धूशब्दादूङुत (४।१।६६) इत्यूङ् । कल्याणीपञ्चमा इति । अप् पूरणीप्रमाण्योरित्यप्समासान्तः (५।४।११६) । पञ्चानां पूरणीति डट् । तस्य नान्तादसंख्यादेर्मट् (५।२।४९) । ततष्टिड्ढाणञिति(४।१।१५) ङीपि कृते पञ्चमी भवति । प्रधानपूरणीग्रहणं कर्त्तव्यमिति । प्रधानं पूरणी गृह्यते येन व्याख्यानेन तद्व्याख्यानं प्रधानपूरणीग्रहणम् । तत् कर्त्तव्यम् । प्रधानं या पूरणी तस्यां प्रतिषेधो यथा स्यात् । अप्रधानभूतायां तस्यां मा भूदिति । तत्रेदं व्याख्यानम् । इह द्वन्द्वे घीति (२।२। २) प्रियादि शब्दस्य पूर्वनिपाते प्राप्ते परनिपातलक्षणव्यभिचारचिह्नेन सूचितं व्यभिचार्य्ययं प्रतिषेधः । क्वचिदेव वर्त्तते । न सर्व्वत्रेति । तेन यत्रैव प्रधानभूता पूरणी तत्रैव भवति । नान्यत्रेति । तेन यत्रासौ भवति तत्र तस्या एव प्रधानभूताया पूरण्या ग्रहणं युक्तम् । क्व पुनः पूरण्याः प्राधान्यम् ? यत्र तस्याः समासेऽभिधेयत्वेनान्तर्भावः यथानन्तरोक्तप्रत्युदाहरणे । तत्र ह्यवयवेन विग्रहः । समुदायस्त्ववयवभेदादभिन्नः । समासार्थ एव । तत्रेति । यथैवं प्रथमा द्वितीया तृतीया चतुर्थी चाभिधीयते तथा पञ्चम्यपि । कल्याणपञ्चमीकः पक्ष इति । अत्र तु तिरोहितावयवभेदः पक्ष एवान्यपदार्थः प्रधानम् । पञ्चमी तु रात्रिः । अस्मिन् पक्षेऽन्यपदार्थेऽनुमेयैव । नत्वभिधेया । यथा वृक्षशब्दे मूलादयः । तत स्तदृदयमप्यनभिधेयत्वादर्थोऽप्रधानम् । अथाप् समासान्तः कस्मान्न भवतीत्याह अप् पूरणीप्रमाण्योरित्यादि । अथ दृढ़भक्तिः शोभनभक्तिरित्यादौ कथं पुंवद्भावः ? यावता प्रियादित्वात् प्रतिषेधेन भवितव्यमित्याह दृढ़भक्तिरित्येवमादिष्वित्यादि । अस्त्रीवाचिनः पूर्वपदस्य विवक्षितत्वाद् दृढ़भक्तिरित्येवमादि लक्ष्यं सिद्धमित्येवं समाधेयम् । इत्थं परिहर्त्तव्यमित्यर्थः । दृढ़शब्दोऽत्रादार्ढ्यनिवृत्तिपरः प्रयुक्तः । अत्रादार्ढ्यनिवृत्तिपरायां चोदनायां लिङ्गविशेषोपादानमनुपकारकमेवेति । अतः स्त्रीत्वमिह न विवक्षितम् । तस्मादस्त्रीलिङ्गस्य दृढ़शब्दस्यायं प्रयोग इत्यभिप्रायः ।

## ३५ । तसिलादिष्वा कृत्वसुचः ।

अनुक्तरपदार्थोऽयमारम्भः । तत इति । पञ्चम्या स्तसिल् । तस्य प्राग-

दिशो विभक्तिरिति (५।३।१) विभक्तिसंज्ञकत्वात् त्यदाद्यत्वम्। टाप्। अनेन पुंवद्भावः(G)। तत्रेति। सप्तम्यास्त्रल् (५।३।१०)। शेषं पूर्ववत्। तसिलादिष्वित्यादि। तसिलादिष्वाकृत्वसुच इत्युच्यमाने तसिलादिष्वनन्तर्भूतेष्वपि क्वचित् पुंवद्भाव इष्यते। स न प्राप्नोति। तत्रान्तर्भूतेऽपि क्वचिन्नेष्यते। एवं सत्यनिष्टमपि प्राप्नोति। तस्मात् परिगणनं कर्त्तव्यम्। तत्र ततसोरुदाहरणमुक्तम्। शेषाणां तूच्यते। इयं पट्वी। इयं पट्वी। इयमनयो रतिशयेन पट्वी। द्विवचनेत्यादिना (५।३।५७) तरप्। पटुतरा(H)। इयमासामतिशयेन पट्वी। अतिशायनेत्यादिना (५।३।५५) तमप्। पटुतमा। पट्वी भूतपूर्वा। भूतपूर्वे चरट् (५।३।५३)। ङीप्। पटुचरी। पट्वीप्रकारा। प्रकारवचने जातीयर् (५।३।६९)। पटुजातीया। ईषदसमाप्ता पट्वी। ईषदसमाप्तौ कल्पब्देश्यदेशीयरः (५।३।६७)। पटुकल्पा। पटुदेश्या (I)। पटुदेशीया। प्रशस्ता पट्वी। प्रशंसायां रूपप् (५।३।६६)। पटुरूपा। याप्या पट्वी। याप्ये पाशप् (५।३।४७)। पटुपाशा। अजायै हिता। अजाविभ्यां (५।१।८) थ्यन्। अजथ्या। थ्यंस्तसिलादिभ्यः पूर्वं पठ्यते। सर्वप्रकारैः सर्वथा। प्रकारवचने थाल् (५।३।२३)। तस्यां रात्रौ तदा। सर्व्वैकान्यकिंयत्तदः काले दा (५।३।१५)। अस्यां रात्रौ एतर्हि। इदमो र्हिल्। तत्रेदम एतेतौ रथोरित्येतादेशः (५।३।४) प्रशस्ता वृकी वृकतिः। प्रशस्ता ज्येष्ठा ज्येष्ठतातिः। वृकज्येष्ठाभ्यां तिल् तातिलौ च च्छन्दसीति (५।४।४१) तिल्तातिलौ। एतौ च कृत्वसुचः परौ पठ्येते। तसिलादिषु परिगणनं कर्त्तव्यमिति भाष्यकारस्य मतमेतत्। नतु सूत्रकारस्य। नचासति परिगणने किञ्चिदनिष्टमापद्यते। येषु हि तसिलादिष्वनन्तर्भूतेषु पुंवद्भाव इष्यते तेषूत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद् भविष्यति। येषु तसिलादिष्वन्तर्भूतेषु नेष्यते

---

(G) ततस्त्रेत्याद्युदाहरणं तु दिङ्मात्रप्रदर्शनार्थम्। सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति भाष्यकारव्यवस्थयैव तस्य पुंवद्भावसिद्धेः। बहुतः। बहुत्र। बहुधेत्यादिकं तूदाहार्य्यम्।

(H) पटुतरा पटुतमेत्यत्रापि घरूपकल्पचेलेत्यादिना (६।३।४३) वक्ष्यमाणह्रस्वत्वं परत्वात् पुंवद्भावं बाधते। तेन पट्वितरा पट्वितमेति रूपम्। उदाहरणं तु दर्शनीयतरा दर्शनीयतमेत्यादि।

(I) देश्यतातिलोःपरिगणनाभावान्नायं नच ज्येष्ठतातिरित्युदाहरणं सङ्गतम्॥

तत्र न कोपधाया इति (६।३।३९) नेति योगविभागान्न भविष्यतीति। दोषः खल्वपि परिगणने। दरच्छब्दात् कप्रत्यये कृते दारदिकेत्यत्र पुंवद्भावो न प्राप्नोति। कप्रत्ययस्यापरिगणितत्वात्। शसि बह्वल्पार्थस्येति। शसि प्रत्यये परतः बह्वर्थस्याल्पार्थस्य च पुंवद्भावो वक्तव्यो व्याख्येय इत्यर्थः। व्याख्यानन्तु तस्यैव चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कर्त्तव्यम्। भस्याढे तद्धित इत्यादि। हास्तिकमिति। अचित्तहस्तिधेनोष्ठगिति (४।२।४७) ठक्। यद्यत्र पुंवद्भावो न स्यात् तदा यस्येतीकारलोपे कृते (६।४।१४८) तस्याचः परस्मिन् पूर्वविधाविति (१।१।५७) स्थानिवद्भावान् न स्तद्धित इति (६।४।१४४) टिलोपो न स्यात्। पुंवद्भावे तु सति हस्तिशब्द एवायं भवति। ननुच ठक्छसोरित्यनेनैवात्र सिध्यति पुंवद्भावः। न सिध्यति। छसा साहचर्य्याद् भवत छक्छसो रित्यनेनैव (४।२।११५) विहितस्य तत्र ठको ग्रहणात्। न सर्वस्य। कथमित्यादि। यदि च ढे परतः पुंवद्भावस्य प्रतिषेधः क्रियते तदाग्नायी देवतास्येत्यग्नेर्ढगिति (४।२।३३) ढकि कृत आग्नायेय इति भवितव्यम्। तत् कथमाग्नेय इति भवतीत्यभिप्रायः। अग्नेः स्त्रीत्वस्यां विवक्षायां वृषाकप्यग्निकुसितकुसीदानामुदात्त (४।१।३७) इत्यनेनाग्निशब्दाद् ङीपि कृत ऐकारे चान्तादेशेऽग्नायीति भवति। कर्त्तव्योऽत्र यत्न इति। यत्नःकेन पुनः कर्त्तव्यः? यो भस्याढे तद्धित इत्युपसंख्यान मिच्छति। नतु यश्चकार मनुक्तसमुच्चयार्थमुत्तरसूत्रे करोति। स ह्येवमाह। यत्नैवैष्यते तत्रैव चकारः पुंवद्भावं समुच्चिनोति। नान्यत्रेति। कः पुनरसौ यत्न इति? कश्चिदाह अपत्यग्रहणं ढस्य विशेषणं कर्त्तव्यम्। योऽपत्येऽढइति। तेनाय मर्थो भवति। ढस्य तद्धिते पुंवद्भावो भवत्यपत्यार्थप्रत्ययं वर्जयित्वा। नचाग्नेयः स्थालीपाक इत्यपत्यार्थे ढप्रत्ययः। किन्तु सास्य देवतेत्यर्थे। अतोऽत्र भवत्येव पुंवद्भाव इति। अन्य स्त्वाह भस्याढे तद्धित इति व्यधिकरणे सप्तम्यौ। यथात्र नञ् सोऽल्पार्थे वर्त्तते। यथाल्पलवणा यवागूरलवणेत्युच्यते। तत्राय मर्थो भवति। भस्य तद्धिते पुंवद्भावो वक्तव्यो ऽल्पे ढप्रत्यय इति। तेनाग्नेयः स्थालीपाक इत्यत्र पुंवद्भावो भवति। श्यैनेय रौहिणेय इत्यत्र तु न भवतीति। ठक्छसोश्चेत्यादि। अथ ठग्-

ग्रहणं किमर्थम् ? यावता ठस्येकादेशे कृते भस्याठे तद्धित इत्यनेनैव सिद्धः। ठावस्थायामेव यथा स्यादित्येवमर्थम्। किमेवं सति भवति। इसुसुक्तान्तात् कः (७।३।५१) इति कः सिद्धो भवति। अन्यथा हि यदीकादेशे कृते पुंवद्भावः स्यात् ततो यथा माथितिक इत्यत्रेकादेशो न भवति तथा भावत्का इत्यत्रापि न स्यात्। भावत्का भवदीया इति। भवतष्ठक्छसाविति (४।२।११५) ठक्छसौ।

## २६। क्यङ् मानिनोश्च।

एताऽऽते। श्येतायत इति। एतश्वेतशब्दाभ्यां वर्णादनुदात्तात् तोपधात् तो नः (४।१।३९) इत्यनेन ङीप्। तकारस्य नकारः। एनीवाचरति। श्येनीवाचरति। कर्त्तुः क्यङ् सलोपश्चेति (३।१।११) क्यङ्। अकृत्सार्वधातुकयोरिति (७।४।२५) दीर्घत्वम्। अयमस्या दर्शनीयमानीति। दर्शनीयामिमां मन्यतेऽयमिति। मन इति (३।२।८२) णिनिः। दर्शनीयमानिनीयमस्या इति। दर्शनीयामिमां मन्यत इति पूर्ववण्णिनिः। ऋन्नेभ्यो ङीबिति ङीप् (४।१।५)। किं पुनः कारणं स्त्रियां समानाधिकरण इत्यनुवर्त्तमानेऽस्त्रियामसमानाधिकरणे च मानिन्युत्तरपदे पुंवद्भाव उदाह्रियत इत्याह मानिनो ग्रहणमित्यादि। कथमेतज् ज्ञायत इतयाह इह त्वितयादि। यद्युत्तरपदं स्त्रियां वर्त्तते समानाधिकरणञ्च भवति दर्शनीया मात्मानं मन्यते दर्शनीयमानिनीतेयवमादौ। तत्र यस्मात् स्त्रियाः पुंवदितयनेनैव (६।३।३४) सिद्धमतो मानिनोग्रहणमस्त्र्यर्थम्। असमानाधिकरणार्थञ्चेतेयतदवसीयते। अन्यथाहि तदनर्थकं स्यात्॥

## २७। न कोपधायाः।

पूर्वेण प्रकरणेन प्राप्तस्य पुंवद्भावस्यायं प्रतिषेधः। पाचिकाभार्य्यः कारिकाभार्य्य इति। पाचककारकशब्दाभ्यां ण्वुलन्ताभ्यां टाप्। प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुप (७।३।४४) इतीत्त्वम्। अत्र स्त्रियां पुंवदित्यादिना (६।३।३४) प्राप्तिः। मद्रिकाभार्य्यः। वृजिकाभार्य्य इति। मद्रेषु भवा। वृजिषु भवेति मद्रवृज्योःकन्निति (४।२।१३१) कन्।

अत्रापि स्त्रियाः पुंवदित्यादिना (६।३।३४) प्राप्तिः। मद्रिकाकल्पा। वृजिकाकल्पेति। अत्र तसिलादिष्वाकृत्वसुच (६।३।३५) इत्यनेन प्राप्तिः। मद्रिकायत इत्यादौ क्यङ्मानिनोश्चेति (६।३।३६) प्राप्तिः। विलेपिकाया धर्म्यमिति। लिप उपदेह इत्यस्माण्ण्वुल्। वैलेपिकमिति। अण् महिष्यादिभ्य इत्यण् (४।४।४८)। अत्र भस्याढे तद्धित इति (६।३।३५) वा प्राप्तिः। कोपधप्रतिषेध इत्यादि। अस्मिन् कोपधप्रतिषेधे तद्धितवुग्रहणं कर्त्तव्यम्। तद्धितसम्बन्धी वुसम्बन्धी ककार उपधा यस्य तत्रैव प्रतिषेधो यथा स्यात्। इह मा भूत्। पाकभार्य्यं इति। पाकशब्दोऽयमर्भकपृथुकपाका (६।५।७३१) वयसीत्यनेन कन्प्रत्ययान्तो निपातितः। अत्रासति वुग्रहण इहापि प्रतिषेधः स्यात्। यदि तद्धितवुग्रहणं क्रियते तर्हि पूर्वत्रासिद्धमित्यत्र (८।२।१) यदक्ष्यति शुष्कजङ्घेत्यत्र शुषेः कइ (८।२।५१) त्यस्यासिद्धत्वान्न कोपधाया इति प्रतिषेधो न प्राप्नोतीत्यसिद्धाधिकारस्य प्रयोजनमिति तन्नोपपद्यते। असत्यपि शुषःक (८।२।५१) इत्यस्यासिद्धत्वेनैवात्र न कोपधाया इति प्रतिषेधेन भवितव्यम्। नह्यत्र तद्धितसम्बन्धी ककारः। नापि वुसम्बन्धी। दर्शनभेदमाश्रित्य तथाभिधानाददोषः। इदं हि वार्त्तिककारमतमाश्रित्योक्तम्। तत् पुनः श्लोकवार्त्तिककारस्य सूत्रकारमतानुसारिणो दर्शनमाश्रित्य वक्ष्यति।

## ३८। संज्ञापूरण्योश्च।

कथं पुनः संज्ञाशब्दस्य पुंवद्भावस्य प्राप्तिः? यावता भाषितपुंस्कस्य पुंवद्भाव उक्तः। न च यः संज्ञाशब्दः स्त्रियां वर्त्तते स भाषितपुंस्कः भवति। एकद्रव्यनिवेशित्वात् संज्ञाशब्दानाम्। नैतदस्ति। नह्ययं नियोग एकद्रव्यनिवेशिभिरेव संज्ञाशब्दै भवितव्यमिति। तथाहि देवदत्तादिशब्दोऽनेकद्रव्यदानक्रियादिसम्बन्धाद् नैकवस्तुसंज्ञाभूत एव लोके प्रयुज्यमान उपलभ्यते। शास्त्रेष्वपि स्वादिशब्दः। या त्वेकद्रव्यनिवेशिनी संज्ञा तां प्रति नैवायं प्रतिषेधः क्रियत इत्यसारच्चोद्यम्। ननु भवन्तु संज्ञाशब्दा अनेकार्थवृत्तयः। भाषितपुंस्कास्त्वेकस्यामाकृतौ। कथं तर्हि तेषां

किञ्चित् प्रवृत्तिनिमित्तमस्ति ? यदृच्छाशब्दत्वात्। एतदप्यसारम्। यतस्तेषामपि केषाञ्चित् किञ्चित् प्रवृत्तिनिमित्तमस्त्येव। सप्तपर्णादिशब्दवत्। यत्राप्येतन्नास्ति तत्रापि स्वरूपमेव प्रवृत्तिनिमित्तमुपादायाभिधेये वर्त्तन्ते। तत्राभिन्ने प्रवृत्तिनिमित्ते यै र्भाषितः पुमान् ते भाषितपुंस्का इति किमत्रानुपपन्नम् ? दत्ताभार्य्य इति। अत्र यासौ दानक्रियाकृति स्तस्यामेव दत्ताशब्दो भाषितपुंस्कः। गुप्ताभार्य्य इति। अत्रापि गुप्ताशब्दो गोपनक्रियाकृतौ स्वरूपे वा प्रवृत्तिनिमित्ते। उभावपि भाषितपुंस्कशब्दौ। दत्तायते। गुप्तायत इति। कथमेते प्रतिषेधस्योदाहरणे उपन्यस्ते ? यावता सत्यपि पुंवद्भावेऽकृत्सार्वधातुकयोर् दीर्घ इति (७।४।२५) दीर्घत्वेनोभयमप्येतत् सिद्धम्। एवं मन्यते। संज्ञापूर्वो विधिरनित्य (प, ९४) इति। तत्र यदि पुंवद्भावप्रतिषेधो न स्यात् तदा दीर्घत्वाभावोऽनुमीयते। तस्मिन् पक्षे दत्तयते गुप्तयत इत्यपि स्यादिति। न कोपधासंज्ञापूरणीनामित्येकस्मिन्नेव योगे कर्त्तव्ये योगविभागो न कोपधाया ( ६।३।३७) इत्यस्य प्रतिषेधस्यानित्यत्वज्ञापनार्थं कृतः। तेन यदुक्तं कोपधप्रतिषेधे तद्धितवुग्रहणं कर्त्तव्यमिति तन्न कर्त्तव्यं भवति ?

## ३९। वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे।

वृद्धिनिमित्तं अणकाः। स्रौघ्नीभार्य्य इति। स्रुघ्ने भवा। तत्र भव (४।३।५३) इत्यण्। टिड्ढाणञिति(४।१।५)ङीप्। एवं माथुरीभार्य्य इत्यत्रापि। मध्यमभार्य्य इति। मध्ये भवा। मध्यान्म इति (४।३।८) मप्रत्ययः। काण्डलावभार्य्य इति। काण्डं लुनातीति कर्म्मण्यण्। पूर्ववन्ङीप्। तावद्भार्य्य इति। तावच्छब्दात् तत्परिमाण मस्या इति यत्तदेतेभ्यः परिमाणे (५।२।३९) वतुबिति वतुप्। आ सर्वनाम्न इति (६।३।९१) दकारस्याकारः। उगितश्चेति (४।१।६) ङीप्। तावती भार्य्यास्य तावद्भार्य्यः। यदि वृद्धिनिमित्तस्येति तत्पुरुषो गृह्येत तदात्रापि प्रतिषेधः स्यात्। भवति हि वतुब् वृद्धेराकारस्य निमित्तम्। बहुव्रीहिपरिग्रहे तु न दोषः। नहि वतुपि ञकारादिकं वृद्धेर्निमित्तमस्ति। काषायीति। तेन रक्तमित्यण् (४।२।१)। लौहीति।

प्राणिरजतादिभ्योऽञित्यञ् (४।३।१।१५४) पूर्ववन् ङीप्। खादिरेष इति। पलाशादिभ्यो (४।३।१४१) वेत्यञणोरन्यतरः। खादिरी ईषा यस्य स खादिरेषः।

## ४०। स्वाङ्गाच्चेतोऽमानिनि।

दीर्घकेशीति। स्वाङ्गाच्चोपसर्ज्जनादसंयोगोपधादिति (४।१।५४) ङीष्। पट्वीति। पटुशब्दाद् वोतो गुणवचनादिति (४।१।४४) ङीष्। अकेशभार्य्य इति। अविद्यमानाः केशा अस्या अकेशा। सहनञ्विद्यमानपूर्वाच्चेति (४।१।५७) ङीपि प्रतिषिद्धे टावेव भवति।

## ४१। जातेश्च।

कठीभार्य्य इति। कठशब्दाज्जातेरस्त्रीविषयादयोपधादिति (४।१।६३) ङीष्। जातित्वं त्वस्य गोत्रञ्च चरणैः सहेति (४।१।६०, वा) लक्षणेन। अयमित्यादि। भस्याढ़े तद्धित इत्योपसंख्यानिकौ (६।३।३५,वा)। यः पुंवद्भाव स्तस्यायं प्रतिषेधो नेष्यते। यस्मादस्य प्रतिषेधस्य बाधनार्थमुत्तरसूत्रे पुंवदिति योगविभागः कर्त्तव्य इत्यभिप्रायः।

## ४२। पुंवत् कर्मधारयजातीयदेशीयेषु।

ननुच कर्मधारये स्त्रियाः पुंवदित्यादिना (६।३।३४) पुंवद्भावः सिद्धः। जातीयदेशीयशब्दयोरपि तसिलादिष्वाकृत्वसुच (६।३।३५) इत्यादिना। तत् किमर्थोऽय मारम्भ इत्यत आह प्रतिषेधार्थोऽयमारम्भ इति। प्रतिषेधविषयः प्रतिषेधशब्देनोक्तः। साहचर्य्यात् प्रतिषेधोऽर्थः प्रयोजनं यस्येति स तथोक्तः। यत्र विषये प्रतिषेध उक्त स्तत्र पुंवद्भावः प्रयोजनमित्यर्थः। अथवार्थशब्दो निवृत्ताविह वर्त्तते। यथा मशकार्थो धूम इति। तेनायमर्थो भवति प्रतिषेधनिवृत्त्यर्थोऽयमारम्भ इति। भाषितपुंस्कादित्येवेति। यदि भाषितपुंस्कादनूङिति च नानुवर्त्तते तदा ऽभाषितपुंस्कार्थ मनूङर्थञ्चेदं वचनं स्यात्। न प्रतिषेधार्थम्। एवञ्च खट्वावृन्दारिका ब्रह्मबन्धूवृन्दारिकेत्यत्रापि पुंवद्भावः स्यात्। तस्माद् भाषितपुंस्कादनूङित्यनुवर्त्तनीयम्। कुक्कुट्यादीनामित्यादि। उत्तरपदस्यान्तादेरस्त्रीत्वादसामानाधिकरण्याच्च पुंवद्भावो न

प्राप्नोतीत्युपसंख्यायते। नवेत्यनेनोपसंख्यानं प्रत्याचष्टे। नवा वक्तव्यः। कस्मात्? अस्त्रीपूर्वपदस्य विवक्षितत्वात्। अस्त्रीलिङ्गस्य पूर्वपदस्य विवक्षितत्वादित्यभिप्रायः। अस्यैवार्थं विस्पष्टीकर्त्तुमाह स्त्रीत्वेन विनेत्यादि। अत्र हि मयूरादिजात्यन्तरस्य निवृत्तिर्विवक्षिता। जात्यन्तरनिवृत्तिपरायां देशनायां लिङ्गविशेषोपादानमनुपकारकमेव। विनापि तेन जात्यन्तरनिवृत्तिः शक्यत एव कर्त्तुम्। तथाहि मृगमांस मित्युक्ते ऽन्तरेणापि लिङ्गविशेषोपादानं जात्यन्तरस्य व्यवच्छेद उपपद्यते। मृगजातिसम्बन्धि मांसम्। नान्यजातिसम्बन्धीति। तस्मात् स्त्रीत्वमत्रानुपकारित्वान्न विवक्षितम्। अतः स्त्रीत्वेन विना पूर्वपदस्यार्थोऽत्र कुक्कुटाण्डादौ जातिसामान्येन स्त्रीत्वादविशेषविहितो विवक्षित इत्यर्थः। ततश्चास्त्रीलिङ्गा एवात्र कुक्कुटादयः शब्दा अण्डादिभिः शब्दैः समस्यन्त इति भावः। कः पुनरसौ पूर्वपदार्थः। कुक्कुटादिजात्या व्यवच्छिन्नं द्रव्यमात्रम्। पुंवद्भावादित्यादि। अत्र खिति पुंवद्भावाद् ह्रस्वत्वं विप्रतिषेधेन भवतीति पूर्वमेव व्याख्यातम्। घादिषु तु व्याख्यायते। घादिषु ङ्योर्ह्रस्वो भवतीत्यस्यावकाशो नर्त्तकितरा नर्त्तकितमा नर्त्तकिरूपा नर्त्तकिकल्पेति। पुंवद्भावस्यावकाशो दर्शनीयतरा दर्शनीयतमा दर्शनीयरूपा दर्शनीयकल्पेति। इहोभयं प्राप्नोति पट्वितरा पट्वितमा पट्विरूपा पट्विकल्पेति। विप्रतिषेधेन ह्रस्वत्वं भवति। केऽण (१।४।१३) इति ह्रस्वस्यावकाशो नर्त्तकिकेति। अज्ञातादावर्थे प्रागिवात् कः (५।३।७०)। पुंवद्भावस्यावकाशः दारदिकेति। दरच् शब्दस्यात्र के परत स्तसिलादिष्वाकृत्वसुच (६।३।३५) इति पुंवद्भावेन दारदशब्दो भवति। अतष्टापि कृते प्रत्ययस्थात् कादित्यादिनेत्त्व (७।३।४४) मिहोभयं प्राप्नोति। पट्विकेति। अत्र विप्रतिषेधेन ह्रस्वत्वं भविष्यति। केन पुनः पुंवद्भावः? यावता तसिलादिषु परिगणनं कृतम्। न च तत्र कप्रत्ययः परिगणितः। एतद् भाष्यकारः प्रष्टव्यो यः परिगणनं करोति (J)। नतु सूत्रकारः। पूर्वं यस्य सिद्धये ऽनूङिति प्रसज्यप्रतिषेध आश्रित स्तद्दर्शनार्थमाह इहेत्यादि। तत्र तद्राजप्रत्ययस्येत्यादि। तत्रेड्विट् पृथु इत्येताभ्यां जनपदशब्दात् क्षत्रियाद-

(J) वस्तुतस्तु वार्त्तिककार स्यैव परिगणनम्।

ञिति (४।१।११५) विहितस्याञ स्तद्राज प्रत्ययस्यातश्चेति (४।१।१७८) लुक् । दरद् उशिजित्येताभ्यां तु द्व्यञ्मगधेत्यादिना (४।१।१७०) विहितस्याणः । इड़विट् चासौ वृन्दारिका चेति विगृह्य समास इति । विशेषणेत्यादिना । अतैड़विड़ादय इति । आदिशब्देन दारद पार्थ औशिज इत्येते गृह्यन्ते ।

## ४३ । घरूपकल्पचेलड् ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ।

चेलड्ब्रुवगोत्रशब्दानां कुत्सार्थत्वात् कुत्सितानि कुत्सनैरिति (२।१।५३) समासः । मतहतशब्दाभ्यां तु विशेषणं विशेष्येण बहुलमित्यनेन (२।१।५७) । चेलड़िति पचादौ पठ्यते । टकारो ङीबर्थः । यदि ब्रुव इति पचाद्यजन्तमेतदेवं सति ब्रुवो वचिरिति(२।४।५३)वच्यादेशो गुणश्च प्राप्नोति । स कस्मान्न भवतीति य श्चोदयेत् तं प्रत्याह वच्यादेशो गुणश्च निपातनान्न भवतीति । आमलकोतरा कुवलीतरेति । आमलककुवलशब्दौ वृक्षे नित्यं स्त्रीलिङ्गौ । फले तु नपुंसकलिङ्गावित्युभावप्यभाषितपुंस्कौ । ताभ्यां गौरादित्वान् ङीष् ।

## ४४ । नद्याः शेषस्यान्यतरस्याम् ।

भाषितपुंस्कादनूङिति निवृत्तम् । कश्च शेष इति । यदि पूर्वसूत्रेण यस्य ह्रस्वो न विहितः स शेषस्ततो यद् भाषितपुंस्कं यच्च भिन्नायामाकृतौ भाषितपुंस्कं नैकाच् तस्यापि शेषत्वं स्यात् । ततश्चामलकीतरा द्रोणीतरेत्यत्रापि विकल्पेन ह्रस्वत्वं स्यात् । नह्यत्र ह्रस्वत्वं पूर्वसूत्रेण विहित मित्यभिप्रायेणाह अङी च या नदी ङ्यन्तश्च यदेकाजिति । एतेन श्रुतापेक्षयात्र शेषत्वमाश्रीयते । नतु यस्य ह्रस्वो न विहित स्तदपेक्षयेति दर्शयति । कथं पुनरेतल्लभ्यते ? शेषग्रहणात् । अन्तरेणापि शेषग्रहणं शेषस्यैव विकल्पेन ह्रस्वत्वं भविष्यति । तथाहि यदि ङ्योऽनेकाचो भाषितपुंस्कस्यापि विभाषा ह्रस्वः स्यात् तदा पूर्व्वयोग एवेदमन्यतरस्यांग्रहणं कुर्य्यात् । इह करणाद् यस्य पूर्वेण ह्रस्वो न विहित स्तस्यैव पाक्षिकं ह्रस्वत्वमन्तरेणापि शेषग्रहणं शेषस्यैव भविष्यतीत्यवसीयत इति किं शेषग्रहणेन यत् क्रियते ? ङ्योऽनेकाच इति पूर्वसूत्रे योऽच् श्रूयते तदपेक्षया शेषो विज्ञायत इत्येवमर्थम् । नचामलकीतरा द्रोणीतरेत्यत्र श्रुतापेक्षया शेषत्वमुपपद्यते । ङ्योऽनेकाच्त्वात् ।

तस्मान्न भवत्यत्र ह्रस्वत्वप्रसङ्गः। स्त्रीतरेति। स्त्यायतेर्ड्रट्। डित्त्वाट्टिलोपः। वलि लोपश्च (६।१।६६)। टित्त्वान् ङीप्। वक्तव्य इति व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। अन्यतरस्यांग्रहणस्य व्यवस्थितविभाषाविज्ञानात् ह्रस्वत्वं न भविष्यतीति। लक्ष्मीतरेति। अवितॄस्तृतन्त्रिभ्य ईः (उण्, ३।१५८)। लक्षेर्मुट्चेतीकारप्रत्ययान्तो (उण्, ४।४०) लक्ष्मीशब्दो व्युत्पादितः। ह्रस्वत्वं न भवति।

## ४५। उगितश्च।

श्रेयसितरेति। ईयसुनि परतः प्रशस्यस्य श्र (५।३।६०) इति प्रशस्य-शब्दस्य आदेशः। उगितश्चेति (४।१।६) ङीप्। विदुषीतरेति। विदेः परस्य लटः शत्रादेशः। तस्य विदेः शतुर्वसुरिति (७।१।३६) वस्वादेशः। वसोः संप्रसारणं (६।४।१३१) परपूर्वत्वम्। पूर्ववत् ङीप्। (K) पुंवद्भावोऽप्यत्र पक्षे वक्तव्य इति। श्रेयस्तरा विद्वत्तरेति पक्षे यथा स्यात्। विद्वत्तरेति वसुस्रंस्विति सकारस्य दकारः (L)। खरि चेति (८।४।५५) तकारः। प्रकर्षयोगादित्यादिनोपसंख्यानं प्रत्याचष्टे। शब्दानां व्युत्पत्तौ प्रवृत्तौ च न वस्तुसन्निधानम् प्रधानं कारणम्। अपि तु विवक्षैव। नचैवं पूर्वं प्रकर्षयोगात् स्त्रीत्वं विवक्षितम्। तस्मादस्त्रीप्रत्ययान्तादेवातिशायिकेन भवितव्यम्। आतिशायिकप्रत्ययान्तात् तु स्त्रीप्रत्ययेनेति सिद्धं श्रेयस्तरेत्यादि रूपम्। ननुच ङ्याब्ग्रहणं तदन्तात् तद्धितविधानार्थमित्युक्तम्। तत् कथमस्त्रीप्रत्ययान्तात् तद्धितप्रकर्षप्रत्ययो युज्यते? नैतत्। अत्र विषये स्त्रीत्वतद्धितार्थयोर्युगपत् विवक्षामभिप्रेत्य तदुक्तम्। ननु यत्र विषये प्राक् प्रकर्षार्थेन सम्बन्धात् स्त्रीत्वस्य विवक्षा नास्ति तमभिप्रेत्येति किमत्र न युज्यते?

---

(K) विदुषी तरेति स्थितेऽनेन ह्रस्वो वा। यदा न ह्रस्वस्तदा तसिलादिष्विति (६।३।३५) पुंवद्भावः। वृत्त्यादिषु स्थितोऽप्यविकृतङीप्पाठस्तत्र भाष्यविरुद्धः। तथाच भट्टोजिः "वृत्त्यादिषु विदुषीतरेत्युदाहृतम्। तन्निर्मूल" मिति।

(L) The 23rd. MS, has झलां जशोऽन्ते इति (८।२।३९) सकारस्य दकारः।

## ४६ । आन्महतः समानाधिकरणजातीययोः ।

महादेवो महाब्राह्मण इति । सन्महदित्यादिना कर्मधारयः (२।१।६१) । महाबाहुरिति बहुव्रीहिः । लक्षणोक्तत्वादित्यादिना परमतमाविष्कृत्य निराकरोति । स्यादेतत् । उत्तरपदेन समासः सन्निधापितः । समासे हि सत्युत्तरपदं भवति । स च समासो लक्षणप्रतिपदोक्तपरिभाषया महतो यः प्रतिपदोक्तः सन्महदित्यादिना (२।१।६१) साक्षाद्विशेषविहितः स एव गृह्यते । ननु यो लाक्षणिकः सामान्यलक्षणोक्तश्च समासो महत्पुत्त्र इति । अत्र षष्ठीति (२।२।८) सामान्यलक्षणेन विहितत्वात् । तस्मादत्र न भविष्यतीति । यद्येवं बहुव्रीहावपि न स्यात् । तस्यापि लाक्षणिकत्वात् । तदर्थमित्यादि । बहुव्रीहावप्यात्त्वं यथा स्यादित्येवमर्थं समानाधिकरणग्रहणं कर्त्तव्यम् । तत्र सत्येषा परिभाषा नोपतिष्ठते । यद्युपतिष्ठते समानाधिकरणमनर्थकं स्यात् । महतो यः प्रतिपदोक्तः समास स्तस्य समानाधिकरणपदत्वात् । तस्याश्चानुपस्थाने सति बहुव्रीहावप्यात्त्वं भवति । असति तु समानाधिकरणग्रहणे तया परिभाषयेहोपस्थातव्यम् । ततश्च यथा महत्पुत्र इत्यत्र न भवति तथा बहुव्रीहावपि महाबाहुरित्यत्र न स्यात् । अमहान् महान् सम्पन्नो महद्भूतश्चन्द्रमा इति । यत्रार्थे च्व्यन्तो महच्छब्दो वर्त्तते तत्रैव भूतशब्दोऽपि । तस्मात् सामानाधिकरण्ये सत्यात्त्वेन भवितव्य मिति कस्यचिद्भ्रान्तिः स्यात् । अत स्तां निराकर्त्तुमाह अमहान् महानित्यादि । महद्भूत इति । महच्छब्दादभूततद्भाव इत्यादिना (५।४।५० वा) च्विः । तस्योर्व्यादिच्विडाचश्चेति (१।४।६१) गतिसंज्ञकत्वाद्भूतशब्देन कुगतिप्रादय इति (२।२।१८) समासः । गौणत्वादित्यादि । लोके हि शब्दादुच्चारिताद् गौणमुख्यार्थसम्भवे सति मुख्यार्थ एव संप्रत्ययो भवति । ननु गौणेऽप्रधाने । तथाहि गौरानीयतामित्युक्ते सास्नादिमानेवानीयते । ननु वाहीक इति । तस्मादिहापि महच्छब्दादुच्चारितान्मुख्यएव महदर्थे संप्रत्ययो भवति । न गौणे । गौणश्चात्र महदर्थः । तदभिधानाच्च महच्छब्दोपि गौण इति न भवत्यात्त्वम् । ननु च महत्त्वेन युक्तश्चन्द्रमा महानेव । तदयुक्तं महदर्थस्य गौणत्वम् । नैतदस्ति । सर्वत्रैव

हि च्यन्तेनार्थ आश्रितपूर्वावस्थ उपचरितोत्तरावस्थ उच्यते । तस्मादिहापि चन्द्रमा अमहत्त्वपूर्वावस्थो महच्छब्देनोच्यमान उपचरितमहत्त्वानुगतोत्तरावस्थ एवोच्यत इति युक्तास्य गौणता । यदि गौणत्वान्महच्छब्दस्यात्वमिह न भवति तदा पुंवद्भावोऽपि न स्यात् । अमहती ब्राह्मणी महती सम्पन्ना महद्भूतेति वृद्धात्त्वे च गौणस्य गोशब्दस्य न स्याताम् । गौर्वाहीकस्तिष्ठतीति वृद्धिर्न स्यात् । गोतो णिदिति (७।१।९०) गोणाद् गोशब्दात् परस्य सर्वनामस्थानस्य णित्त्वेऽसति गां वाहीकमानयेत्यत्रौतोऽम्शसोरित्यात्त्वं (६।१।९३) न स्यात् । नैष दोषः । पुंवद्भावस्तावत् स्त्रियाः पुंवदिति (६।३।३४) योगविभागाद्भविष्यति । योगविभागश्चावश्यं कर्त्तव्यो गर्भिभार्य्य इत्याद्यर्थः । महत्या घासो महाघास इत्याद्यर्थश्च । सोऽन्यार्थः क्रियमाण एतदर्थोऽपि भविष्यति । ननु च क्रियमाणेऽपि योगविभागे नैवात्र पुंवद्भावः प्राप्नोति महदर्थस्य गौणत्वात् । योगविभागस्य चान्यत्र चरितार्थत्वात् । एवं तर्हि पुंवत् कर्मधारयेति (६।३।४२) सूत्रे द्वितीयो पुंवदिति योगविभागः करिष्यते । स गौणार्थो भविष्यति । वृद्धात्त्वाभावदोषोऽपि न प्रसजति । यस्माद् वाक्यात् तत्र गौणत्वं प्रतीयते । पदस्य तु मुख्यएवार्थः । नच पदसंस्कारवेलायां वाक्यार्थोऽपेक्ष्यते । महदात्त्व इत्यादि । समानाधिकरण आत्त्वपुंवद्भावौ विधीयमानौ व्यधिकरणे न प्राप्नुतः । तस्माद्व्यधिकरणेऽप्युत्तरपदे घासादौ महदात्त्वस्योपसंख्यानं कर्त्तव्यम् । उपसंख्यानमित्यस्य प्रतिपादनमित्यर्थः । तत्रेदं प्रतिपादनम् । आन्महत (६।३।४६) इत्यत्राप्यादिति योगविभागं करिष्यति । तेन महत्या घासो महाघास इत्यादावात्त्वं भविष्यतीति । स चावश्यं योगविभागः कर्त्तव्यः । अष्टाकपालमित्याद्यर्थम् । सोऽन्यार्थं क्रियमाण एतदर्थोपि भवति । पुंवद्वचनञ्चेत्यादि । घासकरविशिष्टेष्वित्यपेक्षते । पुंवद्भावस्य वचनं व्याख्यानं कर्त्तव्यम् । तच्च पूर्वमेव कृतम् । अष्टनः कपाल इत्यादि । अत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः । तच्च प्रतिपादनं पूर्वमेव कृतम् । अष्टाकपालमिति । अष्टसु कपालेषु संस्कृतमिति तद्धितार्थेत्यादिना (२।१।५१) समासः । संस्कृतं भक्षा (४।१।८८) इत्यण् । तस्य द्विगोर्लुगनपत्य इति (४।२।१६) लुक् । अष्टकपालं ब्राह्मणस्येति । अष्टानां कपालानां समाहारोऽष्टकपालम् । समाहारे द्विगुः । अत्र पात्रादित्वात्

(२।४।२०,वा) स्त्रियां न भाष्यते । तेन द्विगोरिति (४।१।२१) ङीब् न भवति । गवि च युक्त इत्यादि । गोशब्दे चोत्तरपदे युक्तार्थे गम्यमाने ऽष्टन्शब्दस्यात्त्वस्य प्रतिपादनं कर्त्तव्यम् । तच्च प्रतिपादनं पूर्वमेव कृतम् । अष्टागवेन शकटेनेति । अष्टौ गावो युक्ता अस्मिन्निति त्रिपदोऽयं बहुव्रीहिः । युक्तशब्दस्तु गम्यमानत्वाद्वृत्तौ न प्रयुज्यते । यथा दध्योदन इत्यत्रोपसिक्तशब्दः । यदि च बहुव्रीहिरयं तदा गोरतद्धितलुकीति (५।४।९२) टच् समासान्तो न प्राप्नोति । तत्पुरुषाधिकारात् । मा भूत् टच् । अच् प्रत्यन्वपूर्व्वादित्यत्राजिति (५।४।७५) योगविभागाद् भविष्यति । यथा कृष्णभूमः पद्मनाभ इत्यादौ । अथवाष्टानां गवां समाहारोऽष्टगवम् । अष्टगवेन युक्तमष्टागवम् । नचैवं युक्तशब्दस्य प्रयोगः प्रसजति । पदैकदेशस्य प्रयोगात् । यथा सत्यभामा भामा । भीमसेनो भीमः । बलभद्रो बल इति । एकादश इति । अत्रापि तत एव योगविभागादात्त्वं वेदितव्यम् । योगविभागस्य च लिङ्गं प्रागेकादशभ्य (५।३।४९) इति निर्देशः । तपरकरणं विस्पष्टार्थमिति । अथ भिन्नकालानां निवृत्त्यर्थं कस्मान्न भवति ? भाव्यमानेनाणा सवर्णानामग्रहणात् । गुणान्तरभिन्नानां तर्हि ग्रहणं कस्मान्न भवति ? गुणानामभेदकत्वात् ।

## ४७ । द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ।

संख्यातानुदेशोऽत्र न भवति । यदि हि स्यादष्टनोऽशीतौ प्रतिषेधः स्यात् । तथाच तस्य वैयर्थ्यं स्यात् । प्रतिषिद्धे ह्यात्त्वे सवर्णदीर्घत्वेन भवितव्यम् । अल्पाच्तरत्वाच्चाशीतिशब्दस्य पूर्वनिपाते कर्त्तव्ये परनिपातेन लक्षणव्यभिचारचिह्नेन संख्यातानुदेशाभावः सूचितः । द्वादशेति । द्वौ च दश चेति द्वन्द्वः । अथवा द्वाभ्यामधिका दशेति समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्चेत्युत्तरपदलोपी (२।१।६०,वा) तत्पुरुषसमासः। एवं द्वाविंशतिरित्यादावपि वेदितव्यम् । द्वैमातुर इति । द्वयोर्म्मात्रोरपत्यमिति विगृह्य तद्धितार्थे समासः । ततो मातुरुत्संख्यासम्भद्रपूर्वाया (४।१।११५) इत्यण् । उकारश्चान्तादेशः । द्वित्रा इति । द्वौ वा त्रयो वेति विगृह्य संख्ययाव्ययेत्यादिना (२।२।२५) बहुव्रीहिः । बहुव्रीहौ संख्येय (५।४।७०) इत्यादिना

डच् समासान्तः। टिलोपः। द्विदशा इति। पूर्ववड् डच्। बहुव्रीहिः। द्विदशेति विग्रहः। सुजर्थेऽयं समासः। अत्र हि दशसम्बन्धिन्यावृत्तिर्दशशब्देन लक्ष्यमाणा द्विशब्देन संख्यायते। तेन द्वौ दशकावित्ययमर्थो वेदितव्यः। समासः सुजर्थं गमयितुं समर्थ इति वृत्तौ सुज् न प्रयुज्यते। द्व्यशीतिरिति। पूर्ववद् द्वन्द्वः। उत्तरपदलोपी वा तत्पुरुषः। प्राक् शतादित्यादि। शतात् प्राग् या संख्या तद्वाचिन्युत्तरपदे द्व्यष्टन आत्त्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानं विभाषा चत्वारिंशदित्यत्र (६।३।४९) वक्ष्यमाणविभाषाग्रहणं सिंहावलोकितन्यायेनेहाप्युपतिष्ठते। सा च व्यवस्थितविभाषा। तेन प्राक् शताद् या संख्या तद्वाचिन्युत्तरपदे भविष्यति। शतादिवाचिनि तु न भविष्यति। एवमुत्तरयोरपि योगयोः प्राक्शतात् कार्य्यं भवतीति वेदितव्यम्।

## ४८। त्रेस्त्रयः।

त्रय इति सकारान्तोऽयमादेशः। कुत एतत्? सन्धिवेलादिषु त्रयोदशी-शब्दपाठात्। अकारान्ते हि सति त्रयदशीति पाठः स्यात्। त्रयोदश। त्रयोविंशतिरिति ससजुषोरुरिति (८।२।६६) रुत्वम्। हशि चेत्युत्वम् (६।१।११४)। आद्गुणः (६।१।८७)। त्रिदश इति। पूर्ववत् सुजर्थे बहुव्रीहिः। डच् समासान्तः।

## ४९। विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्।

सर्वग्रहणं द्व्यष्टनोरपि यथा स्यादित्येवमर्थम्। इतरथा ह्यनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति (प,६२) त्रेरेव स्यात्। मण्डूकप्लुतिन्यायेन द्व्यष्टन इत्येतदपीहानुवर्त्तिष्यते। ततोऽयमदोष इति चेत्? एवं तर्हि विस्पष्टार्थं सर्वग्रहणम् इति।

## ५०। हृदयस्य हृल्लेखयदण्लासेषु।

हृल्लेख इति कर्मण्यण् (३।२।१)। हृद्य इति। प्राग्वितात् (४।४।७५) यत्। हार्दमिति। तस्येदमिति (४।३।१२०) प्राग्दीव्यतोऽण्। हृल्लास इति। लसनं लासः। भावे घञ्। कृद्योगा च षष्ठी समस्यत इति (२।२।८,वा) षष्ठीसमासः। लेख इत्यसन्तस्य ग्रहणमिति। एतच्च कात्यायनप्रभृतीनां

प्रमाणभूतानां वचनाद् विज्ञायते । कात्यायनेनोक्तं यदण्ग्रहणे स्वरूपग्रहणं द्रष्टव्यम् । कुतः ? लेखग्रहणादिति । भाष्यकृताप्युक्तम् । सर्वत्रैवोत्तरपदाधिकारे प्रत्ययग्रहणे स्वरूपग्रहणं द्रष्टव्यम् । कुतः ? लेखग्रहणादिति । एतच्च वचनद्वयं कथमुपपद्यते ? यदि लेखइत्यणन्तस्य ग्रहणं भवति । नान्यथा । अथ घञन्तस्यापि लेखशब्दस्य ग्रहणं कस्मान्न विज्ञायत इत्याह घञि त्वित्यादि । एतदेवेत्यादि । अण्ग्रहणादेव तदन्तस्य लेखशब्दस्य ग्रहणे सिद्धे तस्य पृथग् ग्रहणं क्रियमाणमेतज् ज्ञापयति । उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तं न गृह्यत इति । तेनेह यदण्ग्रहणे घरूपादिसूत्रे (६।३।४३) च न घादिप्रत्ययग्रहणे प्रत्ययमात्रं गृह्यते । तदन्तविधिरिति भावः ।

## ५१ । वा शोकष्यञ्रोगेषु ।

सौहार्द्यमिति । शोभनं हृदयमस्येति बहुव्रीहिः । ततः ष्यञ् । हृदयशब्देनेत्यादि । हृदयशब्देनेह समानार्थे हृच्छब्दे सति यदा हृच्छब्दस्य प्रयोगस्तदा हृच्छोक इति भविष्यति । यदा हृदयशब्दस्य तदा हृदयशोक इति । ततश्च तेनैव प्रकृत्यन्तरेण सिद्धे विकल्पविधानमिदन्न कर्त्तव्यम् । एतत् क्रियते तु प्रपञ्चार्थम् । स एव सिद्धप्रयोगोऽनेन सूत्रेण कथ्यत इति ।

## ५२ । पादस्य पदाज्यातिगोपहतेषु ।

पदाजिरिति । अज गतिक्षेपणयोः । पदातिरिति । अत सातत्यगमने । अज्यतिभ्याञ्च पादे चेत्यौणादिक (उण्,४।५२०) इण्प्रत्यय इति । अत्र जनिघसिभ्यामिण्णित्यत (उण्,४।५६९) इण्ग्रहणानुवृत्तेः । यदौणादिक इण् प्रत्यय एवं सति तत्राजेर्व्यघञपोरिति (२।४।५६) वीभावः कस्मान्न भवतीत्याह तत्रेत्यादि । पदग इति । अन्तात्यन्ताध्वदूरपारेत्यादौ (३।२।४८) सूत्रे डप्रकरणेऽन्यत्रापि दृश्यत इति (३।२।४८,वा) वक्तव्य मित्युक्तम् । तेन पादशब्देऽप्युपपदे गमेर्डप्रत्ययः । पदोपहत इति । कर्त्तृकरणे कृता बहुलमिति (२।१।३२) समासः । पूर्वत्र तूपपदसमासः । अकारान्तोऽयमादेशः । प्रथमायाश्च लुकं कृत्वा निर्देशः । पादशब्दोऽयमित्यादि । कर्षात्वतो घञोऽन्तउदात्त (६।१।१५९) इत्यन्तोदात्तत्वे प्राप्ते पादशब्दस्य वृषादित्वादाद्युदात्तत्वं

विधीयते। ततश्च तस्य स्थाने पदादेशो विधीयमान आन्तरतम्यादाद्युदात्त एव स्यात्। अन्तोदात्तश्चेष्यते। तस्मादन्तोदात्तो निपात्यते। उपदेशावस्थायामेव। तेनेत्यादिनान्तोदात्तनिपातनस्य फलं दर्शयति। पदाजिः पदातिरित्यादिनापुग्रपदेशग्रहणस्य। यदि गतिकारकोपपदात् कृदिति (६।२।१०९) प्रकृतिस्वरे कृते पदशब्दस्यान्तोदात्तत्वं निपात्यते तदा तस्य सतिशिष्टत्वं स्यात्। ततश्च पदाजिः पदातिः पदग इत्येतेषु कृत्स्वरो बाध्यते। सतिशिष्टस्वरस्य बलीयस्त्वात्। उपदेशावस्थायान्त्वन्तोदात्तत्वनिपातने कृत्स्वर एव सतिशिष्टो भवति। अतस्तेन समासस्यैवान्तोदात्तत्वं भवति। न पदशब्दस्य।

## ५३। पद्यत्यतदर्थे।

पद्या इति। विध्यत्यधनुषेति (४।४।८३) यत्। पाद्यमिति। पादशब्दात् तादर्थ्ये यदित्यनुवर्त्तमाने (५।४।२४) पादार्घाभ्याञ्चेति (५।४।२५) यत्। पद्भाव इत्यादि। पद्भावे कर्त्तव्येऽस्मिं श्चरत्यर्थे यङ्क् तस्मिन् कृते पद्भावस्योपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्। पदिति योगविभागात् सिद्धमिति। पर्पादिष्वेव पादः पच्चेति पाठात् सिद्धमिति वा। शरीरावयवस्येत्यादि। कुतः पुनरेतल्लभ्यते ? केचिदाहुर्व्याख्यानादयमर्थः प्रतिपत्तव्य इति। अन्ये त्वाहुः पूर्वसूत्रे सामर्थ्याच्छरीरावयवस्य पादशब्दस्य ग्रहणं तत्राज्यातिप्रभृतीनि त्रीण्युत्तरपदानि गमनार्थानि। चतुर्थं तु हननार्थम्। तेषु गमनादिषु प्राण्यङ्गस्यैव पादशब्दस्य करणभावः सम्भवति। नेतरस्य। तस्मात् तत्र प्राण्यङ्गवाचिनः पादशब्दस्य ग्रहणम्। इहापि तदेवानुवर्त्तत इति युक्तम्। शरीरावयवस्य ग्रहणमिति। यद्येवं तदा ऋचः श (६।३।५५) इत्यत्रापि शरीरावयवस्य ग्रहणं स्यात्। नैष दोषः। ऋक्सम्बन्धिनः शरीरावयववचनस्यासम्भवात्। चतुर्थभागवचनः पादशब्दोऽत्र ग्रहीष्यते। तेनेत्यादि। यत एवं शरीरावयववचनपादशब्दस्येह ग्रहणं तेन पणपादमाषेत्यादौ (५।१।३४) सूत्रे यः पादशब्दस्तस्य न पदादेशो भवति। नह्यसौ शरीरावयववचनः। किं तर्हि ? परिमाणवचनः। कुत एतत् ?

पणादिभिः परिमाणवचनैः साहचर्य्यात् । द्विपाद्यम् । त्रिपाद्यमिति । तेन क्रीतमित्यर्थे (५।१।३७) यत्प्रत्ययः ।

### ५४ । हिमकाषिहतिषु च ।

पद्धिममिति । षष्ठीसमासः । पत्काषिण इति । (M) सुप्यजातौ णिनिस्ताच्छील्य इति (३।२।३८) णिनिः । उपपदसमासः । पद्धतिरिति । पादाभ्यां हन्यत इति पद्धतिः । क्तिन्नन्तेन हतिशब्देन कर्त्तृकरणे कृता (२।१।३२) बहुलमिति समासः ।

### ५५ । ऋचः शे ।

शइति । तद्धितस्य शस्प्रत्ययस्यावयवभूतो यः शशब्दस्तस्येह ग्रहणम् । अन्यस्य ऋक्पादात् परस्यासम्भवात् । ननु च पादे शेत इत्यधिकरणे शेतेरित्यचि (३।२।१५) कृते पादश इत्यत्र शीङ्सम्बन्धी शशब्दः सम्भवति । नैतदस्ति । नहि ऋक्पाद उपपदे शेते र्धातोरचा भवितव्यम् । तत्र तु शयनासम्भवात् । अनभिधानाद्वा । योऽपि लोमादिपामादिपिच्छादिभ्यः शनेलच इति (५।२।१००) शो विधीयते सोऽपि नैव ऋक्पादात् परः सम्भवति । तत्रानभिधानात् । लोमादिषु तस्यापाठाच्च ।

### ५६ । वा घोषमिश्रशब्देषु ।

घोषशब्दशब्दशब्दाभ्यां षष्ठीसमासः । मिश्रशब्देन च पूर्वसदृशेत्यादिना (२।१।३१) तृतीयासमासः । निष्के चेति वक्तव्यमिति । निष्कशब्दे चोत्तरपदे पादशब्दस्य पदित्ययमादेशो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । हिमकाषिहतिषु चेत्यतश्चकारो (६।३।५४) ऽत्रानुवर्त्तते । स चानुक्तसमुच्चयार्थः । अथवा सूत्रे वेति योगविभागः क्रियते । तेन निष्के चोत्तरपदे भविष्यतीति ।

### ५७ । उदकस्योदः संज्ञायाम् ।

उदमेघो नाम यस्यौदमेघिः पुत्र इति । पितुरप्रसिद्धत्वादुदमेघस्य तदपत्येन समाख्यातं यस्यौदमेघिः पुत्र इत्युक्तम् । एतेन यस्यौदमेघिरपत्यं

(M) पत्काषिणः पादचारिण इत्यर्थः । "अथ पत्काषिणो यान्ती"ति भाष्ये ।

स उदमेघो वेदितव्य इति दर्शयति। एवमुदवाहो नाम यस्योदवाहिः पुत्र इत्यत्रापि वेदितव्यम्। उदमेघ इति षष्ठीसमासः। उदकपूर्णो वा मेघः। शाकपार्थिवादित्वान्मध्यपदलोपी तत्पुरुषः। उदकं वहतीति उदवाहः। कर्मण्यण् (३।२।१)। वक्तव्य इति व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। इहापि स एव चकारोऽनुवर्त्तते। अनुक्तसमुच्चयार्थः। नचान्यत् समुच्चेतव्यमस्तीति। उदभावमेवासावुदकशब्दस्य संज्ञायां समुच्चिनोति। तत्र कस्य समुच्चिनोति। यस्य न प्राप्नोति। कस्य न प्राप्नोति? उत्तरपदभूतस्य। तेन संज्ञाया-मुत्तरपदस्याप्युदकशब्दस्योद इत्ययमादेशो भवति। लोहितोदः। चीरोद इति बहुव्रीहिः।

## ५८। पेषं वासवाहनधिषु च।

उदपेषमिति। पिष्लृ सञ्चूर्णने। उदधिरिति। कर्मण्यधिकरणे चेति (३।३।९३) किप्रत्ययः। आतो लोप इटि चेत्याकारलोपः (६।४।६४)। असंज्ञार्थमिदं वचनम्। तेनोदधिरिति घटादिरिह वेदितव्यः। न समुद्रः। तत्र पूर्वेणैव सिद्धत्वात्। उदधिशब्दः समुद्रस्य संज्ञेति कृत्वा।

## ५९। एकहलादौ पूरयितव्येऽन्यतरस्याम्।

यद्येकशब्दः संख्यावचन इह गृह्यते तदानर्थकं तस्य ग्रहणं स्यात्। नहि क्वचित् द्वौ बहवो वा हल आदिभूताः सम्भवन्ति यद्व्यवच्छेदार्थमेक-ग्रहणं क्रियते। तस्मादसहायवचनोऽयमेकशब्दः। एवमपि यः कश्चिद-विशिष्ट एको ऽसहायो हल् आदि वीक्ष्य तदेकहलाद्युत्तरपदं गृह्येत तदो-दकस्थानमित्यत्रापि स्यात्। अत्रापि हि सकारोऽसहायएव एकहल्। यद्यनेके वर्णा युगपदुच्चार्य्येरन्नुच्चारिता वा वर्णा न प्रध्वंसेरंस्तदा स-सहायस्यापि स्यादादित्वम्। नचैवम्। यतो वर्णा न युगपदुच्चार्य्यन्ते। ते चोच्चारितप्रध्वंसिनः। तस्मान्नास्त्येव क्वचित् किञ्चिदनेकहलादित्वं यद्व्यवच्छेदार्थमेकहलादावित्युच्यते। उक्तञ्चेदम्। अतोऽस्मादेव वचनाद् विशिष्टमात्रैकहलादित्वं विवक्षितमित्येतत् सर्व्वञ्चेतसि कृत्वा तदेव विशिष्टं दर्शयितुमाह एकोऽसहाय इत्यादि। यथातुल्यजातीयेनाप्यचा विनैकौ

हल् स आदिर्यस्येति तदेकहलादि । तुल्यजातीयेन चाव्यवहितेनापि यस्य तदेकहलादीत्याश्रीयेत तदा न क्वचित् स्यात् । तथाविधस्योत्तरपदस्य पूरयितव्यवाचिनोऽभावात् । उच्यते चेदम् । तस्मात् वचनप्रामाण्यात् तुल्यजातीयेन हलाऽनन्तरेणाव्यवहितेन विना यो वर्त्तते सोऽसहाय एवैकशब्देनासहायवाचिना विवक्षित इति गम्यते । एवंविधो हलादिर्यस्य तदेकहलादि । नचैवंविधः स्थानशब्दस्यादिर्हलस्तीत्येकहलादिग्रहणेन स्थानशब्दो निवर्त्तते । पूरयितव्यवाचिनीति । उदकादिना द्रव्येणान्तर्व्याप्तव्यः पूरयितव्य इत्युच्यते । तदर्कं शीलमस्येति ताच्छीलिकी णिनिः ।

## ६० । मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ।

द्रवद्रव्यसंपृक्ताः सक्तवो मन्थ इत्युच्यते । तत्र मन्थशब्दोऽयं यद्यव्युत्पन्नं प्रातिपदिकं तदोदकेन मन्थ इति तृतीयेति (२।१।३०) योगविभागात् समासः । अथ व्युत्पाद्यते मथ्यत इति मन्थ स्तदा कर्त्तृकरणे कृता बहुलमिति (२।१।३२) समासः । अन्नोदनाभ्यामन्नेन व्यञ्जनमिति (२।१।३४) समासः । बिन्दुवज्रवीवधैः षष्ठीति (२।२।८) भारहारगाहैस्त्वन्ते उपपद मतिङिति (२।२।१९) ।

## ६१ । इको ह्रस्वोऽङ्यो गालवस्य ।

ग्रामणिपुत्र इति । ग्रामं नयतीति सत्सूद्विषेत्यादिना (३।२।६१) क्विप् । अग्रग्रामाभ्याञ्च नयतेरिति (८।४।३,वा) णत्वम् । गार्गीपुत्र इति । यञश्चेति (४।१।१६) गार्ग्यशब्दान् ङीप् । यस्येति चेत्यकारस्य (६।४।१४८) लोपः । हलस्तद्धितस्येति (६।४।१५०) यकारस्य च । अथ विकल्पार्थमेव गालवग्रहणं कस्मान्न भवतीत्याह अन्यतरस्यामित्यादि । कारीषगन्धीपुत्र इति । कारीषगन्ध्यायाः पुत्र इति षष्ठीसमासः । ष्यङः संप्रसारणमित्यादिना (६।१।१३) संप्रसारणम् । संप्रसारणाच्चेति (६।१।१०८) परपूर्वत्वम् । हलः संप्रसारणस्येति (६।३।१३९) दीर्घः । इयङुवङ्भाविनामित्यादि । इयङुवङौ भाविनौ येषां ते तथोच्यन्ते । श्रीकुलमिति । इयङ्भाविन उदाहरणम् । भ्रूकुलमिति । उवङ्भाविनस्य । काण्डीभूतम् । वृषलीभूतमिति । अव्ययानाम् । काण्डीबल-

शब्दशब्रामभूततद्भाव इत्यादिना (५।४।५०) च्विः। अस्य च्वाविति त्वम् (७।४।३२)। अनुकुंस इति। अनुशासो कुंसश्चेति विशेषणसमासः। एवं भ्रुकुटिरित्यत्रापि। वक्तव्यमिति व्याख्येय मित्यर्थः। तत्रेदं व्याख्यानम्। पृषोदरादित्वाद् भ्रकुंसादीनामकारो भविष्यतीति।

## ६२। एक तद्धिते च।

एकरूप्यमिति। हेतुमनुष्येभ्योऽन्यतरस्यां रूप्य इति (४।३।८१) रूप्यः। एकमयमिति। मयट् चेति (४।३।८२) मयट्। एकत्वम्। एकतेति। तस्य भावस्त्वतलाविति (५।१।११९) त्वतलौ। यदैकशब्दः संख्यापरो भवति तदैतदुदाहरणम्। यदा संख्येयपरो भवति तदा त्वतलोर्गुणवचनस्येति (६।३।३५,वा) पुंवद्भावेनैव सिद्धम्। ननु च गुणमुक्तवान् गुणवचनः। यश्च गुणमात्रमभिधाय तद्विशिष्टं द्रव्यमाह स गुणवचनो भवति। तद्यथा कृष्णः पटः। शुक्लः पट इति। अयं पुनरेकशब्दो न क्वचिदपि द्रव्यव्यतिरिक्तं गुणमाह सर्वदा संख्येये द्रव्ये वर्त्तत इति कृत्वा। तत् कुतोऽस्य पुंवद्भावः? अयुक्तमिदमभिधीयते। तथाहि प्रसिद्धिमाश्रित्यैकादयः संख्येयवचना इत्युच्यन्ते। नत्वेषां संख्याने वृत्तिर्नाभ्युपेयेति। तथाहि द्व्येकयोर्द्विवचनैकवचने इत्यत्र (१।४।२२) त्वेकशब्दः संख्यायामेव प्रयुक्तो न संख्येये द्रव्ये। लिङ्गविशिष्टस्येत्यादि। पुंलिङ्गो य एकशब्दः स स्वभावत एव ह्रस्वान्त इति न तद्ग्रहणं प्रयोजयति। अपितु स्त्रीलिङ्गविशिष्टस्यैव। तस्यैव हि ह्रस्वत्वं विधीयमानमर्थवद् भवति। ननु चैतस्याप्येकशब्दस्य य एकारस्तस्य ह्रस्वत्वं विधीयमानमर्थवद्भवति। तत् किमुच्यते लिङ्गविशिष्टस्यैकशब्दस्य ग्रहणं प्रयोजयतीत्याह अचा गृह्यमाणमित्यादि। विशेषणविशेष्यभावं प्रति कामचारः। तथा ह्युक्तं विशेषणविशेष्यभावयोर्यथेष्टत्वादिति। तत्र यदि गृह्यमाणेनैकशब्देनाज् विशिष्यत एकशब्दस्य योऽजिति तदैकसम्बन्धिन एकारस्य ह्रस्वत्वं विधीयमानमर्थवद्भवति। पुंलिङ्गस्याप्येकशब्दस्य ग्रहणं प्रयोजयति। नचात्र गृह्यमाणेनाज् विशिष्यते। एकारस्य ह्रस्वस्यानिष्टत्वात्। यस्मानिष्टार्था शास्त्रे प्रकॢप्तिर्युक्ता। तस्मादचा गृह्यमाण एकशब्दोऽत्र विशिष्यते।

तेन लिङ्गविशिष्टस्य ग्रहणम् । एकशब्दस्य ह्रस्वो भवति । किं विशिष्टस्याचः । अजन्तस्येत्यर्थः । तत्रालोऽन्त्यस्यैव ह्रस्वत्वेन भवितव्यम् । तच्च टाबन्तस्यैव सार्थकम् । न पुंलिङ्गस्य । न हि ह्रस्वस्यैव ह्रस्वे विधीयमाने कश्चिदर्थः सिध्यति । इतिकरणौ हेतौ । यत एवाचा गृह्यमाण एकशब्दोऽत्र विशिष्यते तेन लिङ्गविशिष्टस्य ग्रहण मेकशब्दस्य प्रयोजयति ।

## ६३ । ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् ।

रेवतिपुत्र इति षष्ठीसमासः । एवं रोहिणिपुत्र इत्यादावपि । कुमारीं ददातीति कुमारिदा (N) । उर्वीं ददातीति उर्विदा । आतोऽनुपसर्गे कः (३।२।३)। फाल्गुनीत्यादि । फाल्गुनी चासौ पौर्णमासी चेति फाल्गुनीपौर्णमासी (O) । विशेषणमित्यादिना (२।१।५७) समासः । एवञ्जगतीच्छन्द इत्यत्रापि । शिलवहम् । शिलप्रस्थमिति । शिलाशब्दस्य वहप्रस्थशब्दाभ्यां षष्ठीत्यनेन (२।२।८) समासः । लोमकाष्टहम् । लोमकाषण्डमिति । अत्रापि लोमकाशब्दस्य ष्टहषण्डशब्दाभ्याम् । अजक्षीरेणेति । अत्राप्यजाशब्दस्य क्षीरशब्देन । जर्णसदिति । जर्णासहिता सद् जर्णसत् । शाकपार्थिवादित्वादुत्तरपदलोपो (२।१।६०,वा) समासः । (P)

## ६४ । त्वे च ।

संज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि भवन्तीति । एवकारेण संज्ञाया व्यवच्छेदः क्रियते । नहि त्वप्रत्यये ङ्यापो ह्रस्वत्वे कृते कस्यचित् संज्ञा गम्यते । तेन संज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि भवन्ति ।

## ६५ । इष्टकेषीकामालानां चिततूलभारिषु ।

इष्टकचितमिति । कर्तृकरण इत्यादिना (२।१।३२) समासः । इषिक-

---

(N) In the printed काशिका the examples are कुमारिदारा । प्रदविंदा ।

(O) कथमत्र न पुंवद्भाव इति न्यासकारः प्रष्टव्यः । "बहुलग्रहणात् क्वचिदनुत्तरपदेऽपि भवति अतुमायन्ति मयो गर्भिणाय इति । एवं कृत्वा फाल्गुनी पौर्णमासीति प्रत्युदाहरणोपपत्तिः । कर्मधारये तु पुंवद्भावः प्राप्नोती"ति मिश्रः ।

(P) The printed काशिका has जर्णसदा ।

तूलमिति षष्ठीसमासः। मालभारिणीति। मालां भर्तुं शीलमस्या इति ताच्छील्ये णिनिः। उपपदमतिङिति (२।२।१९) समासः। इष्टकादिभिस्तदन्तस्यापि ग्रहणं भवतीति। बहुलग्रहणानुवृत्तेरित्यभिप्रायः।

## ६६। खित्यनव्ययस्य।

कालिम्मन्या। हरिणिम्मन्येति। कालीमात्मानं मन्यते। हरिणी मात्मानं मन्यत इति आत्ममाने खश्चेति (३।२।८३) खश्। दिवादित्वाच्छ्यन्। अनेन ह्रस्वत्वम्। उत्तरसूत्रेण मुम्। इहाजन्तस्य ह्रस्वत्वमभ्युपगम्यम्। अन्यथा वाङ्मन्य इत्यत्रापि स्यात्। अजन्तस्य ह्रस्वविधाने सति परत्वान् मुमि कृते ऽनजन्तत्वाद् ह्रस्वो न प्राप्नोतीति यो मन्येत तं प्रत्याह मुमा ह्रस्वो न बाध्यत इति। अत्रैव हेतुमाह अन्यथा हीत्यादि। ह्रस्वः शिष्यते विधीयते येन तद् ह्रस्वशासनं खित्यनव्ययस्येत्येतद् वचनम्। यदि हि मुमा ह्रस्वो बाध्येत ततो ह्रस्वशासनमिदमनवकाशं स्यात्। ततस्तस्यानर्थक्यमेव स्यात्। तस्मान्मा भूदेष दोष इति मुमा ह्रस्वो न बाध्यते। तेन विरोधाभावादुभयं भवति ह्रस्वो मुम् च। कथं पुनर्मुमा ह्रस्वस्य बाधा शङ्किता? कथं वा ह्रस्वशासनस्यानवकाशत्वम्? यावता खित्यजन्तस्याविशेषेण मुम् विधीयते। ह्रस्वत्वं तु सामर्थ्याद् दीर्घस्य। नहि ह्रस्वस्य ह्रस्वविधानमर्थवत् भवति। एवञ्च स्तनन्धयादिषु कृतार्थत्वान् मुमेव ह्रस्वेनापवादेन कालिम्मन्यादिषु बाध्येत। एवम्मन्यते। अपवादविषयेऽपि मुमो विधानार्थं मुम्शास्त्रस्यावश्यमावृत्तिः कर्त्तव्या। अन्यथा कालिम्मन्येत्यत्र मुम् न स्यात्। ततश्चापवादविषयेऽपि मुमा प्रवर्त्तमानेन ह्रस्वस्य बाधा सम्भाव्येत। अनवकाशत्वञ्चातएवापवादविषयेऽपि मुम् प्रवृत्तेरिति। अथ कथमत्र खिदन्तस्य ग्रहणम्। यावता ज्ञापितमेतदुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नास्तीत्यत आह अनव्ययस्य तदेवेत्यादि। यद्यत्र खित्प्रत्ययमात्रं गृह्येत न तदन्तं ततोऽनव्ययस्येति प्रतिषेधोऽपार्थकः स्यात्। नह्यव्ययात् परः खित् प्रत्ययः सम्भवति। धातोरेव तस्य विधानात्। ततश्चानर्थकत्वादनव्ययस्येत्येतन्नोक्तं स्यात्। उक्तञ्च। तस्मादेतदेवैतज् ज्ञापयति खिदन्तस्यात्र ग्रहणमिति।

## ६७। अरुर्द्विषदजन्तस्य मुम्।

अरुन्तुद इति। अरुस्तुदतीति विध्वरुषोस्तुद इति (३।२।३५) खश्। संयोगान्तलोपः। तुदादित्वाच्छः। अतो गुणे (६।१।९७) पररूपत्वम्। द्विषन्तप इति। द्विषन्तं तापयतीति द्विषत्परयोस्तापेरिति (३।२।३९) खच्। खचि ह्रस्व इति (६।४।९४) ह्रस्वत्वम्। विद्वन्मन्य इति। विद्वांसमात्मानं मन्यत इति। आत्ममाने खश्चेति (३।२।८७) खश्। वसुस्रंसुध्वंस्वनडुहान्द इति (८।२।७२) सकारस्य दकारः। यरोऽनुनासिकेऽनुनासिको वेति तस्य नकारः (८।४।४५)। अथान्तग्रहणं किमर्थम्? यावता येन विधिस्तदन्तस्येत्यनेन (१।१।७२) तदन्तस्यैव भविष्यतीत्याह अन्तग्रहणमित्यादि। कृत मजन्तकार्य्यं यस्य स कृताजन्तकार्य्य आगमी। तस्यैवंविधस्य प्रतिपत्तिः प्रतीतिर्यथा स्यादित्येवमर्थमन्तग्रहणम्। अन्तग्रहणेन हि कार्य्यान्तरस्यान्तेऽवसाने मुम् कर्त्तव्य इत्येषोऽर्थः सूच्यते। अतोऽजन्तकार्य्ये ह्रस्वत्वे कृते पश्चान्मुम् भवति। ननुच मुमा ह्रस्वो न बाध्यत इत्यनेनैव भविष्यतीति सोपपत्तिकोऽयमर्थः प्रतिपादितः। तत् किमर्थमेतदन्तग्रहणम्। नैतदस्ति। तेन हि निरवकाशाद् ह्रस्वशासनस्य मुमा ह्रस्वो न बाध्यत इत्येतावन्मात्रं प्रतिपादितम्। नतु कृताजन्तकार्य्यस्य मुम् भवतीत्येषोऽर्थः। ततः परत्वान्मुमि कृते सत्यनजन्तस्यापि ह्रस्वत्वं प्रसज्येत। अत्र को दोषः? खित्यन्तह्रस्वभावी नास्तीति। यथा कालिम्मन्य इत्यत्र मुमि कृते सत्यनजन्तस्यापि ह्रस्वत्वं भवति तथा वाङ्मन्य इत्यत्र स्यादिति। तस्मादन्तग्रहणं कर्त्तव्यम्॥

## ६८। इच एकाचोऽम्प्रत्ययवच्च।

अत्र यदि प्रत्ययवच्चेत्येतावदुच्येत तदा गाम्मन्य इत्यत्रौतोऽम्शसोरित्यात्त्वं (६।१।९३) न स्यात्। इह च स्त्रीम्मन्य इति। अत्राप्यमि पूर्वं इति (६।१।१०७) पूर्वसवर्णः। इहच नरम्मन्य इति नृशब्दस्य ऋतो ङिसर्वनामस्थानयोरिति (७।३।११०) गुणः। सामान्यातिदेशे विशेषस्यानतिदेशाद् वचनं लियङुवङर्थमेव केवलं स्यात्। इयङुवङ्भावजादौ प्रत्ययमात्रसामान्येन विधीयमानो सामान्यातिदेशेऽपि भवत इति कृत्वा। अम्प्रत्ययवच्चेत्येवमुच्यमाने

सत्थास्त्वादयो भवन्ति । तेषामप्यम्प्रत्यय इष्टत्वात् । एतत् सर्वं बुद्धौ कृत्वाह अम्प्रत्ययवच्चेति । एतदेव विवृणोति द्वितीयैकवचनवच्चेति । कथं पुनरयमर्थो लभ्यते ? यावतैकममृग्रहणम् । तेन चामागमो निर्दिश्यते । प्रत्ययवच्चेत्येतदनिष्टं स्यात् । अथ प्रत्ययस्तेन विधिश्चेत आगमो न निर्दिष्टः स्यादित्यत आह अमिति चेत्यादि । एकमप्यमृग्रहणमारभ्यमाणं यस्मादुभयमेतत् सम्पादयति तस्मादयमर्थो लभ्यत इत्यभिप्रायः । श्रियम्मन्यः । भुवम्मन्य इति । अचिश्नुधात्वित्यादिनेयङुवङौ (६।१।७७) । लेखाभ्रुम्मन्य इति । पूर्वसूत्रेण मुमागमः । अथेहेत्यादि । श्रिय मात्मानं ब्राह्मणकुलं मन्यत इत्युपक्रम्य प्रस्तुत खश्प्रत्यये विहिते कथं भवितव्यम् ? किं श्रियम्मन्यमिति भवितव्यमुत श्रिमन्यमिति ? कथं पुनरेतत् पक्षद्वयं सम्भाव्यते ? यत एवं पृच्छति । शब्दानां द्विधा प्रवृत्तिदर्शनात् । तथाहि केषां स्वलिङ्गापरित्यागेणाप्यर्थान्तरे प्रवृत्ति दृष्टा यथा भूतशब्दस्य भूतमियं ब्राह्मणीति । केषाञ्चित् स्वलिङ्गपरित्यागेनापि सा दृष्टा यथा प्रष्ठशब्दस्य प्रष्ठीति । तत्र श्रीशब्दो ब्राह्मणकुले वर्त्तमानो यदा स्वलिङ्गं न परित्यजति तदा श्रियम्मन्यमिति भवितव्यम् । अथ स्वलिङ्गं परित्यज्य नपुंसकलिङ्गं गृह्णाति तदा स्वमोर्नपुंसकादित्यमो (७।१।२३) लुकि कृते ह्रस्वो नपुंसके प्रातिपदिकस्येति (१।२।४७) ह्रस्वत्वे च श्रिमन्यमिति भवितव्यमिति । एवमिमौ द्वावपि पक्षौ सम्भाव्येते । अत उभयपक्षसम्भवे न ज्ञायते कथं भवितव्यम् । अत स्तत्परिज्ञानार्थं प्रश्नः ? श्रिमन्यमिति भवितव्यमिति भाष्ये व्यवस्थितमिति । ननुच श्रीशब्दोऽयं स्त्रीलिङ्गो ऽर्थान्तरेऽपि वर्त्तमानः स्वलिङ्गमजहदेव वर्त्तते तथाच प्रयोगोऽपि दृश्यते श्रिरो मे श्री र्यशो मे श्रीरिति । तत् कथं श्रिमन्यमिति भाषेत्र व्यवस्थापितमित्याह तत्रेत्यादि । यथा प्रष्ठादयः शब्दाः पुंयोगात् स्त्रियां वर्त्तमानाः परित्यक्तस्वलिङ्गा एव वर्त्तन्ते प्रष्ठी प्रवरी गणकीति तथा श्रीशब्दोऽप्यत्र कुलविषये वर्त्तमान इति भाष्यकारस्य मतम् । अत स्तन्मतेन स्वमोर्नपुंसकादित्यमो लुकि(७।१।२३)कृते श्रिमन्यमिति । ननुच नाप्राप्ते लुक्त्वयमारभ्यते । यथैव सुपो धातुप्रातिपदिकयोरितीमं (२।४।७१) लुकं बाधते तथा स्वमोर्नपुंसकादितीममपि ( ७।१।२३ ) लुकं बाधेत ।

अपि च लुगीकपदाश्रयत्वादन्तरङ्गो विपर्य्ययात्वामागमो बहिरङ्गः । ततोऽसिद्धं बहिरङ्गमन्तरङ्ग (प,५१) इत्यन्तरङ्गे लुकि कर्त्तव्ये बहिरङ्गो ऽमागमो नास्त्येव । तत् कुतोऽत्र लुक् । नैष दोषः । मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानिति (प,६०) । एवमयममागमः सुपो धातुप्रातिपदिकयोरितीमं लुकं बाधिष्यते । न त्वमोर्नपुंसकादितीमम् (७।१।२३) । बहिरङ्गपरिभाषाप्यत्राशक्याश्रयितुम् । इह हि दोषः स्यादरुन्तुद इति । तदाश्रयणे तु संयोगान्तलोपो न स्यात् । संयोगान्तलोपे चान्तरङ्गे कर्त्तव्ये बहिरङ्गस्य मुमागमस्यासिद्धत्वेन संयोगान्ततानुपपत्तेः । तस्मात् प्राप्तनिमित्ता सतीयमिह नाश्रीयते । दोषा एव हि तस्या एवमादयः ।

## ६९ । वाचंयमपुरन्दरौ च ।

वाचंयम इति । वाचं यच्छतीति वाचि यमो व्रत (३।२।४०) इति खच् । तत्र वाक्शब्दस्यामन्तता निपात्यते । पुरन्दर इति । पूःसर्वयोर् दारिसहोरिति (३।२।४१) खच् । खचि ह्रस्व इति (६।३।६४) ह्रस्वत्वम् । अत्रापि पूःशब्दस्यामन्तता निपात्यते । चकारोऽनुक्तसमुच्चयार्थः । तेनास्तुसत्यागदस्य कार इति सर्वं न वक्तव्यं भवति ।

## ७० । कारे सत्यागदस्य ।

सत्यं करोतीत्यनेन कर्मण्यणं सूचयति । सत्यस्य कार इत्यनेनापि घञम् । एवमगदङ्कार इत्यत्राप्यण्घञौ वेदितव्यौ । अस्तुङ्कार इति । भावे घञ् । अस्तुशब्दो विभक्तिप्रतिरूपको निपातोऽभ्युपगमे वर्त्तते । अस्त्वित्यभ्युपगमस्य करणमस्तुङ्कारः । भक्षङ्कार इति । भावे घञ् । धेनुम्भव्येति । भव्यगेयेत्यादिना (३।४।६८) कर्त्तरि कृत्यः । धेनुश्चासौ भव्या चेति धेनुम्भव्या । लोकम्पृण इति । पृण प्रीणने । लोकं पृणतीति मूलविभुजादित्वात् कः । अनभ्याशमित्यमिति । अनभ्याशं दूरमित्यं गन्तव्यमस्येत्यनभ्याशमित्यः । इन्धनमिन्धः । भावे घञ् । भ्राष्ट्रस्येन्धो भ्राष्ट्रमिन्धः । अग्नेरिन्धोऽग्निमिन्धः । तिमिङ्गिल इति गॄ निगरणे । तिमिं गिलतीति पूर्ववत् कः । ऋत इद्धातोरितीत्त्वम् (७।१।१००) । रपरत्वम् । अचि विभाषेति लत्वम् (८।२।२१) ।

गिलगिल इति। गिलं गिलतीति पूर्ववत् क इत्यादि च। गिलगिले चेति। गिलं गिलतीति गिलगिलः। आतश्चोपसर्गे (३।१।१३६) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् कः। पूर्वत्राप्येवं कविधाने न दोषः। तिमीनां गिलगिल इत्यस्मिन्नर्थे विवक्षित इदं वक्तव्यम्। अथ तिमिं गिलतीति तिमिङ्गिलः। तिमिङ्गिलं गिलतीतिप्रयोऽर्थो यदा विवक्ष्यते तदा पूर्वेणैव सिद्धमिति नार्थ एतेन। उष्ट्रंकरणम्। भद्रंकरण मिति। षष्ठीसमासौ। पुत्रादिति। टकारो ङीबर्थः। केचित् तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्तीति। तान् प्रति नेदमुपसंख्यानं कर्त्तव्यम्। अन्यत्रापि दृश्यत इति। अनेन शार्ङ्गरवादिषु पुत्रशब्दस्य पाठं द्रढ़यति।

## ७१। श्येनतिलस्य पाते ञे।

ञप्रत्यये पर इति। ञः प्रत्ययो यस्मादुत्तरपदात् तत् तथोक्तम्। श्यैनम्पातेति। पतनं पातो भावे घञ्। श्येनस्य पातः श्येनपातः। कृद्‌योगा च षष्ठी समस्यत इति (२।२।८, वा) समासः। ततो घञः साऽस्यां क्रियेति (४।२।५८) ञः।

## ७२। रात्रेः कृति विभाषा।

कृदन्त उत्तरपद इति। कथं पुन स्तदन्तविधिर्लभ्यते। यावता ज्ञापित मेतत्। उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नास्तीति। रात्रि-शब्दादनन्तरस्य कृत्प्रत्ययस्यासम्भवात् तदन्तविधिर्विज्ञायत इति चेत् ? अयुक्तमेतत्। सम्भवति हि रात्रेरनन्तरः कृत्प्रत्ययः। रात्रिरिवाचरतीत्याचारे सर्व्वप्रातिपदिकेभ्यः क्विब् वेति (३।१।११, वा) क्विप्। सनाद्यन्ता धातव इति (३।१।३२) धातुसंज्ञा। तृच्। इट्। गुणायादेशौ। रात्रयितेति। तदेवं सम्भवत्य-नन्तरे कृत्प्रत्यये तत्रैव स्यात्। न तदन्ते। नैष दोषः। अलुगिंषदजन्तस्ये-त्यतो(६।३।६७)ऽन्तग्रहणमनुवर्त्तते। तेन तदन्तएव कार्य्यं विज्ञायत इति। एवं तर्ह्याचारक्विबन्तस्यापि रात्रिशब्दस्य कृदन्त उत्तरपदे स्यात्। भवतु। अथ तु नेष्यते व्यवस्थितविभाषाङ्गीकर्त्तव्या। गौणत्वाद्वा रात्रिशब्दस्य न भविष्यति। गौणत्वं पुनः प्राथमकल्पिकादर्थादपेतत्वात्। यथा वाहीको

गौरित्यत्र गोशब्दस्य। रात्रिञ्चर इति। रात्रौ चरतीति चरेष्ट इति (३।२।१६) टः। उपपदसमासः। रात्रिमट इति। अटतीत्यटः। पचाद्यच्। रात्रावट इति सप्तमीति (२।१।४०) योगविभागात् समासः। अप्राप्तविभाषेयमिति। ननु च खिदपि कृदस्ति। रात्रिम्मन्यमिति। अत्र ह्यरुर्द्विषदजन्तस्येति (६।३।६७) नित्यं प्राप्नोति। रात्रिञ्चर इत्यादौ न केनचित् प्राप्नोति। एवञ्च प्राप्ते चाप्राप्ते इयं विभाषा युक्तेत्यत आह खिति हि नित्यं मुम् भवतीति। पूर्वविप्रतिषेधेनेत्यभिप्रायः। अत्र हि पूर्वविप्रतिषेध आश्रीयते। खिति पूर्वेण नित्यम् मुम्भवति। एवञ्च खितोऽन्यदेव कृदन्तमस्य वचनस्यावकाशः। नच केनचित् तत्र प्राप्नोतीति युक्तमस्याप्राप्तविभाषात्वम्।

## ७३। नलोपो नञः।

सानुबन्धकग्रहणमिह मा भूत्। पामनपुत्र इति। पामान्यस्य सन्तीति लोमादिपामादीत्यादिना (५।२।१००) नप्रत्ययः। तदन्तस्य पुत्रशब्देन षष्ठीसमासः। अथ क्रियमाणे सानुबन्धकग्रहणे स्त्रिया अय मिति स्त्रीपुंसाभ्यामित्यादिना (४।१।८७) नञ् स्त्रैणः। स्त्रैणश्चासावर्थश्चेति स्त्रैणार्थ इत्यत्र कस्मान्न भवति ? पूर्वपदभूतस्य नञो ग्रहणात्। कुत एतत् ? उत्तरपदस्य सम्बन्धिशब्दत्वात्। पूर्वपदं ह्यपेक्ष्योत्तरपदं सम्भवति। अत उत्तरपदाधिकारात् पूर्वपदभूतस्यात्र नञो ग्रहणम्। अथवा विभाषाग्रहणमनुवर्त्तते। तस्य व्यवस्थितविभाषात्वविज्ञानान्न भविष्यति। यद्येवं पामनपुत्र इत्यत्राप्यत एव न भविष्यतीति नार्थः सानुबन्धकग्रहणेन। एवं तर्हि विस्पष्टार्थं सानुबन्धकग्रहणम्। नच नस्येत्युच्यमाने कश्चिल्लाघवकृतो विशेषो भवति। अवक्षेपे तिङ्युपसंख्यानं कर्त्तव्यमिति। अवक्षेपो निन्दा। उत्तरपदे नलोपो विधीयमानस्तिङन्ते न प्राप्नोति। तस्मात् तस्योपसंख्यानं कर्त्तव्यम्। ननु चाक्षेवाकारः प्रतिषेधवाची। अ मा नो नाः प्रतिषेधवचना इति वचनात्। ततश्च तस्यैवावक्षेपे तिङि प्रयोगो भविष्यतीति किमुपसंख्यानेन ? नञोऽपि तर्ह्यवक्षेपे तिङि परतः प्रयोगः प्राप्नोति। तस्मादवक्षेपे नञोऽकृतनलोपस्य प्रयोगनिवृत्त्यर्थ मुपसंख्यानं कर्त्तव्यमिति। उपसंख्यानशब्दस्य प्रतिपादनमर्थः।

तत्रेदं प्रतिपादनम्। वाचंयमपुरन्दरौ ( ६।३।६९ ) चेत्यतश्चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन तिङन्तेऽप्युत्तरपदेऽपि गम्यमाने नञो नलोपो भविष्यतीति।

## ७४। तस्मान्नुड़चि।

नञ एव हि स्यादिति। अचीति सप्तमीनिर्देशात्। तस्मिन्निति निर्दिष्टे पूर्वस्येति (१।१।६६) वचनात्। नञो नुड़ागमे सत्यनिष्टं रूपं स्यात्। तस्माद्-ग्रहणे तु सत्युभयनिर्देशे पञ्चमीनिर्देशो बलीयानित्युत्तरपदस्यैव (प,७१) भवति। अतो न भवत्यनिष्टप्रसङ्गः। ननु च यदि नञो नुट् स्यान् नलोपवचन-मनर्थकं स्यात्। नानर्थकम्। अब्राह्मणः। अवृषल इत्यनजादौ नकारश्रवणं मा भूदित्येवमर्थत्वात्। यदि नञो मा भूदित्येवमर्थं तस्मादित्युच्यते तर्हि न वाच्यम्। पूर्वान्तो ह्ययं नुक् करिष्यत इत्याह पूर्वान्ते हीत्यादि। पूर्वान्ते नुटि क्रियमाणे ङमन्तस्य पदस्य विधीयमानो ङमो ह्रस्वादचि ङमुण् नित्यमिति नुट् (८।३।३२) प्राप्नोति। ततश्च स एवानिष्टप्रसङ्गः। तस्मान्नुड़ेव कर्त्तव्यः। अस्मिंस्तु क्रियमाणे नञ एव मा भूदित्येवमर्थं तस्माद्ग्रहणम्।

## ७५। नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसक-नक्षत्रनक्रनाकेषु प्रकृत्या।

नभ्राड़िति। भ्राजृ दीप्तौ। अस्माद् भ्राजभासेत्यादिना (३।२।७७) क्विप्। जकारस्य व्रश्चेत्यादिना (८।२।३६) षकारः। तस्य जश्त्वं डकारः। तस्यापि चर्त्वं टकारः। नपादिति। नपुंसकत्वादसत्यां सर्वनामस्थानसंज्ञायामुगिल्लक्षणो नुम् न भवति। नवेदा इति। अत्वसन्तस्य चाधातोरिति (६।४।१४) दीर्घः। सत्सु साधवः सत्या इत्यनेन तत्र साधुरिति (४।४।९८) सच्छब्दात् प्राग्घितीयं यतं दर्शयति। औणादिकः किप्रत्यय इति। इगुपधात् किदिति (उण् ४।५५८) किप्रत्ययः। क्षिय इति। क्षिष् हिंसायाम्। क्षि निवासगत्योरिति। क्षरते र्वेति। क्षर सञ्चलने। नक्षत्रमिति निपात्यते। किमत्र निपात्यते ? यदि क्षिय स्तदा त्रप्रत्यय इकारस्यात्वम्। यदि क्षरते स्तदापि त्रप्रत्ययो रेफलोपश्च। नास्मिन्नकमस्तीति नाकमिति। कमिति सुखमुच्यते। न कमकं दुःखम्।

नास्मिन्नकमस्तीति नाकः स्वर्गः । रूढ़िशब्दा ह्येते यथा कथञ्चिद् व्युत्पाद्यन्ते ।

७६ । एकादिश्चैकस्य चादुक् ।

एकादिरिति बहुव्रीहिः । एकान्नविंशतिरिति । पूर्वं नञो विंशतिशब्देन समासं कृत्वा तत स्तृतीयासमासः कर्त्तव्यः । किमर्थं पुनरयं पूर्वान्त आदुक् क्रियते न परादिरेवादुट् क्रियेत ? तत्राप्ययमर्थः । एकस्य चेत्येष आगमिनो निर्देशो न कर्त्तव्यो भवति । परादौ हि क्रियमाणे नञेवागमी भवति । स च प्रकृतत्वादेव लभ्यते । तत्रायं वाक्यार्थों भवति । एकादिश्च नञ् प्रकृत्या भवति । आदुट् च तस्यागमो भवतीति सिद्धमिष्ट मित्याह पूर्वान्तोऽयमित्यादि । यरोऽनुनासिकेऽनुनासिको वेत्यत्र (८।४।४५) हि न पदान्ताट्टोरनामित्यतः (८।४।४२) पदान्तादित्यनुवर्त्तते । तत्र यदि परादिः क्रियते पदान्ततास्य न स्यात् । ततश्च पदान्तलक्षणोऽनुनासिकविकल्पो न स्यात् । इष्यते च । तस्माद् विकल्पेन यथा स्यादित्येवमर्थं पूर्वान्त आदुक् क्रियते । अथ किमर्थमादुक् क्रियते ? अदुगेव नोच्येत । अदुक्यपि क्रियमाणेऽकः सवर्णे दीर्घत्वेन (६।१।१०१) सिध्यति । न सिध्यति । अतो गुणे (६।१।९७) पररूपत्वं प्राप्नोति । तदप्यकारोच्चारणसामर्थ्यान्न भविष्यति । यदि ह्यत्र पररूपत्वं स्याद् दुकमेव विदध्यात् । तर्हि सवर्णदीर्घत्वमप्यकारोच्चारणसामर्थ्यान्न स्यात् । नैतदस्ति । तथाहि यं विधिं प्रत्युपदेशो ऽनर्थकः स्यात् स विधिर्बाध्यते । यस्य तु विधे स्तदेव निमित्तं नासौ विधिर्बाध्यते । पररूपत्वञ्च प्रत्यकारोच्चारण मनर्थकम् । सवर्णदोर्घत्वं तु प्रति निमित्तमेव । एवं तर्ह्यदुगेवायम् । तुल्या हि संहिता ।

७७ । नगोऽप्राणिष्वन्यतरस्याम् ।

गमे र्डप्रत्यय इति । डप्रकरणे ऽन्यत्रापि दृश्यत (३।२।४८,वा) इति वचनात् ॥

७८ । सहस्य सः संज्ञायाम् ।

साश्वत्थमिति । सहाश्वत्थेनेति । तेन सहेति तुल्ययोग इति (२।२।२८) बहुव्रीहिः । सहयुध्वा । सहकृत्वेति । दृशेः क्वनिबित्यनुवर्त्तमाने (३।२।९४)

राजनि युधिकृञ: (१।२।९३) सहे चेति (३।२।९६) क्वनिप्। उपपदसमास:। सर्वनामस्थान इति (६।४।८) दीर्घ:। किं पुन: कारणं साद्दिश उदात्तो निपात्यत इत्यत आह उदात्तानुदात्तवतो हीत्यादि। निपाता आद्युदात्ता भवन्तीति (फिट् ४।७९) सहशब्द आद्युदात्त एव। शेषमनुदात्तम्। तेनासावुदात्तानुदात्तवान्। ततश्चान्तर्य्यत स्तस्य स्थाने सशब्द: स्वरित:। तस्मान्मा भूदेष दोष इत्युदात्तो निपात्यते। यद्येवमव्ययीभावेऽपि उदात्त एव स्वर: प्राप्नोतीत्यत आह सच निपातस्वर इत्यादि। यत्रेत्यादि। बहुव्रीहौ तत्पुरुषे वा। बहुव्रीहौ प्रकृत्या पूर्व्वपदमिति (६।२।१) सहेत्येतस्य समासान्तोदात्तत्वापवाद: प्रकृतिस्वरत्वम् भवति। तत्पुरुषेऽपि तत्पुरुषे तुल्यार्थेत्यादिना (६।२।२)। तस्मात् तत्रैव स निपातस्वर: प्रसज्यते। अव्ययीभावे तु समासान्तोदात्तत्वापवाद: प्रकृतिस्वरो न केनचिद्विहित इति तत्र समासान्तोदात्तत्वेनैव भवितव्यम्। अतस्तेन बाध्यत एव। सेष्टि सपशुबन्धमिति। इष्टिरन्तो यस्य। पशुबन्धोऽन्तो यस्येति। अव्ययं विभक्तीत्यादिना (२।१।५) समास:। अन्तवचने। अत्र परत्वात् प्रथम स्तावन्निपातस्वर:। तत: समासान्तोदात्तत्वम्। तच्च सति निपातस्वरे शिष्यत इति सतिशिष्टम्। अतस्तेन निपातस्वरो बाध्यते। सतिशिष्टस्वरस्य बलीयस्त्वात्।

## ७९। ग्रन्थान्ताधिके च।

सकलमिति। कला कालविशेष:। तत् सहचरितो ग्रन्थ स्तथोच्यते। सह कलया वर्त्तत इति सकलम्। एवं समुहूर्त्तमित्येतदपि वेदितव्यम्। संग्रह मित्येतदुदाहरणं प्रमादादिदानीन्तनै: कुलेखकै र्लिखितम्। तत्र ह्यव्ययीभावे चाकाल (६।३।८१) इत्येवं सिद्ध: सभाव:। अन्तवचनेऽव्ययीभाव: समास इति। यद्येवं ग्रन्थान्तेऽपार्थकोऽयं सभावस्यारम्भ:। यावताव्ययीभावे चाकाल इत्येवं (६।३।८१) सभाव: सिद्ध इत्याह तत्रेत्यादि। कथं पुनर्न प्राप्नोति। यावता कालमुहूर्त्तशब्दौ तावत् साहचर्य्यादत्र ग्रन्थे वर्त्तते। एवं मन्यते। प्रकरणादिना वाक्येन ग्रन्थविषयता तयोर्गम्यते। मुख्यस्तु काल एवाभिधेय इति। सद्रोणा खारीत्यादि। तेन सहेत्यादिना बहुव्रीहि:।

## ८० । द्वितीये चानुपाख्ये ।

द्वयोः सहप्रयुक्तयोरप्रधानो यः स द्वितीय इति । प्रधानेतरसन्निपाते सत्यप्रधान एव द्वितीयशब्दस्य प्रयोगात् । तथाहि स्वामिभृत्ययोः सहयुक्तयो र्भृत्यएव स्वामिनं प्रति द्वितीयउच्यते । नतु भृत्यं प्रति स्वामी । उपाख्यायते यः स उपाख्य इति । आतश्चोपसर्गे इति (३।१।१३५) कः । स च भवन् कृत्यल्युटो बहुलमिति (३।३।११३) कर्म्मणि भवति । साग्निः कपोत इति । पूर्ववद् बहुव्रीहिः । अत्राग्निसहयुक्तः कपोतः । तयो र्हि साहचर्य्यं लोके प्रसिद्धम् । तत्राग्निरप्रधानः । तथाह्यग्निः कपोत मनुविधत्ते । यत्र हि कपोत स्तत्राग्निनावश्यं भवितव्यम् । नतु यत्राग्नि स्तत्र कपोतेनेति नासावग्निमनु विधत्ते । तेन कपोतस्य प्राधान्यम् । अग्नयादयः पुनरप्रधाना एव । अग्नयादय इति । अत्रादिशब्देन पिशाचादयो गृह्यन्ते । ते हि न क्वचित् प्रत्यक्षेण उपलभ्यन्ते । अपि तु कपोतादिभिरविनाभाविभिरनुमीयन्त इत्यनुपाख्या भवन्ति ।

## ८१ । अव्ययीभावे चाकाले ।

अकालवाचिनीति । अनेन काल इति नेह स्वरूपस्य ग्रहणम् । अपितु कालविशेषवाचिनां पूर्वाह्लादिशब्दानामिति दर्शयति । कुत एतत् पुनरवसितम् ? ग्रन्थान्ताधिके चेत्यत्र (६।३।७९) ग्रन्थान्तग्रहणात् । अनेन हि कालवाचिन्युत्तरपदे प्रतिषेधः प्राप्नोति । स मा भूदिति । तत्र ग्रन्थान्तग्रहणं क्रियते यदि चात्र काल इति स्वरूपग्रहणं स्यात् ततस्तेनैव सकलं समुहूर्त्त मित्यत्र सभावः सिद्ध इति तत्र ग्रन्थान्तग्रहण मनर्थकं स्यात् । सचक्रमिति । अव्ययं विभक्तीत्यादिना (२।१।५) यौगपद्येऽव्ययीभावः । सधुरमिति । ऋक्पूरब्धूःपथामानक्ष (५।४।७४) इत्यकारः समासान्तः । सहपूर्वाह्लमिति । तेनैव सूत्रेण साकलेऽव्ययीभावः ।

## ८२ । वोपसर्जनस्य ।

यद्युपसर्जनस्येत्येतत् सहशब्दस्य विशेषणं स्यात् तदातिप्रसङ्गः स्यात् । विशेषानुपादानादिहापि स्यात् । सहयुध्वा । सहकृत्वेति । अत्रापि सहशब्द

उपसर्जनम्। उपपद मतिङिति (२।२।१९) प्रथमानिर्देशात्। अप्राधान्याच्च। अनर्थकञ्च विशेषणं स्यात्। सर्वत्रैव हि समासे सहशब्दस्योपसर्जनत्वात्। समासश्चेहोत्तरपदेन सन्निधापितः। यस्मात् समासे ह्युत्तरपदं भवति। अतस्तस्यैवेदं विशेषणमिति मन्यमान आह उपसर्जनसर्वावयव इति। उपसर्जनं सर्वोऽवयवो यस्य स तथोक्तः। अवयवधर्मेण समुदायधर्मस्य तथा निर्देशात्। यथाढ्यमिदं नगरमिति। यदि कस्य कश्चिदुपसर्जनमवयवः कश्चिदनुपसर्जनं सोऽप्युपसर्जन मित्युच्यते तदातिप्रसङ्गदोष स्तदवस्थः स्यादिति सर्वग्रहणम्। कः पुनरसौ सर्वोपसर्जनावयवः समासः ? बहुव्रीहिः। ननु द्वन्द्वोऽप्युपसर्जनसर्वावयव एव। तस्यापि ग्रहणं प्राप्नोति। नैष दोषः। नहि सहपदेन सहान्यस्य द्वन्द्वोऽस्ति। स हि प्रधानानां समानकक्षाणामेव भवति। सहशब्दश्च यत्रैकस्य प्राधान्यमपरस्य तु गुणभावस्तत्रैव प्रयुज्यते। अथवोभयगतिरिह शास्त्रे सम्भवतीति लौकिकमप्युपसर्जनमिह गृह्यते। तेन शास्त्रीयोपसर्जनेन लौकिकेन चोपसर्जनीभूताः सर्वे ऽवयवा यस्य स एवोपसर्जनशब्देन विवक्षित इति विज्ञायते। नचैवंविधो द्वन्द्वः। तस्य ह्यवयवानां शास्त्रीयेणैवोपसर्जनेनोपसर्जनत्वम्। नतु लौकिकेन। बहुव्रीहि स्तु लौकिकेनापि। तस्मात् तस्यैवोपसर्जनग्रहणेन ग्रहणम्। तदवयवस्येत्यनेनोपसर्जनस्येत्येषा ऽवयवषष्ठीति दर्शयति। सपुत्र इति। पूर्ववद्बहुव्रीहिः। सहयुध्वा सहकृत्वेति। तत्पुरुषोऽयमुत्तरपदार्थप्रधानः। अथेह कस्मान्न भवति ? सहकृत्वप्रियः प्रियसहकृत्वेति ? भवति ह्यत्रापि सहशब्दो बहुव्रीह्यवयव इत्याह इहेत्यादि। वा प्रियस्येति (२।२।३५, वा) प्रियशब्दस्य विकल्पेन पूर्वनिपातः। उत्तरपदाधिकारादिह बहुव्रीह्याश्रयणाच्च बहुव्रीहौ यदुत्तरपदं तत् परं यस्मात् सहशब्दात् तस्य सभावेन भवितव्यम्। नचेह बहुव्रीहौ यदुत्तरपदं तत् सहशब्दात् परम्। शब्दान्तरेण व्यवधानादिति न भवति सभावः।

## ८३। प्रकृत्याशिष्यगोवत्सहलेषु।

पूर्वेणातिप्रसक्तस्य सभावस्य प्रकृतिभावेन निवृत्तिः क्रियते। नेति वक्तव्ये प्रकृत्येति वचनं वैचित्र्यार्थम्।

## ८४ । समानस्य च्छन्दस्यमूर्द्धप्रभृत्युदर्केषु ।

सगर्भः । सयूथ्य इति । समानो गर्भः । समानं यूथमिति विगृह्य पूर्वापरप्रथमेत्यादिना (२।१।५८) कर्मधारयः । साधर्म्यमिति । बहुव्रीहेर्भावप्रत्ययः । सजातीय इति । अत्रापि बहुव्रीहेरेव जात्यन्ताच्छ बन्धुनीति(५।४।९) च्छः । सस्थानीय इति । स्थानान्ताद्विभाषा सस्थानेनेति चेदिति (५।४।१०) च्छप्रत्ययः ।

## ८५ । ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ।

सज्योतिरिति । समानं ज्योतिरस्येति बहुव्रीहिः । एवं सजनपदादयो वेदितव्याः । तत्पुरुषेऽपि भवितव्यमेव । विशेषानुपादानात् । सनामेति । सर्वनामस्थाने चेत्यादिना (६।४।८) दीर्घः । सवया इति । अत्राप्यत्वसन्तस्येति (६।४।१४) ।

## ८६ । चरणे ब्रह्मचारिणि ।

चरणशब्दोऽयमध्ययननिमित्तमुपादाय पुरुषादिषु वर्त्तते । ब्रह्म चरतीति ब्रह्मचारी । व्रत इति (३।२।८०) णिनिः । सब्रह्मचारीति पूर्ववत् कर्मधारयः । सब्रह्मचारीत्यस्यायमर्थोऽभिमतः । समाने ब्रह्मणि व्रतं चरतीति । एष चात्रार्थो यथोपपद्यते तथा दर्शयितु माह ब्रह्म वेद इत्यादि । तदध्ययनार्थं यद्व्रतं तदपि ब्रह्मेति । तादर्थ्यात् ताच्छब्द्यम् । यथेन्द्रार्था स्थूणा इन्द्र इति । तच्चरतीति तत् सम्पादयति परिपालयतीत्यर्थः । केन पुनरसौ समान इत्याह समानस्तस्यैवेत्यादि । तस्यैवेति वेदाख्यस्य ब्रह्मणः । इतिकरणो हेतौ । यत एवमुपचारेण लब्धब्रह्मव्यपदेशं व्रतं य श्चरति ब्रह्मणश्च समानत्वाद् यः समानः स सब्रह्मचारी । तेन सब्रह्मचारीत्यस्यायमर्थो भवति समाने ब्रह्मणि व्रतचारीति । यदि ह्यसमाने ब्रह्मणि व्रतं चरेत् तदा समानत्वं न स्यात् । तथापि ब्रह्माख्यं व्रतं न चरेदेवमपि ब्रह्मचारित्वं न स्यात् । तस्माद् यः समाने ब्रह्मणि ब्रह्मचारी सोऽवश्यं समाने ब्रह्मणि व्रतचारीति भवति । सब्रह्मचारीत्ययमस्यार्थः सम्पद्यते । समाने ब्रह्मणि व्रतचारीति ।

अथवा तस्यैवेत्युपचारेण लब्धब्रह्मव्यपदेशस्य व्रतस्यात्र पक्षे परामर्शः। समाने ब्रह्मणि इत्यत्र ब्रह्मशब्दो वेदे वर्त्तते। प्रतिवेदं हि भिद्यते। तदध्ययनार्थं यद् व्रतं तत्र यः समाने वेदे ऽध्येतव्ये व्रतं चरति स एव सब्रह्मचारीत्युच्यते।

८७। तीर्थे ये।

सतीर्थ्य इति। पूर्व्ववत् कर्मधारयं कृत्वा तद्धितः कर्त्तव्यः। समाने तीर्थे वसतीति सतीर्थ्यः (Q)।

८८। विभाषोदरे।

८९। दृक्दृशवतुषु।

समानमात्मानं पश्यतीति सदृक्। उपपदसमासः। क्विन्प्रत्ययस्य कुरिति(८।२।६२) कुत्वम्। कथं पुनरिह कञ्क्विनौ ? यावता त्यदादिषूपपदेषु तौ विहितौ। नच समानशब्दस्त्यदादिषु पठ्यत इत्यत आह त्यदादिष्वित्यादि। दृक्षे चेति वक्तव्यमिति। दृक्षशब्दे चोत्तरपदे समानस्य सभावो भवतीत्येतदर्थं रूपं व्याख्येय मित्यर्थः। तत्रेदं व्याख्यानम्। पूर्वकाद् योगविभागाद् दृक्षेऽपि भविष्यतीति। अतएव तत्र वृत्तिकृतोक्तम् एवमादयः सिद्धा भवन्तीति। केन पुनरत्र दृशेः क्सप्रत्ययो विहितो येन दृक्षशब्द उत्तरपदं भवतीत्यत आह दृशेः क्स प्रत्ययोऽपीत्यादि। तत्रैवेति। त्यदादिष्वित्यादौ सूत्रे (३।२।६०)। अथ वतुग्रहणं किमर्थम् ? यावता समानशब्दादुत्तरो वतुम् न संभवत्येव। सहि यत्तदेतेभ्यः परिमाणे वतुबिति (५।२।३९) यदादिभ्य एव विहित इत्याह वतुब्ग्रहणमुत्तरार्थमिति।

९०। इदंकिमोरीश्की।

शकारः सर्वादेशार्थः। इदमिव पश्यतीति। ईदृक्। ईदृशः। पूर्ववत् कञ्क्विनौ। किमिव पश्यतीति कीदृक्। कीदृशः। व्युत्पत्तिमात्रार्थो विग्रहः कृतः (R)। नात्रावयवार्थो विग्रहवाक्योपदर्शितो विद्यते। तथा

---

(Q) सतीर्थ्य एकगुरुक इत्यर्थः।

(R) रूपमात्रार्थं व्युत्पत्तिः कृता। नह्यत्रावयवार्थौ विग्रहवाक्ये सद्भूतौ विद्येत इति पाठान्तरम् in the 10th & the 23d. MSS.

कीदृगीदृश इत्यनेन तुल्यइत्येषोऽर्थः समुदायादेव प्रतीयते। कीदृक् कीदृश इत्यत्रापि केन तुल्य इति। किं परिमाणमस्येति कियान्। इदं परिमाणमस्येति। इयान्। किमिदंभ्यां वो घ इति (५।२।४०) वतुपो घत्वम्। तस्येयादेशे कृते यस्येति चेतीकारलोपः(६।४।४८)। ननुच वतुपो वकारस्येयादेशोऽनेन विधीयते। नतु वतुप् किमिदंभ्यां विधीयते। एवं मन्यते। वतुबस्मादादेशवचनाद् विज्ञायते। नह्यन्यद् वतुपो लक्षणमस्ति। नचासतो वतुपो घादेशः शक्यो विज्ञातुमिति।

## ६१। आ सर्वनाम्नः।

दृक्षे चेति वक्तव्यमिति। दृक्षशब्दे परतः सर्वनाम्न आत्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। उत्तरसूत्रादिह सिंहावलोकितन्यायेन चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन दृक्षशब्दे चोत्तरपदे भविष्यतीति। अथ किमर्थो दीर्घो विधीयते? न ह्रस्व एव विधीयताम्। ह्रस्वेऽप्यादेशे सवर्णदीर्घत्वेन सिध्यति। न। यस्मादतो गुणे (६।१।९७) पररूपत्वं प्राप्नोति। नच शक्यते वक्तुमकारोच्चारणसामर्थ्यान्न भविष्यतीति। अकारविधि दकारनिवर्त्तनार्थत्वाल्लोपविधौ हि गौरवं स्यात्। किञ्च त्यादृक् त्यादृश इत्यत्र दीर्घश्रवणं न स्यात्। तस्माद् दीर्घ एव विधेयः।

## ६२। विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये।

विष्वद्र्यङिति। विष्वगञ्चतीति ऋत्विगादिसूत्रेण (३।२।५९) क्विन्। उगिदचामिति (७।१।७०) नुम्। हल्ङ्यादिसंयोगान्तलोपौ। क्विन्प्रत्ययस्य कुरिति (८।२।६२) कुत्वम्। अद्रिसध्र्योरन्तोदात्तनिपातनमित्यादि। विष्वद्र्यङित्यत्रानेनाद्र्यादेशे कृते सध्र्यङित्यत्र सहस्य सध्र्यादेशे च गतिकारकोपपदात् कृदिति (६।२।१३९) प्रकृतिस्वरेणोत्तरपदस्यान्तोदात्तत्वं प्राप्नोति। स्वरितत्वञ्चेष्यते। तस्मादुत्तरपदान्तोदात्तत्वविधानार्थमिहाद्रिसध्र्योरन्तोदात्तत्वं निपात्यते। तेन शेषं भवत्यनुदात्तम्। तत्र यणादेशे कृते सत्युदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति (८।२।४) स्वरितत्वमुत्तरपदस्य सिद्धम्। अथ वप्रत्ययग्रहणं किमर्थम्? यावताञ्चतावित्युक्ते केवल

एवाञ्चतावुत्तरपदे कार्य्येण भवितव्यम् । वप्रत्ययान्त एवाञ्चतिः केवलमुत्तरपदं भवति । तन्नैतद्वक्तव्यमञ्चताविल्याह वप्रत्ययग्रहणमित्यादि । अन्यत्र धातुग्रहणे धात्वादेः प्रकृतिप्रत्ययसमुदायस्य प्रतिपत्तिः प्रतीतिर् यथा स्यादित्येवमर्थं वप्रत्ययग्रहणम् । अनेन ह्ययमर्थो विज्ञाप्यते । इतोऽन्यत्र धातुग्रहणे सति न केवलं धातुरेव गृह्यतेऽपितु धात्वादिः शब्द इति । तेनायस्कृतमयस्कार इत्यत्रातः कृकमीत्यादिना ( ८।३।४६ ) विसर्जनीयस्य सकारः सिद्धो भवति । यदि पुनरयमर्थो न विज्ञाप्येत तदा करोतेरेव केवलस्य ग्रहणं स्यात् । ततो यत्र करोतिः केवलस्य प्रत्ययरहितस्य प्रयोग स्तत्रैव स्याद् अयस्कृदिति । अत्र तुगागमः करोतेरेव भक्तत्वात् तद्ग्रहणेनैव गृह्यत इति करोतेरेव केवलस्य प्रयोगः । अश्वाचीति । अश्व मञ्चतीति क्विन् । अञ्चतेश्चोपसंख्यान-मिति ( ४।१।६, वा ) ङीप् । अच ( ६।४।१३८ ) इत्यकारलोपः । चाविति ( ६।३।१३८ ) दीर्घः । विष्वग्युगिति । विष्वग् युनक्तीति सत्सूद्विषेत्यादिना ( ३।१।६१ ) क्विप् । विष्वगञ्चनमिति । ल्युट्चेति ( ३।३।११५ ) ल्युट् । छन्दसीत्यादि । छन्दसि विषये स्त्रियामभिधेयायां बहुलमद्र्यादेशो भवतीत्येतदर्थरूपं व्याख्येय मित्यर्थः । तत्रेदं व्याख्यानम् । विभाषोदर इत्यतो ( ६।३।८८ ) विभाषाग्रहणमनुवर्त्तते । सा च व्यवस्थितविभाषा । इह वा चकारोऽनुक्तसमुच्चयार्थः । तेन च्छन्दसि विषये विष्वगादेरन्यत्रापि क्वचिदद्र्यादेशो भवतीति । क्वचिन्न भवत्येव । ननुच सर्वनाम्नोऽनुकर्ष-णार्थश्चकारः ? नैतदस्ति । स्वरितत्वादेव हि सर्वनाम्नोऽनुवृत्ति र्भविष्यति । विश्वाचीत्यादि । विश्वदेवतकिंशब्देषूपपदेष्वञ्चतेः पूर्ववत् क्विन् । ङीबादि-कार्य्यञ्च ।

९३ । समः समि ।

९४ । तिरसस्तिर्य्यलोपे ।

९५ । सहस्य सध्रिः ।

सध्रीचेति । पूर्ववदकारलोपो दीर्घत्वञ्च ।

९६ । सधमादस्थयोश्छन्दसि ।

सधमाद इति । सह मादेन वर्त्तत इति । तेन सहेत्यादिना ( २।२।२८ ) बहुव्रीहिः । मादशब्दो घञन्तः । ननुच मदोऽनुपसर्गे ( ३।३।६७ ) इत्यपा भवितव्यम् । नैष दोषः । तत्र हि स्वनहसो र्वेत्यतो ( ३।३।६२ ) वाग्रहण-मनुवर्त्तते । सा च व्यवस्थितविभाषा । तेनच्छन्दसि घञेव भविष्यति । अत एव निर्देशाद्वा । सधस्थ इति । सह तिष्ठतीति सुपि स्थ इति (३।२।४) कः ।

## ६७ । द्व्यन्तरुपसर्गेभ्योऽप ईत् ।

द्वीपमिति । द्विर्गता आपोऽस्मिन्नित्यस्वपदविग्रहो बहुव्रीहिः । यथा शोभनं मुखमस्याः सुमुखीति । ऋक्पूरब्धूरित्यादिनाऽकारः ( ५।४।७४ ) समासान्तः । अन्तर्गता आपोऽस्मिन्नित्यन्तरीपम् । सङ्गता विगता निर्गता आपोऽस्मिन्निति समीपं वीपं नीपम् । वक्तव्यमिति व्याख्येयमित्यर्थः । उत्तरत्रापि वक्तव्यशब्दस्यायमेवार्थः । व्याख्यानं त्विहापि पूर्ववद् विभाषोदर इत्यतो ( ६।३।८८ ) विभाषाग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वाल्लभ्यते । अन्यदपि चात्र व्याख्यानं करिष्यामः । अप्शब्दं प्रतीत्यादि । इह यं प्रति क्रियायुक्ताः प्रादय स्तं प्रति गत्युपसर्गसंज्ञका भवन्तीति । अप्शब्दस्य तु क्रिया न सम्भवति । द्रव्यवाचित्वात् । तस्मात् तं प्रति नास्ति कस्यचिदुपसर्गसंज्ञेति । क्रियते चेदमुपसर्गग्रहणम् । तत्सामर्थ्याद् यत्र प्रादेरन्यत्रोपसर्गत्वं दृष्टं तदुपलक्षणार्थमुपसर्गग्रहणं विज्ञायते । यद्येवमन्तः शब्दस्य ग्रहणं न कर्त्तव्यम् । यथैव हि प्रादय उपसर्गग्रहणेन लक्ष्यन्ते तथान्तःशब्दोऽपि । तस्याङ्-किविधिणत्वेषूपसर्गत्वं दृष्टमेव । एवं तर्ह्यन्तर्ग्रहणेन ज्ञाप्यत उपसर्गग्रहणो-पलक्षितमीत्त्वमनित्यमिति । तेन समापं परापं प्रापमिति सिद्धं भवति ।

## ६८ । ऊदनोर्देशे ।

अनूप इति । अनुगता आपोऽस्मिन्निति विग्रहः । पूर्ववत् समासान्तः । सवर्णदीर्घः । अथ दीर्घोच्चारणं किमर्थम् ? यावता ह्रस्वेऽपि विहितेऽकः सवर्णे दीर्घत्वेनानूप इति सिध्यत्येव । अत आह दीर्घोच्चारणमित्यादि ।

असति दीर्घोच्चारणे संहितायामेव दीर्घत्वं स्यात्। नावग्रहे (S)। तस्मादवग्रहेऽपि यथा स्यादित्येवमर्थं दीर्घोच्चारणम्।

९९। अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु।

अन्याशीरन्यदाशीरित्यादि। विग्रहविशेषेण सर्वत्र विशेषणसमासं दर्शयति। अन्येनास्थितो ऽन्यास्थित इति। कर्तृकरणे कृता बहुलमिति (२।१।३२) समासः। दुगागमोऽविशेषेणेत्यादि। कारकशब्दे क्वप्रत्यये परतोऽविशेषेण सामान्येन दुगागमः कर्त्तव्यः। अन्येष्वाशीरादिषु समस्तसूत्रपदेषु षष्ठीतृतीयास्थयो नैष्टो नाभिमतः। किं पुनरस्यार्थस्य लिङ्गं यतोऽयमवसीयत इत्यत आह अस्य चेत्यादि। अषष्ठीतृतीयास्थस्येत्येवं सिद्धे द्विर्नञुपादानमस्य प्रतिषेधस्यानित्यत्वे लिङ्गम्। तेन क्वचित् षष्ठीतृतीयास्थस्यापि समासे दुगागमो भवत्येव।

१००। अर्थे विभाषा।

अन्यार्थं इति। अन्यस्मा इदमिति चतुर्थी तदर्थार्थेत्यादिना (२।१।३६) समासः।

१०१। कोः कत् तत्पुरुषेऽचि।

कदज इति। कुत्सितोऽज इति कुगतिप्रादय इति (२।१।१८) समासः। कुष्ठो राजेति बहुव्रीहिः। कद्भाव इत्यादि। अजादावुत्तरपदे कद्भाव उच्यमान स्त्रिशब्द उत्तरपदे न प्राप्नोति। तस्मात् त्रिशब्दादुत्तरपदात् पूर्वो यः कुशब्द स्तस्य कद्भावस्योपसंख्यानं प्रतिपादनं कर्त्तव्यम्। तत्रेदं प्रतिपादनम्। उत्तरसूत्रे चकारः क्रियते। स चानुक्तसमुच्चयार्थः। तेन त्रिशब्देऽप्युत्तरपदे परतः कद्भावो भविष्यतीति।

१०२। रथवदयोश्च।

अनजाद्यर्थोऽयं योगः। एवमुत्तरत्रापि।

---

(S) यत्र नाम पदकारैः समासावयवानां रूपाणि प्रदर्श्यन्ते सोऽवग्रहः।

१०३। तृणे च जातौ।

१०४। का पथ्यक्षयोः।

अनीषदर्थ आरम्भः। कापथ इति। कुत्सितः पन्थाः कापथः। ऋक्-पूरित्यादिनाकारः (५।४।७४) समासान्तः। काक्ष इति। कुत्सितोऽक्ष इति तत्पुरुषः। अथवा कुत्सिते अक्षिणी अस्येति बहुव्रीहिः। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षजिति (५।४।११३) षच् समासान्तः।

१०५। ईषदर्थे।

ईषन्मधुरं काममधुरमिति। कुगतिप्रादय इति (२।१।१८) समासः। कुशब्दः पापार्थ इत्येतत् तु प्रायिकमुपाधिवचनमित्युक्तम्। तत्र प्रायिकत्वे चैतदेव कादेशवचनं ज्ञापकम्। काम्लमिति। ननुचात्र कोः कत्तत्पुरुष इति (६।३।११०) कदादेशेन भवितव्यमित्यत आह अजादावपीत्यादि।

१०६। विभाषा पुरुषे।

अप्राप्ते विभाषेयमिति। ईषदर्थस्य निवृत्तत्वात्। ननुचानीषदर्थे केनचिदप्राप्त ईषदर्थे पूर्वेण प्राप्त इत्युभयत्र विभाषेयं युक्तेत्याह ईषदर्थेत्यादि। ईषदर्थे तु पूर्वविप्रतिषेधेनेत्यादि। ईषदर्थे (६।३।१०५) चेत्यस्यावकाश ईषन्मधुरं काममधुरम्। विभाषा पुरुष इत्यस्यावकाशः कुत्सितः पुरुष कापुरुष इति। इह चोभयं प्राप्नोति ईषत्पुरुषः कापुरुष इति। अत्रेषदर्थ इत्यनेनैव (६।३।१०५) भवति पूर्वविप्रतिषेधेन।

१०७। कवञ्चोष्णे।

१०८। पथि च च्छन्दसि।

१०९। पृषोदरादीनि यथोपदिष्टम्।

आदिशब्दः प्रकारवचन इति। यद्यत्रादिशब्दो व्यवस्थावचन आश्रीयेत ततो यान्येव गणे पठ्यन्ते तेषामेव साधुत्वं स्यात्। नान्येषाम्। प्रकार-वचन आदिशब्द आश्रीयमाणे सत्यपरिपठितानामपि साधुभावो भवती-त्येतत् सर्वं चेतसि कृत्वादिशब्दोऽयं प्रकारवचन इति दर्शयन्नाह पृषोदर-

प्रकाराणीत्यादि। प्रकारः सादृश्यम्। अतस्तद्दर्शयितुमाह येष्वित्यादि। यथा पृषोदरशब्दे लोपकार्य्यं शास्त्रेणाविहितं दृश्यते तथान्यत्रापि लोपादि-कार्य्यं शास्त्रेणाविहितं दृश्यते। तानि च पृषोदरप्रकाराणि भवन्ति। यथोपदिष्टमिति। यथासादृश्य इति (२।१।५) वीप्सायामव्ययीभावः। अतएवास्य विवरणं करोति यानि यान्युपदिष्टानीत्यादि। दिशिरत्रोच्चारणक्रियः। उपदिष्टान्युच्चारितानीत्यर्थः। कैः पुनरुपदिष्टानि? शिष्टैः। शिष्टाः (T) पुनराचारनिवासादिना वेदितव्याः। तानि तथैवानुगन्तव्यानीति। यथा तैः प्रयुक्तानि तथैव तानि साधुत्वेनानुगन्तव्यानीत्यर्थः। यदि शिष्टाः शब्देषु प्रमाणं तदा किमनयाष्टाध्याय्या? शिष्टवचनादेव हि शब्दानां साधुत्वं विज्ञास्यते। उच्यते। शिष्टपरिज्ञानार्थाष्टाध्यायी। अष्टाध्यायी मधीयानोऽनधीताष्टाध्यायीक मपि येऽस्यामष्टाध्याय्यां विहिताः शब्दास्तान् प्रयुञ्जानं पश्यन्नेव मध्यवस्यति शिष्टोऽयमिति। न चासावष्टाध्यायी मधीतवान्। अथच तस्यां ये व्युत्पादिताःशब्दास्तान् प्रयुङ्क्ते। नूनमयमन्यानपि जानातीत्येषा शिष्टपरिज्ञानार्थाष्टाध्यायी। एवमन्येऽपीत्यादि। कप्यक्षमक्षीशब्देषूपपदेषु सुपि स्थ इति (३।२।४) तिष्ठतेः कप्रत्ययः। सकारस्य तकारः क्रियते। मक्षीशब्दस्यापि ह्रस्वत्वम्। दक्षिणतारमिति। षष्ठीसमासः। सर्वनाम्नो

---

(T) शिष्टाः खलु ते यानधिकृत्येतदुच्यते—

"आविर्भूतप्रकाशाना मनुपप्लुतचेतसाम्।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥ १ ॥
अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा।
ये भावान् वचनं तेषां नानुमानेन बाध्यते" ॥ २ ॥ इति वाक्यपदीयम्।

भाष्ये ह्येवं शिष्टलक्षणं—"के पुनः शिष्टाः? वैयाकरणाः। ते पुन र्निवासत आचारतश्च। स चाचार आर्य्यावर्त्त एव। ......... आर्य्यावर्त्ते निवासि ये ब्राह्मणाः कुम्भीधान्या अलुलोपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद विद्यायाः पारंगता स्तत्रभवन्तः शिष्टाः।" इति

अगृह्यमाणकारणा दृष्टकारणमन्तरेणैव सदाचारानुवर्त्तिन इत्यर्थः। किञ्चिदन्तरेणेत्यादि। विनैवाभियोगादिना सर्वविद्यापारगा इत्यर्थः। कुम्भीधान्या इति। मासषट्कनिर्वाहोचितधान्यादिधनाः। मतान्तरे वर्षनिर्वाहोचितधान्यादिधनाः। तथाच मानवस्मृतौ "कुसूलधान्यको वा स्यात् कुम्भीधान्यक एव वा। त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा" ॥ (४।७) इति। कुम्भी उष्ट्रिका। षान्मासिकी निचय एतेन प्रतिपाद्यत इति सरस्वीति मेधातिथिः

वृत्तिमात्रे पुंवद्भावो वक्तव्य इति ( १।२।२६, वा ) पुंवद्भावः । अथवा दक्षिण-शब्दस्यायं तीरशब्देन षष्ठीसमासः । कर्मधारयो वा । वाचोवाद इति वाक्शब्दस्य वादशब्द उत्तरपदे परतो डकारादेशो भवति । उत्तरपदस्य च वादशब्दस्य बलइत्ययमादेशो भवतीञि प्रत्यये परत इति । वाचं वदतीति कर्मण्यण् ( ३।२।१ ) । वाग्वादः । तस्यापत्यमत इञ् ( ४।१।९४ ) । वाड्बलिः । षषउत्वमित्यादि । षष्शब्दस्योत्वं भवति दतदशइत्येतयो रुत्तरपदयोः । उत्तरपदादेःष्टुत्वञ्च । षड् दन्ता यस्येति बहुव्रीहिः । वयसि दन्तस्य दतृ इति ( ५।४।१४१ ) दत्रादेशः । षोडन् । षट् च दश चेति द्वन्द्वः षोडश । धासु वेति । उत्वस्यैवायं विकल्पः । ष्टुत्वन्तु नित्यमेव भवति । षोढा षड्ढेति । अधिकरणविचाले चेति ( ५।३।४३ ) धाप्रत्ययः । अथ किमर्थं धास्विति बहुवचननिर्देशः क्रियत इत्याह बहुवचननिर्देश इत्यादि । षड्धेति । धाञो धेटो वा स्त्रियामातोऽनुपसर्गे क इति कप्रत्ययः । ( ३।२।३ ) दाश्यत इति दाशृ दाने । नाश्यत इति । नश अदर्शने । दभ्यतइति । दम्भ दम्भे । एतेभ्यः कर्मणि घञ् । दुर्शब्दस्य दाशशब्दादिभिः प्रादिसमासे दूडाशः । दूणाशः । दूडभः । दम्भेरनु-नासिकलोप इत्यादि । यदेतद् दाशनाशदभध्येष्वित्यत्र कृतानुनासिकलोपस्य दम्भेरुच्चारणं तन्निपातनम् । ततएवात्र दम्भेरनुनासिकलोपो भवति । पीव उपवसनं येषां ते पीवोपवसनाः । एवं पयोपवसनाः । उभयत्र सकारलोपः । वर्णागम इति । निरुक्तशास्त्रे ये शब्दा व्युत्पाद्यन्ते तेषां पृषोदरादित्वादेव साधुत्वमिष्यत इतीमं श्लोकमाह वर्णागम इत्यादि । अपूर्वस्य वर्णस्यागमो वर्णागमः । नकारादेरपूर्वस्य वर्णस्य प्राप्तिः । यथा कौ जीर्य्यते कुञ्जर इति । अत्र कुशब्दस्य नुगागमःक्रियते । वर्णविपर्य्ययो वर्णस्थानव्यत्यासो यथा हिसि हिंसायाम् । हिनस्तीति सिंह इत्यत्र पचाद्यचि कृते हकारसकारयोः स्थानव्यत्यासः । वर्णविकारो वर्णस्य रूपान्तरापत्तिः । यथा षोडन्निति । अत्र षकारस्योत्वरूपापत्तिः । दकारस्य च डकाररूपापत्तिः । वर्णनाशो वर्णस्य लोपः । यथा पृषोदर इति । अत्र तकारस्य लोपः । अर्थातिशयोऽर्थविशेषः । प्रसिद्धादर्थादर्थान्तरम् ।

तेन धातोर् योगः सम्बन्धः। यथा मह्यां रौतीति मयूरः। अत्र रौते रमणेनार्थेनातिशयेन योगः। एतत् पञ्चविधं पञ्चप्रकारं निरुक्तं निश्चयेनोच्यतेऽर्थोऽनेनेति निरुक्तम्।

## ११०। संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ।

द्वयोरह्नोर्भवइति। भवार्थविवक्षायां तद्धितार्थइति ( २।१।५१ ) समासः। ततः कालाट्ठञिति ( ४।३।११ ) ठञ्। तस्य द्विगोर्लुगनपत्यइति (४।१।८८) लुक्। राजाहःसखिभ्यष्टजिति ( ५।४।९१ ) टच् समासान्तः। अह्नोऽह्न एतेभ्यइत्यह्नादेशः ( ५।४।८८ )। द्व्यह्नीति। विभाषा ङिश्योरित्यकारलोपः ( ६।४।१३६ ) पाक्षिकः। द्व्यह्न इति। आद् गुणः। व्यह्नइति ( ६।१।८७ ) प्रादिसमासः। शेषं पूर्ववत्। सायाह्नइति। एकदेशिसमासोऽयम्। तत्रेदं चोद्यमाशङ्कते। ननु च पूर्वापराधरोत्तरमित्यादिना ( २।२।१ ) समासो विहितः। नच सायंशब्दस्तत्र पठ्यते। तत् कथमिह सायंशब्दस्याहःशब्देन समासः सम्भवतीत्येतन्निराकर्तुमाह एकदेशिसमासः पूर्वादिभ्योऽन्यस्यापीत्यादि। तत्पुरुषसमासेऽह्नोऽह्न एतेभ्य ( ५।४।८८ ) इत्यनेनाह्नादेशो विधीयते। एतेभ्यइत्यनेन च तत्पुरुषस्याङ्गुलेः संख्याव्ययादेरिति ( ५।४।८६ ) तथाहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेरिति (५।४।८६) प्रक्रान्ताः संख्याव्ययादयः प्रत्यवमृश्यन्ते। तत्र यदि पूर्वादय एवैकदेशिना समस्येरंस्तदा न सायंशब्द एतेभ्य इत्यनेन प्रत्यवमृश्येत। तस्य संख्यादिष्वपरिपठितत्वात्। ततश्च सायंशब्दात् परस्याह्नादेशो न स्यात्। एवञ्च सायम्पूर्वस्याह्नशब्दस्याभावात् तस्येह ग्रहणं न क्रियेत। कृतञ्च। तस्मादेतदेव सायंपूर्वस्याह्नशब्दस्य ग्रहणं ज्ञापयति पूर्वादिभ्योऽन्यस्याप्येकदेशिसमासो भवतीति। तेन मध्यमह्नो मध्याह्न इति सिद्धम्भवति। पूर्वाह्णइति। अह्नोऽदन्तादिति णत्वम् ( ८।४।७ )। संख्याविसायेभ्यइत्येव वक्तव्ये पूर्वशब्दस्याधिकस्य ग्रहणं तदधिककार्यविधानसूचनार्थम्। तेन सायाह्न इत्यत्र मकारलोपः सिद्धो भवति।

## १११। ढ्लोपे पूर्वस्य दीर्घोऽणः।

ढ्लोप इति। तत्पुरुषोऽयं वा स्याद् बहुव्रीहिर्वा ? तत्र यदि तत्पुरुषः

स्याड् ढ्रयोर्लोपो ढ्रलोप इति तदाऽयः पूर्वत्वं नोपपद्यते । लोपस्याभावरूपत्वात् । अभावे च पौर्वापर्य्यासम्भवात् । अथापि स्थानिद्वारकं पौर्वापर्य्यमाश्रित्य पूर्वत्वमुच्यते करणीय इत्यत्राप्यनीयरो रेफस्य लोपे कृते पूर्वस्य दीर्घत्वं स्यादितीमं दोषं दृष्ट्वा बहुव्रीहिरयमिति दर्शयन्नाह ढकाररेफयो र्लोपो यस्मिन्नित्यादि । गमकत्वाद् वैयधिकरण्येऽपि बहुव्रीहिर्भवत्येव यथा कण्ठेकाल इति । लीढ़मिति । लिह आस्वादने । निष्ठा । हो ढः (८।२।३१) झषस्तथोर्धोऽधः (८।२।४०) । ष्टुना ष्टुः (८।४।४१) । ढो ढे लोप (८।३।१३) इत्येते विधयः कर्त्तव्याः । मीढ़मिति । मिह सेचने । उपगूढ़मिति । गुहू संवरणे । मूढ़ इति । मुह वैचित्त्ये । नीरक्तमिति । कुगतिप्रादय इति ( २।२।१८ ) समासः । रो रीति ( ८।३।१४ ) रेफस्य लोपः । अथ पूर्वग्रहणं किमर्थम् ? यावता ढ्रलोप इति सप्तम्या निर्देशः । तत्रान्तरेणापि पूर्वग्रहणं तस्मिन्निति निर्दिष्टे पूर्वस्येति ( १।१।६६ ) पूर्वस्यैव भविष्यतीत्यत आह पूर्वग्रहणमित्यादि । असति पूर्वग्रहण उत्तरपदाधिकारादुत्तरपदएव स्यान् नीरक्तमित्यादौ । अनुत्तरपदे न स्यात् लीढ़मित्यादौ । यद्यपि ढलोपस्योत्तरपदेऽसम्भवादनुत्तरपदेऽपि वचनप्रामाण्याद्दीर्घत्वं स्याद् रलोपे त्वनुत्तरपदे न प्राप्नोति । उत्तरपदे रलोपस्य सम्भवात् । तस्मादनुत्तरपदेऽपि पूर्वमात्रस्याणो दीर्घो यथा स्यादिति पूर्वग्रहणम् । आलढ़मिति । ढल्ह ढन्ह हिंसार्थौ । आढ्ढ़मिति क्वचित् पाठः । दृह दृहि वृह वृहि वृद्धाविति । अस्य निष्ठायां किलेदं रूपम् । एतत् तु नोपपद्यते । दृहेः सेट्त्वात् तसेरटा भवितव्यम् । अथापि कथञ्चिन् स्यादेवमपि दादेर्धातो र्घ इति (८।२।३२) घत्वेन भवितव्यम् । स्थूलवलवद्विवक्षायां दृढ़ः स्थूलवलयोरिति (७।२।२०) निर्देशादुभयं न भविष्यतीति चेद् दीर्घत्वमप्यतएव तर्हि न स्यात् । केचिदत्रानित्यत्वादागमशासनस्याभावमिटो वर्णयन्ति । वा द्रुहेत्यादौ ( ८।२।३३ ) सूत्रे वेति योगविभागात् पक्षे घत्वस्याभावः । आह्वढ़मिति । वृह उद्यमने ।

## ११२ । सहिवहोरोदवर्णस्य ।

ऊढ़ ऊढ़वानिति । यजादित्वात् संप्रसारणम् । संप्रसारणाच्चेति (६।१।१०८) परपूर्वत्वम् । दीर्घत्वञ्च । तत्रेदानीमसत्यवर्णग्रहण ऊकारस्याप्योत्त्वं स्यात् ।

ननु च संप्रसारणादिभ्यः परत्वादोत्त्वेन भवितव्यम्। तथाच भाष्य उभयो र्नित्ययोः परत्वादोत्त्वेन भवितव्यम्। ओत्वे कृते संप्रसारणम्। संप्रसारणे कृते संप्रसारणपरपूर्वत्वम्। कृतकार्य्यत्वात् पुनरोत्त्वं न भविष्यतीति। तस्माद् भवितव्यमेवौत्त्वेन। तस्मिन् सति पश्चात् संप्रसारणादिभिः। नचैवं किञ्चिदनिष्टमापद्यत इति नार्थो वर्णग्रहणेन। एवं तर्ह्यवर्णग्रहणं कुर्वन्नेतज् ज्ञापयति क्वचित् संप्रसारणं तदाश्रयञ्च कार्य्यं बलीयो भवतीति। तेन यदुक्तं संप्रसारणं संप्रसारणाश्रयञ्च कार्य्यं बलीयो भवतीति तदुपपन्नं भवति। वर्णग्रहणं किमिति। ओदस्येतावत्यपि सति सोढा सोढुमित्यादि सिद्धत्येवेत्यभिप्रायः। कृतायामपीत्यादि। उत्पूर्वाद्वहेर्लुङि च्लिः। च्लेः सिच्(३।१।४४)। तसस्ताम्। थसस्तम्। अड़ागमः। ढत्वादेरसिद्धत्वात् ततः पूर्वं वदव्रजेत्यादिना (७।२।३) वृद्धिः। ततो ढत्वादि। अथेदानीमसति वर्णग्रहणे मात्रिकस्याकारस्योच्यमानमोत्त्वं दीर्घस्य न स्यात्। वर्णग्रहणाद्वर्णमात्रस्य भवतीति सिद्धमुदवोढ़ामुदवोढ़मिति। ननु चाणुदित् सवर्णस्य चाप्रत्यय (१।१।६९) इत्यकारो गृह्यमाण आकारमपि ग्राहयिष्यति। तत् किं वर्णग्रहणेनेत्यत आह तादपि पर इत्यादि। तपरस्तत्कालस्येत्यत्र (१।१।७०) तादपि परस्तपर इत्ययमपि समास आश्रितः खट्वैड़का खट्वैतिकायन इत्येवमादिषु त्रिमात्रिके चतुर्मात्रिके वर्त्तमानस्यैकारस्य वृद्धिसंज्ञा मा भूदित्येवमर्थम्। तत्रासति वर्णग्रहणे ऽकारस्य तपरत्वादाकारो न गृह्येत। ततश्च तस्यौत्त्वं न स्यात्। तस्मादवर्णमात्रस्य यथा स्यादित्येवमर्थं वर्णग्रहणं कर्त्तव्यम्। तादपि परस्तपर इत्यस्य च समासस्यैतदेव वर्णग्रहणं ज्ञापकं वेदितव्यम्॥

## ११३। साढ्यै साढ्वा साढेति निगमे।

साढ्येत्यादा ओत्त्वाभावो निपात्यते। दीर्घस्तु ढ्रलोप इत्यादिनैव (६।३।१११) सिद्धः।

## ११४। संहितायाम्।

उत्तरपद इति वर्त्तते। उत्तरपदञ्च समासे भवति। तत्र चान्तरेणापि वचनं नित्यमेव संहितया भवितव्यम्। तस्मादुत्तरपदे परतो वक्ष्यमाणानां यत्

कार्य्यं न तदर्थताधिकारस्योपपद्यत इति यदनुत्तरपदे कार्य्यं तदर्थमेवाय मधिकारः । तेन ये योगैरुत्तरपदे कार्य्यं विधीयते तानुल्लङ्घ्य येन योगेनानुत्तरपदे कार्य्यं विधीयते तत्रास्योपयोगं दर्शयन्नाह वक्ष्यति ह्यचोऽतस्ङिङ इत्यादि । विद्म हि त्वेत्यादि । विदेर्लोटि मसः स उत्तमस्येति ( ३।४।९८) सकारलोपः । अदादित्वाच्छपो लुक् ।

## ११५ । कर्णो लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्र-स्रुवस्वस्तिकस्य ।

लक्ष्यतेऽनेन स्वामिविशेषस्य सम्बन्ध इति लक्षणं चिह्नम् । दात्राकर्णं इति । दात्रमिव दात्रम् । सादृश्यात् तदाकारं चिह्नमुच्यते । दात्रं कर्णे यस्य स दात्राकर्णः । एव मुत्तरत्रापि बहुव्रीहिरेव वेदितव्यः । द्वौ गुणौ यस्य स द्विगुणः । तदाकारमपि चिह्नं द्विगुणम् । गुणशब्दोऽयं बन्धनवचनः (U) । द्वयोरङ्गुल्योः समाहार द्व्यङ्गुलम् । तत्पुरुषस्याङ्गुलेरित्यादिना ( ५।४।८६ ) च समासान्तः । द्व्यङ्गुलाकारमपि चिह्नं द्व्यङ्गुलम् । तदिह लक्षणं गृह्यत इति कुत एतत् ? लक्षणग्रहणाद् यदिह सामान्येन येन केनचिल्लक्ष्यते तल्लक्षणं गृह्येत चिह्नस्येत्येवं ब्रूयात् । लघु ह्येवं सूत्रं भवति । तस्माच्चिह्नग्रहणे कर्त्तव्ये यल्लक्षणग्रहणं कृतं तेन लक्षणविशेषोऽत्र ग्राह्यो नतु लक्षणमात्रमित्यस्यार्थस्य प्रतिपादनं कृतमिति लक्ष्यते । तथाचोक्तम् । इङ्गितेनोन्मिषितेन महता सूत्रप्रबन्धेन वेहाचार्य्याणामभिप्राया लक्ष्यन्त इति । ननुच लक्षणग्रहणेन लक्षणविशेषोऽत्राभिमतः । नतु लक्षणमात्रमित्येतावन्मात्रं गम्यते । स तु विशेषो न वृत्तिकारेणोपदर्शितः कुतोऽवसेयः ? आचार्य्याणां स्वीकरणात् । शोभनकर्णं इति । यद्यप्यनेनापि लक्ष्यते नत्वेवंविधस्य लक्षणस्येह ग्रहणम् । नापि शोभनत्वं लोके लक्षणत्वेन प्रतीयत इति भवत्येतत् प्रत्युदाहरणम् ।

## ११६ । नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ।

नह बन्धने । उपनह्यत इत्युपानत् । सम्पदादित्वात् क्विप् । नहो ध

(U) गुणशब्दोऽय मवयववचन इति पाठान्तरम् in the 23rd MS.

इति (८।२।३४) धत्वम् । ततो जश्त्वम् । चर्त्वञ्च । परिणह्यतीति परीणत् । उपसर्गादसमास इत्यादिना ( ८।४।१४ ) णत्वम् । निवर्त्तत इति नीवृत् । अन्येभ्योऽपि दृश्यत इति ( ३।२।१७८ ) क्विप् । एवमुत्तरत्रापि क्विबेव वेदितव्यः । वृषु सेचने । प्रवर्षतीति प्रावृट् । षकारस्य जश्त्वं डकारः । तस्य चर्त्वं टकारः । व्यध ताड़ने । मर्माणि विध्यतीति मर्मावित् । ग्रह्यादिसूत्रेण ( ६।१।१५ ) संप्रसारणम् । रुच दीप्तौ । निरोचणं नीरुक् । चोः कुरिति ( ८।२।३० ) कुत्वम् । ऋतिं सहत इति ऋतीषट् । सहेः-पृतनर्त्ताभ्याञ्चेत्यत्र ( ८।३।१०९ ) सहेरिति योगविभागादनुक्तसमुच्चयार्थत्वाद्वा चकारस्य षत्वम् (V) । परितनोतीति परीतत् । अनुनासिकलोपे कृते तुक् । केन पुनरत्रानुनासिकलोप इत्याह गमः क्वावित्यादि । गतिकारकयोरेवेष्यत(X) इति । तदर्थं विभाषा पुरुष ( ६।३।१०६ ) इत्यतो विभाषाग्रहणमनुवर्त्तते । सा च व्यवस्थितविभाषा विज्ञेया ।

११७ । वनगिर्य्योः संज्ञायां कोटरकिंशुलकादीनाम् ।

कोटरावणमिति । षष्ठीसमासः । वनं पुरगेत्यादिना ( ८।४।४ ) णत्वम् ।

११८ । वले ।

वलच् प्रत्ययो गृह्यते । न प्रातिपदिकमिति । एतच्च वक्ष्यमाणस्येह बहुलग्रहणस्य सिंहावलोकितन्यायेनोपस्थानाल्लभ्यत इत्येके । अनन्तरं वक्ष्यमाणेन मतुपा प्रत्ययेन साहचर्य्याच्चेत्यपरे ।

११९ । मतौ बह्वचोऽनजिरादीनाम् ।

व्रीहिमतीत्यादौ पूर्ववन्मतुप् । वलयवतीत्यत्र तु तदस्यास्त्यस्मिन्निति ( ५।२।९४ ) मतुप् ।

१२० । शरादीनाञ्च ।

अबह्वजर्थोऽयमारम्भः । शरावतीति । नद्यां मतुबिति मतुप् (४।२।८५) ।

---

(V) पूर्वपदादिति ( ८।३।१०६ ) षत्वमित्यन्ये ।

(X) अतएव वचः स्वसंव्यापिवचं दधान इत्यादि सिद्धम् ।

## १२१ । इको वह्येऽपीलोः ।

ऋषीवह इति । षष्ठीसमासः । वहशब्दः पचाद्यजन्तः । अपीलादीना मित्यादि । यदेतदिको दीर्घविधानं तत् पीलादीनां न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । इहापि तदेव बहुलग्रहणं पूर्ववदुपतिष्ठते । तेन पीलुशब्दादन्येषामपि केषाञ्चिद् दीर्घत्वं न भविष्यतीति ।

## १२२ । उपसर्गस्य घञ्यमनुष्ये बहुलम् ।

उपसर्गात् केवलं घञ्प्रत्ययो न सम्भवति । अतो घञन्त उत्तरपदे कार्य्यं विज्ञायत इत्याह घञन्त उत्तरपद इत्यादि । वीक्लेद इति । क्लिद आर्द्रीभावे । अकर्त्तरि च कारक ( ३।३।१९ ) इत्यादिना घञ् । वीमार्ग इति । मृजू शुद्धौ । मृजेर्वृद्धिः ( ७।२।११४ ) । चजोः कु घिण्यतोरिति ( ७।३।५२ ) कुत्वम् । प्रसेव इति । षिवु तन्तुसन्ताने । कृत्रिममिति । करणेन निर्वृत्तं कृत्रिमम् । पुरुषव्यापारादिभि निर्वृत्तमित्यर्थः । निषाद इति । षद्लृ विशरणगत्यवसादनेषु । निषीदत्यस्मिन् पापमिति निषादः । हलश्चेति ( ३।३।१२१ ) घञ् ।

## १२३ । इकः काशे ।

नीकाश इति । काशृ दीप्तौ । पचाद्यजन्तः । अयं काशशब्दः । नतु घञन्त इति । तत्र पूर्वेणैव सिद्धमित्यभिप्रायः । पूर्वेणैव सिद्धे नियमार्थमेतदिक एव काशे नान्यस्येति कश्चिद् ग्रन्थः । एष तु नोपपद्यते । घञि पूर्वेण दीर्घविधानादेतस्य च काशशब्दस्य पचाद्यजन्तत्वात् । अथ बहुलग्रहणात् पचाद्यजन्तेऽपि पूर्वेणैव सिद्धमित्युच्यते । तथाच तत एव बहुलग्रहणादिकोऽन्यस्य न भविष्यतीति न कर्त्तव्यमेवेदं सूत्रम् । क्रियमाणञ्च पूर्वस्यैव प्रपञ्चार्थं द्रष्टव्यम् ।

## १२४ । दस्ति ।

दा इत्येतस्य यस्तकारादिरादेश इति । एतेन स्थान्यादेशसम्बन्धे दइत्येषा षष्ठीति विज्ञायते । नीत्तमिति । ददातेर्निष्ठायां रूपम् । ननुचात्र तकारादिरादेशः परो न सम्भवत्येव । तथाहि यस्तावदच उपसर्गात् त

( ७।४।४७ ) इति तकारः सोऽलोऽन्त्यस्येति ( १।१।५२ ) वचनादन्त्यस्य क्रियते। स च वर्णान्तरो व्यवधानादनन्तरस्तकारः परो न सम्भवति। योऽपि खरि चेति ( ८।४।५५ ) दकारस्य तकारो विधीयते सोऽपि न सम्भवत्येव। दीर्घत्वे कर्त्तव्ये चर्त्वस्यासिद्धत्वेनाविद्यमानत्वादित्यत आह अच उपसर्गात्त इत्यादि। आश्रयण माश्रयोऽङ्गीकरणम्। दा इत्यत्र य स्तकारादिरादेश स्तस्मिन् परत इगन्तस्योपसर्गस्य दीर्घो भवतीति ब्रुवता चर्त्वमाश्रितम्। नह्यन्यथा तकारादिरादेशः परः सम्भवति। तस्मात् चर्त्वस्याश्रयणात् सिद्धम्। अत स्तकारादिरादेशो भवतीति। नितीर्णमिति। तॄ प्लवनतरणयोः। ऋत इद् धातोरितीत्त्वम् ( ७।१।१०० )। हलि चेति ( ८।२।७७ ) दीर्घः। अट्कुप्वादिना ( ८।४।२ ) णत्वम्। सुदत्तमिति। दो दद्घो रित्यत्र ( ७।४।४६ )।

अवदत्तं विदत्तञ्च प्रदत्तञ्चादि कर्मणि।
सुदत्त मनुदत्तञ्च निदत्तमिति चेष्यते ॥ १ ॥

इत्यनयेष्ट्या ददातेर्ददादेशः।

## १२५। अष्टनः संज्ञायाम्।

अष्टावक्र इति। अष्टौ ८ क्राण्यस्येति बहुव्रीहिः।

## १२६। छन्दसि च।

अष्टाकपालमिति। अष्टसु कपालेषु संस्कृतमिति संस्कृतमित्यण् (४।४।३)। तस्य द्विगोर्लुगनपत्य इति ( ४।१।८८ ) लुक्। अष्टाहिरण्येति। बहुव्रीहिः। पादस्य लोपे कृत इति। पादस्य लोपोऽहस्त्यादिभ्य ( ५।४।१३८ ) इत्यनेन। गवि च युक्त इत्यादि। वक्तव्यस्य व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। चकारोऽत्र क्रियते। स चानुक्तसमुच्चयार्थः। तेन गवि च युक्ते भाषाया-मप्यष्टनो दीर्घो भवति।

## १२७। चितेः कपि।

एकचितीक इति। एका चितिरस्येति बहुव्रीहिः। ततः स्त्रियाः पुंवदित्यादिना ( ६।३।३४ ) पुंवद्भावः। शेषाद्विभाषेति ( ५।४।१५४ ) कप्।

### १२८ । विश्वस्य वसुराटोः ।

विश्वावसुरिति । विश्वं वसु यस्येति बहुव्रीहिः । विश्वाराडिति । विश्वस्मिन् राजत इति । सत्सूद्विषेत्यादिना ( ३।२।६१ ) क्विप् । व्रश्चादिसूत्रेण ( ८।२।३६ ) षत्वम् । तस्य झलाञ्जशोऽन्त इति ( ८।२।३९ ) जश्त्वं डकारः । डकारस्यापि चर्त्वं टकारः । यत्रास्यैतद्रूपमिति । क्व पुनरस्यैतद्रूपम् ? यत्र पदसंज्ञा । पदाधिकारे षकारादीनां विधानात् । विश्वराजौ विश्वराज इति । अत्र पदसंज्ञा नास्ति । असर्वनामस्थान इति ( १।४।१७ ) प्रतिषेधात् ।

### १२९ । नरे संज्ञायाम् ।

### १३० । मित्रे चर्षौ ।

### १३१ । मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ।

### १३२ । ओषधेश्च विभक्तावप्रथमायाम् ।

### १३३ । ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ।

तङिति प्रत्याहारग्रहणम् । लोण्मध्यमपुरुषबहुवचनादारभ्य महिङो ङकारेण । आ तू न इन्द्र वृत्रहन्निति । आ तु न इति प्राप्ते । एव मुत्तरत्रापि ऋक्प्रयोगे प्राप्ते दीर्घो वेदितव्यः । लस्यादिति । (Y) लस श्लेषणक्रीडनयो रित्यस्याशिषि लिङि रूपमेतत् । अथ थग्रहणेनात्र तस्तमपोः प्रत्यययो र्ग्रहणं कस्मान्न भवति ? तदन्तस्य क्षतदीर्घस्य ऋग्विषये प्रयोगासम्भवात् । भरता इति । भृ भरण इत्यस्माद्धातोर्लोण् मध्यमपुरुषस्य बहुवचने रूपमेतत् । शृणोत ग्रावाण इति । अत्र तु न भवति । सर्वे विधयश्छन्दसि विकल्प्यन्त इति वचनात् । अत्रा इति । त्रलन्तमेतत् । सप्तम्यास्त्रलिति ( ५।३।१० ) त्रलि कृत एतदोऽशित्यनेनैतदोऽश्आदेशः ( ५।३।५ ) । उरुष्या ण इति । आत्मन उरुमिच्छति सुप आत्मनः क्यजिति ( ३।१।८ ) क्यच् । ततः

(Y) In the printed काशिका उत वा घा स्यालात् is the illustration ; but the न्यासकार takes it as उत वा घा लस्यात् । स्यालादित्यत्र पाठे स्यालः भार्य्याया भ्राता । ततः पञ्चमीति हरदत्तः ।

सर्व्वप्रातिपदिकेभ्यो लालसायामसुग् वक्तव्य ( ७।१।४१, वा ) इत्यौपसंख्यानिकोऽसुक्। सुषामादिषु चेति ( ८।३।९८ ) षत्वम्। लोड् मध्यमपुरुषस्यैकवचनम्। अतो हेरिति ( ६।४।१०५ ) हेर्लुक्। न इति। बहुवचनस्य ( ८।१।२१ ) वसनसावित्यस्मदादेशोऽयम्। णत्वं तु वर्णव्यत्ययेन। उपसर्गाद्बहुलमिति ( ८।४।२८ ) बहुलवचनाद्वा। अन्ये तूरुष्य इति निपात इत्याचक्षते।

## १३४। इकः सुञि।

सुञिति निपातस्य ग्रहणम्। अभी षु ण इति। अभिशब्दस्य दीर्घत्वम्। सुञ इति ( ८।३।१०७ ) षत्वम्। न इत्ययमस्मदादेशः। तस्य नश्च धातुस्थोरुषुभ्य इति ( ८।४।२७ ) णत्वम्। ऊर्द्ध ऊ षु ण इति। उकारस्य दीर्घः।

## १३५। द्व्यचोऽत स्तिङः।

अश्वा भरत वाजिन इति। (Z) भृ इत्येतस्य लोण् मध्यमपुरुषस्य बहुवचने रूपमेतत्। वद्मि यक्षीति। वचेर्यजेश्च परस्य लेटः सिप्। कर्त्तरि शप् ( ३।१।६८ )। वचेरदादित्वाच्छपो लुक्। यजेरपि बहुलञ्छन्दसीति ( २।४।७६ )।

## १३६। निपातस्य च।

एवा ते। अच्छा त इति। एवाच्छशब्दौ निपातौ। चादिषु पाठात्।

## १३७। अन्येषामपि दृश्यते।

ऋचीति निवृत्तम्। केशाकेशीति। केशेषु केशेषु गृहीत्वेदं युद्धं वृत्तमिति तत्र तेनेत्यादिना ( २।२।२७ ) बहुव्रीहिः। इच् कर्मव्यतीहारे ( ५।४।१२७ ) इतीच् समासान्तः। जलाषाड़िति। जलं सहत इति छन्दसि सह इति ( ३।२।६३ ) ण्विः। सहेः साड़ः स इति ( ८।३।५६ ) षत्वम्।

(Z) The printed काशिका gives देवा भवत वाजिनः, evidently from the root भू। This reading is supported by my MS. 23. "भू इत्येतस्य लोण्मध्यमपुरुषबहुवचने रूपमिति तत्र पाठान्तरात्।

श्वादन्त इति । शुनो दन्त इति षष्ठीसमासः । श्वादंष्ट्र इति । शुनइव दंष्ट्राऽस्येति बहुव्रीहिः । श्वाकर्ण इत्यादयः षष्ठीतत्पुरुषा बहुव्रीहयो वा ।

१३८ । चौ ।

दधीच इति । दध्यञ्चतीति ऋत्विगादिना ( ३।२।५९ ) क्विन् । ततः शस् । अच इत्यकारलोपः ( ६।४।१३८ ) । ननु चान्तरङ्गत्वाद् यणादेशेना-ऽऽकारलोपाद् दीर्घाच्च प्राग् भवितव्यम् । स हि वर्णाश्रयत्वादन्तरङ्गः इतरौ तु बहिरङ्गौ । अकारलोपो हि तस्य विधीयते । भसंज्ञा च। यकारादावजादौ च स्वादौ विधीयते । दीर्घत्वमप्युत्तरपदे परतः पूर्वपदस्य विधीयमानं द्विपदाश्रयत्वाद् बहिरङ्गम् । ततश्चान्तरङ्गे यणादेशे कृते पूर्वं चौ दीर्घत्वं न सिध्यतीत्यत आह अन्तरङ्गोऽपीत्यादि । यदि यणादेश एव प्रवर्त्तते तदा दीर्घवचनमनर्थकं स्यात् । तस्माद् दीर्घवचनसामर्थ्याद् यणादेशो न प्रवर्त्तते । ननु च कृते यणादेशेऽनन्तरो दीर्घभावी नास्तीति कृत्वा व्यवहितस्यापि दीर्घत्वं भविष्यति । यथा शमामष्टानां दीर्घः श्यनीति ( ७।३।७४ ) शमादीनां श्यनि दीर्घत्वम् । तस्माद् भवितव्यमेवात्र यणादेशेन । तथाच व्यवहितस्य दीर्घत्वे कृतेऽनिष्टं रूपं स्यात् । नैतदस्ति । इदञ्च तावद् विचार्यताम् । किं तत् ? तस्मिन्निति निर्दिष्टे पूर्वस्येत्येषा ( १।१।६६ ) परिभाषा बाध्येताहोस्विदन्तरङ्गपरिभाषेति । तत्रान्तरङ्गपरिभाषाया लिङ्गादनुमानाद्वा सिद्धा । तस्या हि वाह ( ६।४।१३२ ) उठिति ऊड् वचनं लिङ्गम् । यथा चैतल्लिङ्गं तथा तत्रैव वृत्तिकारो दर्शयिष्यति । इतरा तु परिभाषा साक्षाच् श्रुता । तत्र युक्तं यदनुमितोऽर्थो बाध्यते । नतु साक्षाद् दृष्ट इत्यन्तरङ्गपरिभाषा बाध्यते । नेतरेति । तथाचानन्तरस्यैव दीर्घत्वेन भवितव्यमिति यणादेशो न प्रवर्त्तते ।

१३९ । संप्रसारणस्य ।

कारीषगन्धीपुत्र इति । कारीषगन्धेरपत्यमिति । तस्यापत्यमित्यण् ( ४।१।९२ ) । अणिञोरनार्षयोरित्यादिना ( ४।१।७८ ) ष्यङादेशः । ततो यङश्चाबिति ( ४।१।७४ ) चाप् प्रत्ययः । ततः करीषगन्ध्यायाः पुत्र इति

षष्ठीसमासः। ततः ष्यङः संप्रसारणमित्यादिना ( ६।१।१३ ) संप्रसारणम्। अनेन दीर्घत्वम्। व्यवस्थितविभाषा हि सेति। इको ह्रस्वादो सूत्र (६।३।६१) एकहलादावित्यतः ( ६।३।५९ ) सूत्रादन्यतरस्यांग्रहणमनुवर्त्तते। सा च व्यवस्थितविभाषा विज्ञायते। तेन कारीषगन्धीपुत्र इत्यत्र ह्रस्वत्वं न भवति। अक्षत एवेत्यादि। अथवा ऽक्षत एव संप्रसारणदीर्घत्वे कारीष गन्धि पुत्र इति स्थिते ह्रस्वत्वं प्राप्नोति। संप्रसारणदीर्घत्वञ्च। उभयञ्चैतत् सावकाशम्। इको ह्रस्वत्वस्यावकाशो ग्रामणिपुत्र इति। संप्रसारणस्यावकाशो ह्रस्वाभावः। पक्षे तूभयं प्राप्नोति। तत्र यद्यपि ह्रस्वाभावपक्षे कृतार्थं दीर्घत्वं तथापि तेन परत्वाद् ह्रस्वो बाध्यते। अथ कृते दीर्घत्वे कस्मात् पुनःप्रसङ्गविज्ञाना-न्न भवत्यत आह पुनः प्रसङ्गविज्ञानञ्चेत्यादि। गतार्थम्।

इति श्रीबोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां षष्ठाध्यायस्य
तृतीयः पादः संपूर्णः ॥ ६।३ ॥

अथ

# काशिकाविवरणपञ्जिका।

—o—

## षष्ठाध्यायस्य

## चतुर्थः पादः।

—(o)—

### १। अङ्गस्य।

अधिकारोऽयमिति। स्वरितलिङ्गासङ्गात्। इह केचित् प्रागभ्यासविकारेभ्योऽयमङ्गाधिकारो युक्त इति मन्यन्ते। एवं हि गुणो यङ्लुकोरित्यस्मिन् (७।४।८२) सूत्रे लुग्ग्रहणं न कर्त्तव्यं भवति। यङ्लुक्यपि प्रत्ययलक्षणेन गुणस्य सिद्धत्वात्। यदि पुनरा सप्तमाध्यायपरिसमाप्तेरयमङ्गाधिकारः स्यात् ततोऽवश्यं लुग्ग्रहणं कर्त्तव्यम्। नह्यन्यथा यङ्लुकि गुणः सिध्यति। न लुमताङ्गस्येति (१।१।६३) प्रतिषेधादित्येवं तेषामभिप्रायः। वृत्तिकारस्तु यदि प्रागभ्यासविकारेभ्योऽयमङ्गाधिकारः स्यात् ततो वव्रश्चेत्यत्र व्रश्चतेर्लिटि द्विर्वचने कृते हलादिशेषात् प्राक् संप्रसारणं पूर्वविप्रतिषेधेनोभयेषामिति वचनसामर्थ्याद्वा (६।१।१७) परमपि हलादिशेषं बाधित्वा संप्रसारणं स्यात्। ततश्च संप्रसारणाच्चेति (६।१।१०८) पूर्व्वरूपत्व उरदित्यत्वे (७।४।६६) रपरत्वे हलादिशेषे च कृते वकारस्यापि सम्प्रसारणं प्रसज्येत। आ सप्तमाध्यायपरिसमाप्तेः पुनरङ्गाधिकारे सत्युरदित्यस्य (७।४।६६) परनिमित्तत्वात् प्रत्ययो निमित्तत्वेनाश्रीयते। तेन परनिमित्तत्वादुरत्त्वस्य संप्रसारणे कर्त्तव्ये ऽचः परस्मिन् पूर्व्वविधाविति (१।१।५७) स्थानिवद्भावः। ततश्च न संप्रसारणे सम्प्रसारणमिति (६।१।३७) वकारस्य संप्रसारणं प्रतिषिध्यते। प्रागभ्यासविकारेभ्यः पुनरङ्गाधिकारे सत्यपरनिमित्तत्वादुरत्त्वस्य स्थानिवद्भावो न स्यात्। ततश्च न संप्रसारणे संप्रसारण मित्यस्य (६।१।३७) प्रतिषेधस्याभावाद्

वकारस्य संप्रसारणं स्यादेव। ततश्चोन्नश्चेत्यनिष्टं रूपं स्यात्। तस्मादा सप्तमाध्यायपरिसमाप्तेरङ्गाधिकारो युक्तः। ननु प्रागभ्यासविकारेभ्य इति मन्यमान आह आ सप्तमाध्यायपरिसमाप्तेरिति। सप्तमाध्यायपरिसमाप्तेस्तु परेण पदस्येत्यधिकृत्य (८।१।१६) कार्य्यं विधीयते। तेन तत्राङ्गाधिकारो नानुवर्त्तते। ह्रूत इति। ह्वेञ् स्पर्द्धायाम्। निष्ठा। यजादित्वात् संप्रसारणम्। जीन इति। ज्या वयोहानौ। ग्रह्यादिसूत्रेण (६।१।१३) संप्रसारणम्। ल्वादिभ्य इति निष्ठानत्वम्। (८।२।४४) संवीत इति। व्येञ् संवरणे। वच्यादिना (६।१।१६) संप्रसारणम्। निरुतम्। दुरुतमिति। वेञ् तन्तुसन्ताने। पूर्व्ववत् संप्रसारणम्। असत्यङ्गाधिकारे निर्दुरोरवयवो यो हल् ततोऽप्युत्तरस्य संप्रसारणस्य दीर्घः स्यात्। अङ्गाधिकारे पुनरङ्गावयवो यो हल् तदुत्तरं यत् संप्रसारणं तदन्तस्याङ्गस्य दीर्घत्वं विज्ञायत इति न भवति दीर्घत्वप्रसङ्गः। न ह्यत्राङ्गावयवाद्धल उत्तरं सम्प्रसारणम्। अग्नीनामिति। ह्रस्वनद्यापो नुट् (७।१।५४)। क्रिमिणां पश्य। पामनां पश्येति। क्रिमयोऽस्यां सन्तीति। पामानोऽस्यां सन्तीति लोमादीत्यादिना (४।२।१०२) नप्रत्ययः। ततष्टाप्। द्वितीयैकवचनम्। अमि पूर्व इति (६।१।१०७) पूर्व्वरूपत्वम्। यद्यङ्गस्येति नाधिक्रियते ततोऽत्रापि क्रिमिशब्दस्य पामशब्दस्य च नामि परतो दीर्घत्वं स्यात्। अङ्गाधिकारे तु न दोषः। न ह्यत्र क्रिमिपामशब्दयोर्नामि परतोऽङ्गत्वमस्ति। अपितु नप्रत्यये। ब्राह्मणभिस्सा। ओदनभिस्सिटेति। भिस्साभिस्सिटाशब्दौ टाबन्तौ। तत्रैक ओदनस्य वाचकः। अपरस्तु तद्दग्धिकायाः। ताभ्यां यथाक्रमं ब्राह्मणौदनशब्दयोः षष्ठीसमासः। तत्रासत्यङ्गाधिकारेऽनङ्गाभ्यामपि ब्राह्मणौदनशब्दाभ्यां परस्य भिस ऐस्भावः प्रसज्येत। ननु चार्थवद्ग्रहणे नानर्थकस्येति (प,१५) वचनाद् यथा क्रिमिणां पश्य पामनां पश्येत्यत्र दीर्घत्वं न भविष्यति तथा ब्राह्मणभिस्सौदनभिस्सिटेत्यत्राप्यैस्भावः। नह्यत्र नामोऽर्थवत्त्वम्। नापि भिसः। तत् किं तन्निवृत्त्यर्थेनाङ्गाधिकारेणेत्याह अङ्गाधिकार इत्यादि। नामि दीर्घोऽप्यपीत्यादि। आदिशब्देनातो भिस ऐसित्यैस् (७।१।९) गृह्यते। इतिकरणो हेतौ। यस्मादसत्यङ्गाधिकारे हल इति (६।४।२) दीर्घत्वं यथा ह्रूतो जीन इत्यत्र भवति तथा निरुतं दुरुत मित्यत्रापि स्यात्। अजभ्भन-

गमां सनोति (६।४।१६) दीर्घत्वं यथा चिकीर्षतीत्यत्र भवति तथा दधि सनोति मधु सनोतीत्यत्रापि स्यात्। एर्लिङि (६।४।६७) वान्यस्य संयोगादेरित्येत्त्वं (६।४।६८) यथा ग्लेयादित्यत्र भवति तथा निर्यायाद् निर्वायादित्यत्रापि भवेत्। तस्मादेवमाद्यर्थोऽवश्यकर्त्तव्योऽङ्गाधिकारः। सोऽन्यार्थः क्रियमाणो नामि दीर्घाद्यपि व्यवस्थापयति। विषयान्तराद् व्यावर्त्याभिमते विषये नियमयति। तेन तदर्थमेषा परिभाषा नाश्रयितव्या भवति। अगत्या हि खलु परिभाषाऽऽश्रीयतइति भावः। ननु षष्ठी स्थानेयोगेति (१।१।४९) वचनादङ्गस्येति स्थानषष्ठीयम्। ततश्चातो भिस ऐसित्यतइत्येतत् (७।१।९) पञ्चम्यन्तेनाङ्गस्येत्येतत् षष्ठ्यन्तस्य समानाधिकरणत्वं न स्यात्। भिन्नविभक्तिकत्वात्। तथाच सत्यकारान्तात् परस्य भिस्येत्यत्रास्यैस्भावः प्रसज्येत। ततश्चात्रापि स्यात्। ब्राह्मणभिस्सा। ओदनभिस्सिटेति। अवयवषष्ठ्यादयश्च न प्रसिद्धेयुः। ततश्चोदुपधाया गोहः (६।४।८९) इत्यत्र गोह इत्यस्याः स्थानषष्ठ्या अलोऽन्त्यस्येत्यन्ते (१।१।५२) ऽल्युपसंहारादुपधाग्रहणसामर्थ्याच्च गोहश्चान्त्यस्य स्यादूत्त्वम्। उपधामात्रस्य च शास इदङ्हलोरित्यत्रापि (६।४।३४) शास इति स्थानषष्ठीत्वेन विज्ञातायाः षष्ठ्या अन्ते ऽल्युपसंहारादुपधाग्रहणानुवृत्तिसामर्थ्याच्च शासश्चान्त्यस्येत्त्वम् उपधामात्रस्य चेत्येतद् दैश्यमपाकर्तुमाह अङ्गस्येति। सम्बन्धसामान्य एषा षष्ठीत्यादि। सम्बन्धसामान्येऽविशेषितसम्बन्धमात्रे। तत्रानेकसम्बन्धानुग्रहार्थमनाश्रितविशेषं सम्बन्धसामान्यमुपादाय प्रवृत्ता सत्युत्तरेषु भिन्नार्थेषु लक्षणवाक्येषु यथायोगं विशेषेष्ववतिष्ठते। सा क्वचित् स्थानेयोगा भवति। यथा हन्तेर्जः (६।४।३६) इत्येवमादौ। क्वचिदवयवयोगा भवति यथोदुपधाया गोहः (६।४।८९) शासइदङ्हलो (६।४।३४) रित्येवमादौ। क्वचिन्निमित्तनिमित्तिसम्बन्धविषया यथा युवोरनाकावित्यादौ (७।१।१)। यथैव हि देवदत्तस्येत्येका षष्ठ्यभेदेन प्रवृत्ता ज्ञात्यवयवादिषु सम्बन्धभेदैर्भिद्यमाना जन्यजनकभावाद्यैः सम्बन्धविशेषे यथायोगमुपतिष्ठते देवदत्तस्य पुत्रः पाणिः कम्बल इति तथाङ्गस्येत्येषापि। तत्र यस्मिन् वाक्ये शास इदङ्हलो (६।४।३४) रित्येवमादौ सम्बन्धिविशेषो विद्यते ऽवयवोऽन्यो वा तत्र यथायोग मवयवादि-

सम्बन्धे षष्ठी वेदितव्या। यत्र न विद्यते तत्र स्थाने षष्ठी यथा ङ्स्तेर्जङ्गत्येव मादौ (६।४।२६)। कथं पुनरेषा सम्बन्धसामान्ये षष्ठीति लभ्यते ? यावता षष्ठीस्थाने योगादित्युक्तम् (१।१।४९)। एवं मन्यते। नहि सर्वा षष्ठी स्थानेयोगा भवति। अपि तु यस्याः कलादिकं लिङ्गं प्रतिज्ञायते। अन्यथा ह्युदीचामातः स्थान इति (७।३।४६) स्थानग्रहणमनर्थकं स्यात्। तस्माद् विशिष्टैव या षष्ठी यस्याः कलादिकं लिङ्गं प्रतिज्ञायते सा स्थानेयोगेत्युक्तम्। नचास्याः कलादिकं लिङ्गं प्रतिज्ञायते। ततो नेयं स्थानेयोगा भवितुमर्हति। अथवेत्यादि। अङ्गशब्दस्य प्रातिपादिकस्य योऽर्थ स्तन्मात्रमधिक्रियते। नत्वङ्गस्येत्येतच्छब्दरूपम्। मात्रशब्दो विभक्त्यर्थव्यवच्छेदाय। अतएवाह अविवक्षितविभक्त्यर्थमिति। न विवक्षितौ विभक्त्यर्थौ यस्मिन्नर्थमात्रे तत् तथोक्तम्। यतश्चैतदेवं तेन षष्ठो स्थानेयोगेति। नात्रेयं परिभाषोपतिष्ठते। अनेकसम्बन्धप्रसङ्गे हि सम्बन्धान्तरव्यवच्छेदार्थमेषा प्रणीता। ततो यत्र सम्बन्धो विवक्ष्यते तत्रैव नियमार्थमुपतिष्ठते। नचात्र कश्चित् सम्बन्धः षष्ठ्या विवक्षितः। केवलं निर्देशार्थ एवास्याः प्रयोगः। अवश्यं हि यया कयाचिद् विभक्त्या निर्देशः कर्त्तव्य इति षष्ठ्या निर्देशः कृतः। ननु च स्वरितेनाधिकारः। स च शब्दधर्म्मः। नार्थधर्म्मः। तत् कथं स्वरितरहितोऽर्थः शक्यतेऽधिकर्त्तुम् ? नैष दोषः। अङ्गशब्दप्रतिपादितो योऽर्थः स शब्दात्मक एव। तथाहि यस्मात् प्रत्ययविधि स्तदादेःशब्दस्याङ्गसंज्ञा विहिता। तदुत्तरत्र यथायोगं विपरिणम्यत इत्यादि। अर्थवशात् क्वचित् षष्ठ्यन्तत्वेनैव। क्वचिद् विभक्त्यन्तरत्वेन यथाढ्यो देवदत्तः। उच्चान्यस्य गृहाणि। आमन्त्रयस्वैनं देवदत्तमिति। तेनातो भिस ऐसित्यत्र (७।१।९) पञ्चम्यन्ततया विभक्तिविपरिणामे हि सत्यकारान्तादङ्गादुत्तरस्य भिस ऐसादेशो भवतीत्येवमाद्यर्थरूपं सम्पन्नं भवति। आदिशब्देन युष्मदस्मद्भ्यामुत्तरस्य ङसोऽश् भवतीति परिगृह्यते। अपिशब्दादवयवषष्ठ्यादयोऽपि परिसम्पन्ना भवन्ति। पूर्व्वत्र तु परिहारे ऽतो भिस ऐसित्यत्रातइत्येषा (७।१।९) निमित्तनिमित्तिसम्बन्धे षष्ठी द्रष्टव्या। तत्रायं सूत्रार्थो ऽकारान्तस्याङ्गस्य यो भिस् तस्यैस् भवतीति। तेन ब्राह्मणभिस्सेत्येवमादौ न भवति। अङ्गस्य हि को भिस् ?

यस्तस्य निमित्तम् । कस्तस्य पुनर्निमित्तम् भिस् ? परभूते यस्मिन्नङ्गमित्येवं भवति । कस्मिंश्चैतद् भवति ? प्रत्यये । नच ब्राह्मणभिस्सेत्येवमादौ भिस् प्रत्यय इति कुतस्तस्यैस्प्रसङ्गः ।

२ । हलः ।

अण्ग्रहणं सम्प्रसारणग्रहणं दीर्घग्रहणञ्चैतत् त्रय मनुवर्त्तते । कुतः पुनः प्रकृतमण्ग्रहणम् ? ढ्रलोपे पूर्वस्य दीर्घोऽण (६।३।१११) इत्यतः । ननु तदिकः काश इतीग् ग्रहणेन (६।३।१२३) व्यवच्छिन्नम् । तत् कथमिहानुवर्त्तते ? नैष दोषः । इग् ग्रहणेन क्षणैव विशिष्यते । अणिगिति । ततो विरोधाभावान्नेग्ग्रहणेनाण्ग्रहणं व्यवच्छिद्यते । ननु च यदीग्ग्रहणेनाण्ग्रहणं विशिष्यते तदा ऽवाचा स्वराचेत्यत्र दीर्घत्वं न स्यात् । चावित्यत्राण् (६।३।१२) ग्रहणमेवात्रानुवर्त्तिष्यते । इग् ग्रहणन्तु निवृत्तमित्येषोऽप्यदोषः । अथवा यद्यपीग्ग्रहणेनाण्ग्रहणं व्यवच्छिन्नं तथापीह मण्डूकप्लुतिन्यायेनानुवर्त्तते । ननु यथा शेष (४।२।९२) इत्येतल्लक्षणं विधिरधिकारश्च तथाङ्गस्येत्येतदपि (६।४।१) । ततश्चानेनैव हतो जीन इत्यादेः सिद्धत्वादपार्थकं हल इत्येतद्वचनम् । अतो न कर्त्तव्यमेवेति मन्यमान आह हल इति किमिति ? किमर्थं हल इत्येतत् सूत्रमारभ्यत इत्यर्थः । उत उतवानिति । असत्यस्मिन् सूत्रे सम्प्रसारणान्तस्याङ्गस्य दीर्घो भवतीत्युच्यमान इहापि दीर्घत्वं स्यात् । भवति ह्येतदपि व्यपदेशिवद्भावेन संप्रसारणान्तमङ्गम् । तस्माद्धल इति सूत्रं कर्त्तव्यम् । विद्धो विचित इति । व्यध ताड़ने । व्यच व्याजीकरणे । निष्ठा । ग्रह्यादिसूत्रेण (६।१।१५) संप्रसारणम् । संप्रसारणान्तस्याङ्गस्य ग्रहणादिह न भवति दीर्घः । यद्यपि विध्यत्यधनुषा (४।४।८३) यहिज्यावयिव्यधिवष्टिविचतीति (६।१।१५) निर्देशाद् हलन्तस्य यत् सं।सारणं तस्य दीर्घो न भविष्यतीति विज्ञायते तथापि ज्ञापकद्वारेणास्मिन्नर्थे प्रतिपाद्यमाने प्रतिपत्तिगौरवं स्यादित्येतत्परिहारार्थं संप्रसारणान्तस्येत्युक्तम् । तृतीय इति । द्वे स्तीय (५।२।५४) इति । त्रेः संप्रसारणञ्चेति (५।२।५५) तीयप्रत्ययः संप्रसारणञ्च । सर्वसत्रास्ति । नलण् । कस्मान् नास्त्यण् ? यस्माड् ढ्रलोपे पूर्वस्य दीर्घोऽण

( ६।३।१११ ) इत्यत इत्याण्ग्रहणमनुवर्त्तते। तत्र च पूर्वेणैव णकारेण प्रत्याहारग्रहणम्। नच तत्र ऋकारः सन्निविष्ट इति भवत्येव प्रत्युदाहरणम्। तृतीयेति वेत्यादि। अथवा ऽण इतेऽतन्निवृत्तमेव। तथाप्यत्र न भवतेऽव दीर्घः। कर्त्तृकरणयोस्तृतीयेति ( २।३।१८ ) निपातनात्। हल इत्येतस्य त्रयोऽर्थाः सम्भाव्यन्ते। हल उत्तरस्य संप्रसारणान्तस्याङ्गस्य दीर्घो भवति। अयमेकोऽर्थः। अङ्गावयवाद्धल उत्तरस्य संप्रसारणस्य दीर्घो भवतीति द्वितीयः। तृतीय स्तु वृत्तिकारेणैव दर्शितः। तत्र यदि प्रथमः पक्ष आश्रीयते तदा निरुतं दुरुतमित्यत्रापि स्यात्। भवति ह्येतदपि हल उत्तरं संप्रसारणान्तमङ्गम्। अथ द्वितीय स्तदा विद्धो विचित इत्यत्रापि स्यात्। अत्राप्यङ्गावयवाद्धल उत्तरं संप्रसारणमिति। अथ विध्यत्यधनुषा ( ४।४।८३ ) ग्रहिज्यावयिव्यधिवष्टि-विचतीति ( ६।१।१६ ) निर्देशान्न भविष्यति। ततश्च ज्ञापकद्वारेणैवंविधे दीर्घत्वाभावे प्रतिपत्तिगौरवं स्यादेव। तस्मादेतस्यैव दोषस्य परिजिहीर्षया तृतीयोऽर्थो वृत्तिकारेण दर्शितः। अत्रापि देश्यमिदमाशङ्क्यते। ननु चायमर्थोऽस्य सूत्रस्य नोपपद्यत एव। यस्मादङ्गस्येत्येकमङ्गग्रहणं प्रकृतम्। तच्च हलो विशेषणं वा स्यादङ्गस्य कार्य्यप्रतिपत्त्यर्थं वा। तत्र यदि पूर्वकः पक्ष आश्रीयते तदाङ्गविशिष्टस्य संप्रसारणान्तस्याङ्गस्येति यावद् दीर्घो न लभ्यते। अथ द्वितीयस्तदा हल् विशेषितो न स्यात्। तस्माद् द्वितीयमङ्गग्रहणं कर्त्तव्यं स्यात्। नह्येकेन शक्यमेतदुभयं प्रतिपादयितुम्। अतोऽस्य देश्यस्य निरासायावृत्तिन्यायमाश्रित्याह अङ्गग्रहणमित्यादि। एकमपि हि वस्त्वावर्त्त्य-मानमनेकत्रोपयुज्यते। यथैकं भाजनमसहभुजामनेकेषां भुजिक्रियायाम्। तथेदमङ्गग्रहणमावर्त्त्यते। तत्रानावृत्तेन हल् विशिष्यते। आवृत्तेन त्वङ्गस्य दीर्घत्वं भवतीत्युभयथार्थप्रतिपत्तिर्भवति।

## २। नामि।

अङ्गाधिकारान्नामि परतोऽङ्गस्य दीर्घो विधीयते। अङ्गञ्च प्रत्यये परतो भवति। नचेह शास्त्रे क्वचिन्नाम्प्रत्ययो विहितः। ततो न ज्ञायते नामीति कस्येदं ग्रहणमिति। अतस्तत्परिज्ञानार्थमाह नामीति षष्ठीबहुवचन-

मित्यादि। आगतः प्राप्तो नुड् येन तदागतनुट्कम्। अथवागतः प्राप्तो नुड् यत्र तदागतनुट्कम्। कर्त्तृणामिति। कथं पुनरत्र दीर्घत्वम्? यावता ङ्णग्रहणमत्रानुवर्त्तते। अत आह अण इतीरतन्निवृत्तमिति। न तिसृचतसृ इति (६।४।४) तिसृचतस्रोर् दीर्घत्वप्रतिषेधादित्यभिप्रायः। उत्तरार्थमिति। नोपधायाः (६।४।७) इति। अत्र नामि परतो नोपधाया दीर्घत्वं यथा स्यात्। आमि मा भूदिति। एवमर्थमागतनुट्कग्रहणम्। तेन वर्म्मणामित्यत्र दीर्घो न भवति। कृते च नुटि दीर्घत्वप्रतिपत्त्यर्थमित्यागतनुट्कस्य ग्रहणमिति प्रकृतेन सम्बन्धः। अन्यथा हीत्यादि। अन्यथा यद्यागतनुट्कस्यामो ग्रहणं न क्रियते तदा नुट आमभक्तत्वादाम्ग्रहणेन ग्रहणे कृते सति नुटि दीर्घत्वेन भवितव्यम्। अकृतेऽपि। ततश्च कृताकृतप्रसङ्गी यो विधिः स नित्य इति नित्यत्वात् परमपि नुटं बाधित्वा दीर्घत्वमेव स्यात्। एवञ्च सति ह्रस्वान्तमङ्गं न भवतीति नुड़ेव न स्यात्। ननु च नुड् ह्रस्वान्ताद् विधीयते। नच नित्यत्वाद् दीर्घत्वे कृते ह्रस्वान्तमङ्गमस्ति। तत्र वचनसामर्थ्याद् भूतपूर्वगतिर्भविष्यति। भूतपूर्व्वगत्या ह्रस्वान्तादङ्गादुत्तरस्यामो नुड् भवतीति नच शक्यते वक्तुम्। तिसृणां चतसृणामित्यत्र न तिसृचतसृ (६।४।४) इति प्रतिषेधात्। ह्रस्ववचनं सावकाशमिति। यस्माद् ह्रस्वनद्यापो (७।१।५४) नुडित्यत्र ङेस्त्रय इत्यत (६।३।४८) स्त्रिग्रहणमनुवर्त्तते। तेन त्रिग्रहणानुवृत्तेरेव स्थानिवद्भावेन तिसृणामित्यत्र नुड् भविष्यति। तथा चतसृणामित्यत्रापि षट्चतुर्भ्यश्चेत्यनेन (७।१।५५) स्थानिवद्भावादिति। नापि शक्यते वक्तुं नृणामित्यत्र नृ चेति (६।४।६) पक्षे दीर्घत्वाभावाद् ह्रस्ववचनस्य सावकाशत्वमिति। नह्येकमुदाहरणं प्रति ह्रस्ववचनं प्रयोजयति। यदि ह्येतावत् प्रयोजनं स्यान् नृनद्यापो नुडित्येवं ब्रूयात्। तदेवं ह्रस्ववचनमनवकाशम्। अतः कृतेऽपि दीर्घत्वे ऽग्नीनामित्यादौ भूतपूर्व्वगत्या नुड् भविष्यति। ह्रस्वग्रहणसामर्थ्यात्। तस्मादयुक्तमिदमुक्तम्। अन्यथा हि नुड़ेव न स्यादिति। एवं तर्ह्यन्यथा व्याख्यायते वृत्तिग्रन्थे। आगतनुट्कस्य ग्रहणमुत्तरार्थमित्युक्ते चोदक आह कृते च नुटीत्यादि। कस्मान्न भवतीति वाक्यशेषः। कृते च नुटि दीर्घस्य प्रतिपत्तिः यथा स्यादित्येवमर्थ-

मागतनुट्कस्य ग्रहणं कस्मान्न भवतीति। युक्तञ्चैतत्। तथाहि यद्यागत-नुट्कस्य ग्रहणं न स्यात् ततो नित्यत्वाद्दीर्घत्वे कृते ह्रस्वाभावादग्नी-नामित्यादौ नुड् न स्यात्। सनुट्कस्य ग्रहणे तु भवतीत्येवं चोदकेनोक्ते सतीदमाह अन्यथा हीत्यादि। हिशब्दोऽयमपिशब्दार्थे वर्त्तते। नशब्दोऽपि नन्वित्यर्थे वर्त्तते। अनेकार्थत्वान्निपातानाम्। एवकारो भिन्नक्रमः स्यादित्यस्यानन्तरं द्रष्टव्यः। तदयमत्रार्थः। अन्यथापि ननु नुट् स्यादेव। न केवलं सनुट्कस्य ग्रहणे सत्यग्नीनामित्यादौ नुड् भवत्यपि त्वन्यथाप्यनागत-नुट्कस्यापि ग्रहणे नुट् स्यादेवेति। अथ किमर्थमागतनुट्कस्य ग्रहणम्? आमि दीर्घ इत्येव नोच्येत। अस्मिन् पर्य्यनुयोगे सति नामि दीर्घ इत्यादेः श्लोकस्योपन्यासः। योऽयं नामि दीर्घउक्तः स यद्यामि भवेदामीत्येवं सूत्रप्रणयने सति कृताकृतप्रसङ्गित्वेन नित्यत्वात् परमपि नुटं बाधित्वा दीर्घत्वमेव स्यात्। ततश्च नुड् न स्यादेव। अह्रस्वान्तत्वादङ्गस्य। नैष दोषः। वचनादिति। वचनान्नुड् भविष्यति। यदि दीर्घत्वे नुड् न स्यात् तदा ह्रस्वनद्यापो नुडित्यत्र (७।१।५४) ह्रस्ववचनमनर्थकं स्यात्। अनव-काशत्वात्। तस्माद् ह्रस्ववचनसामर्थ्यादसति सांप्रतिके ह्रस्वान्तेऽङ्गे भूत-पूर्वगत्या कृतेऽपि दीर्घत्वेऽङ्गस्य नुड् भविष्यति। यत्र तन्नास्तीति तत्र वचनस्यावकाश इति वाक्यशेषः। यत्र दीर्घत्वं नास्ति तिसृणां चतसृणा-मिति तत्र ह्रस्ववचनस्यावकाशः। अतोऽग्नीनामित्यादौ दीर्घत्वे कृते भूतपूर्वगत्या नुडागमो न लभ्यते। साम्प्रतिकाभावे हि भूतपूर्वगतिर्भवति। ननु तिसृणामित्यादावपि नैव ह्रस्ववचनस्यावकाशः। अन्यथैवात्र नुटः सिद्धत्वादिति भावः। इह तावत् तिसृणामिति विनापि ह्रस्वग्रहणेनानेनैव सूत्रेण नुड् भविष्यति। त्रिग्रहणानुवृत्तेः। चतसृणामित्यत्र षट्चतुर्भ्यश्चे-त्यनेनैव (७।१।५४)। नृणामित्यत्र यद्यपि ह्रस्वान्तमङ्गं तथापि नैकमुदा-हरणं प्रति ह्रस्ववचनं प्रयोजयति। अन्यथा हि नृग्रहणमेव कुर्य्यात्। न ह्रस्वग्रहणम्। तस्मान्नास्त्येव ह्रस्ववचनस्यावकाशः। तदेतदपार्थकं मा भूदिति ह्रस्ववचनसामर्थ्यात् कृतेऽपि नुड् भवतीत्यविचलमेतत्। एवमक्रिय-माणेऽपि सनुट्कस्य ग्रहणे दीर्घत्वे कृतेऽपि नुड् भविष्यतीति परमतमाशङ्क्य

प्रयोजनान्तरमाह नोपधायाश्चेत्यादि । चशब्द स्तह्यर्थे । एवं तर्हि नोपधाया इति (६।४।७) दीर्घत्वं नामि परभूते या नोपधा तस्या यथा स्यात् पञ्चानां सप्तानामित्यादौ । अत्र हि षट्चतुर्भ्यश्चेत्यनेन (७।१।५५) पञ्चानामित्येव-मादेर्नान्तादङ्गादामो नुटि कृते नामि परतो नोपधा भवति । यदि पुनरामी-त्येवोच्येत तदा वर्मणामित्यादावपि दीर्घत्वं प्रसज्येत । सनुट्कस्य ग्रहणे सति न भवति । नुटो लक्षणाभावात् । अत्र हि केवल आमि नोपधा । नतु सनुट्के । तदेवं वर्मणामित्यत्र नोपधाया इति (६।४।७) दीर्घत्वं मा भूदित्येवमर्थं नामीत्युक्तम् ।

## ४ । न तिसृचतसृ ।

तिसृचतसृइति । सुपां सुलुगिति (७।१।३९) षष्ठीद्विवचनस्य लुकं कृत्वा निर्देशः कृतः । तिसृणाम् । चतसृणामिति । त्रिचतुरोः स्त्रियां तिसृचतसृइति (७।२।९९) तिसृचतसृादेशौ भवतः । ननु चात्र दीर्घत्वस्य प्राप्तिरेव नास्ति । तत् किं प्रतिषेधेनेति ? तथा ह्यत्रादेशयोः कृतयोरुभयं प्राप्नोति । नुडागमोऽचि र ऋतइति (७।२।१००) रेफादेशश्च । तत्र परत्वाद्रेफादेशे सत्यनजन्तमङ्गं भवति । अजन्तस्य दीर्घत्वेन भवितव्यम् । दीर्घग्रहणेनाचश्चेत्यस्या (१।२।२८) उपस्थापितत्वादित्यत आह इदमेवेत्यादि । यद्यत्र रेफादेशः स्यादयं प्रतिषेधो न कृतःस्यात् । कृतश्च । तस्मादयं प्रतिषेधो ज्ञापयत्यचि र ऋत इत्यस्मात् (७।२।१००) पूर्वविप्रतिषेधेन नुडागमो भवतीति । तेन नुमचि र ऋतत्वज्-वद्भावेभ्यो नुड् भवति पूर्वविप्रतिषेधेनेत्येतदुक्तं भवति ।

## ५ । छन्दस्युभयथा ।

वेति वक्तव्य उभयथेति वचनं वैचित्र्यार्थम् ।

## ६ । नृ च ।

केचिदेतच्छन्दसीति नानुवर्त्तयन्तीति । त एवं मन्यन्ते । यद्ययं योग-श्छन्दस्येव स्यात् छन्दसि नृ चोभयथेत्येकयोगमेव कुर्यात् । चकारो हि

सिश्चतस्त्रोरनुकर्षणार्थः । तत्रैकयोगेनैव सिद्धे पृथग्योगकरणान्निश्चीयते भाषायामप्येष योग इति । (A)

## ७ । नोपधायाः ।

अनजन्तार्थ आरम्भः । न इति षष्ठ्येकवचनान्तम् । सौत्रत्वान्निर्देशस्य यकारलोपस्यासिद्धत्व मनाश्रित्याद् गुणः कृतः । न इति वर्णग्रहणम् । तत्र वर्णग्रहणे सर्वत्र तदन्तविधिं प्रयोजयन्तीति नकारान्तस्याङ्गस्योपधाया तस्या दीर्घत्वं विज्ञायत इत्याह नकारान्तस्याङ्गस्येति । पञ्चानामिति । नलोपः प्रातिपदिकान्तस्येति (८।२।७) नकारलोपः ।

## ८ । सर्वनामस्थाने चासम्बुद्धौ ।

सामानीति जस्शसोःशिरिति (७।१।२०) शिभावः । राजनीति । स्म-स्येकवचनान्तम् । चकारो नोपधाया इत्यनुकर्षणार्थः । यद्येवं चानुकृष्टं नोत्त-रत्राभिसम्बध्यत इत्येतदनुवृत्तिं न प्राप्नोति । एवं तर्ह्येतदसन्देहार्थश्चकार इति । असति हि चकारे सर्वनामस्थाने सम्बुद्धावित्युच्यमाने सन्देहः स्यात् किमयमसम्बुद्धावथ सम्बुद्धाविति । यद्येतत् प्रयोजनं स्यादसम्बुद्धौ सर्व-नामस्थान इत्येवं ब्रूयात् । एवं तर्हि वैचित्र्यार्थं श्चकारः ।

## ९ । वा षपूर्व्वस्य निगमे ।

अत्र दीर्घग्रहणेनाचश्चेत्यस्याः (१।२।२८) परिभाषाया उपस्थाने सत्यच् सन्निधापितः । नोपधाया (६।४।७) इत्यधिकारादुपधापि । षपूर्वस्येति । षः पूर्वो यस्मादिति बहुव्रीहिः । तत्र यद्युपधा ऽन्यपदार्थत्वेनाश्रीयेत षपूर्वस्येत्य-स्त्रीलिङ्गेन निर्देशो नोपपद्यते । तस्मादजत्वान्यपदार्थत्वे नाश्रीयत इत्याह षपूर्वस्याच इत्यादि । उपधाया इत्येतदचः समानाधिकरणं विशेषणम् । ऋभुक्षाणमिति । ऋभुक्षोऽस्यास्तीत्यतइनिठनावितीनिः (५।२।११५) । यस्येति चेत्यकारलोपः ( ६।४।१४८ ) । ऋभुक्षिन्निति स्थिते द्वितीयैकवचनम् । पथिमथ्यृभुक्षाणामादित्यनुवर्त्तमान ( ७।१।८५ ) इतोऽत् सर्वनामस्थानइत्यत्त्वम्

---

(A) तथाहि प्रयोगः—"चिन्ताजर्ज्जरचेतसां वत बृणां का नाम शान्तिः कथेति । "बृणामिको गच्छ त्वमसि पयसामर्णव इवेति । "दयिताखनवस्थितं बृणां न खलु प्रेम चलं सुहृज्जन इति ।

(७।१।८६)। पूर्वग्रहणमुत्तरार्थम्। इह तु वा षो निगम इत्येतावत्युच्यमाने षकारात् परस्याचो नोपधाया इति (६।४।७) विकल्पेन दीर्घत्वं लभ्यत एव।

## १०। सान्तमहतः संयोगस्य।

सकारेऽकार उच्चारणार्थः। सोऽन्तोऽस्य स तथोक्तः। सान्तइत्यविभक्तिकोऽयं निर्देशः। तत्रोत्पन्नायाः षष्ठ्या लुप्तत्वात्। सकारान्तस्य संयोगो नकारो महतश्चेति। अत्रापि नकार इत्यपेक्ष्यते। सकारान्तस्य महतश्चेति द्वे अप्यवयवषष्ठ्यौ। सान्तसंयोगस्य यो नकारोऽवयवो महच्छब्दस्य च योऽवयवइत्यर्थः। एतेन सान्तसंयोगो महच्छब्दश्चोभयमप्येतन्नकारस्य विशेषणमिति दर्शयति। तस्योपधाया इति। तस्येत्यनेन नकारः प्रत्यवमृश्यते। तस्य नकारस्य सम्बन्धिन्या उपधाया इत्यर्थः। एतेनापि नकार उपधाया विशेषणमित्याचष्टे। कः पुनर्नकारस्योपधायाश्च सम्बन्धः? येनासौ तस्येति व्यपदिश्यते। निमित्तनिमित्तिभावः। अन्त्यनकारापेक्षया हि पूर्वत्वे सत्यन्त्यनकारात् पूर्वो वर्ण उपधा भवति। तस्मान्नकारो निमित्तम्। उपधा निमित्तिनी। अथवा समीपसमीपिलक्षणः सम्बन्धः। एतेन नकारसमीपवर्त्तिन्या उपधाया इत्यर्थः। श्रेयानिति। प्रशस्योऽयम्। प्रशस्योऽयम्। अनयोरयमप्रकर्षेण प्रशस्य इति द्विवचनविभज्योपपदे तरबीयसुनावितीयसुन् (५।३।५७)। प्रशस्यस्य श्रइति आदेशः (५।३।६०)। प्रकृत्यैकाज् इति प्रकृतिवद्भावात् (६।४।१६३) टिलोपो यस्येति चेति लोपश्च (६।४।१४८) न भवति। उगिदचामित्यादिना नुम् (७।१।७०)। हल् ङ्यादिसंयोगान्तलोपौ। श्रेयांसि पयांसीति। पूर्ववज्जसःशिभावः। नपुंसकस्य झलच इति नुम् (७।१। २)। कथं पुनरत्र नकारात् पूर्वस्योपधात्वम्? यावताऽलोऽन्त्यात् पूर्व उपधेत्यलां (१।१।६५) सन्निविष्टानां योऽन्त्योऽल् ततः पूर्वस्योपधासंज्ञा विहिता। नचात्र नकारोऽन्त्यः। किं तर्हि? सकारः। नैष दोषः। अपेक्षितं ह्यन्त्यत्वम्। तत् सकारात् पूर्वे ये वर्णास्तेषां नकारोऽन्त्यइति। ततः पूर्वो वर्ण उपधा भवति। यद्येवं तक्षको रक्षक इत्यत्रापि सकारात् पूर्वे ये वर्णास्तेषां ककारोऽन्त्य इति। ततः पूर्वोऽवर्ण उपधा स्यात्। ततश्चात उपधाया इति (७।२।११६) वृद्धिः स्यात्। नैतदस्ति। अङ्गस्य योऽकार उपधा तस्या वृद्धि र्विधीयते। नचात्रा-

कारोऽङ्गस्योपधा। अतो न भविष्यतीति। एतच्चाशक्यं वक्तुम्। अकारस्याङ्गावयवत्वात्। पाचक इत्यादावप्यङ्गावयवत्वादकारोऽङ्गस्योपधेत्युच्यते। तस्मात् प्राप्नोत्येव वृद्धिः। नैष दोषः। अत उपधाया इत्यत्र (७।२।११६) ञ्णितीत्यनुवर्त्तते। तेनोपधा विशिष्यते। ञिति प्रत्यये परतो योपधेति। तत्र येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधानमाश्रीयते। न पुनरनेकेन। तच्चको रचक इत्यत्रानेकेन वर्णेन व्यवधानम्। अतो न भवति वृद्धिप्रसङ्गः। इहतु सूत्रे न सर्वनामस्थानेनोपधा विशिष्यते। किं तर्हि? संयोगः। तेन सर्वनामस्थाने परतो यः संयोग इति। तेन यत्र संयोगादनन्तरं सर्वनामस्थानं तत्र यद्युपधायाः सर्वनामस्थानस्य चानेकवर्णकृतं व्यवधानं तथापि दीर्घत्वं भवत्येव। अतएव सर्वनामस्थानेन संयोगस्य विशेषणाद् हंसौ हंसा इत्यत्र दीर्घत्वं न भवति। नह्यत्र संयोगादनन्तरं सर्वनामस्थानमस्ति। अकारेण व्यवधानात्। अथेह कस्मान्न भवति? हंसमाचष्ट इति। तदाचष्ट इति (३।१।२६९) णिच्। णाविष्ठवत् कार्य्यम् प्रातिपदिकस्येति टिलोपः (६।४।१५५,वा)। हंसयतेःक्विप्। हन्, हंसौ हंस इति। वा षपूर्वस्य निगमइत्यतो (६।४।९) वाग्रहणानुवृत्तेः। नचैवं सति सर्वत्र विकल्पप्रसङ्गः। व्यवस्थितविभाषात्वात्। एतेन हिसि हिंसायामित्यस्य क्विवन्तस्य सुहिन् सुहिंसौ सुहिंस (B) इत्यत्र दीर्घत्वाभावो वेदितव्यः। यस्त्वाह इदितो नुम् धातोरित्यनेन (७।१।५८) नित्यो नुम्। नुम्विधावुपदेशिवद्वचनात्। ततो नुमः पृथक्सिद्धत्वं नास्ति। अत्र तु सिद्धानां सम्बन्धः समवायो भवति। नतु संयोगः। तेन संयोगाभावादिह दीर्घत्वं न भवति। तन्मतेन संयोगान्तलोपोऽपि सुहिन्नित्यत्र न स्यात्। नेह वैशेषिकशास्त्रप्रसिद्धोऽयं संयोगो गृह्यते। अपि तु हलोऽनन्तराः संयोग (१।१।७) इति। हलानैरन्तर्य्यलक्षण इह शास्त्रे प्रसिद्धः संयोग एव। स चेहास्तेत्यसारः परिहारः। महानिति। वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवदिति (उण्,१।१५१) निपातनसूत्रेण शतृवदित्यतिदेशादुगित्कार्य्यं नुम्। सान्तमहत इति किम्? वृहन्ति।

(B). अश्वहिन् अश्वहिंसौ अश्वहिंस इति पाठान्तरम्—in the 23nd. MS.

११ । अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् ।

अप इति । अप्शब्दस्य बहुत्वादेकवचनद्विवचने न सम्भवत इति बहुवचनमुपन्यस्तम् । बह्वाम्पीति । बह्व आप एष्विति बहुव्रीहिः । तदन्तविधेरिष्टत्वात् तदन्तस्यापि दीर्घत्वं भवति । तथाहि येन विधि स्तदन्तस्येत्यत्र (१।१।७२) सूत्रे कानि पुनरत्र प्रयोजनानीति प्रश्न इदमुक्तम् प्रयोजनम् मह्वदप्स्वसृनप्तृनेष्टृत्वष्टृ इति । कथं पुनरिष्यमाणोऽपि तदन्तविधिर्लभ्यते ? यावता ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते(प,२२) । नैष दोषः । सर्वनामस्थाने चासम्बुद्धावित्यत ( ६।४।८ ) चकारोऽनुवर्त्तते । स चानुक्तसमुच्चयार्थः । तेन तदन्तस्यापि दीर्घत्वं भविष्यति । केचिदिति वचनात् केचिन्नेच्छन्तीत्युक्तम् । तन्मतेन बह्वम्पीत्येवं भवति । कस्मात् पुनरत्र ऋक्पूरब्धूःपथामानक्ष इत्यनेनाकारः (५।४।७४) समासान्तो न क्रियत इत्याह तत्र समासान्तो विधिरनित्य इत्यादि । इयञ्च परिभाषा स्फिगपूतवीणाञ्जोध्वकुक्षि सीरनाम नाम चेत्यत्राध्वग्रहणेन (६।२।१८७) ज्ञापिता । यथाध्वग्रहणं ज्ञापकं तथा तत्रैवोक्तम् । नन्वेवमपि बह्वाम्पीति नैव सम्भवति । तथाहि बह्वप् शि इति स्थिते ऽनेन दीर्घत्वं प्राप्नोति । नपुंसकस्य झलच इति(७।१।७२) नुम् च । तत्र कृताकृतप्रसङ्गित्वेन नित्यत्वात् परत्वाच्च नुम् कर्त्तव्यः । तस्मिन् कृत उपधाया अदीर्घभाविनीत्वाद् दीर्घत्वं न प्राप्नोतीत्यत आह नित्यमपि च । चेत्यादि । नित्यमपीत्यपिशब्दात् परमपि । कथं पुनरिष्यमाणं नुममकृत्वा दीर्घत्वं लभ्यते ? वा षपूर्वस्य निगम इत्यतः ( ६।४।९ ) पूर्वग्रहणानुवृत्तेः । तस्यैतदेव प्रयोजनम् । यदन्यत् कार्य्यं प्राप्नोति तदकृत्वा दीर्घत्वमेव पूर्वं कर्त्तव्यमिति । अन्यस्त्वाह नपुंसकस्य झलच इति (७।१।७२) नुम् विधीयते । नपुंसकश्चार्थधर्म्मः । अर्थे च शब्दानुशासनेऽस्मिन् कार्य्याभावान्नपुंसकाभिधायी शब्दो नुम्विधावाश्रयणीयः । तत्र शब्दं गृहीतुं प्रयोगोऽनुगमनीय इति नुमो बहिरङ्गत्वम् । अयन्तु दीर्घः साक्षादप्शब्दमुच्चार्य्य विधीयमानो यथोच्चारितस्यैव क्रियमाणोऽल्पाश्रयत्वादन्तरङ्ग इति पूर्वं दीर्घः प्रवर्त्तते । पश्चान्नुमिति । एतच्चायुक्तम् । अनेन हि न्यायेन बह्वम्पीति न सिध्येत् । एतदपि केचिदिष्यते ।

अस्य च न्यायस्य साधारणत्वादिहापि पूर्वमेव दीर्घत्वेन भवितव्यम्। यथानुमा। पूर्वस्मिंस्तु परिहारे न दोषः। ये हि वहम्मीतीच्छन्ति ते पूर्वग्रहणमिह नानुवर्त्तयन्ति। कर्त्तार इति। तच्छीलादावर्थे तृनिति। ऋतो ङिसर्वनामस्थानयोरिति (७।३।११०) गुणः। जनापवादानिति। द्वितीयान्तस्यानुप्रयोगस्तृन्नन्ततां दर्शयितुम्। तृणो हि प्रयोगे न लोकाव्ययनिष्ठेत्यादिना (२।३।६९) षष्ठ्या प्रतिषिद्धायां द्वितीयैव भवति। एकवचनं नोदाहृतम्। तत्र ऋदुशनःपुरोदंशोऽनेहसाञ्चेत्यनङादेशे (७।१।९४) कृते नोपधायाः (६।४।७) सर्वनामस्थाने चेत्यादिना (६।४।८) दीर्घस्य सिद्धत्वात्। कटस्येति षष्ठ्यन्तस्यानुप्रयोग स्तृचोऽभिव्यक्तये। तस्य प्रयोगे कर्मणि षष्ठी भवति। कर्त्तृकर्मणोः कृतीत्यनेन (२।३।६५)। अथ यथा तुरिष्ठेमेयस्स्वित्यत्र (६।४।१५४) तुरिति तृंस्तृचोर्यत् समानं रूपं तस्यैव ग्रहणं कृतं ननु तयोर्भेदेन तथेहापि किमर्थं न कृतम्? अर्व्वणस्त्रसावनञ (६।४।१२७) इत्यर्वादेशस्य तृग्रव्दस्य ग्रहणं मा भूदित्येवमर्थमिति चेद् नैतत् प्रयोजनम्। अर्थवद्ग्रहणपरिभाषयैव हि तस्य ग्रहणं न भविष्यति। एवं तृंस्तृचोर्भेदेनोपादानमस्याः परिभाषाया अनित्यत्वज्ञापनार्थम्। तेनानिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्तीत्युपपन्नं (प, १७) भवति। अथवा सामान्यनिर्देशे क्वचिद् विशेष एव गृह्यत इति ज्ञापनार्थम्। तेन न कोपधाया इत्यत्र (६।३।३७) सामान्योक्तावपि तद्धितवुसम्बन्ध्येव ककारो गृह्यते। न ककारमात्रम्। अथ नप्त्रादीनां ग्रहणं किमर्थम्? यावता ते हि केचित् तृजन्ता व्युत्पाद्यन्ते केचित् तृन्नन्ताः। तत्र तृंस्तृज्ग्रहणेनैव सिद्धमित्याह नप्त्रादीनामित्यादि। केचिदाचार्य्या नप्त्रादीन्यव्युत्पन्नानि प्रातिपदिकानीच्छन्ति। केचिद् व्युत्पन्नानि। तत्रैषा व्युत्पत्तिः। नप्तेति। नमेस्तृचि मकारस्य पकारो निपात्यते। नेष्टेति। नयतेस्तृचि षुक् च। त्वष्टेति। त्विषेस्तत्रैवाकार उपधाया अनिट्त्वञ्च। चत्तेति। चदेस्तृच्। होतपोतेति। जुहोतेः पुनातेश्च स एव। प्रशास्तेति। शासेः प्रपूर्वाच्छासिचदादिभ्यः (उण्, २।२५०) संज्ञायाञ्चानिट्त्वञ्चेति तृन्ननिट्त्वञ्च। तत्राव्युत्पत्तिपक्षे एषां तृंस्तृजन्तत्वाभावात् तृंस्तृज्ग्रहणेन ग्रहणं न भवतीति

विध्यर्थम् पृथगुपादानम् । व्युत्पत्तिपक्षे तु तृन्तृजन्तादेव सिद्धे नियमार्थम् । एषामेव संज्ञाशब्दानां यथा स्यात् । अन्ये य एवम्भूताः संज्ञाशब्दा स्तेषां मा भूदिति । तेन मातरौ मातर इत्यादौ न भवति । अथ प्रशास्तॄणामित्यत्र केन णत्वम् ? रषाभ्यामित्यादिनेति (८।४।१) चेत् ? न । यस्माद् रषाभ्यामित्युच्यते । न चात्र रषौ स्तः । एवं तर्ह्येष निर्देशो ज्ञापयति यतो विहितं णत्वं ततोऽन्यत्रापि भवतीति । तेन मातॄणां पितॄणां ग्रामणी रथणीरित्यादौ णत्वं सिद्धम्भवति । ततश्च रषाभ्यां णत्व ऋवर्णाच्चेति (८।४।१,१वा) वक्तव्यं न वक्तव्यं भवति ।

## १२ । इन्हन्पूषार्य्यम्णां शौ ।

अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ती-(प, १७) तीन्ग्रहणेन तदन्तं गृह्यते । इतरेभ्योऽपि केवलेभ्यः शिर्न भवतीति । तथाहि हन्निति हन्तेः क्विबन्तस्येदं ग्रहणम् । नच केवलस्य हन्तेः क्विब् दृश्यते । इतरौ तु पुंलिङ्गौ । नपुंसकादुत्तरयोर्जस्शसोःशिर्विधीयते । तस्मात् तैरपि सामर्थ्यात् तदन्तविधि र्विज्ञायत इत्याह इन् हन् पूषन् अर्य्यमन् इत्येवमन्तानामङ्गानामिति । बहुदण्डीनीति । दण्ड एषामस्तीति मत्वर्थीय इनिः । बहवो दण्डिन एषां सन्तीति बहुव्रीहिः । ततो जस्शसौ । तयोश्च पूर्ववच्छिभावः । अनेन दीर्घत्वम् । ननु चेन्निति प्रत्ययग्रहणम् । तत्र प्रत्ययग्रहणे यस्मात् स विहित स्तदादे स्तदन्तस्य च ग्रहणं भवतीति (प, २४) दण्डीनीत्यत्रैव दीर्घत्वेन भवितव्यम् । नतु बहुदण्डीनीत्यत्र । नैतदस्ति । यत्र हि प्रत्ययस्यैव ग्रहणं तत्रैवेयं परिभाषा । नेदं प्रत्ययस्यैव ग्रहणम् । अपितु प्रत्ययाप्रत्यययोः । अन्यथा वाच एषां सन्तीति वाचो ग्मिनिः (५।२।१२४) वाग्ग्मीनि । स्रज एषां सन्तीत्यस्मायामेधास्रजो विनिः (५।२।१२१) स्रग्वीणीत्येवमादौ न स्यात् । तस्मान्नात्रासौ परिभाषोपतिष्ठते । बहुवृत्रहाणीति । वृत्रं हतवन्तो ब्रह्मभ्रूणवृत्रेषु क्विप् (३।२।८७) । बहवो वृत्रहणो येषु तानि बहुवृत्रहाणि । प्रातिपदिकान्तनुमविभक्तिषु चेति (८।४।११) णत्वम् । बहवः पूषणो येषु तानि बहुपूषाणि । बहवोऽर्य्यमणो येषु तानि बह्वर्य्यमाणि । ननु सर्व्वनामस्थाने

चासम्बुद्धावित्यनेन दीर्घत्वं सिद्धम्। तत् किमर्थोऽयमारम्भ इत्यत आह सिद्धे सत्यारम्भ इत्यादि। युक्तोऽस्य नियमार्थ आरम्भः। किन्त्वारभ्यमाणेऽप्येतस्मिन् नियमार्थे भ्रूणहनीत्यत्रानुनासिकस्य क्विझलोःक्ङितीति ( ६।४।१९ ) दीर्घत्वं प्राप्नोत्येव। तथाह्ययं शौ सर्वनामस्थाने नियम आरभ्यते। अत्र यथा विशिष्टायाः प्रकृतेर्नियम आरभ्यमाणः प्रकृत्यन्तरस्य न भवति प्रतामौ प्रताम इति तथा सर्वनामसंज्ञाविशिष्टे शिप्रत्यय आरभ्यमाणः सर्वनामस्थान एव स्यात्। अन्यत्र न स्यात्। तुल्यजातीयापेक्षत्वान्नियमस्य। ततश्चासर्व्वनामस्थाने नियमाभावाद्दीर्घत्वं स्यादेवेत्यत आह दीर्घविधिरित्यादि श्लोकम् (C)। य इह शास्त्र इनन्तादीनां दीर्घत्वविधानं तं विनियम्य तस्य नियमं कृत्वा। क्व विनियम्य ? सुटि। सर्वनामस्थानोपलक्षणमेतत् सुड्ग्रहणम्। सर्वनामस्थानइत्यर्थः। ततः किं कुर्य्यादित्यत आह शौ नियममित्यादि। सर्वनामस्थाने नियमं कृत्वा पुनः शौ नियमं कुर्य्यात्। एवकारोऽवधारणार्थः। सतु भिन्नक्रमः। विदध्यादित्यस्यानन्तरं द्रष्टव्यः। सुविद्वान् सुपण्डितः। कथं पुनरेकेन योगेन द्वौ नियमौ शक्येते कर्त्तुम् ? एवं मन्यते। इमं योगं विभज्य द्वौ योगौ कर्त्तव्याविति। इन्हन्पूषार्य्यम्णामित्येको योगः। ततः शाविति द्वितीयः। सर्वनामग्रहणञ्चात्रानुवर्त्तते। तत्र पूर्वयोगो दीर्घविधिर्य इहेन्प्रभृतीनां तं विधिं विनियम्य सुटीत्यनेन दर्शितः। द्वितीयस्तु शौ नियमं पुनरेव विदध्यादित्यनेन तत्र पूर्वेण योगेन दीर्घत्वं भवेत् सर्वनामस्थाने चासम्बुद्धा इत्यनेन (६।४।८)। अनुनासिकस्य क्विझलोः क्ङितीत्यनेन ( ६।४।१९ ) वा दीर्घत्वं विनियम्यते। इन्प्रभृतीनां सर्वनामस्थान एव दीर्घत्वम्। नान्यत्र। तेन सप्तम्यां दीर्घो न भवति। ब्रह्मणि भ्रूणहनीत्यत्र। द्वितीयेन तु शौ नियम्यते। तत्रापि सर्व्वनामस्थाने शावेव दीर्घो भवति। नान्यत्रेति। तेन बहुवृत्रहाणीत्यत्र भवति। ब्रह्मणौ। ब्रह्मण इत्यत्र न भवति। एवं योगद्वयेन नियमद्वये क्रियमाणे सति योऽर्थः सम्पद्यते तं दर्शयितुमाह भ्रूणहनीति। तथास्य न दुष्येदिति। तथैवं योगद्वये कृते ऽस्य पाणिनेर् भ्रूणहनीत्येतच्छब्दरूपं नैव दुष्येन्नासिद्धत्व-

(C) इदं श्लोकद्वयं वार्त्तिकं कात्यायनवचनं दीर्घच्छन्दसा रचितम्।

दीर्घवद्भवतीत्यर्थः । इतिकरणो हेतौ । यस्मादेवं योगद्वयेन नियमद्वये क्रियमाणे भ्रूणहनीत्येतन्न दुष्येत् तस्माद् दीर्घविधिं यं इन्हन्प्रभृतीनां तं विनियम्य सुटि शौ नियमं सुविद्वान् पुनर्विदध्यात् । द्वितीयस्त्वितिकरणो भ्रूणहनी-त्येतस्य स्वरूपपदार्थकतां द्योतयति । एवं योगद्वयेन भ्रूणहनीत्यत्र दीर्घत्वं परिहृत्यैकस्मिन् योगे परिहर्त्तुमाह शास्मीत्यादि । शास्मि उपदिशामि । तमपरमुपायं येनैकस्मिन् योगे सति भ्रूणहनो भ्रूणहन इति न दुष्यति । नापि भ्रूणहनीत्येतत् । कः पुनरसावुपाय इत्याह निवर्त्त्येत्यादि । सुटीत्येक-योगेन सर्वनामस्थानं लक्ष्यते । सर्वनामस्थानइति यदेतत् प्रकृतं तं निवर्त्त्य । अविशेषइति । नास्य विशेषो विद्यत इत्यविशेषः । तस्मिन्नविशेषेऽनाश्रित-विशेषे प्रत्ययमात्रे शावित्येवं तं नियमं कुरु । एवं वा नियमं कुर्व्वित्यर्थः । वाशब्दः पक्षान्तरत्वमस्य परीहारस्य द्योतयति । अपिशब्दो भ्रूणहनीत्य-त्रापि पक्षान्तर आश्रीयमाणे न दुष्यतीत्यर्थः । कथं पुनर्न दुष्यति ? शावेव दीर्घत्वस्य नियतत्वात् । इन्प्रभृतीनां यदि दीर्घत्वं भवति तदा शावेव प्रत्यये । नान्यत्रेति । निवर्त्त्येत्य सुटीत्यनेन शास्त्रीयस्याधिकारस्य निवृत्तिं दर्शिता । निवृत्ते तु तस्मिन् यदि लौकिकोऽधिकारोऽपेक्षालक्षण आश्रीयते तदा पूर्व्ववद् भ्रूणहनीत्यत्र स्यादेव दीर्घत्वम् । अतो लौकिका-धारनिरासायाहासमीक्ष्येति । सुटीत्यनेनास्य सम्बन्धः । सर्व्वनामस्थान मपेक्ष्येत्यर्थः । एवं सर्वनामस्थानग्रहणनिवृत्तौ ऽनपेक्षिते च प्रत्ययमात्रा-पेक्षया शावित्ययं नियमः प्रत्ययमात्रं नियमयति । नतु तुल्यजातीयं सर्वनाम-स्थानमेव । तेन न केवलमन्यत्र सर्वनामस्थाने दीर्घो न भवत्यपि तु भ्रूण-हनीत्यत्रापि । यदि तर्हि प्रत्ययमात्रमाश्रित्य सर्वनामस्थानविषय मनपेक्ष्य शौ नियम एवं हि सति दीर्घत्वस्य शावेव नियतत्वाद् यथा भ्रूणहनीत्यत्र न भवति तथाचारे अकृत्सार्वधातुकयोर्दीर्घ इति ( ७।४।२५ ) दीर्घत्वं न स्यात् । ततश्च भ्रूणहेवाचरतीति कर्त्तुः क्यङ् सलोपश्चेति (३।१।११) क्यङि विहिते भ्रूणहयत इत्यनिष्टं रूपमापद्येतेत्यत आह दीर्घविधेरित्यादि । नोपधायाः ( ६।४।७ ) इत्यत उपधाग्रहण मनुवर्त्तते । तेन न सर्वस्य दीर्घविधेरयं नियमः । अपि तूपधादीर्घविधेः । नचाकृत्सार्वधातुक-

योरित्युपधादीर्घविधिः ( ७।४।२५ )। किं तर्हि ? अजन्तदीर्घविधिः। तस्मादयमत्र प्रवर्त्तत एव। हन्त यि दीर्घविधौ च न दोष इति यकारादौ प्रत्यये क्वचित् दोषो न भवतीत्यर्थः। हन्तेति निपातो वचनारम्भेऽभिमुखीकरणे वा वर्त्तते। अन्ये तु हन्तियि दीर्घविधौ च न दोष इति पठन्ति। त एवं व्याचक्षते। हन्तेर्यो हन्तियः। पञ्चमीति ( २।१।३७ ) योगविभागात् समासः। तस्मिन् हन्तियि। सप्तम्येकवचनमेतत्। हन्तेर्धातोर्यकारादि यः प्रत्यय इति। तत्र दीर्घविधौ न दोषः। चकारः पूर्वत्र परीहारे वक्ष्यमाणे च। अत एवोपधानियमाद् हन्तेर्यकारादौ प्रत्यये न दोष इत्यस्यार्थस्य द्योतनाय। सम्प्रति सर्वनामस्थानग्रहणेऽनुवर्त्तमाने ऽसति च योगविभागे भ्रूणहनीत्यत्र यथा दीर्घत्वं न भवति तथा तद्दर्शयितु माह सुप्यपि वेत्यादि। वाशब्दोऽत्र पक्षान्तरं द्योतयति। अपिशब्दो भिन्नक्रमः। अप्रकृतप्रतिषेध इत्यस्यानन्तरं द्रष्टव्यः। अत्रापि सुटीत्येतत् सर्व्वनामस्थानोपलक्षणार्थं वेदितव्यम्। नास्य विद्यतेऽवकाशः। व्यावृत्तिविषयो व्यवच्छेद्य इत्यनवकाशः। प्रकृतात् सर्व्वनामस्थानादन्यदप्रकृतम्। सर्वनामस्थानव्यतिरिक्तम् प्रत्ययान्तरमप्रकृतम्। तत्र दीर्घत्वस्य प्रतिषेधोऽप्रकृतप्रतिषेधः। अप्रकृते प्रतिषेधो ऽप्रकृतप्रतिषेधः। सप्तमीति (२।१।४०) योगविभागात् समासः। अप्रकृतप्रतिषेध इति विषयसप्तमीयम्। अयं तावत् पूर्व्वार्द्धस्यावयवार्थः। समुदायार्थस्तूच्यते। अथवानुवर्त्तमानेऽपि सर्वनामस्थानग्रहणे तत्र शावित्यस्य नियमस्य किञ्चिद्व्यावर्त्त्यमस्तीत्यनवकाशः सन् सामर्थ्यादप्रकृतप्रतिषेधेऽपि कर्त्तव्यतया विषयभूते प्रवर्त्तते व्याप्रियते। अपिशब्दादन्यत्रापि सर्वनामस्थाने। कथं पुनरनवकाश इत्याह यस्य हीत्यादि। यस्येति शावित्यपेक्षया षष्ठी। हिशब्दो यस्मादर्थे। द्विविधं हि सर्वनामस्थानम्। सुट् शिश्च। तयोः पूर्वं स्त्रीपुंसयोः सम्बन्धि। न नपुंसकस्य। सुडनपुंसकस्येति (१।१।४३) वचनात्। इतरत् पुनर्नपुंसकस्य। तत एव तस्य विधानात्। तत्र यत्सम्बन्धिनि शौ सर्वनामस्थाने शावित्ययं नियमः क्रियते सुटि नैतत्। सुटि सर्वनामस्थाने परतस्तन्नपुंसकं न भवतीत्यर्थः। अनेन सुटः सर्वनामस्थानस्यानपुंसकसम्बन्धित्वमाख्यातम्। तेन न तत्र

भवेद्विनियम्यम् । यस्मादेवं सुट् सर्वनामस्थानं नपुंसकस्य सम्बन्धि न भवति तेन कारणेन तत्रानपुंसकसम्बन्धिनि सर्वनामस्थाने शावित्यस्य नियमस्य विनियम्यं व्यावर्त्त्यं नास्तीति नपुंसकसम्बन्धिनि हि क्रियमाणो नियमो युक्तः । अनपुंसकसम्बन्धिन्येवास्मिन् सर्वनामस्थाने तुल्यजातीये निवृत्तिं कुर्य्यात् । न च शिव्यतिरिक्तं नपुंसकसम्बन्धि सर्वनामस्थानमस्ति । ततो नास्ति तुल्यजातीये व्यावर्त्तयम् । शौ नियमस्येति तस्यानवकाशत्वम् । तस्मादप्रकृतप्रतिषेधेऽपि व्याप्रियते । हन्तेरनुनासिकस्येत्यादिना कारिकात्रयस्यापि यथाप्रधान मर्थमाचष्टे । तत्र हन्तेरनुनासिकस्येत्यादिना भ्रूणहनीति तथास्य न दुष्येदित्यस्यार्थ आख्यातः । योगविभाग इत्यादिना दीर्घविधि र्य इङ्हेन्प्रभृतीनां तं विनियम्य सुटीत्यस्य । तत्र इत्यादिना शौ नियमं पुनरेव विदध्यादित्यस्य । सर्वनामस्थान इत्यादिना द्वितीयश्लोकपूर्व्वार्द्धस्य । यस्त्वित्यादिनोत्तरार्द्धस्य । अथवेत्यादिना सुव्यपि वा प्रकृतेरनवकाश इत्यस्य । सामर्थ्यादिति । सामर्थ्यमनवकाशत्वम् । अविशेषेण नियम इत्यनेन शौ नियमोऽप्रकृतप्रतिषेध इत्यस्य । अविशेषेणेति सामान्येन न प्रकृत एव । अपितु प्रत्ययमात्र इत्यर्थः । य स्त्वप्रकृतप्रतिषेधार्थतामिवास्य नियमस्य व्याचष्टे तस्यैव तद्वचन मविशेषेणेत्यनेन वृत्तिकारवचनेन विरुध्यते । एवं ह्यविशेषेण नियमो भवति यदि सर्वत्र प्रकृते चाप्रकृते च प्रत्ययमात्रे भवति । अथ तु प्रकृतं परित्यज्याप्रकृत एव स्यात् ततो विशेषे व स्यान्नाविशेषेण । अविशेषेण वास्मिन्नियमे सत्यनेनैव सर्वत्र दीर्घत्वस्य निवर्त्तितत्वात् सौ चेत्ययं योगो (६।४।१४) विध्यर्थो वेदितव्यः । सामर्थ्यादविशेषेण नियम इत्युक्तम् । अतस्तत् सामर्थ्यं दर्शयन् शिशब्दो हीत्यादिना यस्य हि शौ नियम इत्यस्यार्थमाचष्टे । यत्र शिशब्दे नियमः क्रियते स यस्मान्नपुंसकस्य सर्वनामस्थानं न स्त्रीपुंसयोः । नपुंसकादुत्तरयोर्जस्शसोः श्यादेशस्य विधानात् । नच तस्मान्यत् सर्वनामस्थानमस्तीत्यनेन सुटः सर्वनामस्थानस्य नपुंसकसम्बन्धित्वं दर्शयति । इतिकरणो हेतौ । यत एवं नियमो विधीयते नपुंसकसम्बन्धिनि शौ सर्वनामस्थाने तज्जातीय मन्यत् सर्वनामस्थानं हि नास्ति । तस्मात् तुल्यजातीयव्यवच्छेद्यस्याभावादविशेषेण नियमः । सच स्त्वित्यादि । तुशब्दो-

ऽवधारणार्थो भिन्नक्रमश्च नेत्यस्यानन्तरं द्रष्टव्यः। तत्रैतस्मिन्नियमे क्रियमाणे इन्नादीनां नपुंसकस्येतीदं तद्विशेषणं नैवाश्रीयते। अनाश्रीयमाणे च तस्मिन्नयमर्थः सम्पद्यते। इन्नादीनां शावेव दीर्घो भवति। नान्यत्रेति। तेनानपुंसकस्यापि भ्रूणहनीत्यत्र नियमेन व्यावर्त्तितत्वाद् दीर्घो न भवति। यदि नपुंसकस्येतीदं तद् विशेषणं तेषामाश्रीयते ततोऽयमर्थः स्यात्। इन्प्रभृतीनां नपुंसकानां शावेव दीर्घो भवति। नान्यत्रेति। ततश्च नपुंसक एव नियमः स्यात्। तत्र को दोषः? भ्रूणहनि ब्राह्मणकुलइत्यत्रैव दीर्घनिवृत्तिः स्यात्। भ्रूणहनि ब्राह्मणइत्यत्र न स्यात्। तस्मात् तद्दोषपरिजिहीर्षया नपुंसकस्येतीदं तद् विशेषणं नाश्रीयते। यद्येवं यदुक्तमनवकाशः शौ नियम इति तन्नोपपद्यते। अनाश्रिते ह्येतस्मिन् विशेषणे तेषामनाश्रितविशेषणानां नपुंसकानामनपुंसकानाञ्च सम्बन्धिनि शौ सर्वनामस्थाने नियमः स्यात्। तथाभूतानाञ्च तेषामन्यदपि सुट्सर्वनामस्थानमस्त्येव। ततश्च तुल्यजातीयव्यवच्छेदविषये सति कुतो नियमस्यानवकाशत्वम्? नैतदस्ति। नियमविधानवेलायां तेषां नपुंसकत्वं विशेषणं यद्यपि नाश्रीयते तथापि तेषां नपुंसकादेव शेर्विधानान् नपुंसकस्य निमित्तभावः। शेस्तु निमित्तिभाव इति। निमित्तनिमित्तिभावलक्षणेन सम्बन्धेन शेः सर्वनामस्थानस्य नपुंसकसम्बन्धित्वं विद्यत एव। नचान्यन्नपुंसकसम्बन्धि सर्वनामस्थानं विद्यत इत्युपपन्नमेतत्। अनवकाशः शौ नियम इति। ननुचात्र नपुंसकस्येति न प्रकृतम्। नाप्युपात्तम्। ततश्च तदाश्रयणाशङ्का नास्त्येवेति तन्निवृत्तये न युक्तमिदम्। तत्र तु नपुंसकस्येतीदं तन्नाश्रीयत इत्यत आह सर्वनामस्थानसंज्ञाविधाने त्वित्यादि। तुशब्द हेतौ। यतो नपुंसकेनोत्पादितस्य शिशब्दस्य शि सर्वनामस्थानमिति (१।१।४२) सर्वनामस्थानसंज्ञा विधीयते तस्मात् सर्वनामस्थानसंज्ञाविधानं प्रति नपुंसकमिति निमित्तभावमापद्यते। तदेवं निमित्तभावोपगमनं नपुंसकस्य सर्वनामस्थानसंज्ञाविधाने व्यापारः। तस्माद् यत्र शिशब्दः सर्वनामस्थानसंज्ञक स्तत्रावश्यं नपुंसकेनोपस्थातव्यम्। इह तु सर्वनामस्थानग्रहणानुवृत्तेः सर्वनामस्थानसंज्ञकस्य शिशब्दस्य ग्रहणम्। ततो नपुंसकं सामर्थ्यात् सन्निहितम्। तेन सम्बध्यते तदाश्रयणमित्यभिप्रायः।

## १३ । सौ च ।

पूर्वेण नियमेन सौ दीर्घत्वं न प्राप्नोतीति विध्यर्थोऽयमारम्भः । चकार इन्प्रभृतीनामनुकर्षणार्थः ।

## १४ । अत्वसन्तस्य चाधातोः ।

अत्र कृते दीर्घत्वे नुमागमइति । कथं पुनरेतल्लभ्यते ? यावता कृताकृतप्रसङ्गित्वात् परत्वाच्च नुमेव भवितव्यम् पूर्वमित्याह यदि ह्येत्यादि । इह दीर्घग्रहणे नाचश्चेतुग्रपस्थापिते ( १।२।२८ ) सत्यजलक्षणाया उपधाया दीर्घो विधीयते । यदिच परत्वान्नित्यत्वान्नुम् प्राग् विधीयते ऽच उपधात्वं विहन्येत । तस्माद् वचनसामर्थ्याद्दीर्घः प्राग् भवति । ततो नुमागमः । सुपयाः सुयशाः सुस्रोता इति । असुन्निति ( उण्, ४।६२८ ) वर्त्तमाने पिवतेरिच्चेति ( उण्, ४।६२९ )। अशेर्देवने युट् च ( उण्, ४।६३० )। स्रुरिभ्यां तुट् चेति ( उण्, ४।६४१ )। एते यथाक्रम मसुन्प्रत्ययान्तो पयोयशःस्रोतःशब्दा व्युत्पाद्यन्ते । पिण्डग्रसन्नेव इति । ग्रसु ग्लसु अदने । वस आच्छादने । अन्येभ्योपि दृश्यत ( ३।२।१७८ ) इति क्विप् । ननु चार्थवद्ग्रहणपरिभाषयार्थवानेवास्तित्ययं शब्दो गृह्यते यथा मूलोदाहरणेषु । पयःप्रभृतीनामसुन्प्रतययान्तत्वात् प्रतययार्थेनार्थवानसौ । न तथा प्रत्युदाहरणयोः । धात्ववयवस्तत्र दीर्घत्वस्याप्रसङ्गादपार्थकोऽधातोरिति ( १।२।४५ ) प्रतिषेध इत्यत आह अनर्थकोऽपीतयादि। कथमेतल्लभ्यत इतयाह अनिनस्मन्ग्रहणानीतयादि । अथेह कथं दीर्घत्वं गोमन्तमिच्छति गोमतयति । सुप आत्मनः ( ३।१।८ ) क्यच् । गोमतयतेरप्रतययो गोमानिति ? कथञ्च न स्यात् ? अधातोरिति ( १।२।४५ ) प्रतिषेधात् । अस्य सनाद्यन्ता धातव (३।१।३२) इति धातुत्वात् । नैतदस्ति । अधातोरिति ( १।२।४५ ) प्रतिषेध आनन्तर्यादनन्तरस्यैव । नान्तरस्य । अथवा चकारोऽत्र क्रियते । स चानुक्तसमुच्चयार्थः । तेनेह धातोरपि भविष्यति । अथान्तग्रहणं किमर्थम् ? यावताङ्गस्येतयनुवर्त्तते ( ६।४।१ ) । तत्र गृह्यमाणेनातुशब्देनासशब्देन च प्रकृतेऽङ्गे विशिष्यमाणे विशेषणेन च तदन्तविधि र्भवतीतयन्तरेणाप्यन्तग्रहणं तदन्तस्यैव दीर्घत्वं भविष्यतीतयत आह अन्तग्रहण-

मितप्रादि। उपदेशो लक्षणवाक्यानि गणपाठश्च। गणपाठः प्रातिपदिकपाठः। प्रयुज्यत इति प्रयोगः। कर्मणि घञ्। उपदेशे प्रयोग उपदेशप्रयोग इति। सप्तमीति (२।१।४०) योगविभागात् समासः। तदयमस्य वाक्यस्यार्थः। उपदेशे प्रयुज्यते यच्छब्दरूपं तदेकदेशस्याप्यत्वन्तस्य परिग्रहो यथा स्यादित्येवमर्थमन्तग्रहणमिति। कस्य पुनरसत्यन्तग्रहण उपदेशे प्रयोगैकदेशस्य ग्रहणं न स्यात्? यत स्तत्परिग्रहार्थं मन्तग्रहणं क्रियतइत्यत्राह अन्यथा हीत्यादि। किं कारणं न स्यादित्यत्राह उपदेशे रूपनिर्ग्रहहेतावित्यादि। निर्ग्रहणं निर्ग्रहो निश्चय इत्यर्थः। रूपस्य स्वरूपस्य शब्दस्य निर्ग्रहो निश्चयो रूपनिर्ग्रहः। तस्य हेतू रूपनिर्ग्रहहेतुः। उपदेशग्रहणमुपलक्षणमात्रम्। लौकिकोऽपि हि प्रयोगो गृह्यते। उपदेशाद्धि शब्दरूपं निश्चीयते। लौकिकाद्वा प्रयोगात्। मतुप् चायं लौकिके प्रयोगे नात्वन्तः श्रूयते। नाप्युपदेशे। अतो ऽत्वन्ततया नावधार्यते। ततश्चानवधार्यमाणत्वान्न गृह्यते। अन्तग्रहणे च सत्यन्तग्रहणसामर्थ्यादत्वन्तमात्रग्रहणे विज्ञायमाने यो ह्युपदेशे प्रयोगैकदेशभूतस्तस्यापि ग्रहणं भवतीत्युपपद्यते मतुपो ग्रहणम्।

## १५। अनुनासिकस्य क्विझलोः क्ङिति।

क्विप्प्रत्यये परतो झलादौ च क्ङितीति। अत्र क्ङितीत्येतज् झलादावित्यनेनैव सम्बध्यते। नतु क्विप्प्रत्ययेन। यतः सम्भवव्यभिचारे हि विशेष्यविशेषणभावो भवति। कित्त्वङित्त्वयोस्तु सम्भवव्यभिचारावुभावपि झलादौ स्तः। नतु क्वौ। तथाहि कित्त्वस्य क्वावव्यभिचारः। ङित्त्वस्य त्वसम्भवः। प्रशान्। प्रतान्। प्रदानिति। शमु उपशमे। तमु काङ्क्षायाम्। दमु उपशमे। एतेभ्यः प्रपूर्वेभ्यः क्विपि मो नो धातोरिति (८।२।६४) नत्वम्। शंशान्त इति। शमेर्यङ्। द्विर्वचनम्। नुगतोऽनुनासिकान्तस्येति (७।४।८५) नुक्। यङोऽचि चेति (२।४।७४) यङो लुक्। लट्। तस्। तस्य सार्वधातुकमपिदिति (१।२।४) ङित्त्वम्। चर्करीतञ्चेत्यदादौ (ग, सू) पाठाददादित्वाच्छपो लुक्।

१६ । अज्झनगमां सनि ।

उपधाया इति निवृत्तम् । अत एव ह्रस्वावुपधाया इति नोक्तम् । कः पुनस्तदनुवृत्तौ दोषः स्यात् ? व्यञ्जनस्यापि दीर्घत्वं प्रसज्येत । चिकीर्षति तुष्टूषतीत्यत्र हि यथा ऽच इति (१।२।२८) वचनादचो भवति तथोपधाया (६।४।७) इति वचनादनचोऽपि स्यात् । यद्येवं हनिगम्योरप्युपधाया दीर्घत्वं न स्यात् । कस्य तर्हि स्यात् ? अलोऽन्त्यस्येत्यन्त्यस्य (१।१।५२) । नैतदस्ति । अत्र हि दीर्घग्रहणेन यदच (१।२।२८) इत्युपस्थापितं तद्धनिगमिभ्यां विशेषयिष्यामः । अचो दीर्घो भवति स चेद्धनिगम्योरिति । यद्येवमभ्यासस्यापि स्यात् । नैतत् । कृतदीर्घस्यैव द्विर्वचनविधानात् । कुत एतत् ? द्विर्वचनाद् । दीर्घस्य परत्वात् । तुष्टूषतीति । शर्पूर्वाः खयः शेषः (७।४।६१) । चिकीर्षतीति । ऋत इद्धातोरितीत्त्वम् (७।१।१००) । रपरत्वम् । हलि चेति दीर्घः (८।२।७७) । अभ्यासस्य कुहोश्चुरिति (७।४।६२) चुत्वम् । जिघांसतीति अभ्यासाच्चेति (७।३।५५) हन्तेः कुत्वम् । घकारः । अभ्यासस्य पूर्ववच्चुत्वं झकारः । तस्याभ्यासे चर्च इति (८।४।५५) जकारः । अधिजिगांसत इति । इङश्चेतीङो (२।४ ४८) गमिरादेशः । पूर्ववत् सन (१।३।६२) इत्यात्मनेपदम् । सञ्जिगांसत इति । अत्रापि पूर्ववत् सन इति (१।३।६२) तङ् । गमेर्यःसन्नन्तात् समो गम्यृच्छीत्यादिनात्मनेपदं (१।३।२९) विहितम् । इङोऽप्यनुदात्तङित इत्यादिना (१।३।१२) । यदि गमेरिङादेशस्येति वचनं तत् कथं छन्दस्य-निङादेशस्यापि स्वर्गं लोकं समजिगांसदित्यत्र दीर्घत्वं दृश्यत इत्याह छन्दसि यदनिङादेशस्यापीत्यादि । समजिगांसदिति । गमेः सन्नन्ताल्लुङ् । गमेरिट् परस्मैपदेष्वितीडागमो (७।२।५८) न भवति । न वृद्भ्यश्चतुर्भ्य इत्यत्र (७।२।५९) नेति योगविभागात् । इङ्श्चेत्यादिना यदुक्तं गमेरिङादेशस्येति तत् प्रत्याचष्टे । सनीति प्रथमो योगः । हनिगम्योस्तु दीर्घविधानाय हनि-गम्योरिति द्वितीयो योगः कर्तव्य इत्यभिप्रायः । कथं पुनरेतावति योगे क्रियमाणेऽजन्तस्यैव दीर्घत्वं सिध्यतीत्यत आह तत्रेत्यादि । गृह्यमाणस्येति । कृद्योगे कर्मणि षष्ठी । विशेषण इति भावे ल्युट् । विशेषण मनजन्तव्य-वच्छेदाय । यत्र ह्रस्वदीर्घप्लुताः शिष्यन्ते तत्राचस्त्वेतदुपतिष्ठते (१।२।२८)

तत्राङ्गस्य दीर्घो भवति। किं विशिष्टस्याचः ? एवमचा गृह्यमाणस्याङ्गस्य विशेषणे व्यवच्छेदे सति विनाप्यज् ग्रहणेनान्तस्यैव दीर्घत्वं सिद्धम्। यथा-कृत्सार्वधातुकयोरित्यत्र (७।४।२५)। तस्मादपार्थकत्वान्न कर्त्तव्यमेव। किमर्थं तर्हि क्रियत इत्याह तत् क्रियत इत्यादि। प्रवर्त्तनं प्रवृत्ति र्व्यापारः। तस्य भेदो नानात्वम्। प्रवृत्तिभेदस्यैकस्यां सत्यामावृत्तौ न सम्भवतीत्यावृत्तिरभ्युप-गन्तव्या। ननु चाचश्चेत्यस्योपस्थाने (१।२।२८) सति द्वे अजग्रहणे भवत इति किमित्यावृत्तिराश्रीयते। नैतदस्ति। असति ह्यज्ग्रहणे ऽचश्चेत्यस्योपस्थानं (१।२।२८) भवति। अत्राज्ग्रहणे तु सति निर्दिष्टस्थानिकत्वादचश्चेत्येतद् (१।२।२८) नोपतिष्ठते यथाचो ञ्णितीत्यत्रेक्परिभाषा (७।२।११५)। अजन्तस्याङ्गस्येत्यादिना प्रवृत्तिभेदेनाङ्गमचा गमिश्च विशेषयति। ततो न वक्तव्यमिदमिति। अज्ग्रहणेनैवैतत्। प्रतिपाद्यस्यार्थस्यासिद्धत्वात्। नन्वीङा-देशं मुक्त्वाऽन्यो गमिरचःस्थाने सम्भवति।

## १७। तनोतेर्विभाषा।

तनोतेरुपसंख्यानादिति। तनिपतिदरिद्राणामित्यस्मात् (७।२।४९, वा)। श्तिपानिर्देशो यङ्लुङ्निवृत्त्यर्थः। प्रकृतिग्रहणपरिभाषया (प,१०१) तदन्तादपि विकल्पः सम्भवेत्। तन्तंसति।

## १८। क्रमश्च क्त्वि।

अनुनासिकस्य क्विझलोरित्यादिना (६।४।१५) नित्ये प्राप्ते विकल्पार्थं वचनम्। उपधाया इति। कुत एतत् ? अचश्चेत्यस्योपस्थानात् (१।२।२८)। उपधाया एव क्रमोऽच्त्वात्। क्रमित्वेति। उदितो वेति (७।२।५६) पक्ष इडागमः। प्रक्रम्येति। समासेऽनञ्पूर्वे क्त्वो ल्यप्। ननु दीर्घत्वं क्त्वाप्रत्यय-मपेक्षत इत्यन्तरङ्गम्। ल्यबादेशस्त्वनेकपदाश्रयत्वात् समासमपेक्षमाणो बहिरङ्गो भवति। तत्रान्तरङ्गत्वाल्ल्यबादेशात् प्रागेव झलादौ दीर्घत्वं कस्मान्न भवतीत्याह बहिरङ्गोऽपीत्यादि। अदो जग्धिर्ल्यप् ति कितीत्यत्र (२।४।३६) ज्ञापितमेतत्। बहिरङ्गो ल्यबादेशोऽन्तरङ्गान् विधीन् बाधत इति।

१९। च्छ्वोः शूडनुनासिके च।

यदि केवलस्य च्छकारमात्रस्य ग्रहणं क्रियेत तदा प्रच्छ ज्ञीप्सायामित्यस्य नङ्प्रत्यये कृते ऽन्तरङ्गत्वाच्छे चेति तुकि (६।१।७३) कृते छकारमात्रस्य शकारादेशे कृते प्रट्श्न इत्यनिष्टं रूपं स्यात्। सतुकस्य ग्रहणे तु सति स्थान्यन्तर्भावात् तुगप्यादेशेन निवर्त्यते इति न भवत्येष दोषप्रसङ्ग इत्येतदालोच्य सतुकस्य ग्रहणमिति दर्शयितुमाह च्छ इत्येतस्य सतुकस्येति। सतुकस्य ग्रहणं यजयाचयतविच्छप्रच्छरक्षो नङिति (३।३।९०) ङित्करणादवगम्यते। तस्य हि ङित्करणस्यैतत् प्रयोजनम्। विश्न इत्यत्र पुगन्तलघूपधस्येति (७।३।८६) गुणो मा भूदिति। यदि चात्र तुग्रहितः केवल एवच्छकारः स्थानित्वेन परिगृह्यते तदा तुकि कृते छकारमात्रस्य सकारे कृते गुरूपधत्वादेव गुणो न भविष्यतीति ङित्करणमनर्थकं स्यात्। सतुकस्य तु ग्रहणे कृते तुकि सतुकस्यैव शकारादेशः क्रियते। ततश्च लघ्व्या मुपधायां समुपजातायां गुणः प्राप्नोतीति तत्प्रतिषेधार्थं ङित्करणं क्रियमाण मर्थवद्भवतीत्येके वर्णयन्ति। एतच्चायुक्तम्। सतुकस्याप्यादेशे कृते निष्ठित मङ्गं भवति। प्रयोगार्हत्वात्। तत्राङ्गवृत्ते पुनरङ्गवृत्तावविधिर्निष्ठितस्येत्यनया (प, ९३) परिभाषया गुणो न भविष्यतीति। तस्मात् सतुकस्याप्यादेशे क्रियमाणे सति ङित्करण मपार्थक मेव। कथं तेन सतुकस्य ग्रहणमवसीयते? एवं तर्हि नशो प्रष्टप्रतिवचन इति (३।२।१२०) निर्देशात् सतुकस्य ग्रहण मवसीयते। तुग्रहितस्य ग्रहणे प्रट्ष्टेत्येवं भवितव्यं यथोक्तं प्राक्। नङस्तु ङित्करणमनित्यमागमशासन मिति ज्ञापनार्थम्। अनित्यत्वे हि तस्य यदा तुगभाव स्तदाऽसति ङित्करणे गुणः प्रसज्येत। ननु चासति प्रयोजने ज्ञापकं भवति। अस्ति च तस्य ङित्करणस्य प्रयोजनम्। किं तत्? ग्रह्यादिसूत्रेण (६।१।१५) प्रच्छेः संप्रसारणं यथा स्यादिति। नैतदस्ति। नहि प्रच्छेर्नङि संप्रसारणमिष्यते। कथमेतज् ज्ञायते? प्रश्ने चासन्नकाल इति (३।२।११७) निर्देशात्। तदेतन् ङित्करणमनित्यमागमशासनमित्यस्य (प, ९५) ज्ञापकमेव। अथतु सतुकस्यापि ग्रहणे कथं सतुकस्यादेशो भवति? यावताऽलोऽन्त्यस्येति (१।१।५२)

वचनादङ्गस्यैव स्यात्? नैतदस्ति। सतुकस्य ग्रहणसामर्थ्यान्न भविष्यति। एवमपि तदन्तस्याङ्गस्य स्यात्। निर्दिश्यमानस्यादेशा भवन्तीति (प, १२) तदन्तस्य न भविष्यति। प्रश्नो विश्न इति। प्रच्छ ज्ञीप्सायाम्। विच्छ गतौ। यजयाचेति (३।३।९०) नङ्। अन्तरङ्गत्वादित्यादि। छे चेति (६।१।७३) ह्रस्वस्य वर्णस्य तुग् विधीयत इति वर्णाश्रयत्वात् तुगन्तरङ्गः। शकारस्त्वङ्गाश्रयः। तत्राङ्गस्यैव तावत् प्रत्ययाश्रयत्वाद्बहिरङ्गत्वम्। किं पुनस्तदाश्रयस्य शकारस्य? ननु च वार्णादाङ्गं बलीय इति (प, ५६) शकारस्यैव बलीयस्त्वम्। नैतदस्ति। यत्र ह्याङ्गवार्णयोर्युगपदेकनिमित्तमाश्रित्य प्राप्तिस्तत्रास्या उपस्थानम् भवति। यथेयायेत्यत्र हि यमेवाकारमाश्रित्येको यणचीत्यभ्यासेकारस्य (६।१।७७) यणादेशः प्राप्नोति तमेवाकारमाश्रित्याभ्यासस्यासवर्णे इतीयङपि (६।४।७८)। तत्र युगपदेकत्रोभयप्राप्तौ वार्णादाङ्गं बलीय इत्यस्या उपस्थाने सत्यङ्गकार्य्यमियङेव भवति। इह तु प्रागेव नङुत्पत्तेश्छकारमाश्रित्य तुक् प्राप्नोति। उत्तरकालं नङि विहिते तदाश्रयः शकार इति भिन्नाश्रयत्वम्। अतो नैयमुपतिष्ठते। सिवेरिति। षिवु तन्तुसन्ताने इत्यस्य। औणादिके नप्रत्यय इति। धापॄवस्यज्यतिभ्यो नइति (उण् ३।२८६) वादिभ्यो विधीयमानो नप्रत्ययो बहुलवचनात् सिवेरपि भवति। केनचित् सिवे ष्ठेर्यू चेत्यनेन (उण् ३।२८९) स्यूनशब्दस्य व्युत्पत्तये नकारो विधीयते। दीर्घोच्चारणसामर्थ्यात्। तत्र गुणो न भवति। ये तु स्योनशब्दव्युत्पत्तय एवेदं सूत्रं वर्णयन्ति तेषां दीर्घोच्चारणमनर्थकं स्यात्। नहि ह्रस्वस्य दीर्घस्य वा गुणे कृते कश्चिद् विशेषोऽस्ति। लघूपधगुणात् पूर्वमूट् क्रियत इति। अन्तरङ्गत्वादिति। वक्ष्यमाणो हेतुरिहापि द्रष्टव्यः। गुणो ह्यार्धधातुकमङ्गसम्बन्धिनीञ्चोपधां लघ्वीमिग्लक्षणां विशिष्टामेवाश्रयति। ऊडादेशस्त्वनुनासिकादिं प्रत्ययमङ्गसम्बन्धिताविशिष्टं वकारमात्रम्। तस्माद् गुणो बहिरङ्गः। ऊडादेशस्त्वन्तरङ्गः। अतोऽन्तरङ्गत्वाल्लघूपधगुणात् पूर्वमेवोट् क्रियते। तत्र कृतेऽन्तरङ्गत्वाद् यणादेश इति लघूपधगुणात् पूर्वं क्रियत इति प्रकृतेन सम्बन्धः। अन्तरङ्गत्वन्तु वर्णाश्रयत्वाद् यणादेशस्य। ननु च वार्णादाङ्गं बलीय इत्याङ्गस्य गुणस्यैव बलीयस्त्वम्। ततः स एव यणादेशात् पूर्वं कस्मान्न क्रियत

इत्याह नानाश्रयत्वादित्यादि । यत्र ह्युभावप्याङ्गवार्णौ विधी एकं निमित्तमाश्रित्य प्राप्नुत स्तत्रेयमुपतिष्ठत इत्युक्तम् । इह तु यणादेश जङ्गाश्रयो गुणस्त्वार्धधातुकाश्रय इति भिन्नाश्रयत्वम् । अतो नेयं परिभाषोपतिष्ठते । शब्दप्राड़िति । शब्दं पृच्छतीति क्विब् वचीत्यादिना (३।२।१७८ वा) क्विप् । दीर्घश्च । व्रश्चादिसूत्रेण (८।२।३६) शकारस्य षकारः । तस्यापि जश्त्वं डकारः । तस्यापि चर्त्वं टकारः । गोविड़िति । विच्छ गतौ । गां विच्छतीति क्विप् (D) । क्विप् चेत्यनेन (३।२।७६) । तथाच्च्यूर्ध्विंरखष्ठूरित्यत्रापि दिविष्ठिविभ्याम् । ननु च यणादेशोऽन्तरङ्गो वर्णाश्रयत्वात् । जङादेशस्तु प्रत्ययाश्रयत्वाद्बहिरङ्गः । ततासिद्धं बहिरङ्गमन्तरङ्ग (प,५१) । इति यणादेशेनात्र न भवितव्य मित्यतआह असिद्धं बहिरङ्गमन्तरङ्ग इत्यादि । अत्र द्वयोरचोरानन्तर्य्यं तत्रैषा प्रतिषिध्यते नाजानन्तर्य्ये बहिष्ट्वप्रक्लृप्तिरिति (प,५२) । अस्या अयमर्थः । अचोरानन्तर्य्ये सति बहिरङ्गपरिभाषा न प्रकल्प्यते न भवतीत्यर्थः । अत्रार्थे ज्ञापकं षत्वतुकोरसिद्ध इति (६।१।८६) तुकि कर्त्तव्येऽसिद्धवचनम् । तस्य ह्येतदेव प्रयोजनम् अधीत्येत्यत्र सवर्णदीर्घस्यासिद्धत्वाद् ह्रस्वलक्षणस्तुग् यथा स्यादिति । यदि चाचोरानन्तर्य्ये बहिरङ्गपरिभाषा स्यात् तदैकपदाश्रयत्वादन्तरङ्गे तुकि कर्त्तव्ये पदद्वयाश्रयत्वाद्बहिरङ्गस्यैकादेशस्यासिद्धत्वं भविष्यतीति किमसिद्धवचनेन ? तत् क्रियतेऽजानन्तर्य्ये बहिरङ्गपरिभाषा नास्तीति ज्ञापनार्थम् । हिरखष्ठूरित्यत्र धात्वादेः षः स इति (६।१।६४) सत्वं न भवति । सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्य (६।१।६४ वा) इति वचनात् । पृष्ट इति । ग्रह्यादिसूत्रेण (६।१।१६) संप्रसारणम् । पूर्ववत् षत्वं ष्टुत्वञ्च । द्युभ्यामिति । दिवउदित्युत्वम् (६।१।१३१) । ये ऽत्र कृङितीति नानुवर्त्तयन्ति तेषामन्यत्राप्यनेन विधिना भवितव्यम् । ततः द्युभ्यां द्युभिरिति न सिध्यतीति मन्यमान आह कथं

---

(D) कथं न विच्छायतीति ? गुपूधूपविच्छिपणिपनिभ्य आय (३।१।२८) इत्यायप्रत्ययः ? अत्र मैत्रेयरक्षितः "विच्छ गतौ । विच्छायति । विच्छेस्तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि शो भवति । यथा जुगुप्सत इत्यात्मनेपदम् । एकदेशपाठात् । अन्ये तत्र पाठसामर्थ्येन सार्वधातुकेऽप्यायप्रत्ययस्य विकल्पविधानमाचक्षते । तथाच ह्योः मूड़नुनासिके चेत्यत्र गां विच्छतीति गोविड़िति न्यासे दृश्यते । एवञ्च विच्छति विच्छायति । विविच्छ विच्छायाञ्चकार ।"—( धातुप्रदीपे ) ।

खुभ्यां खुभिरिति ? ऊठि कृत इति। ऊठि कृते न किञ्चित् सिध्यतीत्यर्थः। दिवउदिति (६।१।१३१) तपरत्वान् मात्राकालो भविष्यतीति। दिव उदित्यत्र (६।१।१३१) तपरकरणं न कर्त्तव्यम्। यद्यपि हि भाव्यमान उकारः सवर्णान् गृह्णाति (प,२१) तथाप्यान्तरतम्यादर्द्धमात्राकालस्य व्यञ्जनस्य मात्राकाल एवोकारो भविष्यति। न दीर्घ इति किं तन्निवृत्त्यर्थेन तपरकरणेन ? तत् क्रियते लक्षणान्तरेणापि यो दीर्घः प्राप्नोति स मा भूदित्येवमर्थम्। तेनात्र दिव उदित्यनेनैव (६।१।१३१) तपरत्वान्मात्राकालो भविष्यति। अन्यथा यदि च्छ्वोः शूडनुनासिके चेत्यनेन दीर्घः स्यात् ततो निष्फलं दिवउदित्यत्र (६।१।१३१) तपरकरणं स्यात्। व्यावर्त्त्याभावात्। अथवोठि कृत इत्युत्तरेण परिहारग्रन्थेन सम्बध्यते। तत्रायमर्थः क्रियतां नाम सामान्येन क्ङिति चाक्ङिति चोट्। कृतेऽपि तत्रैकदेशविकृतमनन्यवद्भवतीति (प,३८) तस्यैव स्थाने दिवउदित्यनेन (६।१।१३१) तपरत्वाद् ह्रस्वो भविष्यति। एतदेव हि तस्य प्रयोजनम्। ऊट्स्थाने भवन् मात्रिको यथा स्यात्। आन्तरतम्याद्दीर्घो मा भूदिति। अस्मिंश्च व्याख्याने यदुक्तं दिवउदिति (६।१।१३१) तपरकरणमूठो निवृत्त्यर्थं दुभ्यां द्युभिरित्यत्र परत्वादूट् प्राप्नोतीति तद्विरुध्यते। नहि तेनोत्त्वस्योठः स्थान्यादेशभाव उपपद्यते। किं तर्हि ? बाध्यबाधकभावः। तथाहि तस्यायमर्थो वर्ण्यते। ऊठो निवृत्त्यर्थं बाधनार्थं तपरकरणम्। असति हि तस्मिन् परत्वादूट् प्राप्नोति। तस्मात् तद्बाधनार्थं तपरकरणम्। परमप्यूठं बाधित्वाऽनेनैव मात्रिक उकारो यथा स्यादिति नास्ति विरोधः। ये हि स्थान्यादेशभावमिच्छन्ति त एवं ग्रन्थं व्याचक्षत। ऊठो निवृत्त्यर्थं स्थानिभूतस्योठो निवृत्त्यर्थमित्यर्थः। ऊडादेशे कृत ऊट्स्थितिमतो निवृत्तिर्यथा स्यादित्येवमर्थं तपरकरणमित्यर्थः। परत्वादूट् प्राप्नोतीत्यत्र विहितस्य श्रुतिमानित्यध्याहार्य्यम्। तदेतदुक्तं भवति। अत्र हि परत्वादूड् विहितः सन् श्रुतिमानेव प्राप्नोति। निवृत्तिमांश्चेष्यते। तस्मात् तस्य निवृत्तये तपरत्वमिति। अतपरेऽप्यादेशे विधीयमाने सत्यूठो निवृत्तिर्भवत्येव। निवृत्तिधर्मत्वात् स्थानिनः। उच्यते चेदं तपरकरणमूठो निवृत्त्यर्थमिति। तत्र वचनसामर्थ्याद् यस्यां निवृत्तौ सत्यां विशेषो भवति तदर्थं तपरकरण-

मिति विज्ञायते । ततश्च सामर्थ्यादिदमुक्तं भवतूठो ऽस्वादेशार्थं तपरकरण-मिति । यतस्तपर आदेशे सतूठो या निवृत्तिः क्रियते तस्यां सत्यां विशेषो भवति । नातपरे । अतपरे ह्यादेशे सत्यान्तरतमत्वाद्दीर्घस्य दीर्घ एव स्यादिति कुतो विशेषः ? किं पुन क्ङिद्ग्रहणे निवृत्ते सतीष्टं सिध्यति ? यदर्थं केचिदत्र क्ङितीति नानुवर्त्तयन्तीत्याह छ्शां ष (८।२।३६) इत्यत्रेत्यादि । क्ङिद्ग्रहणे निवृत्ते सत्यविशेषेण क्ङिति चाक्ङिति चानेन च्छकारस्य शकारो विधीयते । तेन व्रश्चादिसूत्रे (८।२।३६) छग्रहणं न कर्त्तव्यं भवेत् । शकारस्य षत्वविधानेनैव सर्वस्य लक्षणसिद्धत्वात् । ये तु क्ङिद्ग्रहणमनु वर्त्तयन्ति तेषां तृजादौ षत्वस्याभावाच्छकारस्य षत्वविधानार्थं व्रश्चादिसूत्रे (८।२।३६) छग्रहणं कर्त्तव्यमेव । अथ तेषां कथं प्रष्टेति सिध्यति ? यावता तुकि कृते छकारमात्रस्य षत्वे प्रट्ष्टेत्यनिष्टं रूपं प्राप्नोति । नैष दोषः । ते हि व्रश्चादिसूत्रे (८।२।३६) सतुक्कस्य च्छकारस्य ग्रहणमिच्छन्ति । जङ्वं यदि टित् स्यादाद्यन्तौ टकितौ (१।१।४६) इत्यादौ स्यात् । तत्र यद्यपि वकारस्य वलि लोपे कृते सत्यचच्छूरित्यादि सिध्यति । जूरित्यादि तु न सिध्येत् । टित्त्वे हि सति ज्वरत्वरादिसूत्रेणेको (६।४।२०) वकारात् पूर्वमूडपरोऽकारा-दिति द्वावूठौ स्याताम् । तस्मादूठष्ठित्त्वमङ्गीकर्त्तव्यम् । न टित्त्वम् । तस्यापि ठित्त्वस्य यदि प्रयोजनं न स्याद् वैयर्थ्यं स्यादित्येतच् चेतसि कृत्वोठादेशस्य यत् ठित्त्वं तस्य प्रयोजनं दर्शयितु माह जठष्ठित्करणमित्यादि । एवं ब्रुवतेत्येधत्यूट्स्वित्यत्रापि (६।१।८९) ठित एव ग्रहणं भवति । एवं ह्यूठष्ठित्-करणस्य विशेषणार्थतोपपद्यते । यदि तत्रापि ठित एव ग्रहणं भवति । नान्यथा । यद्यत्र ठकारोऽनुबन्धो न क्रियते तदेत्येधत्यूट्स्वित्यत्रापि (६।१।८९) न कर्त्तव्यम् । ठकारानुबन्धवत ऊकारस्य क्वचिदसम्भवात् । एवञ्चोच्यमाने प्रजवते प्रोहत इत्यत्रापि वृद्धिः स्यात् । तस्माद् विशेषणार्थं ठित्करणं क्रियते । ठकारस्य तु श्रवणं न भवति । कृतचत्वंस्य निर्देशात् । यदि तर्हि ठिदयम् एत्येधत्यूट्स्वित्यत्रापि (६।१।८९) ठित एव ग्रहणम् । एवं सति वाह ऊड्त्यस्य (६।४।१३२) तत्र ग्रहणं न स्यात् । ततश्च प्रष्ठौह इत्यत्र वृद्धिर्न स्यादित्यत आह वाह (६।४।१३२) ऊडित्ययमपीत्यादि । ठकारस्यापि पूर्ववदेवाश्रवणम् ॥

२० । ज्वरत्वरस्रिव्यविमवामुपधायाश्च ।

स्रिव्यविमवां वकारस्य पूर्वेणैव सिद्धम् । उपधायास्तु न सिध्यतीति तदर्थमेषां ग्रहणम् । ज्वरत्वरोस्तु वकारस्यापि पूर्वेण न सिध्यति । अनयोरकारेकाभ्यां झलादेः क्विपश्च व्यवधानात् । तस्मात् तयोर्वकारार्थमुपधार्थञ्च ग्रहणम् । जूः जुरौ जुर इति । ज्वर रोगे । क्विप् । वकारस्योपधायाश्चोठि कृते संप्रसारणाच्चेति (६।१।१०८) पूर्वरूपत्वम् । जूर्त्तिरिति । क्तिन् । तूरिति । ञित्वरा संभ्रमे । तूर्ण इति । रदाभ्यां निष्ठातो न इति (८।२ ४२) नत्वम् । स्रूरिति । स्रिवु गतिशोषणयोः । सवर्णदीर्घः । स्रुवौ । स्रुव इति । अचि श्नुधात्वित्यादिनोवङ् (७।४।७७) । ऊरिति । अव रक्षणे । मूरिति । मव बन्धने । इह ज्वरादिसम्बन्धिन्या उपधाया ऊठ् विधीयते । उपधा चालोऽन्त्यात् पूर्वो वर्णः । अन्त्यत्वञ्चापेक्षितम् । तत्र यथा श्रेयान् श्रेयांसावित्यत्र सकारात् पूर्वे ये वर्णा स्तेषामन्त्यो यो नकार स्तस्मात् पूर्वो वर्ण उपधा तथा ज्वरादीनामपि यौ पूर्वौ वर्णौ तयोर्योऽन्त्यो वर्ण स्तस्मात् पूर्व उपधा । सा च ज्वरादीनां सम्बन्धिनी । तदवयवत्वात् । ततश्च तस्या अप्युपधाया ऊठा भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात् । अतस्तां निराकर्त्तुं यस्या उपधाया ऊठा भवितव्यं तां दर्शयितुमाह ज्वरत्वरो रुपधावकारात् परेत्यादि । यस्या उपधाया ऊठा भवितव्यं सेहोपधाशब्देन विवक्षिता । किं पुनः कारणमस्या वृत्तिकारोपदर्शिताया उपधाया ऊठ् भवति ? नान्यस्याः ? क्विझलभ्यां क्ङिता चोपधाविशेषणात् । अत्र क्विप्प्रत्ययेन झलादिना क्ङिता चोपधा विशिष्यते । ज्वरादीनां योपधा क्वौ झलादौ च परत स्तस्या उपधाया ऊठ् भवतीति । अत्र येन नाव्यवधानं तेन व्यवहितेऽपीत्यादिना यत्रैकेन वर्णेन व्यवधानं वृत्तिकारेणोक्ताया उपधायाः सम्भवति तस्या एवोठ् भवति । नान्यस्याः ।

२१ । राल्लोपः ।

मूर्च्छेति । मुर्छा मोहसमुच्छ्राययोः । हूर्च्छेति । हुर्छा कौटिल्ये । कथं पुनरत्र च्छकारलोपो भवति ? यावता नात्र सूत्रे छकार उपात्तः ।

योऽपि प्रकृतः सोपि सतुकः। नात्र तुगस्ति। नहि रेफस्य च्छे क्वचित् तुग् विहित इत्याह राल्लोपे सतुकस्येत्यादि। उत्तरत्रानुवृत्तिर्यथा स्यादिति। पूर्व्वसूत्रे च्छकारस्य स्वरितत्वं प्रतिज्ञातम्। नच रः परः सतुकः सम्भवति। तत्र सामर्थ्यात् तुग्रहित एवानुवर्त्तते। अथवा पूर्वसूत्रे द्विच्छकारनिर्देशः। तत्रैकः सतुकः। परस्तुग्रहितः। सम्भवति चागमशासनस्यानित्यत्वाद्वा तुग्रहितश्छकारः। एवञ्च कृत्वा यदुक्तं नङो ङित्वं गुणप्रतिषेधार्थमिति तदुपपन्नं भवति। तदेवं यद्यपि पूर्व्वसूत्रे छकारौ प्रकृतौ तथापि रेफात् परः सतुको न सम्भवति। केवलो यस्तुग्रहितः स एवानुवर्त्तते। तूः। धूरिति। तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः।

## २२। असिद्धवदत्रा भात्।

असिद्धवद् भवतीत्येवं वेदितव्यमिति। सिद्धशब्दोऽयं परिनिष्पन्नवचनः। यथा सिद्ध ओदन इति। न सिद्धमसिद्धम्। सिद्धकार्य्याकरणसाधर्म्येणा-सिद्धेन तुल्यं वर्त्तत इत्यसिद्धवत्। किं पुनस्तत्? प्राधान्यात् कार्य्य-मित्येके। शास्त्रं हि कार्य्यार्थम्। अतः शास्त्रापेक्षया कार्य्यस्य प्राधान्यम्। व्याप्तेर्न्यायात्। शास्त्रमित्यन्ये। शास्त्रस्यासिद्धत्वे हि कार्य्यस्याप्यसिद्धत्वं लभ्यते। शास्त्रनिमित्तकत्वात् कार्य्यस्य। आ भादिति। शास्त्रस्यावधि-त्वेनोपादानाच्च शास्त्रस्यासिद्धवद्भावो युक्तः। अन्यथा हि कार्य्यमेव किञ्चिद-वधित्वेनोपादीयेत। अथाभाद्ग्रहणं किमर्थम्? यावता स्वरितलिङ्गासङ्गा-दन्तरेणाप्याभाद्ग्रहणमा पादपरिसमाप्तेरसिद्धवदित्यनुवर्त्तिष्यत इत्याह आभादिति विषयनिर्देश इति। असति ह्याभाद्ग्रहणे न ज्ञायते कस्मिन् कर्त्तव्य इदं प्रकरण मसिद्धवद्भवति। तस्मादा भादिति विषयनिर्देशः क्रियत आ भसंशब्दनाद् यद् वक्ष्यते तस्मिन् कर्त्तव्यतया विषयभूतेऽसिद्धवद्भवतीत्य-स्यार्थस्य परिज्ञानाय। यदेवमत्रेत्येतदपार्थकमेतद्विषयनिर्देशार्थं क्रियते। स च विषय आ भादित्यनेनैव निर्दिष्टइत्यत आह अत्रेत्यादि। समान एक आश्रयो निमित्तं यस्य तत् समानाश्रयम्। तस्य भावः समानाश्रयत्वम्। तस्य प्रसिद्धये परिज्ञानायात्रग्रहणं। तच्चेतदत्रेति भवतीति वाक्यशेषः।

तदित्यनेन यस्यासिद्धवद्भावो विधीयते तन्निर्दिश्यते। अत्रेत्यनेनापि यत्र ततोऽन्यदाभाच्छास्त्रीयं विधीयते तत् तदाश्रयमेव भवतीति। असिद्धवदिति वक्ष्यमाणेनाभिसम्बध्यते। तदित्यनेन यत्रा भाच्छास्त्रीयं विधीयते तस्य परामर्शः। स आश्रयो निमित्तं यस्य तत् तदाश्रयम्। एवकारोऽवधारणार्थः। तदेवासिद्धवद्भवतीतियावत्। व्याश्रयस्तु नासिद्धवद्भवतीति। एवकारेण यद्व्यवच्छिन्नं तद् दर्शयति। यत्र तदाभाच्छास्त्रीयं कार्य्यं विधीयते ततो भिन्नोऽर्थान्तरभूत आश्रयो यस्य तत् तथोच्यत इत्यर्थं इति। इतिकरणेनानन्तरं व्याख्यातोऽर्थः प्रत्यवमृश्यते। अत्रग्रहणे समानाश्रयत्वप्रसिद्ध्यर्थे सतिएषोऽस्य सूत्रस्यार्थः सम्पद्यत इति यावत्। किमर्थं पुनरसिद्धवद्भवतीत्यत आह असिद्धवचनमित्यादि। उत्सर्गशब्देन स्थान्यत्रोपदिश्यते। उत्सृज्यत आदेशेन निवर्त्त्यत इति कृत्वा। उत्सर्गसाधर्म्याद्वोत्सर्गः। यथा ह्युत्सर्गस्य सामान्येन प्रवृत्तस्य सतः कुतश्चिद्विशेषान्निवृत्तिर्भवत्येवं स्थानिनोऽप्यादेशात्। उत्सर्गो लक्षणं निमित्तं यस्य तदुत्सर्गलक्षणम्। आदेशो लक्षणं निमित्तं यस्य तदादेशलक्षणम्। तयो र्यथाक्रमं भावप्रतिषेधौ यथा स्याताम् इत्येवमर्थमसिद्धवदित्येतद्वचनम्। एधि शाधीति। उत्सर्गलक्षणभावस्योदाहरणम्। अस भुवि। शास अनुशिष्टौ। लोट् सिप्। सेर्ह्यपिच्चेति ( ३।४।८७ ) हिरादेशः। अदादित्वाच्छपो लुक्। श्नसोरल्लोप ( ६।४।१११ ) इत्यकारलोपः। परत्वान्नित्यत्वाच्च धिभावात् पूर्वं घ्वसोरेद्धावभ्यासलोपश्चेत्येत्त्वम्। शासेरपि नित्यत्वाच्छा हाविति शादेशः (६।४।३५)। पूर्वं धिभावात् तयोरेत्त्वशाभावयोर् हुझल्भ्यो हेर्धिरिति ( ६।४।१०१ ) झलन्तलक्षणं धित्वं न प्राप्नोति। निमित्ताभावात्। असिद्धत्वाद्भवति। आगहि जहीति। आदेशलक्षणप्रतिषेधस्योदाहरणम्। आगहीति। गमेराङ्पूर्वाल्लोट्सिप्। तस्य हिरादेशः। बहुलञ्छन्दसीति ( २।४।७६ ) शपो लुक्। अनुदात्तोपदेशेत्यादिनानुनासिकलोपः (६।४।३७)। जहीति। हन्तेर्लोडादि पूर्ववत्। अदादित्वाच्छपो लुक्। हन्तेर्जइति ( ६।४।३६ ) जभावः। अत्रेदानीमनुनासिकलोपजादेशयोरुत्तरकालमतो हेरिति ( ६।४।१०५ ) हेर्लोपः प्राप्नोति। असिद्धत्वान्न भवति। अभाजीति। भन्जो आमर्दने। लुङ्। कर्मण्या-

त्मनेपदम्। चिण् भावकर्म्मणोरिति चेश्चिण् (३।१।६६)। चिणो लुगिति (६।४।१०४) तकारलोपः। भञ्जेश्च चिणीत्यनुनासिकलोपः (६।४।३३)। तस्य समानाश्रयस्यापि वृद्धावनाभाच्छास्त्रीयायां कर्त्तव्यायामा भादिति वचनादसिद्धत्वं न भवति। राग इति। रञ्जे र्घञ्। घञि च भावकरणयोरित्यनुनासिकलोपः (६।४।२७)। तस्यापि समानाश्रयायामपि सात्प्रमिक्यां वृद्धौ कर्त्तव्यायामा भादिति वचनाद् असिद्धत्वं न भवति। पपुषश्चिच्युषो लुलुवुष इति। पातेश्चिनोतेर्लुनातेश्च लिटः क्वसुः। द्विर्वचनम्। वसोःसम्प्रसारणम् (६।४।१३१)। तस्य भाश्रयत्वादातो लोप इटि चेत्याकार लोप (६।४।६४) एरनेकाचोऽसंयोगपूर्व्वस्येति (६।४।८२) यणादेशे ऽचिश्नुधात्वित्वादिनोवङादेशे (६।४।७७) च कर्त्तव्ये ऽसिद्धवत्त्वं न भवति। ननु चोस्यपदान्तादित्यनेनैव (६।१।९६) पररूपेण सर्वं सिद्धम्। नैतदस्ति। प्रतिपदोक्तस्य ह्युस्शब्दस्य तत्र ग्रहणम्। लाक्षणिकश्चैतोस्। कथं पुनरत्र भाश्रयत्वमित्याह आल्लोपादीनि हीत्यादि। हिशब्दो यस्मादर्थे। इतिकरणस्तस्मादर्थे। नन्वेवमप्यसिद्धं बहिरङ्गमन्तरङ्ग इति। अन्तरङ्गेष्वाल्लोपादिषु कर्त्तव्येषु बहिरङ्गस्य संप्रसारणस्यासिद्धत्वादाल्लोपादयो न प्राप्नुवन्त्येव। अत हि विभक्तेः पूर्वो वस्वन्तो भागः। तदाश्रया लोपादय इति। संप्रसारणं तु विभक्त्याश्रयम्। प्रकृत्याश्रयञ्चान्तरङ्गम्। प्रत्ययाश्रयञ्च बहिरङ्गमित्याह असिद्धं बहिरङ्गमित्यादि। एतदपीति। एतदपीति वचनापेक्षया नपुंसकेन निर्देशः। एषा हीत्यादिना परिभाषाया अप्रवृत्तौ कारणमाह। यत्रान्तरङ्गबहिरङ्गयोर्युगपदुपस्थानं तत्रैषा परिभाषा प्रवर्त्तते। अन्तरङ्गे कर्त्तव्ये बहिरङ्गस्यासिद्धतामापादयितुम्। इयञ्च परिभाषा वाहऊडित्यत्राभाच्छास्त्रे (६।४।१३२) ज्ञापितत्वादाभाच्छास्त्रीया। अतोऽस्यां कर्त्तव्यायामसिद्धवदत्राभादिति वसोः संप्रसारणस्याल्लोपादीनाञ्चासिद्धत्वादन्तरङ्गबहिरङ्गयोर्युगपदुपस्थानं नास्तीति न प्रवर्त्तते। तदप्रवृत्तौ नास्ति बहिरङ्गसंप्रसारणस्यासिद्धत्वम्। तेन भवन्त्येवाल्लोपादयः। वुग्युटावित्यादि। वुग्युडिल्येतौ यथाक्रमसुवङि यणि च कर्त्तव्ये सिद्धौ भवत इत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। इह वतिग्रहणं न कर्त्तव्यम्। विनापि तेनातिदेशः सिद्ध

एव यथा षत्वतुकोरसिद्ध: (६।१।८६)। पूर्वत्रासिद्धमिति (८।२।१) च। तत्र क्रियते क्वचित् स्वाश्रयमपि सिद्धं यथा स्यादित्येवमर्थम्। तेन वुग् युटावुवङ्यणो: सिद्धौ भविष्यत:। बभूव इति। भवतेर इत्यभ्यासस्यात्वम् (७।४।७३)। भुवो वुग् लुङ्लिटोरिति (६।४।८८) वुक्। तत्र यद्यसिद्धं स्याद् अचिश्नुधात्वित्यादिनोवङ् (६।४।७७) स्यात्। तस्य सिद्धत्वान्न भवति। उपदिदीय इति। दीङ् क्षये। लिट्। तस्य लिट स्तझयोरित्यादिनैश् (३।४।८१)। दीङो युड़चि ङ्क्तितीति युट् (६।४।६३)। तस्यापि यद्यसिद्धत्वं स्याद् एरनेकाचोऽसंयोगपूर्वस्येति (६।४।८२) यणादेश: स्यात्। सिद्धत्वान्न भवति। आ भादित्याङ् मर्य्यादायां वा स्यादभिविधौ वा ? तत्र यद्याद्य: पक्ष आश्रीयेत भाधिकारीयस्यासिद्धत्वं न स्यात्। ततश्चासिद्धं बहिरङ्ग-मन्तरङ्ग इत्यस्या: परिभाषाया अनाभाच्छास्त्रीयत्वाद् अस्यां प्रवर्त्तमानायां वसो: संप्रसारणस्याल्लोपादीनां चासिद्धत्वं न स्यात्। एवमपि वसो: संप्रसारणस्य बहिरङ्गस्यान्तरङ्गाणाञ्चाल्लोपादीनां युगपदुपस्थाने सति तया परिभाषया प्रवर्त्तमानया वसो: संप्रसारणस्यासिद्धत्व उत्पादितेऽन्तरङ्गत्वा-दल्लोपादय: पपुष श्चिच्युषो लुलुवष इत्यत्र न स्युरितीमं (E) मर्य्यादापक्षे दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह आ भादित्ययमभिविधाविति। गतार्थञ्च।

## २३। श्नान्नलोप:।

अन्यस्य श्नशब्दस्यासम्भवादसत्यपि श्नमो मकारस्य श्रवणे सामर्थ्यात् श्नम एव ग्रहणं विज्ञायत इत्यत आह श्नमयमुत्सृष्टमकार इति। उत्सृष्ट: परि-त्यक्तो मकारो यस्य स तथोक्त:। अनक्तीत्यादि। अन्जू व्यक्तिम्रक्षणकान्ति-गतिषु। भन्जो आमर्द्दने। हिसि हिंसायाम्। अस्योदित्वान्नुम्। रुधा-दित्वाच् श्नम्। नकारवतो ग्रहणमेतदर्थं क्रियते नन्दिता नन्दक इत्यत्र मा भूदिति। एतच्चाप्रयोजनम्। प्रत्ययाप्रत्यययो: प्रत्ययस्यैव ग्रहणमित्यनया परिभाषयात्र न भविष्यति। ज्ञापकाच्च। यदयं नन्दिनन्दनशब्दौ क्षुभ्नादिषु

(E) न स्युरित्येवमादयो भाष्ये बहवो दोषा मर्य्यादापक्षे निर्दिष्टा इत्याद्यपक्षं त्यक्त्वा द्वितीयं पक्ष-माश्रित्येति पाठान्तरमेकस्मिन् पुस्तके। It is in my MS. 23.

पठति तज् ज्ञापयति नन्देर्नकारलोपो न भवतीति। सामान्यापेक्षञ्च ज्ञापकम्। तेन नन्दिता नन्दक इत्यत्रापि न भविष्यति। तस्माद् नान्नलोप-इत्येवं वक्तव्यमित्यभिप्रायेणाह अकारवतो ग्रहणम्। किमिति यज्ञानां यज्ञानामिति? यजयाचेति नङ् (३।३।९०)। तदन्तात् षष्ठीबहुवचनम्। नुट्। यदि अकारवतो ग्रहणं न क्रियेत तदा तत्र नलोपः स्यादेव। स्यादेतत्। दीर्घे कृते नादिति व्यपदेशाभावान्न भविष्यतीत्यत आह सुपि चेत्यादि। सुपि चेत्ययं (७।३।१०२) दीर्घोऽजादेशः। तस्य नकारलोपपूर्वविधौ कर्त्तव्येऽचः परस्मिन् पूर्व्वविधा इति (१।१।५७) स्थानिवद्भावेन तद्रूपतामापन्ने परत्वाद्दीर्घत्वे यदि कृतेऽपि अकारविशिष्टस्य ग्रहणं न क्रियते तदा स्यादेवात्र नलोपः। कृताकृतप्रसङ्गित्वाच्च। दीर्घत्वन्तु नकारलोपे कृते निमित्तविहितत्वान् न प्राप्नोतीति तदनित्यम्। ननु च पूर्वविधौ स्थानिवद्भाव उक्तः। नचायं पूर्वविधिः। नैष दोषः। अयमपि पूर्वविधिरेव। पूर्वस्माद् विधिः पूर्वविधिरित्यस्यापि समासस्य तत्राश्रयणात्। अथ क्रियमाणेऽपि अकारवतो ग्रहणे कस्मादिह न भवति विश्नानां प्रश्नानामिति? भवति अत्रापि अकारवान्नकार इत्याह विश्नानां प्रश्नानामित्यत्रेत्यादि। इह हि लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्तो यः साक्षान्निर्दिष्टः अन्शब्दस्तस्य ग्रहणम्। नतु लाक्षणिकस्य। विश्नानां प्रश्नानामित्यत्र हि च्छ्वोः शूडनुनासिके चेति (६।४।१९) अकारे कृते अन्शब्दः सम्पद्यते। स च लाक्षणिकः। तस्मात् ततः परस्य लोपो न भवति। राल्लोप (६।४।२१) इत्यतो मण्डूक-प्लुतिन्यायेन लोपग्रहणानुवृत्तौ सत्यां सिद्धायां यत् पुनर्लोपग्रहणं क्रियते तद् योगविभागार्थम्। आन्नित्येको योगः। अत्र च नैत्यविभक्तिकोऽयं निर्देशः। लोपग्रहणञ्चानुवर्त्तते। तेनायमर्थो भवति। आदुत्तरस्य नकारस्य लोपो भवतीति। ततो लोप इति द्वितीयो योगः। तत्र आन्नेत्यतो नेत्यनुवर्त्तते। इष्टे विषये नकारलोपो यथा स्यादिति। तेन लङ्गिकम्पिप्रभृतीनामुपताप-शरीरविकारादिषु नलोपः सिद्धो भवति।

## २४। अनिदितां हल उपधायाः क्ङिति।

इद् इद् येषां त इदितः। न इदितोऽनिदित इति षष्ठीबहुवचनम्

स्थानि सुब्व्यत्ययेनैकवचनम्। तत्त्वानिदितां विशेषणम्। विशेषणेन च तदन्तविधिर्भवतीत्यत आह हलन्तानामित्यादि। उपधाया नकारस्येति। उपधाया इत्येतन्नकारस्य विशेषणम्। स्रस्तो ध्वस्तइति। स्रन्सु ध्वन्सु अधः-पतने। निष्ठा। स्रस्यते। ध्वस्यत इति। भावे कर्म्मणि वा लकारः। सनी-स्रस्यते। दनीध्वस्यत इति। यङन्ते एते। नीग् वञ्चित्यादिनाऽभ्यासस्य (७।४।८४) नीगागमः। नन्द्यत इति। टुणदि समृद्धौ। नानन्द्यत इति यङन्तम्। दीर्घोऽकित (७।४।८३) इत्यभ्यासस्य दीर्घः। नेनीयत इति। नयतेर्गुणो यङ्लुकोरिति (७।४।८२) गुणोऽभ्यासस्य। नह्यत इति। नह बन्धने। लङ्गिकम्प्योरित्यादि। लङ्गिकम्प्योरिदित्त्वान्नलोपो न प्राप्नोति। अतस्तयोरुपतापशरीरविकारयोरुपसंख्यानं कर्त्तव्यम्। उपसंख्यानं प्रति-पादनम्। उत्तरत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनन्तु कृत-मेव। उपतापो व्याधिः। शरीरविकारः शरीरस्यान्यथात्वम्। स पुनर्व्याधि-पतापादन्यो गृह्यते। अन्यथोपताप इत्येवं सिद्धे शरीरविकारग्रहणमनर्थकं स्यात्। विलगित इति। अगि वगि लगि गत्यर्थाः। उपतापे विलङ्गितइत्येव प्रयोगो मा भूदित्येवमर्थं लङ्गेर्लोपो विधीयते। ननु रूपसिद्ध्यर्थम्। लगी सङ्ग इत्यस्य प्रकृत्यन्तरस्य तस्य सिद्धत्वात्। रञ्जेर्णावित्यादि। अङ्कित्दर्थं वचनम्। मृगरमणं मृगक्रीड़ा। रजयति मृगानिति। रममाणान् मृगान् प्रयुङ्क्तइत्यर्थः। रजनरजकरजःसूपसंख्यानमिति। अत्र भूयः प्रतिपादनं क्रियते। घञि च भावकरणयोरित्यत्र (६।४।२७) चकारोऽनुक्तसमुच्चयार्थः। तेन रजकादिषु प्रतिपादितेषु रञ्जेःष्वुनादि प्रत्यये परतो नलोपो भवति। रजक इति। शिल्पिनि ष्वुन् (१।३।१४५)। रज इति सर्वधातुभ्योऽसुनित्य-सुन् (उण्, ५।६२८)। (F) घिनुणि चेत्यादि। रागीति। सम्पृचान्वादि-सूत्रेण (३।२।१४२) घिनुण्। चजोः कु घिण्ण्यतोरिति कुत्वम् (७।३ ५२)। त्यजरजभजेति (३।२।१४२) निपातनात् सिद्धमिति। यतोऽयमङ्किति निमित्ते संपृचादिसूत्रे (३।२।१४२) रजेरनुनासिकलोपं कृत्वा निर्देशं करोति तज् ज्ञापयति घिनुण्यपि नलोपो भवतीति। ननु च रञ्जेश्चेति (६।४।२६)

(F) रजनमिति। क्वचित्पृथक् पाठ एकस्मिन् पुस्तके It is in my MS. 23.

लक्षणेनैव शपि नलोपोऽभिनिर्वृत्तः । नैतदस्ति । यथैवेन्धिभवतिभ्याञ्चे- ( १।२।६ ) त्यागन्तुकेनेकारेणेन्धे र्निर्देशस्तथैहाप्यागन्तुकेनाकारेण । ननु शपा । नहीन्धिभवतिभ्याञ्चेत्यत्रेका ( १।२।६ ) निर्देशः । अन्यथा ह्यनिदितामित्यनुनासिकलोपः स्यात् ।

## २५ । दंशसञ्जस्वञ्जां शपि ।

दन्श दंशने । ष्वन्ज परिष्वङ्गे । परिष्वजतइति । उपसर्गात् सुनोतीत्यादिना ( ८।३।६५ ) षत्वम् । (G)

## २६ । रञ्जेश्च ।

अथ पृथग् योगकरणं किमर्थम् ? न पूर्वयोगएव रञ्जेर्ग्रहणं क्रियेतेत्याह पृथग्योग करणमित्यादि । उत्तरसूत्रे रञ्जेरेवानुवृत्तिर्यथा स्यात् । दंशिप्रभृतीनां मा भूदिति ।

## २७ । घञि च भावकरणयोः ।

रज्यतेऽनेनेति राग इति । हलश्चेति (३।३।१२१) घञ् । एवं रङ्ग इत्यत्रापि ।

## २८ । स्यदो जवे ।

जवो वेगः । गतिविशेषः । वृद्ध्यभावश्चेति । अतउपधाया इति । नलोपे कृतेऽत उपधाया इति (७।२।११६) वृद्धिः प्राप्नोति । अतस्तदभावो निपात्यते । ननु च न धातुलोप आर्धधातुक (१।१।४) इत्यनेनैव वृद्धिप्रतिषेधः सिद्धः । तत् किमर्थं वृद्ध्यभावो निपात्यत इत्याह इक्प्रकरणादित्यादि । तत्रेको गुणवृद्धी (१।१।३) इत्यत इगिति प्रकृतमनुवर्त्तते । तेनेग्लक्षणयो र्गुणवृद्ध्योः प्रतिषेधः । नचेयमिग्लक्षणा वृद्धिः । किन्तूपधालक्षणा । नचेयमुपधालक्षणा वृद्धिरिग्लक्षणा भवति । निर्द्दिष्टस्थानिकत्वात् । तेन नास्यात्र तस्याः प्रतिषेधः । गोस्यद इति । भावे घञ् । गवां स्यदइति गोस्यदः । कृद्योगा षष्ठी समस्यत (२।२।८७ वा) इति समासः । तैलस्यन्द इति । तैलस्य स्रवणमित्यर्थः । स्यन्दू स्रवणे ।

---

(G) सतात्मरे परिनिविभ्य इत्यादिना ( ८।३।७० ) । परत्वात् ।

## २९। अवोदैधौद्मप्रश्रथहिमश्रथाः।

अवोद इति। उपसर्गेण सहाद् गुणः (६।१।८७)। न धातुलोप (१।१।४) इत्यादिना प्रतिषेधो न भवति। अनिग्लक्षणत्वाद् गुणस्य। गुणश्च निपात्यत इति। ननु च पुगन्तलघुपधस्येत्येवं (७।३।८६) गुणः सिद्धः। तत् किमर्थं निपात्यतइत्याह न धातुलोप इत्यादि। औणादिके मन्प्रत्यय इति। अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो (उण् १।१३७) मन्नित्यर्त्त्यादिभ्यो विधीयमानो बहुलवचनादुन्देरपि भवति। श्रथ्येति। श्रथ मोचनप्रतिहर्षणयोरित्यस्य।

## ३०। नाञ्चेः पूजायाम्।

अनिदितामित्यनेन (६।४।२४) प्राप्तस्य नलोपस्यायं प्रतिषेधः। एतस्मादेव प्रतिषेधान्नकारोऽयं कृतचुत्वो निर्दिश्यत इति गम्यते। अथ नाञ्चेरिटीत्येव कस्मान्नोक्तम्? एवमपि ह्युच्यमाने पूजायामेव प्रतिषेधो लभ्यते। तथाहि पूजायामेवाञ्चतेरिड् विहितः। अशक्यमेवं वक्तुम्। अञ्चेः पूजायामित्यनेन (७।२।५३) क्त्वानिष्ठयो र्नित्यमिड् विहितः। यस्तु क्त्वाप्रत्यय उदितो वेति (७।२।५६) पाक्षिक इड़ागमः स पूजायामपि भवति। तत्रैवमुच्यमाने यदा क्त्वाप्रत्ययस्य पूजायामिण् न स्यात् तदा प्रतिषेधो न स्यात्। गुरुमङ्क्त्वेति। नेत्येतत् प्रतिषेधवचनमुत्तरार्थम्। इहाञ्चेरपूजायामितुरच्यमाने सतीष्टं सिध्यत्येव। अञ्चिता अस्य गुरव इति। मतिबुद्धीत्यादिना क्तः (३।२।१८८)। क्तस्य च वर्त्तमान इति (२।३।६७) षष्ठी। यस्य विभाषेतीट्प्रतिषेध (७।२।२५) इति। अञ्चतेरुदितो वेति विकल्पेनेड्विधानात् (७।२।५६)।

## ३१। क्त्वि स्कन्दिस्यन्दोः।

स्कन्त्वेति। स्कन्दिर् गतिशोषणयोः। पक्ष इड़ागम इति। स्वरतीत्यादिना (७।२।४४)। कित्त्वप्रतिषेधाद् नलोपाभाव इति। अनिदितामित्यादिना (६।४।२४) हि ङकिति नलोपो विधीयते। सेट् क्त्वाप्रत्ययस्य न क्त्वा सेड़िति (१।२।१८) कित्त्वप्रतिषेधः कृतः। ततश्चेड़ागमपक्षे कित्त्वाभावादेव नलोपाभाव इति नासाविमं योगं प्रयोजयति। तेन न सेट्क्त्वाप्रत्ययस्योदाहरणं प्रदर्शितमित्यभिप्रायः।

## २२ । जान्तनशां विभाषा ।

नष्ट्वा नंष्ट्वेति । नशि व्रश्चादिसूत्रेण (८।२।३६) षत्वम् । ष्टुत्वम् । मस्जिनशोर्झलीति नुमागमः (७।१।६०) । ज इति वर्णग्रहणम् । तत्र वर्णग्रहणे सर्व्वत्र तदन्तविधिं प्रयोजयतीत्यन्तरेणाप्यन्तग्रहणेन तदन्तविधौ सिद्धे यदिहान्तग्रहणं क्रियते तद्विस्पष्टार्थम् । यत्त्वाह अनुपधाया अपि पक्षे लोपस्य प्रतिषेधार्थमन्तग्रहणं तद्यथा मक्त्वा मङ्क्त्वेति तन्न । केन पुनरनुपधाभूतस्य नकारस्य लोपः प्राप्नोति ? यतोऽसौ पक्षे प्रतिषिध्यते । उपधानकारस्य लोपउक्तः । नचायमुपधानकारः । एवं तर्हि विधिविषयादन्यत्रापि क्वचिल्लोपो नकारस्य भवतीति ज्ञापयति । तेनैतत् सिद्धम्भवति । मग्नो मग्नवानिति । ततश्चैतदर्थं मस्जेरन्त्यात् पूर्वं नुममिच्छन्त्यनुषङ्गलोपार्थमितीरतन्न वक्तव्यं भवति । तत्र यदीदं नोच्येत तदा यस्मिन् पक्षे क्त्वाप्रत्ययेन लोपो न भवति तस्मिन् पक्षे स्कोः संयोगाद्योरन्ते चेति (८।२।२९) सलोपोऽपि न स्यात् । असंयोगादित्वात् । तस्माद् वक्तव्यमेवेदम् । मस्जेरन्त्यात् पूर्वं नुममिच्छन्तीति । ततश्चानुपधाभूतस्य नकारस्य लोपभाविनोऽसंभवादनुपधाभूतस्य नकारस्य लोपप्रतिषेधो यथा स्यादेवमर्थमन्तग्रहणं न युज्यते ।

## २३ । भञ्जेश्च चिणि ।

चकारो विभाषेत्यनुकर्षणार्थः । अभाजीति पूर्वमेव व्युत्पादितम् । अप्राप्तोऽयं नकारलोप इति । ङ्किति नलोपविधानात् । चिणश्चाक्ङित्त्वात् । अतः प्रतिषेध्याभावान्नेति नानुवर्त्तते । तेन विधिरेवायमित्यभिप्रायः ।

## २४ । शास इदङ्हलोः ।

अन्वशिषदिति । सर्त्तिशास्त्यर्त्तिभ्यश्चेति (३।१।५६) च्लेरङादेशः । शिष्वः शिष्म इति । वस्मसोरुदाहरणे । अदादित्वाच्छपो लुक् । शासतीति । जक्षित्यादयः षडित्यभ्यस्तसंज्ञा (६।१।६) । अदभ्यस्तादिति झेरदादेशः (७।१।) । शशासतुः । शशासुरिति । लिट्यतुसुसि रूपे । क्वौ च शास इति । क्वौ परतः शासेरित्त्वं भवतीत्येतदर्थंरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । यद्यपि कृताकृतप्रसङ्गित्वेन नित्यत्वादत्र पूर्वमित्त्वात् क्विब्लोपस्य विधानं तथापि

लुप्तेऽपि तस्मिन् प्रत्ययलक्षणेनात्वेत्त्वं भविष्यति। वर्णाश्रये प्रत्ययलक्षणं नास्तीत्येतत्तु प्रायिकम् । तथाहि वर्णाश्रयेऽपि क्वचिद् भवति । तद्यथाऽदृणेड़िति । अत्र तृणह इमितीमागमः (७।३।९२) । अथवा वर्णाश्रयमेवेदमित्त्वं न भवति । कथम् ? अङ्गग्रहणेनात्र प्रत्ययः सन्निधापितः । स हल्ग्रहणेन विशिष्यते । अतएव वृत्तावुक्तं हलादौ क्ङितीति । तेन यद्यपि क्विब् वर्णात्मकः प्रत्यय स्तथापि नासौ वर्णरूपत्वेनाश्रीयते । किं तर्हि ? प्रत्ययरूपत्वेन । आर्य्यशीरिति । सकारस्य रुत्वे कृते र्वोरुपधाया दीर्घ (८।२।७६) इति दीर्घः । अथाशास्त आशासमान इत्यत्र कथमित्त्वं न भवतीत्याह यस्माच्छासेरित्यादि । द्वाविमौ शासी । एकः परस्मैपदी । अपरस्त्वात्मनेपदी । तत्र यस्माच्छासेरङ् विहितस् तस्येदं ग्रहणम् । स च शासु अनुशिष्टावित्यस्य सर्त्तिशास्त्यर्त्तिभ्यश्चेति (३।१।५६) विधीयते । तत्र परस्मैपदेष्वित्यनुवर्त्तते । अस्यैव परस्मैपदे सम्भवात् । कथं पुनः सामान्येनोपादाने परस्मैपदिन एव विज्ञायते ? अङः संसर्गात् । संसर्गे हि सति विशेषपरिच्छेदो भवति । तथाहि सकिशोरा धेनुरानीयतामित्युक्ते किशोरेण संसर्गाद् वड़वायामेव सम्प्रत्ययो भवति । इह शासेरित्त्वं प्रत्यङ् निमित्तत्वेनोपात्तः । अतस्तेन संसर्गाद् विशिष्ट एव परस्मैपदी शासिः प्रतीयते । ननुचाङेवात्र केवलो निमित्तत्वेन नोपात्तः । किं तर्हि ? हलपि । स चात्मनेपदिनोऽपि सम्भवति । तत् कुतोऽङ्संसर्गाद् विशिष्टस्य शासेः प्रतीतिः ? नैतदस्ति । साधारणासाधारणसम्बन्धिसन्निपाते यस्त्वसाधारणः सन्निहितः सम्बन्धी तत्रैव प्रत्ययो जायते । तथाहि वृषाणां किशोराणाञ्च मध्ये धेनवोऽनुबध्यन्तामित्युक्ते वड़वा एव प्रतीयन्ते । तस्मादङ्हलोरुपादानेऽपि यस्मादङ् विहितस्तस्यैव ग्रहणं युक्तम् । यदि तर्हि यतोऽङ् विहितस्तस्येदं ग्रहणमेवं सति यथाशास्त आशास्यमान इत्यत्र न भवति तथा क्विप्प्रत्ययेऽपि न स्यादित्यत आह क्विप्प्रत्यये त्वित्यादि । चियाशीरित्यादि । अथवा नैव तस्या ह्यपि क्विप्प्रत्यय इत्येवं वक्तव्यमिति । विकल्पार्थो वाशब्दः । अथ तशब्दः किमर्थः ? आन्तरतम्याद् दीर्घो मा भूदिति चेत् ? नैतदस्ति । भाव्यमानोऽण् सवर्णान् गृह्णातीति न भविष्यति । एवं तर्हि विस्पष्टार्थः । अथासन्देहार्थः कस्मान्न भवति ? शास यङ्हलो-

रित्युच्यमाने सन्देहःस्यात् किमयमिकारः कृतयणादेशो निर्दिष्ट आहोस्वि दीकारोऽथवा यकार इति। नास्ति सन्देहः। यदयं तदशिष्यं संज्ञाप्रमाणत्वादिति (१।२।५३) निर्देशं करोति ततो निश्चीयत इकारोऽयम्। न ईकारः। नापि यकार इति।

## ३५। शा हौ।

यद्यत्रोपधाया इति वर्त्तते ततो यथा पूर्वसूत्रे शास इत्यवयवभूता षष्ठी तथेहापि स्यात्। एवञ्चोपधाया एवायमादेशः प्रसज्येत। सर्वादेशश्चेष्यत इति मनसि कृत्वाह उपधाया इति निवृत्तमिति। तदृध्युपधाग्रहणं क्ङिद्ग्रहणेन सम्बद्धम्। इह च क्ङिद्ग्रहणं निवृत्तम्। तस्मादुपधाया इत्यस्यापि निवृत्तिर्भवति। क्ङितीत्येतदपि निवृत्तमिति। अनुदात्तोपदेशेत्यादौ (६।४।३७) सूत्रे पुनः क्ङिद्ग्रहणात्। तेनेत्यादिना क्ङिद्ग्रहणे निवृत्ते यदिष्टं सम्पद्यते तद्दर्शयति। यद्यत्र क्ङितीत्येतदनुवर्त्तेत ततो वा च्छन्दसीति (३।४।८८) यस्मिन् पक्षे हेरपित्त्वं न भवति तस्मिन् पक्षे सार्वधातुक मपिदिति (१।२।४) वचनान् ङित्त्वं नास्तीति शाभावो न स्यात्। क्ङिद्ग्रहणे तु निवृत्तेऽपित्त्वपक्षेऽपि भवत्येव। स्यादेतत्। व्यवस्थितविभाषाविज्ञानाच्छास उत्तरस्य हेः पित्त्वं न भविष्यति। ततो नार्थः क्ङिद्ग्रहणेन निवर्त्तितेनेत्यत आह शाधीत्येतदित्यादि। यदि शास उत्तरस्य हेः पक्षे पित्त्वं न स्यात् तदा शाधीत्येतत् सतिशिष्टत्वेन प्रत्ययस्वरेणान्तोदात्तमेव स्यात्। आद्युदात्तमपि च्छन्दसीष्यते। तच्च हेः पित्त्वे सति धातुस्वरेण संपद्यते। नान्यथा। तस्मादवश्यं छन्दसि पक्षे पित्त्वं विधेयम्। अथाहाविव्येवं कस्मान्नोक्तम्। आकारेऽपि ह्यलोन्त्योऽस्येति (१।१।५२) सकारस्य विहिते सवर्णदीर्घत्वेन शाधीत्येतत् सिद्धं भवति। न सिध्यति। पूर्वसूत्रेणोपधाया इत्त्वं स्यात्। न चायं तस्य बाधको युज्यते। असति च सम्भवे बाधनं भवति। अस्ति च सम्भवो यदुभयं स्यात्। अत्रास्ति सम्भवः। तस्मादकारे ऽन्त्यस्य विहित उपधाया इत्त्वं स्यादेव।

३६। हन्ते र्जः।

हन्तेरिति। श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। जहि (H)

३७। अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति।

अनुनासिक इति षष्ठ्या बहुवचनस्य लुकं कृत्वाऽविभक्तिकोऽयं निर्देशः। अत एवाह अनुनासिकान्तानामिति। अनुनासिकस्य क्विझलोः क्ङितीति (६।४।१५) दीर्घत्वे प्राप्ते लोपोऽयं विधीयते। अत्र लोपे कृते दीर्घत्वं न प्राप्नोति। विहतनिमित्तत्वात्। यमिरमिगमिनमिहनिमन्यतय इति। यम उपरमे। रमु क्रीड़ायाम्। गम्लृ सृप्लृ गतौ। णम प्रह्वत्वे। हन हिंसागत्योः। मन ज्ञाने। वतिरिति। वन षण सम्भक्तौ। तितुत्रतथेत्यादिनेट् प्रतिषेधः (७।२।९)। क्तिनीत्यनेन क्तिन्येव वनतेरुदाहरणं सम्भवति। नान्यत्रेति दर्शयति। किं कारणमित्याह क्तिचि त्वित्यादि। क्तिचि तु न क्तिचि दीर्घश्चेति (६।४।३९) प्रतिषेधं वक्ष्यति। ये त्वन्ये झलादयः प्रत्यया स्तेष्वपीटा भवितव्यम्। ततो झलादित्वाभावाद्वनतेरनुनासिकलोपं प्रति ते निमित्तभावं नोपयान्तीति पारिशेष्यात् क्तिन्येव वनतेरनुनासिकलोपेन भवितव्यम्। सनोतेरात्त्वं वक्ष्यतीति। तेन तस्यानुनासिकलोपोदाहरणं न भवतीति भावः। आत्त्वं पुनर्जनसनखनामित्यादिना (६।४।४२) वक्ष्यति। क्षत इति। क्षणु हिंसायाम्। ऋत इति। ऋणु गतौ। क्षत इति। क्षणु दाने। घृत इति। घृणु दीप्तौ। वत इति। वनु याचने। मत इति। मनु अवबोधने। अतत। अतथा इति। तनोतेर्लुङ्। आत्मनेपदप्रथममध्यमपुरुषैकवचने। तनादिभ्य स्तथासोरिति (२।४।७९) सिचो लुक्। शान्तः। तान्तः। दान्त इति। शमितमिदमीनां रूपाणि। एते नानुदात्तोपदेशाः। इह चेत्यादि। गमिरमिभ्यां क्तिनि कृते तयोर्नित्स्वरेणाद्युदात्तत्वे ऽनुदात्तत्वाभावादसत्युपदेशग्रहणे लोपो न स्यात्। अस्मिंस्तु सति

---

(H) अत्र माधवः—"हन्तेर्जैं इत्यत्र च न्यासे हन्तेरिति श्तिपा निर्देशाद् यङ्लुकि जभावाभावाज् जङ्घहीति भवतीति कृतानुनासिकलोपः प्रत्युदाहृतः। अन्यत्रैयो न्यासे प्रत्युदाहरणं जङ्घनीहीति पठन् भाषायां हेरपित्त्वादीड़भावाच्छान्दसमुदाहरणमित्याह।" इति।

भवति। किञ्चासत्युपदेशग्रहणे शान्तो दान्त इत्यत्रापि स्यात्। भवति हि शमिः सतिशिष्टप्रत्ययस्वरे कृतेऽनुदात्तं पदमेकवर्जमिति (६।१।१५८) शेषस्यानुदात्तत्वेऽनुदात्तः। उपदेशग्रहणात् तु न भवति। नह्ययमुपदेशेऽनुदात्तः।

## ३८। वा ल्यपि।

अप्राप्तत्वाद्यर्थ आरम्भः। प्रयत्येति। प्रादिसमासे कृते समासेऽनञ्पूर्वे क्त्वो ल्यप् (७।१।३७)। ह्रस्वस्य पिति कृति तुक् (६।१।७१)।

## ३९। न क्तिचि दीर्घश्च।

यन्तिरित्यादि। क्तिच्क्तौ च संज्ञायामिति (३।३।१७४) क्तिच्। अत्र चानुदात्तोपदेशादिग्रहणमनुवर्त्तते। तेन कान्तिः शान्तिरित्यत्र दीर्घप्रतिषेधो न भवति। अनुनासिकलोपस्य त्वत्र प्राप्तिरेव नास्ति। उदात्तोपदेशत्वात्। अनुनासिकलोपे प्रतिषिद्ध इत्यादिना दीर्घग्रहणस्य प्रयोजनमाचष्टे। ननु च प्रकरणापेक्षया यदस्मिन् प्रकरणे विहितं तन्न भवतीति विज्ञायमाने ऽन्तरेणापि दीर्घग्रहणं दीर्घस्यापि प्रतिषेधो भविष्यति। तत् किं दीर्घग्रहणेन ? एवं तर्ह्येतज् ज्ञापयति। अस्तीयं परिभाषा ऽनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति (प,६२)।

## ४०। गमः क्वौ।

अयमप्यप्राप्त्यर्थं आरम्भः। अध्वगतो हरय इति। अध्वानं गच्छन्तीति क्विप्। तदन्ताज्जस्। गमादीनामित्यादि। गमादीनामनुनासिकलोपः क्वौ भवतीत्यत्र तदर्थरूपं व्याख्येयमित्यर्थः। तदिदं व्याख्यानम्। पूर्वसूत्राच्च कारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन गमादीनां भविष्यति। ननु गमेरेव केवलस्येति। संयदिति। संपूर्वाद् यमेः क्विप्। परीतदिति। परिपूर्वात् तनोतेः। नहिवृतीत्यादिना दीर्घः (७।३।११६)। ऊ चेत्यादि। चकारादनुनासिकलोपः। क्वचिदूङ् चेति पठ्यते। तत्र ङकारस्य प्रयोजनं

चिन्त्यम्। (I) अलोऽन्त्यपरिभाषयैवान्त्य (१।१।५२) भविष्यति। अग्रेगूः। अग्रेभ्रूरिति। गमेर्भ्रमेश्चानुनासिकलोपे कृतेऽकारस्योकारः।

## ४१। विड्वनोरनुनासिकस्यात्।

अब्जा इति। अप्सु जायत इत्युपपदसमासः। पकारस्य जश्त्वं बकारः। गोषा इति। षणु दाने। विजावा इति। जन जनने। जनी प्रादुर्भाव इति वा। अग्रेगावा इति। तत्पुरुषे कृति बहुलमिति (६।१।१४) सप्तम्या अलुक्। अथानुनासिकग्रहणं किमर्थम्? यावतानुदात्तोपदेशेत्यादेः (६।४।३७) सूत्रादनुनासिकग्रहणमनुवर्त्तत एवेत्याह अनुनासिकस्येति वर्त्तमान इत्यादि। तद्धि प्रकृतमनुनासिकग्रहणमनुदात्तोपदेशग्रहणेन सम्बद्धम्। अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। तस्मादिदमन्यदनुनासिकग्रहणं क्रियते। अनुनासिकमात्रस्य यथा स्यात्। अथेह दीर्घोच्चारणं किमर्थम्। ह्रस्व एवोच्येत। ह्रस्वेऽपि कृते सत्यकः सवर्णे दीर्घत्वेन सिद्धत्येव। अतो गुणे पररूपत्वं प्राप्नोति। अतो न सिध्यतीत्येतन्नाशङ्कनीयम्। अकारविधानसामर्थ्यात्। यदि ह्यतो गुणे पररूपत्वं स्यात् तदा प्रकृतं लोपग्रहणमेव विदध्यात्। ततो ह्रस्व एव कर्त्तव्यः। नैतदस्ति। ह्रस्वे हि सति घुण घूर्णन इत्यस्मादनिपि विहिते घ्वावा इति न सिध्येत्। ततो दीर्घस्यैव विधानं युक्तम्। (J)

## ४२। जनसनखनां सञ्झलोः।

झलि क्ङितीति चानुवर्त्तत इति यथाक्रमं सनो झलश्च विशेषणम्। सूत्रोपात्तेन तु झल्ग्रहणेन न शक्यते सन् विशेषयितुम्। विशेषणं ह्यप्रधानं भवति। विशेष्यन्तु प्रधानम्। सञ्झलोरिति चायं द्वन्द्वः। तत्र सर्वेषां द्वन्द्वपदानां प्राधान्यादन्योन्यं प्रधानगुणभावो नोपपद्यते। सन्ग्रहणञ्चाक्ङिदर्थम्। तदित्यादि। यस्मात् सनोतेः पक्ष इडागम स्तस्मात् तत एव परो झलादिः

---

(I) मकारलोपस्यासिद्धत्वाद् यथाकथञ्चिदन्त्यस्यापि यथा स्यादिति चिन्त्येति केचित्। न तस्य किञ्चित् प्रयोजनमस्तीति तु हरदत्तः।

(J) एवं घूर्ण घूरावा। क्षिणु क्षावा। ऋणु रावा। श्रीवृ अवावेत्यादि। सर्वधातुभ्योऽपि दृश्यन्त इति (६।२।७५) वनिप्।

सन् सम्भवतीति तदर्थमेव सन्ग्रहणम् । नतु जनखनार्थम् । नहि ताभ्यां परो झलादिः सन् सम्भवति । तयोर्नित्यं सेट्त्वात् । यद्येवं सनोतेः सनि कृतार्थत्वादात्त्वं न स्यात् । अन्यत्र निष्ठादौ झलादौ क्ङितिप्रत्यये ऽनुदात्तो-पदेशेत्यादिना (६।४।३७) नलोपःस्यादित्यत आह अन्यत्रेत्यादि । सनोति स्तनोत्यादिषु पाठस्यावकाशो ऽन्यत् तनादिकं कार्य्यम् । तनादिभ्य (२।४।७९) स्तथासोरित्यादि । आत्त्वविधौ च सन्ग्रहणस्यावकाशः सन् सिषासतीति । इहोभयं प्राप्नोति सातः सातवानिति । अत्रानुनासिकलोपं बाधित्वात्त्वं भवति विप्रतिषेधेन । ननु चोभयोः सिद्धयो र्विप्रतिषेधो भवति । इह चासिद्धवदत्रा (६।४ २२) भादितुभयमप्यसिद्धम् । तत् कुतो विप्रतिषेध इत्यत आह घुमा-स्थागेत्यादि । कथं कृत्वा ज्ञापकम् ? हल्ग्रहणस्यैतदेव प्रयोजनं हलादावीत्त्वं यथा स्यात् । इह मा भूत । आतोऽनुपसर्गे कः (३।२।३) । गोदः कम्बलद इति । यदि चात्र विप्रतिषेधो न स्याद् हल्ग्रहणमनर्थकं स्यात् । अस्त्वत्रेत्त्वम् । तस्या-सिद्धत्वाल्लोपो भविष्यति । पश्यति त्वाचार्य्यो भवतीह प्रकरणे विप्रतिषेध इति । यतो हल्ग्रहणं करोति । ननु चासति हल्ग्रहणेऽजादावपीत्त्वं स्यात् । ततश्चेयङ् प्रसज्येतेत्यनिष्टं रूपमापद्येत । तस्मादनिष्टनिवृत्त्यर्थत्वाद्धल्ग्रहणस्य न युज्यते ज्ञापकत्वम् । नैष दोषः । असिद्धत्वादेवेत्त्वस्येयङादेशो न भविष्यति । व्यवस्थार्थं तर्हि हल्ग्रहणं स्यात् । असति हि तस्मिन्नीत्त्वस्यासिद्धत्वादाल्लोपः । आकारलोपस्यासिद्धत्वादित्त्वमिति चक्रवद्व्यवस्था स्यात् । एतदप्यप्रयोजनम् । यदि व्यवस्थार्थं हल्ग्रहणं स्यान् नैवायं हल्ग्रहणं कुर्वीत । अविशेषेणेकार मुक्त्वा तस्याजादौ लोपमपवादं विदध्यात् । तत् कथमिदमस्तु ? आतो लोप इटि चेति (६।४।६४) ? ततो घुमास्थागापाजहातिसामा तारलोपो भवतीत्य-जादौ च क्ङिति । किमर्थमिदम् ? प्रत्ययमात्रे घ्वादीनां यदीत्त्वं वक्ष्यते तस्यायमित्यजादौ च क्ङित्यपवादः । तत ईद्दितीत्त्वम् (६।४।५६) भवति घादीनामनचि क्ङिति । तत एर्लिङि (६।४।६७) वान्यस्य संयोगादेः (६।४।६८) । न ल्यपि (६।४।६९) । मयतेरिदन्यतरस्याम् (६।४।७०) । ततो यतीत्त्वं भवति । सोऽयमेवं लघीयसा न्यासेन सिद्धे यद्धल् ग्रहणं करोति तज् ज्ञापयत्याचार्य्यो भवतीह विप्रतिषेध इति ।

## ४३। ये विभाषा।

असन्देहलाद्यर्थं आरम्भः। जायते जन्यत इति। भावे लकारः। जाजायत इति यङ्। दीर्घोऽकित (७।४।८३) इत्यभ्यासस्य दीर्घत्वम्। जंजन्यत इति। नुगतोऽनुनासिकान्तस्येति (७।४।८५) नुगागमः। सायते। सन्यत इति। भावे कर्मणि वा लकारः। जनेःश्यन्यपि विभाषात्वेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तां निराकर्त्तुमाह जनेः श्यनीत्यादि। जने दिवादित्वाच्छ्यनि विहिते सतुभयं प्राप्नोति। अनेन विभाषाऽऽत्त्वम्। ज्ञाजनोर्जेति (।३।७९) जाभावश्च। तत्र जादेशस्यानवकाशत्वात् स एव नित्यं भवति। तेन श्यनि जायत इत्येवं नित्यं भवति। नतु कदाचिज् जन्यत इति।

## ४४। तनोतेर्यकि।

## ४५। सनः क्तिचि लोपश्चास्यान्यतरस्याम्।

अस्य ग्रहणमनन्तरस्य क्तिचो लोपो मा भूत्। व्यवहितस्यापि न लोपो यथा स्यादित्येवमर्थम्। अथ क्रियमाणेऽप्यस्यग्रहणे कस्मादेव क्तिचो लोपो न भवति? अस्यग्रहणसामर्थ्यात्। अथान्यतरस्यांग्रहणं किमर्थम्? यावता विभाषेत्यनुवर्त्तत इत्याह अन्यतरस्यांग्रहणमित्यादि। कथं पुनर्विभाषाग्रहणस्य निवृत्तिराशङ्क्यते यतो विस्पष्टार्थमन्यतरस्यांग्रहणं कृतमित्याह यकारसम्बन्धं हीत्यादि। तद् विभाषाग्रहणं यकारादिप्रत्ययस्य सम्बन्धेन। इह च य इत्येतस्मिन् निवृत्ते क्तिचो निमित्तान्तरस्योपादानादतस्तन्निवृत्तौ विभाषाग्रहणमपि निवृत्तमिति कस्यचिदाशङ्का स्यात्। अतो विस्पष्टार्थमन्यतरस्यांग्रहणं क्रियते।

## ४६। आर्द्धधातुके।

चिक्रीर्षितेति। सनन्तात् तृच्। भवति भवत इति। आर्धधातुक इत्यधिकारात् सार्वधातुकेऽत्र शपो लोपो न भवति। यद्यत्र शपो लोपो मा भूदित्येवमर्थं आर्धधातुकाधिकारः क्रियते तर्हि न कर्त्तव्यः। ज्ञापकादेव शपो लोपो न भविष्यति। आचार्य्यप्रवृत्तिर्ज्ञापयति। नानेन शपो लोपो भवतीति यदयमदिप्रभृतिभ्यःशप इति (२।४।७२) शपो लुकं शास्तीत्यत आह अदि-

प्रभृतिभ्य इत्यादि। इतिकरणो हेतौ। असति हि प्रयोजने ज्ञापकं भवति। अस्ति चादिप्रभृतिभ्यः शपो लुग्वचनस्य प्रयोजनम्। किं तत्? वित्त इत्यत्र गुणो मा भूत्। यदि वित्तइत्यत्र लोपः स्यात् प्रत्ययलक्षणेन पुगन्तलघूपधस्येति (७।३।८६) गुणः स्यात्। मृष्ट इत्यत्र मृजेर्वृद्धिः (७।२।११४)। लुकि तु सति न भवति। न लुमताङ्गस्येति (१।१।६३) प्रत्ययलक्षणप्रतिषेधात्। तस्माददिप्रभृतिभ्यःशपो लुग्वचनं प्रत्ययलक्षणप्रतिषेधार्थं स्यादिति न ज्ञापकं शपो लोपाभावस्य। बेभिदितेति। यङो लोपः। बेभिद्यत इत्यत्र शपि सार्वधातुके न भवति। कारणेति। ण्यासश्रन्थो युच् (३।३।१०७)। कारयतीति शपि सार्वधातुके न भवति। पपतुः पपुः। ववतुः। ववुरिति। अतुसुसौ। पातेर्वातेश्चातो लोप इटि चेत्याकारलोपः (६।४।६४)। दीयत धीयत इति। आर्धधातुके यकीत्त्वम्। अदाताम्। अधातामिति। लुङ्। तस्थस्थेति (३।४।१०१) तसस्ताम्। गातिस्थेत्यादिना (२।४।७७) सिचो लुक्। स्नायात्। स्नेयादिति। स्नातेराशिषि लिङ्। तस्य लिङाशिषीत्यार्धधातुकसंज्ञा (३।४।११६)। यासुट्। स्कोः संयोगाद्योरित्यादिना (८।२।२९) सकारलोपः। आशीर्लिङोऽन्यत्र न भवतीति। आशीर्लिङोऽन्यद् विध्यादिलिङ्। तत्र न भवति। तस्य सार्वधातुकसंज्ञकत्वात्। तेन तत्र नित्यं स्नायादित्येवं भवति। अत्र लिङः स लोपोऽनन्त्यस्येति (३।२।७९) सकारलोपः। कारिषीष्टेति। आशिषि लिङ्। सीयुट्। भावकर्मणोरित्यात्मनेपदम् (१।३।१२)। सुट् तिथोरिति (३।४।१०७) सुट्। चिण्वद्भावाद् वृद्धिः। क्रियेतेति। विध्यादिलिङ्। पूर्ववदात्मनेपदम्। सार्वधातुके यक्। सीयुडी-कारेण सहाद्गुणः। लोपो व्योर्वलीति (६।१।६६) यकारलोपः। रिङ् शयग्लिङ्क्षु इति (७।४।२८) रिङादेशः। अत्र चिण्वद्भावेन यो दोषः स्यात् तं यगन्तस्येत्यादिना दर्शयति। यद्यत्र चिण्वद्भावाद् वृद्धिः स्यात् ततश्चातो युक् चिण्कृतोरिति (७।३।३३) युक् प्रसज्येत। अतो लोपो यलोपश्चेत्यादि। आर्धधातुकाधिकारप्रयोजनसंग्रहश्लोकः। गतार्थः। नन्वत्र भ्रस्जो रोपधयो रमन्यतरस्यामिति रम् (६।४।४७)। दीङो युडचि क्ङितीति (६।४।६३) युडार्धधातुकाधिकार एव विधास्यते। तत् कस्मात् तौ तत्र प्रयोजनत्वेन

नोपात्तो ? एवम्मन्यते । भ्रस्जोरम्भाव आर्धधातुकाधिकारं न प्रयोजयति । सतु तुदादौ पठ्यते । ततः सार्वधातुके परतः शेन भवितव्यम् । शे च सति पूर्वविप्रतिषेधाद् ग्रहिज्यादिसूत्रेण ( ६।१।१५ ) संप्रसारणेन भवितव्यम् । युडपि नैव प्रयोजयति । दीङो हि दिवादित्वात् सार्वधातुके श्यना भवितव्यम् । ततोऽजादित्वाभावादेव युडागमस्याभाव एव । आर्धधातुक इति यदार्ध-धातुकसामान्यं विवक्ष्यते तदा सामान्ये पौर्वापर्य्यासम्भवात् विषयसप्तमीयम् । यदार्धधातुकव्यक्तिस्तदा परसप्तमी । प्रतिपादितञ्चास्माभिर्न धातुलोप(१।१।४) इत्यत्र ज्ञापकद्वारेण परसप्तमीत्वं विषयसप्तमीत्वञ्चास्येति ।

## ४७ । भ्रस्जो रोपधयो रमन्यतरस्याम् ।

रमयं यदि रेफोपधयोः स्थाने स्यान् मित्त्वमनर्थकं स्यात् । अथायं रमागमोऽचोऽन्त्यात् परो भवति रेफोपधयोः श्रवणमापद्येत इत्येतच्चोद्य-माशङ्क्याह रोपधयो रित्यादि । मित्त्वाद्ध्यनेनावश्यमचोऽन्त्यात् परेण भवितव्यम् । अन्यथा तदनर्थकं स्यात् । तत्र यदि रेफोपधयोः श्रवणं स्याद् रोपधयोरिति षष्ठीनिर्द्देशोऽनर्थकः स्यात् । तस्मात् षष्ठीनिर्द्देश एव तयो-र्निवृत्तिमाचष्टे । तस्या ह्येतदेव प्रयोजनम् । षष्ठ्या निर्दिश्यमानस्य यो धर्म्मो निवृत्तिः सा यथा स्यात् । नह्यन्यत् षष्ठीनिर्देशस्य प्रयोजनमस्ति । तस्मान् मित्त्वादचोऽन्त्यात् परो भवति रम् । षष्ठीनिर्देशसामर्थ्याद् रेफोपधे स्थानि-धर्म्मनिवृत्तिं प्रतिपद्येते । भ्रष्टेति । भ्रस्जो पाके । व्रश्चादिसूत्रेण (८।२।३६) षत्वम् । भ्रज्जनमिति । सकारस्य जश्त्वं दकारः । तस्यापि श्चुत्वं जकारः । अथेह कस्मान्न भवति भृष्टो भृष्टवानित्याह भृष्टो भृष्टवानित्यादि । रमोऽव-काशः भर्ष्टा भ्रष्टा । संप्रसारणस्यावकाशो भृज्जतीति । इहोभयं प्राप्नोति भृष्टो भृष्टवानिति । ग्रह्यादिसूत्रेण (६।१।१५) संप्रसारणमेव भवति पूर्वविप्रतिषेधेन । पूर्वविप्रतिषेधश्चेष्टवाचित्वात् परशब्दस्य लभ्यते । बरीभृज्यत इति । यङ् । रीगृदुपधस्येति (७।४।९०) रीगागमः । अलोपदेश (६।४।३७) इत्यधिकारात् बरीशब्दावयवस्य रेफस्योपधायाश्च निवृत्तिर्न भवतीति । नह्ययमुपदेशे रेफः । किं तर्हि ? उत्तरकालभावी । अन्यतरस्यांग्रहणमिहापि स्पष्टार्थम् । सनः

ञिचि लोपश्चास्यान्यतरस्यामित्यतो (६।४।४५) हि यदन्यतरस्यांग्रहणं प्रकृतं तत् सन्नादिसम्बद्धम । इह च सन्नादेर्निवृत्तिः । अतस्तन्निवृत्तौ तस्यापि निवृत्ति-राशङ्क्येत । अनन्तरयोगस्य चान्यार्थत्वात् । तत्रान्यतरस्यांग्रहणस्य प्रयोजना-भावात् । अथ भ्रस्जो भर्जेत्येवं कस्मान्नोक्तम् ? अशक्यमेवं वक्तुम् । एवं ह्युच्यमाने प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवतीति (प,१०१) यङ्लुगन्तादार्धधातुक उत्पन्ने सत्यभ्यासस्य भ्रस्जो भर्ज्जादेशः स्यात् । नैष दोषः । उपदेशग्रहणेन भ्रज्जिं विशेषयिष्याम उपदेशे यो भ्रज्जिरिति । श्तिपा निर्देशोऽत्र वा करिष्यते । भृज्जतेर्भर्जइति । तेन यङ्लुगन्तस्य ग्रहणं न भविष्यति । एवमपि भृज्जत इत्यत्र प्राप्नोति । भवति ह्यत्रोपदेशे भ्रस्जिरिति । नैतदस्ति । अत्र हि पूर्वविप्रतिषेधात् संप्रसारणेन भवितव्यम् । यथा भृष्ट इत्यत्र । एवं तर्हि वैचित्र्यार्थं तथा नोक्तम् ।

## ४८ । अतो लोपः ।

धिनुतः । कृणुत इति । हिवि दिवि धिवि प्रीणनार्थाः । कृवि हिंसा-करणयोः । इदितो नुम् । लट् तस् । धिन्विकृण्व्योर चेत्युप्रत्ययः । अकारस्यान्ता-देशः । तस्यानेन लोपः । अथ तपरकरणं किमर्थम् ? यावता धातेत्यत्र मा भूत् । ननु चातो लोप इटि चेति (६।४।६४) नियमार्थं भविष्यति । आकारस्ये-टेवाजादौ ङ्किति लोपो भवति । नैतदस्ति । विपरीतनियमोऽपि सम्भाव्येत । आतएवेटि ङ्किति । नान्यस्येति । तथाच चिकीर्षितेत्यत्र न स्यात् । तस्माद् विपरीतनियमसम्भावनानिवृत्त्यर्थं तपरकरणम् । विस्पष्टार्थं वा । वृद्धिदीर्घा-भ्यामित्यादि । अचो ञ्णितीत्यस्यावकाशः ( ।२।११५) कारयति हारयति । अतो लोपस्यावकाश चिकीर्षिता जिहीर्षितेति । इहोभयं प्राप्नोति चिकीर्षको जिहीर्षक इति । अतो लोप एव भवति पूर्वविप्रतिषेधेन । अकृत्सार्व-धातुकयोर्दीर्घ (७।४।२५) इत्यस्यावकाश श्चीयते लूयत इति । अतो लोपस्या-वकाशः स एव । इहोभयं प्राप्नोति चिकीर्ष्यते जिहीर्ष्यत इति । लोप एव भवति पूर्वविप्रतिषेधेन ।

## ४६। यस्य हलः।

बेभिदितेति। यङन्तादार्धधातुकं तृच्। तस्मिन् परतो यशब्दस्य लोपः। यस्येतीदं वर्णनिर्देशो वा स्याद् यकाराकारग्रहणं वा। तत्र यद्याद्यः पक्ष आश्रीयेत तदेर्ष्यिता मव्यितेत्यत्रापि स्यादिति द्वितीयं पक्षमाश्रित्याह यस्येति संघातग्रहणमिति। कुत एतत्। निर्देशात्। यदि वर्णग्रहणं स्यात् तदा यो हल इत्येवं ब्रुयात्। यदि तर्हि संघातग्रहणम् एवं तर्ह्यलोऽन्त्यस्ये-त्यन्त्यस्य (१।१।५२) स्यादित्यत आह तत्राणोऽन्त्यस्येत्यादि। कस्मान्न प्रवर्त्तत इत्याह अतो लोप इत्यादि। पूर्व्वेणाप्यलोऽन्त्यस्य लोपः सिद्धः। तत्रारम्भ-सामर्थ्यात् सर्व्वस्य भवति। हल इति वेत्यादिना परीहारान्तरमाह हल इति पञ्चमीनिर्देशः। तत्र हल उत्तरो यो यशब्दस्तस्य लोप इत्युच्यमान आदेः परस्येति (१।१।५४) वचनाद् यकारस्यैवानेन लोपो भवति। अकारस्य त्वतो लोप इत्यनेन (६।४।४८)। ईर्ष्यिता। मव्यितेति। सूत्रं ईर्ष्य ईर्ष्य ईर्ष्यार्थाः। मव्य बन्धने। अत्र संघातात्मको यशब्दो न भवतीति न प्रवर्त्तते लोपः। लोलूयितेति। यङ्। गुणो यङ्लुकोरिति (७।४।८२) गुणः।

## ५०। क्यस्य विभाषा।

क्यइति क्यच्क्यङोरुत्सृष्टानुबन्धयोः सामान्येन ग्रहणम्। विशेषानु-पादानात्। समिधमिवात्मानमाचरतीति। वेति वाशब्दः समुच्चये वर्त्तमानः समिदिवाचरतीत्यमुमर्थं ग्राहयति। यथायोगमिति। यदात्मनः समिध-मिच्छतीत्यर्थो विवक्ष्यते तदा सुप आत्मनः क्यजिति (३।१।८) क्यच् कर्त्तव्यः। यदा समिधमिवात्मान माचरतीति तदोपमानादाचार इति (३।१।१०) क्यजेव। यदा समिदिवाचरतीति तदा कर्त्तुः क्यङ् सलोपश्चेति (३।१।११) क्यङ्। इत्येष यथायोगशब्दार्थः।

## ५१। णेरनिटि।

णेरिति। णिङ्णिचो विशेषकरावनुबन्धावुत्सृज्य यत् सामान्यं णिमात्रं तस्य ग्रहणम्। इयङादिभिः सर्वस्य विषयस्यावष्टब्धत्वादनवकाशोऽयं णिलोप स्तेषामपवादोऽयं विज्ञायत इत्यत आह इयङ् यणित्यादि। चततचत्। अर-

रत्वदिति । तन्निरत्निभ्यां हेतुमण्णिच् । तदन्तात्लुङ् । णिश्रीत्यादिनाचङ् (३।१।४८) । ङित्वाद् गुणस्य प्रसङ्ग एव नास्तीतीयङादेशः स्यात् । अतस्तस्यापवादो णिलोपः । आटिटत् । आशिशत् । अत्यशिश्यं पूर्व्वं णिजादिषु क्तेष्वजादे र्द्वितीयस्येति (६।१।२) टिशब्दशिशब्दौ द्विरुच्येते । अतैरनेकाच इत्यादिना (६।४।८२) प्राप्तस्य यणादेशस्यायमपवादः । कारणा हारणेति । अत्र सार्वधातुकार्धधातुकयोरिति (७।३।८४) प्राप्तस्य गुणस्य । कारको हारक इति । अचाचो ञ्णितीति वृद्धेः (७।२।११५) । कार्य्यते हार्य्यत इति । अत्राकृत्सार्वधातुकयोरिति (७।४।२५) प्राप्तस्य दीर्घस्य । ज्ञीप्सतीति । अज्झनगमां सनीति प्राप्तस्य (६।४।१६) दीर्घस्यैव । जानाते र्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णाविति (७।३।३६) पुक् । मारणतोषणनिशामनेषु ज्ञा इति घटादिपाठाद् घटादयो मिदिति मित्संज्ञा ( ग, सू ) । मितां ह्रस्व इति (६।४।९२) ह्रस्वत्वम् । ततः सन् । सनीवन्तर्द्धेत्यादिना (७।२।४३) पक्ष इडागमाभावः । आप्ज्ञप्यृधामीदितीत्वम् (७।४।५५) । अत्र लोपोऽभ्यासस्येतत्र्यभ्यासलोपः (७।४।५५) । कारयिता हारयितेति । अनिटीति वचनादिह न भवति । अनिटोति शक्यमकर्त्तुम् । कथम् ? निष्ठायां सेटीति (६।४।५२) नियमार्थम् भविष्यति । निष्ठायामेव सेटि । नान्यत्रेति । अयुक्तमेतत् । विपरीतनियमोऽप्याशङ्क्येत । सेट्येव निष्ठायामिति । तथाच सति कारयितेत्यत्र स्यादेव णिलोपः । तस्माद् विपरीतनियमाशङ्कानिरासार्थमनिटीत्युक्तम् ।

## ५२ । निष्ठायां सेटि ।

गणितम् । लक्षितमिति । गण संख्याने । लक्ष दर्शनाङ्कनयोः । चुरादौ । संज्ञपितः पशुरिति । ननुचात्र यदि सेटीति वचनादनेन न भवितव्यं तदा पूर्वसूत्रेण कस्मान्न भवतीत्याह सेड्ग्रहणसामर्थ्यादित्यादि । यदि ह्यनिटि पूर्वेण णिलोपः स्यात् सेड्ग्रहणमनर्थकं स्यात् । निष्ठाया मित्येवं ब्रूयात् । आरम्भसामर्थ्यादेव हि सेडर्थो भविष्यति । तस्मात् सेड्ग्रहणसामर्थ्यात् पूर्वेणापि संज्ञपितः पशुरित्यत्र णिलोपो न भवति । कथं पुनरत्र सेण् निष्ठा न भवतीत्याह सनीवन्तर्द्धेत्यादि । यथेत्यादि । यस्य यस्य (७।२।१५)

विभाषेत्यनेकाच उपदेशेऽनुदात्तादित्यत (७।२।१०) एकाज्ग्रहणमनुवर्त्तते। ततोऽनेकाचत्वाज् ज्ञपेः प्रतिषेधाभावाद् भवितव्य मिडागमेन निष्ठायाम्। तस्मात् सेड्ग्रहणमनर्थकं स्यात्। व्यावर्त्त्याभावात्। ननु च ज्ञप्त इत्यत्र मा भूदित्येवमर्थं सेड्ग्रहणं भविष्यति। नैतदस्ति। क्रियमाणेऽपि सेड्ग्रहणे वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ता इति (७।२।२७) निपातनादत्र भवितव्यमेव णिलोपेन। यदि तर्ह्यनर्थकं सेड्ग्रहणं तत् किमर्थं क्रियत इत्याह तत् क्रियत इत्यादि। पूर्वमिडागमे कृते सेटि निष्ठायां जातायां पश्चाण् णिलोपो यथा स्यादित्येवमर्थं सेड्ग्रहणं कृतम्। कः पुनरकृत इटि णिलोपे सति दोषः स्याद्? यन्निवृत्त्यर्थं पूर्वमिडागमइष्यत इत्याह अकृते ह्येत्यादि। असति सेड्ग्रहणे कारित इति स्थिते णिलोपः प्राप्नोति। इट् च। तत्र कृताकृतप्रसङ्गित्वेन णिलोपेनैव भवितव्यम्। णिलोपे च सत्येकदेशविकृतस्यानन्यत्वात् स एवायं करोति रितेरकाच (७।२।१०) उपदेशेऽनुदात्तादितीट्प्रतिषेधः प्रसज्येत। ततश्च कारितमितीरतन्न सिध्येत्। तस्मात् सेड्ग्रहणं कर्त्तव्यम्।

## ५३। जनिता मन्त्रे।

इडादौ णिलोपो निपात्यत इति। जनितेति तृजन्तम्। तत्राणिटीति प्रतिषेधादिडादौ न प्राप्नोति। अतो निपात्यते। ह्रस्वत्वं तु जनीजॄष्क्नसुरञ्जोऽमन्ताश्चेति (ग, सू) मित्संज्ञकत्वान् मितां ह्रस्व इत्यनेनैव (६।४।९२) सिद्धम्।

## ५४। शमिता यज्ञे।

शमितरित्यत्र पूर्ववद् ह्रस्वत्वम्। ऋतो ङिसर्वनामस्थानयोरिति (७।३।११०) गुणः। हल्ङ्यादिना (६।१।६८) सुलोपः। रेफस्य विसर्गः। तृचि सम्बुद्ध्यन्तमेतदिति। निष्ठान्तमेतदिति कस्यचिदाशङ्का स्यात्। अतस्तां निराकर्त्तुमिदमुक्तम्। शमयितरितीरतदपि तृचि सम्बुद्ध्यन्तम्।

## ५५। अयामन्ताल्वाय्येत्न्विष्णुषु।

कारयाञ्चकारेति। कास्प्रत्ययादित्यादिना (३।१।३५)। आम इति

(२।४।८१) लेलुक्। कास्येत्यादिना (३।१।४०) लिट्परस्य कृञोऽनुप्रयोगः। द्विर्वचनमभ्यासकार्यम्। गण्डयन्तः। मण्डयन्त इति। गडि सेचने। मडि भूषायाम्। हेतुमण्णिच्। गडेर्घटादित्वान्मित्त्वे सति पूर्ववद् ह्रस्वत्वम्। जृवृषिभ्यां (उण्, ३।४०६) भजित्यनुवर्त्तमाने तॄभूवहिवसभासिसाधिगतिमण्डिजिनन्दिभ्यश्चेति (उण्, ३।४०८) झच्। अन्तादेशः। स्पृहयालुर्गृहयालुरिति। स्पृह ईप्सायाम्। ग्रह ग्रहणे। चौरादिकावदन्तौ। अतो लोप इत्यकारलोपः (६।४।४८)। तस्य स्थानिवत्त्वाल्लघूपधगुणाभावः। स्पृहिगृहीत्यादीनालुच् (३।२।१०७)। स्पृहयाय्य इति। तनुदचि-(उण्, ३।३७६) स्पृहिगृहिभ्यश्चाय्य इति आय्यप्रत्ययः। स्तनयित्नुरिति। स्तन गदी देवशब्दे। चुरादावदन्तः। अतो लोपः (६।४।४८)। तत्राकारलोपस्य स्थानिवद्भावादत उपधाया इति (७।२।११६) वृद्धिर्न भवति। स्तनिहृषिपुषिगदिमदिभ्यो णेरिन्नुजितीत्नुच्प्रत्ययः (उण्, ३।३०९)। पोषयिष्णवः पारयिष्णव इति। पुष पुष्टौ। हेतुमण्णिच्। पार तीर कर्मसमाप्तौ। चुरादिणिच्। णेश्छन्दसीतीष्णुच् (३।२।१३७)। अथ नेतिग्रवं कस्मान्नोक्तम्। णिलोपे हि प्रतिषिद्धे गुणएव स्यात्। ततश्चेचोऽयवायाव (६।१।७८) इत्ययादेशो भविष्यति। लघु चैवं सूत्रं भवति। अयेत्युच्यमाने मात्राधिक्येन सूत्रं गुरु भवतीति मत्वाह नेति वक्तव्य इत्यादि। ल्यपि लघुपूर्वादित्यत्र (६।४।५६) गुणाभावादयादेशो न स्याद् यदि नेतुच्यते। तस्मादुत्तरार्थमयादेशवचनम्।

## ५६। ल्यपि लघुपूर्व्वात्।

लघुपूर्वादिति। लघुः पूर्वो यस्मादिति बहुव्रीहिः। वर्णोऽन्यपदार्थः। प्रणमय्य। प्रतमय्य। प्रदमय्य। प्रशमय्येति। अत्र नमादीनां मित्त्वात् पूर्ववद् ह्रस्वत्वे कृते मकारो लघुपूर्वः। प्रवेभिदय्य गत इति। भिदेर्यङन्ताण्णिच्। यस्य हल इति (६।४।४९) यकारलोपः। अत्रापि दकारो लघुपूर्व्वः। प्रगणय्येति। गण संख्याने। चुरादावदन्तः। पूर्ववल्लोपः। अत्रापि णकारो लघुपूर्वः। ननु ह्रस्वादय एवाभाच्छास्त्रीयाः। अयादेशोऽपि। तथासिद्धवदत्राभादिति (६।४।२२) ह्रस्वादीनामसिद्धत्वाल्लघुपूर्वत्वं मकारादेर्वर्णस्य

नोपपद्यत इत्यत आह क्त्वयल्लोपाल्लोपानामित्यादि। कथमसमानाश्रयत्व मित्याह क्त्वादयो हीत्यादि । अथ पूर्वग्रहणं किमर्थम् ? न लघोरित्येवोच्येत । अशक्यमेवं वक्तुम् । एवमुच्यमाने लघोरुत्तरस्य णे लॅंरप्ययादेशो भवतीत्येष वाक्यार्थः । तथाच प्रशमय्येत्यादौ न स्यात् । हला व्यवधानात् । क्व तर्हि स्यात् ? प्रगणय्येत्यादौ । ननु चात्राप्यतो लोपे कृते लघोरुत्तरो णिर्न सम्भवत्येव । तत्र वचनसामर्थ्याद्व्यवधानमाश्रयिष्यते । नैतदेवम् । वचनसामर्थ्याद् भूतपूर्वगतिराश्रयिष्यते । कुत एतल्लभ्यते वचनसामर्थ्याद्व्यवधानमाश्रयितव्यं नतु भूतपूर्वगतिरिति ? भूतपूर्वगतावाश्रीयमाणायां प्रगणय्येत्यादावेव स्यात् । प्रणमय्य गत इत्यादौ तु न स्यात् । तस्मात् पूर्वग्रहणं कर्त्तव्यम् ।

५७ । विभाषापः ।

प्रापय्येति । आप्लृ लम्भने । आप्लृ व्याप्तौ । द्वयोरपि ग्रहणम् । पूर्व्वक सुरादिः । अपरः स्वादिः । अथाध्याप्य गतइत्यत्र कस्मान्न भवति ? अत्रापि क्रीङ्जीनां (६।१।४८) णाविनीङ आत्वे कृते ऽर्त्तिह्रीत्यादिना (७।३ ३६) पुक्याप उत्तरो णि र्भवतीत्यत आह इङादेशस्येत्यादि । यद्येवमप आचष्ट इत्यप् शब्दाण्णिचि कृते प्रापय्येत्यादि न स्यात् । लाक्षणिकत्वादेव मा भूदनेन । पूर्वेण सूत्रेण भविष्यति । ननु चैकादेशे कृते सत्यलघुपूर्व्वत्वान्न प्राप्नोति । एकादेशस्यासिद्धत्वान्न दोषः । कथम् ? असिद्धं बहिरङ्गमन्तरङ्गे इति । बहिरङ्गत्वं त्वेकादेशस्य द्विपदाश्रयत्वात् । अयादेशस्य पुनर्णिमात्राश्रयत्वादन्तरङ्गत्वम् ॥

५८ । युप्लुवोर्दीर्घश्छन्दसि ।

यु मिश्रणे । प्लुङ् गतौ । अनयोर्धात्वो र्लुकि प्राप्ते दीर्घार्थं वचनम् ।

५९ । क्षियः ।

छन्दसीति निवृत्तम् । क्षिय इति निरनुबन्धकग्रहणे न सानुबन्धकस्येति (प,८२) क्षि क्षये क्षि निवासगत्योरित्यनयो र्ग्रहणम् । न क्षिष् हिंसाया मित्यस्य ।

६० । निष्ठायामण्यदर्थे ।

खतः कृत्यस्यार्थौ भावकर्मणी इति । तयोरेव कृत्यक्तखलर्था इति (३।४।७०) वचनात् । ताभ्यामन्यत्रेति कर्त्तर्य्यधिकरणे च । आचीण इति ।

क्षियो दीर्घादिति (८।२।४६) निष्ठानत्वम् । अकर्मकात् क्षियः कर्त्तरि क्तप्रत्ययोऽयमिति । गत्यर्थेत्यादिना (३।४।७२) । प्रक्षीणमिदं देवदत्तस्येति । अधिकरणवाचिनश्चेति (२।३।६०) कर्त्तरि षष्ठी । अधिकरण इति । क्तप्रत्ययोऽयमिति प्रकृतेन सम्बन्धः । प्रक्षीयतेऽस्मिन्निति प्रक्षीणम् । अधिकरणभूतं द्रव्यमुच्यते । क्षितमिति भाव इति । अस्यापि पूर्ववत् सम्बन्धः । कर्मणि न प्रत्युदाहरति । क्षियोऽकर्मकत्वात् ।

६१ । वाऽऽक्रोशदैन्ययोः ।

क्षितायुरिति । पूर्ववत् कर्त्तरि क्तः । एवमुत्तरत्रापि । क्षितक इति । अनुकम्पायां कन् । आक्रोशदैन्याभ्यामन्यत्र पूर्वेण नित्यं भवति । अण्यदर्थ इति किम् ? क्षितं जाल्मस्य । क्षितकमस्य तपस्विनः ।

६२ । स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ।

स्यसिच्सीयुट्तासिष्विति सप्तम्या प्रतियोगिनो निर्देशाच्चिणीव चिण्वदिति सप्तमीसमर्थादिति विज्ञायते । यथा मथुरावत् पाटलिपुत्रे प्राकारा इति । भावकर्मविषयेष्विति । अनेन भावकर्मणोरित्यस्य विषयसप्तमीत्वं दर्शयति । भावकर्मणी विषयौ येषां ते तथोक्ताः । किं पुनः स्यादयो भावकर्मविषयाः ? ये स्यादयो लादेशेन भावकर्मणो र्विवक्षितयो र्भवन्ति । चकारोऽत्र सन्नियोगार्थः क्रियते । तेन यदा चिण्वद्भावो भवति तदेडागमो भवति । यदा तु चिण्वद्भावो न भवति तदा त्विडागमो न भवतीति दर्शयन्नाह यदेत्यादि । कस्येति । षष्ठीनिर्दिष्टस्य ह्यागमा भवन्ति । स्यादयश्चेह सप्तम्या निर्दिष्टाः । नचान्य आगमी श्रूयत इति प्रश्नः । यद्यपि ते सप्तम्या निर्दिष्टा स्तथापि यथा हनश्च वध इति (३।३।७६) पञ्चमीनिर्दिष्टोऽपि हन्तिः प्रत्यय मुत्पाद्यादेशेन सम्बन्ध मनुभवन् षष्ठ्यन्ततां प्रतिपद्यते तथा स्यादयोऽपि यदागमेन सम्बन्ध मनुभवन्ति तदा षष्ठ्यन्ततां प्रतिपद्यन्त इत्यभिप्रायेणाह स्यसिजित्यादि । अत्रैव हेतुमाह ते हि प्रकृता इत्यादि । इडयमागमलिङ्गः । तस्यावश्यमागमिना भवितव्यम् ।

तत् किमश्रुतानामागमित्वं परिकल्प्य ? तस्यैव विधीयतामुत प्रकृतानामेव स्यादीनामिति ? युक्तं यत् प्रकृतानामेव विधीयते। अश्रुतप्रकल्पनाया गरीयस्त्वात्। ननु चाङ्गमपि प्रकृतम्। तस्य कस्मान्न क्रियत इत्यत आह अङ्गस्येत्यादि। अङ्गस्य न क्रियते। लक्ष्यविरोधात्। यद्यङ्गस्य स्यात् तदेटि कृते लक्ष्यविरोधादनिष्टं स्यात्। नह्यनिष्टार्था शास्त्रे प्रवृत्ति र्युक्ता। तस्मान्मा भूल्लक्ष्यविरोध इति यद्यप्यङ्गमपि प्रकृतं तथापि स्यादीनामेव क्रियते। नाङ्गस्य। इह द्वौ पक्षौ सम्भवतः। चिण्निमित्तं यत् कार्य्यं यदाहत्य चिणि विधीयते तद्वातिदिश्यते। यद्वा चिणि यद्दृष्टं चिण्-निमित्तमचिण्निमित्तञ्च तत् सामान्येन। तत्र यदि पूर्वकः पक्ष आश्रीयेत तदातो युक् चिण्कृतोरिति ( ७।३।३३ ) युगागमः। चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति ( ६।४।९३ ) दीर्घत्वञ्च। एते द्वे एवाङ्गकार्य्ये अतिदिश्येस्याताम्। नान्यद्वृद्ध्यादिकम्। नहि तदाहत्य चिणि विधीयते। आहत्योच्चार्य्येत्यर्थः। यद्धि साक्षाच्चिणं निमित्त मुपादाय विधीयते तच्चिण्याहत्य विधीयते। नचैवं वृद्ध्यादिकं विधीयते। अथ द्वितीय स्ततो न भवत्येष दोषप्रसङ्गः। वृद्ध्यादीनामपि चिणि दृष्टत्वात्। यदि चिणि यद्दृष्टं तदतिदिश्यते तर्हि हनिणिङामादेशा अपि प्राप्नुवन्ति। तेषामपि तत्र दृष्टत्वादिति। अनेनाभिप्रायेणाह कानि पुनरित्यादि। द्वितीये पक्षे यो दोष स्तमुत्तरत्र परिहरिष्यामीति चेतसि कृत्वा चिणि यद्दृष्टं कार्य्यं तन्निमित्तमितरद्वा तदिह सामान्येन निदिश्यत इति दर्शयन्नस्य योगस्य यानि प्रयोजनानि तेषां संग्रहश्लोकमाह—वृद्धिश्चिण्वदित्यादि। चायिष्यत इत्यत्र वृद्धिः प्रयोजनम्। चिनोते र्लृट्। स्यप्रत्ययः। भावकर्मणोरित्यात्मनेपदम् (१।३।१३)। अत्रेदानीं चिण्वद्भावाद् वृद्धिर्भवति। यथा चिण्णचो ञ्णितीति (७।२।११५) वृद्धिर्भवत्यचायीत्येवमुत्तरत्रापि चिण्वदित्येतस्य प्रत्येकमभिसम्बन्धं कृत्वा यथायोगमतिदेशो योजनीयः। अचायिष्यत इति। लृङ्। शेषं पूर्ववत्। युक् च प्रयोजनं दायिष्यत इत्यत्र। दीर्घश्चोक्तो यो मितां वा चिणीति स च। प्रयोजनं शमिष्यते शामिष्यतइत्यत्र। शमि र्जनिकृष्रञ्जसुरञ्चोऽमन्ताश्चेति ( ग, सू ) मित्संज्ञा। स च ण्यन्तः सनाद्यन्ता धातव (३।१।३२) इत्यत्रोपदिष्ट

इतुपदेशेऽजन्तो भवति । यत्तु हन्तेर्घो हन्ते र्ञ् णिन्नेष्विति (७।३।५४) कुत्वं विधास्यते तच्च प्रयोजनं घानिष्यत इत्यत्र । हनिष्यत इत्यत्र तु ऋद्धनोः स्य इतीट् (७।२।७०) । सन्त्येतानि प्रयोजनानि । किन्त्वनेनेटि कृते शमिष्यते शामिष्यत इत्यत्र णेरनिटीति (६।४।५१) णिलोपो न सिध्यति । सेट्त्वात् । अत आह इट् चासिद्ध इत्यादि । असिद्धवदत्रा(६।४।२२)भादित्यसिद्धोऽयं चिण्वदिट् । तेन णिलोपो भविष्यति । स्यादिलत् । येऽनुदात्तोपदेशास्तेभ्यो स्तेभ्यः परेषां स्यादीनाममनेनेड् विधीयत इति युक्तमसिद्धत्वम् । ये तूदात्तोपदेशाः शमिप्रभृतय स्तेभ्यः परत्वादार्धधातुकस्येड् वलादेरिति (७।२।३५) वलनिमित्ते-नेटा भवितव्यम् । स च सिद्ध एव । तस्मिंस्तु तदवस्थ एव दोष इत्यत आह नित्यत्वाद्यमित्यादि । कृताकृतप्रसङ्गी यो विधिः स नित्य इत्येतदाश्रित्यायं चिण्वदिण् नित्यः । कृतेऽपि हि वलादिलक्षण इटि प्राप्नोत्यकृतेऽपि । नह्ययं वलादित्वमपेक्षते । अस्मिंस्तु कृते वलादिलक्षण इण् न प्राप्नोति । वलादित्वस्य विहतत्वात् । वल्निमित्तो विघातीति । वल् निमित्तं कारणं यस्य स तथोक्तः । विघातोऽस्यास्तीति विघाती । विघातो निमित्ताभावादप्रवृत्तिः । तदेवं नित्यत्वादुदात्तेभ्योऽप्यनेनैव चिण्वदिटा भवितव्यम् । अयञ्चासिद्ध इति न भवति णिलोपाभावप्रसङ्गः । शाङ्क्ष्यत इति । अत उपधाया इति (७।२।११६) वृद्धिः प्रयोजनम् । अथेह ग्रहोऽलिटि दीर्घ इति (७।२।३७) दीर्घः कस्मान्न भवतीत्याह ग्रहोऽलिटीत्यादि । वलादिलक्षणस्तत्रेट् प्रकृत इति तस्यैव दीर्घो विज्ञायते । नान्यस्य । द्रक्ष्यत इति । सृजिदृशोर्झल्यमकितीत्यमागमः (६।१।५८) । व्रश्चादिना (८।२।३६) षत्वम् । षढोः कः सीति (८।२।४१) कत्वम् । इणकोरिति (८।३।५७) षत्वम् । दर्शिष्यत इति । पुगन्तलघूपधस्ये-त्यनेनात्र (७।३।८६) गुणः सिद्धत्येव । इडर्थस्तु चिण्वद्भावो विधीयते । अचेषातामिति । आताम् । सिचि रूपम् । अदिषातामिति । स्थाघ्वोरिच्चेती-त्वम् (१।२।१७) । सिचश्च कित्त्वम् । अवधिषातामिति । आत्मनेपदेष्वन्यत-रस्यामिति (२।४।४४) वधादेशः । अहसातामिति । लिङ्सिचावात्मने-पदेष्विति (१।२।११) कित्त्वम् । तेनामागमगुणौ न भवतः । षत्वादि पूर्ववत् । चेतेति । लुट् तासिः । लुटः प्रथमस्य डारौरस इति (२।४।८५) डादेशः ।

टिलोपः । द्रष्टेति । पूर्ववदमादिः । चेतव्यमिति । कर्मणि तव्यः । चेष्यतीति । अत्र कर्त्तुर्लादेशेन विवक्षितत्वात् कर्तृविषयः स्यप्रत्ययः । गुणे कृते रपरत्वे च न प्राप्नोतीति । कृ अत इति स्थिते गुणःप्राप्नोति । चिण्वद्भावश्च । तत्र परत्वाद् गुणः । तत्र कृते रपरत्वम् । यद्युपदेशग्रहणं न क्रियेत ततोऽनजन्तत्वादिट् न स्यात् । उपदेशग्रहणाद् भवति । यद्यपि करोतिरुत्तरकालमनजन्त उपदेशे त्वजन्त एव । यदि चिणि यद् दृष्टं कार्य्यं तदतिदिष्टं हनिणिङादेशा अपि प्राप्नुवन्ति । तेषामपि तत्र दृष्टत्वादित्यत आह अङ्गाधिकारविहितमित्यादि । अङ्गस्येत्यधिकारे सति प्रत्यासत्तेरङ्गाधिकारे विहितं कार्य्यं यच्चिणि दृश्यते सामान्येन तदतिदिश्यते । ननु यच्चिप्रकृष्टम् प्रकरणान्तरविहितम् । नच हनिणिङामादेशा अङ्गाधिकारे विहिताः ; अपितु प्रकरणान्तरे । तस्मान्न तेऽतिदिश्यन्त इति न भवन्ति तत्र । घानिष्यतइत्यत्र लुङि चेत्यनेन ( २।४।४३ ) विहितो वधादेशो न भवति । आयिष्यत इति । इणो गा लुङीत्यनेन (२।४।४५) विहितो गादेशः । अध्यायिष्यत इत्यत्र विभाषा लुङ्-लृङोरित्यनेन (२।४।५०) विहितो गाङादेशः । एवमपि स्यादिभ्यः परस्य प्रत्ययस्य लुक् प्राप्नोति । अङ्गाधिकारे चिण उत्तरस्य प्रत्ययस्य चिणो लुगिति (६।४।१०४) लुग्विधानात् । नैष दोषः । इह हि सप्तमीसमर्थाद्वति तस्य वतेराश्रयणम् । तेन चिणि यद् दृष्टं कार्य्यं पूर्वस्य सम्भवति तदतिदिश्यते । नतूत्तरस्य यत् कार्य्यं तदपि ।

## ६३ । दीङो युड्चि क्ङिति ।

उपदिदीय इति । दीङ् क्षये । असंयोगाल्लिट् किदिति ( १।२।५ ) कित्त्वम् । लिट स्तझयोरेशिरेचौ । दीङ इति षष्ठीयं वा स्यात् पञ्चमी वेति द्वौ पक्षौ । तत्र यद्याद्यः पक्ष आश्रीयेत तदाद्यन्तौ टकितौ (१।१।४६) इत्यादौ युटि कृते धातोरनिष्टं रूपमापद्येत । अत इदं षष्ठीपक्षे दूषणमालक्ष्य पञ्चमीपक्षं पुरस्कृत्याह दीङ इति पञ्चमीनिर्देशादित्यादि । पञ्चमीनिर्देशे हि सत्युभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति दीङइति पञ्चम्या अचीति सप्तम्याः षष्ठीत्वे प्रकल्पिते तस्मादित्युत्तरस्येत्यजादेरादियुडागमो ( १।१।६३ )

भवति। अचीति सप्तमीनिर्देशस्तूत्तरार्थः। ननु चातेरनेकाच इति (६।४।८२) यणादेशे कर्त्तव्ये युड़सिद्ध इति यणादेशेन भवितव्यम्। ततश्चोपदिदीय इति न सिध्येत्। उपदिदुय्यइत्यनिष्टं रूपं प्राप्नोति। अत आह विधानसामर्थ्यादित्यादि। यदि यणादेशे कर्त्तव्ये युटोऽसिद्धत्वं स्यात् तदा युटो विधानमनर्थकं स्यात्। विशेषाभावात्। कथं पुनर्विशेषाभावः ? यावता ऽसति हि युट्येकस्य यकारस्य श्रवणं भवति। सति तु द्वयोः। नैषोऽस्ति विशेषः। नहि व्यञ्जनपरस्यैकस्यानेकस्य वा हलः श्रवणं प्रति विशेषोऽस्ति। ये तु विशेषमिच्छन्ति तन्मतेनास्माभिः पूर्वमेव यणादेशे युटःसिद्धत्वमन्यथा प्रतिपादितम्। उपदेदीयत इति यङ्। उपदानमिति ल्युट्। मीनातिमिनोतिदीङां ल्यपि चेत्यात्त्वम् (६।१।५०)। दीङ इत्यनुबन्धनिर्देशो यङ्लुकि मा भूदित्येवमर्थः। देद्यतुः। देद्युरिति। ननु चात्र कास्प्रत्ययादाममन्त्र इत्यामा (३।२।३५) भवितव्यम्। तेनाक्ङित्त्वादेव न भविष्यति। सत्यमेतत्। अमन्त्रे न भविष्यति। मन्त्रे तु स्यादेव। तत्रामोऽभावात्। अथ यङ्लुगन्तस्य मन्त्रे प्रयोगो न दृश्यते तदा विस्पष्टार्थम्।

## ६४। आतो लोप इटि च।

इत्यजादावार्धधातुके क्ङिति चेति। अजादावार्धधातुक इति प्रत्येकमभिसम्बध्यते। इत्यजादावार्धधातुके क्ङिति चाजादावार्धधातुक इति। इड्ग्रहणमक्ङिदर्थम्। पपिथेति। पातेः पिबतेर्वा लिट् सिप्। परस्मैपदानामित्यादिना (३।४।८२) तस्य थल्। ऋतो भारद्वाजस्येति (७।२।६३) नियमादिट्। गोद इति। आतोऽनुपसर्गे कः (३।२।३)। व्यत्यरे। व्यत्यल इति। कर्त्तरि कर्मव्यतीहार इत्यात्मनेपदम् (१।३।१४)। उत्तमपुरुषैकवचनम्। इट्। तस्य सार्वधातुकमपिदिति (१।२।४) ङित्त्वम्। तत्रार्धधातुकत्वं नास्तीति न भवति लोपः। व्यायत इति। भावे लकारः। दासीयेति। आशिषि लिङ्। आत्मनेपदोत्तमैकवचनम्। तस्य टोऽदित्यदादेशः (३।४।१०६)। अत्र सीयुटस्तत्रत्वादिटोऽजादित्वं नास्तीति सत्यप्यार्धधातुकाजादित्वे लोपाभावः।

६५। ईद्यति।

क्ङितीत्युत्तरार्थमनुवर्त्तमानमपीह नाभिसम्बध्यते। यतः क्ङित्त्वासम्भवात्। तकार उच्चारणार्थः। अनण्त्वादेव हि सवर्णग्रहणं न भविष्यति। असत्यपि वा जातिपक्षे सवर्णग्रहण आन्तरतम्याद् दीर्घ एव भविष्यति। न ह्रस्वः। दीर्घोच्चारणमुत्तरार्थम्। इह तु गुणेन भवितव्यम्। नचात्र दीर्घस्य ह्रस्वस्य वा गुणे कृते कश्चिद् विशेषोऽस्ति। देयमिति। अचो यत् (३।१।९७)।

६६। घुमास्थागापाजहातिसां हलि।

दीयत इति। कर्मणि लकारः। देदीयत इति यङ्। अथ मेति कस्येदं ग्रहणम्? किं मेङ् प्रणिदान इत्यस्य भौवादिकस्य? उत माङ् मान इत्यस्य जौहोत्यादिकस्य? आहोस्विद् मा मान इत्यस्यादादिकस्य? तत्र केचिदाहुः। निरनुबन्धकग्रहणे न सानुबन्धकस्येत्यादादिकस्य (प, ८२) ग्रहणम्। अन्ये त्वाहुर् लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव (प,९१) ग्रहणमित्यलुग्विकरणयोर्माङ्मेङोरिति। अपरे ब्रुवते गामादाग्रहणेष्वविशेष इति (प, ११५) त्रयाणामपीति। एतदेव वृत्तिकारस्याभिमतमिति लक्ष्यते। तथाहि पातेरिह ग्रहणं नास्ति। लुग्विकरणत्वादिति ब्रुवता पा रक्षण इत्यस्य ग्रहणाभावः स्वयमेवोक्तः। यदि चात्रालुग्विकरणयोर्लुग्विकरणस्य वा ग्रहणमभिमतं स्यात् तदपि प्रतिपादयेत्। नच प्रतिपादितम्। अतोऽवगम्यते त्रयाणामपि ग्रहणमभिमतमिति। गा इति। गाङ् गतौ। कै गै शब्दे। एतौ भौवादिकौ। गा स्तुतौ छन्दसीति जौहोत्यादिकः। इणो गा लुङीति गादेशः। इण्वदिक इति (२।४।४५, वा) वक्तव्यमितीको गादेशः। गाङ् लिटि। विभाषा लुङ्लृङोरिति (२।४।५०) चेङो गाङादेशः। एषां पूर्ववत् सर्वेषामविशेषेण ग्रहणम्। सत्यपि सर्वेषां ग्रहणे यस्य क्ङिदार्धधातुकपरं सम्भवति तस्यैवेत्त्वं भवति। नेतरस्य। निमित्ताभावात्। गीयते। जेगीयत इति। भौवादिकयोरुदाहरणे। अध्यगीष्टेत्यादि। इङो गाङ्। गाङ्कुटादिसूत्रेण (१।२।१) सिचो ङित्त्वम्। आत्मनेपदेष्वनत

(७।१।५) इत्यदादेशः । अथ किमर्थं जहातीति श्तिपा निर्देशः क्रियते ? न हेत्येवोच्येतेत्यत आह जहातेरित्यादि । यदि हेति निर्देशः क्रियते तदा जिहातेरोहाङ् गताविस्यापि स्यात् । जहातीति निर्देशे तु न भवति । अत्र हि निर्देशे सति यस्यैतद्रूपं भवति तस्यैव ग्रहणेन भवितव्यम् । कस्य चैतद्रूपम् ? ओहाक् त्याग इत्यस्य । इतरस्य भृञामिदित्यभ्यासस्येत्त्वे (७।४।७६) कृते जिहातीति रूपं भवतीति । कामं हागित्यपि निर्देशे न भवति जिहातेः प्रसङ्गः । वैचित्र्यार्थस्तु न तथा निर्देशः कृतः । अवसीयत इति । षोऽन्तकर्मणि । ददतुरित्यादि । ननु चाश्नातो लोप (६।४।६४) इत्यादिनाकारलोपो भविष्यति । तत् किमेतन्निवृत्त्यर्थेन हलीत्यनेनेत्यत आह आतो लोपाद्धीत्यादि । आतो लोपस्यावकाशो ययतुर्ययुरिति । ईत्त्वस्यावकाशो दीयते धीयत इति । इहोभयं प्राप्नोति ददतुर् ददुरिति । तत्र यदि हल्ग्रहणं न क्रियेत तदा परत्वादीत्त्वं स्यात् । ननु सिद्धयोर्द्वयोर्विप्रतिषेध उपपद्यते । इह त्वसिद्धवदत्रा भादिति (६।४।२२) द्वयोरप्यसिद्धत्वम् । तत् कुतो विप्रतिषेधः । अस्मिंश्च सति परत्वादीत्त्वं स्यादिति न युक्तं वक्तुम् । तथाहि विप्रतिषेधे परं कार्य्यं (१।४।२) मित्युक्तम् । अत आह एतदेवेत्यादि । यद्यत्र विप्रतिषेधे कर्त्तव्येऽसिद्धत्वं स्याद् हल्ग्रहणमनर्थकं स्यात् । भवत्वत्रेत्त्वम् । तस्यासिद्धत्वादातो लोपो भविष्यति । तत् किं हल्ग्रहणेन ? तदेतत् कथमर्थवद् भवति ? यदि विप्रतिषेधे कर्त्तव्ये सिद्धत्वं स्यात् । नान्यथा ।

## ६७ । एर्लिङि ।

पूर्वेणेत्त्वे प्राप्त एत्वं विधीयते । मेयादिति । मा मान इत्यस्येदमुदाहरणम् । न तु माङ् मेङोः । तयो ह्यात्मनेपदित्वात् परस्मैपदं न सम्भवति । गेयादिति । कै गै इत्यस्योदाहरणम् । न तु गाङः । तस्य परस्मैपदासम्भवात् । नापीणिगिङादेशानाम् । तेषामपि लिङ्यसम्भवात् । इङादेशस्य तु पूर्वस्माच्च हेतोः ।

## ६८ । वान्यस्य संयोगादेः ।

अन्यस्येति किं स्थेयादिति । यद्यन्यस्येति न क्रियेत तदा पूर्वयोगोऽप्येषु

घादिषु सावकाशः। अयमपि ग्लायादित्यादिषु। श्येयादित्यत्रोभयप्राप्तौ परत्वादनेन विकल्पः स्यादित्यन्यग्रहणम्। यदि पूर्वयोग स्तिष्ठत्यर्थो-ऽप्यारभ्येत तदा तदर्थस्य तस्यारम्भसामर्थ्यात् पूर्वेण नित्यमेत्त्वं भविष्यति। अन्यथा तदर्थस्य तस्यारम्भो निष्फलः स्यादिति शक्य मन्यग्रहण मकर्तुम्। तत् क्रियते विस्पष्टार्थम्॥

## ६९। न ल्यपि।

वेति निवृत्तम्। उत्तरसूत्रे पुनरन्यतरस्यांग्रहणात्। यदुक्तमिति। ईत्त्वं न। पुनरनन्तरमेत्त्वम्। तस्य ल्यपि प्राप्त्यभावात्। प्रतिषेधस्य च प्राप्तिपूर्वकत्वात्॥

## ७०। मयतेरिदन्यतरस्याम्।

न ल्यपीति (६।४।६९) प्रतिषेधादाकारस्य श्रवणे प्राप्ते सतीत्त्वमारभ्यते। अपमित्येति। मेङ् प्रणिदाने। उदीचां माङो व्यतीहार इति (३।४।१९) क्त्वा। इत्त्वे कृते तुक्। ननु चापमित्ययाचिताभ्यां कक्कनाविति (४।४।२१) निपातनात् सिद्ध मेतत्। तदपार्थकोऽयमारम्भः। नैतदस्ति। बाधकान्यपि निपातनानि (प,११९) भवन्तीति पक्षे ऽपमायेति न स्यात्। माङ् मान इत्यस्य भविष्यतीति चेत्? न। अर्थभेदात्। अथाप्यबाधकान्यपि निपातनानि (प,१२०) स्युः? एवमप्यारब्धव्यमेवेदमसन्देहार्थम्। असति ह्यस्मिन् सन्देहः स्यात् किं मयतेरिदं निपातनमथ धात्वन्तरस्येति। उपसर्गनियमश्च विज्ञायेत। अपपूर्वस्यैवेति। अस्मिंस्तु सत्यन्योपसर्गस्यापि भवतीत्येतदर्थो युक्त आरम्भः।

## ७१। लुङ्लङ्लृङ्क्ष्वडुदात्तः।

उदात्तश्च स भवतीति। आगमानुदात्तत्वे प्राप्त उदात्तत्वं विधीयते। एतच्चोदात्तवचन मभेदक इह शास्त्रे गुणा (प,११८) इत्यस्यार्थस्य ज्ञापकम्। कथं कृत्वा? यदि च भेदका गुणाः स्युस्तदोदात्तयुक्तेनैवाटं तमुच्चारयेत्। पश्यत्याचार्यो ऽभेदका इह शास्त्रे गुणाइति। यतः स्वरान्तरनिवृत्त्यर्थ मुदात्त-

वचनं कृतवान् । किमेतस्य ज्ञापनेन प्रयोजनम् । वृद्धिरादैजित्यतो-(१।१।१) दात्तादिभेदभिन्नानामपि वृद्धिसंज्ञा सिध्यतीति ।

## ७२ । आड़जादीनाम् ।

ऐक्षिष्ट । ऐहिष्टेति । ईक्ष दर्शने । ईह चेष्टायाम् । अनुदात्तेतौ । आटश्चेति (६।१।९०) वृद्धिः । औज्झीत् । औम्भीदिति । उज्झ आर्जवे । उभ उन्भ पूरणे । आर्धधातुकस्येट् । अस्तिसिचोऽपृक्तादितीट् (७।३।९६) । इट ईटीति (८।२।२८) सिचो लोपः । अथेज्यतोप्यतौह्यतेत्यत्र कथमाट् । यतो यजिवपिवहिभ्यो लङ् विहितः कर्मणि । ते च हलादयः । नाजादयः । न च शक्यते वक्तुं संप्रसारणे कृतेऽजादित्वं भविष्यतीति । यस्मात् प्रागेव लादेशात् परत्वादडागमेन भवितव्यम् । ततो लादेशेन । ततो यका । ततः संप्रसारणेनेत्यत आह इष्टेत्यादि । यद्यप्यड़ागमः परस्तथाप्यन्तरङ्गत्वा-दादेशस्य पूर्वं स एव क्रियते । लादेशो हि धातो विंहितं लकारमात्रम-पेक्ष्य भवतीत्यन्तरङ्गः । अड़ागमस्तु लकारविशेषम् । अङ्गस्य विधीयमान-त्वात् । अङ्गञ्च प्रत्ययमपेक्षत इति बहिरङ्गः । पूर्वोत्पत्तिनिमित्तोपलक्षण-मात्रश्चेहान्तरङ्गत्वम् । तेन नित्यत्वमप्युक्तं भवति । लादेशो हि नित्यः । कृतेऽप्यटि प्राप्नोति । अकृतेऽपि । अड़ागमस्त्वनित्यः । शब्दान्तरप्राप्तेः । कृते हि लादेशे नित्यत्वाद् विकरणेन भवितव्यम् । विकरणे च कृते विकरणान्तस्याङ्गस्य तेन भवितव्यम् । अकृते तु धातुमात्रस्य । तस्माद-न्तरङ्गत्वान्नित्यत्वाच्चाड़ागमात् पूर्वं लादेशः क्रियते । तत्र कृत इति । लादेशे कृते । विकरण इति यक् । नित्यत्वादिति । कृताकृतप्रसङ्गित्वेन विकरणस्य नित्यत्वम् । स हि कृतेऽप्यटि प्राप्नोति । अकृतेऽपि । स्यादेतत् । अड़ागमोऽपि कृते विकरणे प्राप्नोति । अकृतेऽपि । अतस्तस्यापि नित्यत्वम् । तत्रोभयोर्नित्यत्वे परत्वादड़ागम एव पूर्वं भविष्यतीत्यत आह शब्दान्तर-प्राप्तिरित्यादि । कथं पुनः शब्दान्तरप्राप्तिरितयाह कृते होतयादि । अङ्गस्याड़ागमो विधीयते । कृते च विकरणे तदादिग्रहणस्य स्यादिति । तुमर्थत्वाद् विकरणान्तमङ्गं भवति । अकृते तु धातुमात्रम् । अन्यच्च

विकरणान्तादङ्गाद् धातुमात्रमङ्गमतोऽन्यस्य कृते प्राप्नोति। अकृते त्वन्यस्येति स्फुटैव शब्दान्तरप्राप्तिः। तत्रैतत् स्यात्। विकरणस्यापि शब्दान्तरप्राप्तेरेवानित्यत्वम्। तथाहि तेनापि कृते सत्यडागमे तदादेर्धातो र्भवितव्यम्। अकृते धातुमात्रादित्यत आह शब्दान्तरस्य चेत्यादि। यद्यप्यटः कृताकृतयोरेवावस्थयो र्विकरणः शब्दान्तरात् प्राप्नोति तथापि न तस्यानित्यत्वमुपपद्यते। यस्माच्छब्दान्तरस्य प्राप्नुवन् विधि रनित्यो भवतीति (प,४४)। एषा हि शास्त्रव्यवस्था। नतु शब्दान्तरात् प्राप्नुवन् विधिरनित्य इत्येषा (प,४५)। न च विकरणः कस्यचिच्छब्दस्यागम आदेशो वा विधीयते। यतः शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः (प,४४) स्यात्। तथाहि सार्वधातुके परे धातोः रः प्रत्ययो विधीयते। नतु तस्यागम आदेशो वेति कुतो विकरणस्यानित्यत्वम्? विकरणे तर्हि कृते संप्रसारणात् पूर्वमाडागमो भविष्यतीत्यत आह विकरणे कृते संप्रसारणमित्यादि। नित्यत्वन्तु संप्रसारणस्य पूर्ववत् कृताकृतप्रसङ्गित्वात्। आडागमस्तु कृते संप्रसारणे प्राप्नोति। कृते हि संप्रसारणेऽजादित्वादाटा भवितव्यमित्यनित्योऽयमाडागमः।

## ७३। छन्दस्यपि दृश्यते।

यतो विहितस्ततोऽन्यत्रापि भवतीति। अपिशब्दात् तत्रापि। आवरिति। गुणे रपरत्वे च कृते तिपो हल्ङ्यादिना (६।१।६८) लोपः। रेफस्य विसर्जनीयः। तथेत्यादि। यथावरिति मन्त्रे घसह्वरेत्यादिना (२।४।८०) च्लेर्लुकि कृते भवति तथा नगिति च्ले र्लुकि कृते नशे र्भवतीत्यर्थः। तत्र नशेर्वेति (८।२।६३) कुत्वम्। आयुनगिति। युजिर् योगे। रुधादित्वाच्श्नम्। चोः कुरिति (८।२।३०) कुत्वं गकारः। तस्य चर्त्वं ककारः। बहुलं छन्दस्यमाङ्योगेऽपीति (६।४।७५) वक्ष्यति। तस्यैवायं प्रपञ्चः।

## ७४। न माङ्योगे।

अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेत्याद (प,३२) एवायं प्रतिषेध इति कस्यचिद् भ्रान्तिः स्यात्। अतस्तां निराकर्त्तुमाह माङ्योगे लुङ्लङ्लृङ्क्षु परतो यदुक्तं तन्न भवतीति। एतेनोभयोरप्याडाटोः प्रतिषेध इति

दर्शयति । उभावपि तौ लुङ्लङ्लृङ्चूक्तौ । कथं पुनर्द्वयोरपि प्रतिषेधो लभ्यते ? आटाप्यत्वानुवृत्तेः । न च तस्मिन्ननुवर्त्तमाने सत्यजादीनामप्याट् प्राप्नोतीत्येष दोषः प्रसज्यते । मण्डूकप्लुतिन्यायेनात्राटोऽनुवृत्तेः । योगविभागाद्वा । अयमटोऽपि प्रतिषेध इत्यवसीयते । यदि ह्याट एव प्रतिषेधोऽभिमतः स्यात् तदाड़जादीनां न माङ्योग इत्येकमेव योगं कुर्य्यात् । अथवा लुङ्लङ्लृङ्क्ष्वित्येतावन्मात्रमनुवर्त्तते । तेन लुङादिषु यदुक्तं तस्य सर्वस्य प्रतिषेधो न विज्ञायते । न चैवमतिप्रसङ्गः । यतः प्रत्यासत्तेरस्मिन्नेव लुङ्लङ्लृङ्प्रकरणे यत् कार्य्यं विहितं तस्यैव प्रतिषेधो लभ्यते । न सर्वस्य प्रकरणान्तरविहितस्य । अत्र तु प्रकरणे ऽड़ाटावेव विहितौ । अतस्तयोरेव प्रतिषेधः । मा भवान् कार्षीदिति । माङि लुङिति (३।३।१७५) लुङ् । मास्म करोदिति स्मोत्तरे लङ् चेति (३।३।१७६) लङ् । माङिति ङकारानुबन्धवत उपादानमस्मादादेशो यो माशब्दस्तस्य ग्रहणं मा भूदित्येवमर्थम् । अन्यथा भवान् सुखिनं मात्राकार्षीदित्यत्रापि प्रतिषेधः स्यादिति केचित् । लाक्षणिकत्वादेवास्मादादेशस्याग्रहणमित्ययुक्तमेतत् । निपात एव त्वन्यो ऽङित्माशब्दोऽस्ति । मा बालिपथमन्वगाः । मा भवतु तस्य पापमिति तु यस्य प्रयोगस्तद्योगे प्रतिषेधो मा भूदित्येवमर्थं ङिद्विशिष्टस्य ग्रहणम् । योगग्रहणन्तु योगमात्रे प्रतिषेधो यथा स्यादिति । तेन व्यवहितेऽपि भवति ।

## ७५ । बहुलञ्छन्दस्यमाङ्योगेऽपि ।

अमाङ्योगेऽपि न भवत इत्यादिनाऽमाङ्योगेऽपीत्यस्यार्थमाचष्टे । अत्र च वाक्यद्वयेऽपि बहुलञ्छन्दसीत्येतत् सम्बध्यते । बहुलञ्छन्दसीत्येतावतैव सिद्धेऽमाङ्योगेऽपीति वचनं विस्पष्टार्थम् । अनुच्यमाने ह्येतस्मिन् माङ्योगस्य प्रकृतत्वात् तत्रैवच्छन्दसि बहुलमड़ाटौ न भवत इत्याशङ्क्येत । जनिष्ठाइति । जनेर्लुङ् थास् । इट् । षत्वम् । ष्टुत्वञ्च । जनयीदर्दयीदिति । जन परिहाणे । अर्द हिंसायाम् । चुरादौ । ह्म्यन्तक्षणेत्यादिना (७।२।५) । वृद्धिप्रतिषेधः । इट ईटीति (८।२।२८) सिचो लोपः । गुणायादेशौ । अवाप्युरिति । आप्लृ व्याप्तौ । अवपूर्वः । सिजभ्यस्तविदिभ्यश्चेति (३।४।१०९)

भिर्जुसादेशः। (K) मा अभित्थाइति। भिदेस्थास्। भलो भलीति (८।२।२६) सिचो लोपः। मा ऽऽवरिति। पूर्वमेव व्युत्पादितम्।

७६। इरयो रे।

दध्रइति। दधातेर्लिट्। लिट स्तभ्कयोरेशिरेजितीरिम् (३।४।८१)। तस्यानेन रयादेशः। आतो लोप (६।४।६४) इत्याकारलोपः। परिदद्दस्र इति (L)। इशः परिपूर्वाल्लिडादि रातोलोपवर्जं विधेयः। अथ दध्र इत्यत्र कथमातो लोपः। यावता दधा इरे इति स्थित आकारलोपः प्राप्नोति। रेभावश्च। तत्र परत्वाद्रेभावः। तस्मिन् कृतेऽनजादित्वादाकारलोपो न प्राप्नोति। अत आह धाञो रेभावस्यासिद्धत्वादित्यादि। असिद्धत्वञ्चासिद्धवदत्रा भादित्यनेन (६।४।२२)। चक्रिर इति। कृञो रूपम्। ननु च रेभावे कृते इशिप्रभृतयो ये लिटि सेटो धातवः क्रादिनियमात् (७।२।१३) तेभ्यो र इत्यस्येटि कृते ददृश्रइति रूपं न सिध्येत्। ददृशिर इत्यादिना रूपेण भवितव्यम्। नच शक्यते वक्तुं रेभावविधानसामर्थ्यादिड् न भविष्यति। रेभावस्य क्रादिषु चरितार्थत्वात् तेभ्यो हि परस्य लिटः कृसृत्यादिनेट्प्रतिषेध (७।२।१३) इत्यत आह अतत्यादि। कथं पुना रेभावो लभ्यत इत्याह तदर्थञ्चेत्यादि। इटि कृते पुना रेभावो यथा स्यादित्येवमर्थमिरेश्च इरेश्चेत्येकशेषं कृत्वेरयोरिति द्विवचनेन निर्देशः। तेन यश्च भस्थान इरच् शब्दः क्रियते यश्च रे इत्यस्येशटि कृते सतुश्चरकालमिरेशब्दः सम्पद्यते तयोरपि रेभावः सिद्धो भवति।

७७। अचि श्नुधातुभ्रुवां य्वोरियङुवङौ।

आर्धधातुक इति निवृत्तम्। कुतः? समः च्णुवः (१।३।६५) स्त्रिय इति (६।४।५८) निर्देशात्। ऋस्वयोरिवर्णोवर्णयोरिदं ग्रहणम्। कुत एतत्? तत एव निर्देशात्। अत्राण् गृह्यमाणः सवर्णान् ग्राहयतीति ऋस्वौ गृह्यमाणौ दीर्घावपि ग्राहयतः। तेन तदन्तस्यापि भवतः। अचीति

(K) इदन्तु लेखकप्रमादात्। वस्तुतश्च ङुवप बीजसन्ताने इत्यस्माल्लुङ् भिः। आप्नोवे स्तु लृदित्वादङेव। अथवा व्यत्ययेन सिच्। तत्रार्थस्य लाभोऽनेकार्थत्वाद धातूनाम्।

(L) इदमुदाहरणं मुद्रितकाशिकापुस्तके नास्ति।

वर्णग्रहणम् । तत्र यस्मिन् विधिस्तदादावल्ग्रहण इत्यजादौ (प, ३४) विज्ञायत इत्याह अजादौ प्रत्यय इति । प्रत्यय इत्येतत् कुतो लभ्यते ? अङ्गाधिकारात् । अङ्गाधिकारो ह्यस्ति प्रत्ययसन्निधापितत्वात् । प्रत्यये हि परतोऽङ्गसंज्ञा विधीयते । यद्यजादौ प्रत्यय इयङुवङौ भवतो नियौ लुवौ इत्यत्र न प्राप्नुतः । अत्र ह्यजेव प्रत्ययः । नत्वजादिः । अत्रापि व्यपदेशिवद्भावेनाजादित्वमस्तीत्यदोषः । इवर्णोवर्णान्तस्येति । धातोरेवेदं विशेषणम् । नेतरयोः । व्यभिचाराभावात् । असम्भवाच्च । इवर्णोवर्णान्तता चाङ्गस्य ताभ्यां विशेषणाल्लभ्यते । इयङुवङोर्ङकारोऽन्तादेशार्थः । असति त्वस्मिन्ननेकाल्त्वात् सर्वस्याङ्गस्य स्याताम् । ननु च निर्दिश्यमानस्यादेशा (प,१३) भवन्तीत्यन्तरेणापि ङकारमन्तस्यैव भवतः ? एवं तर्हि विस्पष्टार्थम् । प्राप्नुवन्ति । राध्नुवन्तीति । आप्लृ व्याप्तौ । राध साध संसिद्धौ । स्वादित्वाच् श्नुः । श्नकारवतो ग्रहणं किमर्थम् ? दाभाभ्यां नुः दानुर्भानुरित्यत्र (उण्,२ ३१२) मा भूत् । चिच्चियतुश्चिच्चियुरिति । त्रयाणामपि श्विचातूनामन्यतमस्य रूपम् । नियौ नियः । लुवौ लुव इति । अत्र क्विबन्ता धातुत्वं न जहतीति (प,१३०) धातुत्वं वेदितव्यम् । तत्र नयतेःसत्सूद्विषेत्यादिना (३,२,६१) क्विप् । लुनातेस्त्वन्येभ्योऽपि दृश्यत ( ३।२।१७८ ) इत्यनेन । इयङुवङ्भ्यामित्यादि । गुणस्यावकाशः श्रेतव्यं स्रोतव्यमित्यादि । इयङुवङौ शिश्रियतुःशिश्रियुर्लुलुवतुर्लुलुवुरिति । इहोभयं प्राप्नोति चयनं लवनमिति । विप्रतिषेधेन गुण एव भवति । वृद्धेरवकाशः सखायौ सखायः । गावौ गाव इति । इयङुवङोः स एव । इहोभयं प्राप्नोति चायको लावक इति । वृद्धिरेव भवति विप्रतिषेधेन । इयङुवङ्प्रकरण इत्यादि । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम् । बहुलं छन्दसीत्यादेः (६।४।७५) सूत्राद्बहुलग्रहणमनुवर्त्तते । तेन तन्वादीनां छन्दसि विकल्पेनेयङुवङौ भविष्यतः । तन्वमिति । यत्रोवङ् नास्ति तत्रामि परपूर्वत्वमपि नास्ति । बहुलवचनादेव । विष्वमिति । सूधातोः क्विप् । उपसर्गात् सुनोतीत्यादिना (८।३।६५) षत्वम् । स्वर्गः सुवर्ग इति । सुइत्येतस्मादर्गशब्दे परत उवङादेशः । योगश्चायं यणादेशापवादः ।

७८। अभ्यासस्यासवर्णे।

इयेष। उवोषेति। इषु इच्छायाम्। उष दाहे। आभ्यां लिट् णल्। अत्र च द्विर्वचनं प्राप्नोति पुगन्तलघूपधस्येति (७।३।८६) गुणश्च। तत्र परत्वाद् गुणः। एष ओष इति स्थिते द्विर्वचनेऽचीति (१।१।५९) स्थानिवद्भावादिषुषित्येतयोर्द्विर्वचनम्। तत इयङुवङौ। ननु च तयोः कर्त्तव्ययोरचः परस्मिन् पूर्वविधाविति (१।१।५७) स्थानिवद्भावात् सवर्णता नास्ति। नैतदस्ति। यो ह्यनादिष्टादचः पूर्वस्तस्य विधौ कर्त्तव्ये स्थानिवद्भावेन भवितव्यम्। आदिष्टाच्चायमचः पूर्व एषोऽभ्यासः। तत् कुतोऽत्र स्थानिवद्भावः? इयर्त्तीति। ऋ गतौ। जुहोत्यादित्वाच्छपः श्लुः। अभ्यासस्योरदित्यत्वम् (७।४।६६)। अर्त्तिपिपर्त्त्योश्चेतीत्वम् (७।४ ७७)। तत इयङादेशः। ईयतुरीयुरिति। ऊवतुरूवुरिति। असंयोगाल्लिट् किदिति (१।२।५)। कित्त्वाद् गुणाभावः। तेन सवर्णोऽज् न भवति। इयाजेति। उवापेति। यजिवप्योर्लिट्यभ्यासस्योभयेषामिति (६।१।१७) संप्रसारणम्।

७९। स्त्रियाः।

स्त्रिया इति। आण् नद्याः (७।३।११२)। जातेरस्त्रीविषयादयोपधादिति-(४।१।६३) निर्देशान्नेदं स्त्रीप्रत्ययानां ग्रहणम्। नापि स्वार्थवृत्तेः शब्दस्येति निश्चित्य स्त्रीशब्दस्यैव स्वरूपेण ग्रहणमिति दर्शयितुमाह स्त्रीत्येतस्येत्यादि। इतिकरणः स्त्रीशब्दस्य स्वरूपपदार्थतां दर्शयति। अथ षष्ठीबहुवचने कस्मान्न भवतीत्याह स्त्रीणामित्यादि। परत्वात् षष्ठीबहुवचने नुटा भवितव्यम्। तस्मिंश्च सत्यजादिः परः प्रत्ययो न भवतीतीयङ् न प्रवर्त्तते। अथ किमर्थं पृथग् योगःक्रियते? नाचि श्नुधातुस्त्रीभ्रुवामित्येक एव योगःक्रियेतेति? अत आह पृथग् योगकरणमित्यादि। वाम्शसोरित्यत्र (६।४।८०) स्त्रीशब्दस्यैव विकल्पो यथा स्यात्। धातुभ्रुवोर्मा भूदित्येवमर्थम् पृथग् योगकरणम्।

८०। वाम्शसोः।

८१। इणो यण्।

अत्र पक्षद्वयं सम्भाव्यते। इण इति प्रत्याहारग्रहणं वा स्यादातुग्रहणं

वा ? तत्र एरजिति । (३।३।५६) ओरावश्यक इति । (३।१।१२५) उरदित्येव मादिभ्यो (७।४।६६) निर्देशिश्यएव नेदं प्रत्याहारग्रहणम् । अतः पारिशेष्याद् धातुग्रहणमेवेदं विज्ञायते । णकारोच्चारणमिगिङोर्निवृत्त्यर्थम् । ये त्विण्वदिक इति (२।४।४५, वा) सामान्येनातिदेशमिच्छन्ति तेषामिङ एव निवृत्त्यर्थम् । इकस्त्वधियन्तीति भवितव्यमेव यणा । अथ नेण इत्येव कस्मान्नोक्तम् ? इयङादेशेऽचि प्रतिषिद्धे सतीको यणचीति (६।१।७७) यण् भविष्यति । सत्यमेतत् । उत्तरार्थन्तु यण्ग्रहणम् । यन्तीत्यादुप्रदाहरणेष्वदादित्वाच्छपो लुक् । आयन्निति लङ् । झोऽन्तादेशे संयोगान्तलोपः । असिद्धत्वाद-जादित्वादाट् । अथेह कस्मान्न भवत्ययनमायक इति ? अतआह इयङा-देशापवादोऽयमिति । ननु यथेयङि प्राप्तेऽयमारभ्यते तथा गुणवृद्ध्यो-रपि ? तत् कुत एतल्लभ्यते । अयमियङोऽपवादः । न गुणवृद्ध्योरित्याह मध्येऽपवादा इत्यादि । इतिकरणो हेतौ । यस्मान् मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरां (प, ६१) स्तस्मादियङ एव पूर्वस्य विधेरयमप-वादः । नतु परयोर्गुणवृद्ध्योः । यतश्चैतदेवं तेन गुणवृद्धिभ्यान्तु परत्वाद्-बाध्यते । अस्यावकाशो यन्ति यन्त्विति । गुणवृद्ध्योश्चयनं चायक इति । अयनमायक इत्यत्रोभयं प्राप्नोति । परत्वाद् यणं बाधित्वा गुणवृद्धी भवतः ।

## ८२ । एरनेकाचोऽसंयोगपूर्वस्य ।

तेन संयोगो विशिष्यत इति । ननु चान्यपदार्थे गुणीभूतत्वादुपसर्जनमत्र संयोगः । नचोपसर्जनं विशेषणेन सम्बन्ध मनुभवति । तथाहि शोभनो राज-पुरुष इत्युक्ते पुरुषस्यैव प्रधानस्य शोभनत्वेन योगो गम्यते । नोपसर्ज्जनस्य राज्ञः । नैतदस्ति । धातोरित्यनुवृत्तिसामर्थ्यादुपसर्जनमपि संयोगविशेष णेन सम्बन्धमनुभविष्यति । अन्यथा धात्वनुवृत्तिरपार्थिका स्यात् । नत्विवर्ण-विशेषणार्थं धातुग्रहणमिहानुवृत्तं स्यात् । नैतदस्ति । यदधातोरिवर्णान्तं तस्य हि भवितव्यमेव यणादेशेनेको यणचीत्यनेन (६।१।७७) । निन्यतुर्निन्यु-रिति । नयतेर्लिट् । इयङादेशे प्राप्ते यणादेशः । उन्न्यावुन्न्य इति । उन्नय-तीति सत्सूद्विषेत्यादिना (३।२।६२) क्विप् । एवं ग्रामणी । ग्रामण्य

इत्यत्रापि। अग्रगामाभ्याश्चेति (८।४।३, वा) णत्वम्। असंयोगपूर्वग्रहण-मित्यादि। यय्वोरिति नोच्येत ततोऽसंयोगपूर्वमङ्गस्य विशेषणं स्यात्। एवञ्च यवक्रियौ यवक्रिय इत्यत्रापि स्यात्। भवति ह्येतदसंयोगपूर्वमङ्गम्। तस्मादे-रित्युच्यते। असंयोगपूर्वग्रहणमिकारस्य विशेषणं यथा स्यादङ्गस्य मा भूदित्येवमर्थम्। ननु च य्वोरिति प्रकृतम्। तत्र यय्वोरिति नोच्येत तदोवर्णान्त-स्यापि स्यात्। ततश्च लुलुवतु र्लुलुवुरिति न सिध्येत्। तस्मादुवर्णान्तस्य मा भूदित्येवमर्थमेरिति स्यादित्यत आह लुलुवतु र्लुलुवुरित्यादि। इहैरो-रित्युच्यमाने ऽनेनैवोवर्णस्यापि सिद्धे सत्योः सुपीति (८।४।८३) नियमार्थं स्यात्। उवर्णान्तस्य यदि भवति तदा सुप्येव नान्यत्रेति। ततश्चास्मादेव नियमाल्लुलुवतु र्लुलुवुरिति सिध्यतीति। एरितीग्रतदुवर्णान्तनिवृत्त्यर्थं नोप-पद्यते। तस्मात् पूर्वोक्तमेवास्य प्रयोजनं युक्तम्। यवक्रियौ यवक्रिय इति। यवान् क्रीणातीति। अन्येभ्योऽपि दृश्यत इति (३।२।१७८) क्विप्। अत्रेकारस्य धात्ववयवसंयोगपूर्व्वत्वान्न भवति। इहापि न स्यादिति। यदि धातुना संयोगो न विशिष्येतेति शेषः। क्वचिदिहापि यथा स्यादिति पाठः। तत्र प्रकृतत्वाद् यणादेश इति विज्ञायते। यदि धातुना संयोगो न विशिष्येत तदा धात्ववयवोऽधात्ववयवो वा संयोगः पूर्वो यस्माद् भवति तदन्तस्य न विशिष्येत। तदा धात्ववयवोऽधात्ववयवो वा संयोगः पूर्वो यस्माद् भवति तदन्तस्य न भवतीति विज्ञायते। ततश्चोन्नयावुन्नय इत्यत्रापि न स्यात्। संयोगपूर्वत्वादिवर्णस्य। धातुना संयोगे विशेषिते तु भवति। न ह्यत्रेवर्णो धात्ववयवसंयोगपूर्वः। तस्मादिहापि यथा स्यादिति धातुना संयोगो विशिष्यते। गतिकारकाभ्यामित्यादि। अथ कथमिदं पुनरिष्यमाणोऽपि न भवति? पूर्वग्रहणात्। इह पूर्वग्रहणं न कर्त्तव्यम्। एरनेकाचोऽसंयोगादित्येवोच्येत। तत्र धात्ववयवसंयोगाद् यद्वर्णः परो न भवति तदन्तस्याङ्गस्य यण् भवतीत्येवं विज्ञायमाने सिध्यत्येवेष्टमिति किं पूर्वग्रहणेन? तत् क्रियते पूर्वाचार्य्यैर्यस्य विहितोऽयं यण् तस्यैव कर्त्तव्यो नान्यस्येत्यस्यार्थस्य सूचनार्थम्। पूर्वाचार्य्याश्च क्विबन्तस्य गतिकारकपूर्वस्यैव कृतवन्तः। नान्यस्येति। तस्मादिहापि गति-कारकाभ्यामन्यपूर्वस्य न क्रियते। अथवा वाम्शसोरित्यतो (६।४।८०)

मण्डूकप्लुतिन्यायेन वेत्यनुवर्त्तते । सा च व्यवस्थितविभाषा विज्ञायते । तेन गतिकारकाभ्यामन्यपूर्वस्य न भविष्यतीति । अस्मिंश्च व्याख्याने पूर्वग्रहणं विस्पष्टार्थं वेदितव्यम् । परमनियाविति । सन्महदित्यादिना (२।१।६१) समासः । अत्र परमशब्दो न गतिर्न च कारकमिति तत्पूर्वस्य न भवति ।

## ८३ । ओः सुपि ।

खलप्वाविति । खलं पुनातीत्यन्येभ्योऽपि दृश्यत इति (३।२।१७८) क्विप् । शतस्वावित्यत्रापि शतं सूत इति सत्सूद्विषेत्यादिना (३।२।६२) क्विप् । सकृल्ल्वाविति । तोर्लिति (८।४।६०) परसवर्णः । कटप्रुवाविति । प्रुङ् गतौ । क्विब् वचिप्रच्छिस्रुप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्चेति (३।२।१७८, वा) क्विप् । दीर्घत्वञ्च । ओरिति स्पष्टार्थम् । अनुकारान्तनिवृत्त्यर्थं तु न युज्यते । य्वोरित्यनुवृत्तेः । इकारस्य च पूर्वेणैव सिद्धएव यण् । उन्यौ ग्रामण्याविति ।

## ८४ । वर्षाभ्वश्च ।

न भूसुधियोरिति (६।४।८५) प्रतिषेधे प्राप्ते तदपवादोऽयमारभ्यते । वर्षाभ्वाविति । वर्षाशब्दाद्भवतेः क्विप् । पुनर्भ्वश्चेति वक्तव्यमिति । न पुनर्भ्वित्येतस्याचि सुपि यणादेशो भवतीत्येतदर्थरूपं व्याख्येय मित्यर्थः । तत्रेदं व्याख्यानम् । चकारोऽत्र क्रियते । स चानुक्तसमुच्चयार्थः । तेन पुनर्भ्वित्यस्यापि भविष्यतीति । कारपूर्वस्यापीष्यत इति । सोऽपि तत एव चकाराद् भवतीति वेदितव्यम् ।

## ८५ । न भूसुधियोः ।

भूग्रहणेन तदन्तस्य ग्रहणं न केवलस्य । केवलस्य ह्येकाचो यणादेश-प्राप्तस्याभावादनर्थकं वचनं स्यात् । उवङादेशप्रतिषेधार्थत्वान्नानर्थक मिति चेत् ? न । एवं हि वर्षाभ्वश्चेति (६।४।८४) यणादेशविधानमनर्थकं स्याद् यदि ह्ययं यणादेशस्य प्रतिषेधः स्यात् । एवं हि तत् सार्थकं भवति । नान्यथा । नैतदस्ति । उवङ्प्रतिषेधार्थेऽपि ह्यस्मिं स्तन्नियमार्थं स्यात् । एवं तर्हि यणो यत्रानुवृत्तिस्तस्यैवायं प्रतिषेधो युज्यते । स चानेकाचो विहित इति केवलस्य ग्रहणं न प्राप्नोतीति युक्तमुक्तं भूग्रहणेन तदन्तस्य ग्रहणमिति ।

प्रतिभुवो प्रतिभुव इति। भुवः संज्ञान्तरयोरिति (३।२।१७९) क्विप्। सुधियाविति। शोभनं ध्यायतीत्यन्येभ्योऽपि दृश्यत इति (३।२।१७८) क्विप्। ध्यायतेः संप्रसारणं चेत्युपसंख्यानात् (३।२।१७८, वा) संप्रसारणम्।

८६। छन्दस्युभयथा।

८७। हुश्नुवोः सार्वधातुके।

यणिति। अनेकाचोऽसंयोगपूर्वस्योरिति चानुवर्त्तते। ननु च हुरित्येतच् श्नुप्रत्ययान्तश्चाङ्गं सुकारान्ततां न व्यभिचरत्येव। तत् किमर्थमोरितीहानुवर्त्तते? असंयोगपूर्वग्रहणमुकारस्य विशेषणं यथा स्यादित्येवमर्थम्। अन्यथा हुश्नुवोरेवैतद् विशेषणं विज्ञायेत। ततश्च तक्ष्णुवन्तीत्यादावेव प्रतिषेधो विज्ञायेत। राध्नुवन्तीत्यादौ तु यणादेशः स्यादेव। जुहोतेरपि। जुह्वतीत्यत्र संयोगपूर्व्वत्वाद् यणादेशो न स्यात्। ननु च धातुग्रहणमनुवर्त्तते। तत्रैवं विज्ञास्यते धात्ववयवः संयोगःपूर्व्वो यस्मान्न भवतीति। एवमपि विज्ञायमाने ह्यत्र न प्राप्नोत्येव। भवति ह्यत्रापि जुहोते धात्ववयवः संयोगः पूर्वः क्विबन्ता धातुत्वं न जहतीति कृत्वा। अन्यथाप्यवयववचनं पूर्वशब्दमाश्रित्यैवं विज्ञायते धात्ववयवः संयोगो यस्य पूर्वो न भवतीति। एवमपि राध्नुवन्तीत्यत्र यणादेशः स्यात्। नह्यत्र श्नुप्रत्ययस्य धात्ववयवः संयोगपूर्वः। तस्मादोरित्येतदनुवर्त्तनीयम्। तद्विशेषणे हुश्नुवौ। तत्रासंयोगपूर्वग्रहणं श्नुप्रत्ययस्यावयवस्योकारस्य विशेषणं वेदितव्यम्। न जुहोत्यवयवस्य। तस्याव्यभिचारात्। श्नुप्रत्ययान्तस्यासंयोगपूर्वस्येति। व्यधिकरणे षष्ठ्यौ। श्नुप्रत्ययान्तस्याङ्गस्य योऽवयवोऽसंयोगपूर्व उकार स्तस्येत्यर्थः। अनेकाच इत्येतज् जुहोतेः श्नुप्रत्ययान्तस्य समानाधिकरणं विशेषणं वेदितव्यम्। सार्वधातुक इति जुहोत्यर्थम्। न श्नुप्रत्ययान्तार्थम्। अव्यभिचारात्। जुह्वतीति। अदभ्यस्तादित्यदादेशः (७।१।४)। योयुवति। रोरुवतीति। युरु इत्येताभ्यां यङ्। तस्य यङोऽचि चेति (२।४।७४) लुक्। गुणो यङ्लुकोरित्यभ्यासस्य (७।४।८२) गुणः। पूर्ववज् भिरदादेशः। इदमेवेत्यादि। कथं पुनरिदं ज्ञापकमित्याह छन्दसीत्यादि। यदि छन्दस्येव यङ्लुक् स्यात् तदा छन्दस्युभयथेत्यार्धधातु-

कत्वाद् (६।४।८६) एव योयुवति रोरुवतीत्यत्र न भविष्यतीत्यनर्थकमेव हुश्नु-ग्रहणं स्यात् । यदातु भाषायामपि यङ्लुगस्ति तदार्धधातुकत्वाभावादसति हुश्नुग्रहणे योयुवतीत्यादौ प्राप्नोतीति तन्निवृत्त्यर्थमुपपद्यते हुश्नुग्रहणम् । तस्मादेतदेव ज्ञापयति भाषायामपि यङ्लुगस्तीति । तेन बेभिदीति चेच्छिदीतीत्यादि भाषायामप्युपपन्नं भवति । स्यादेतत् । यङ्लुगन्तादन्यद् यदुवर्णान्तमनेकाच् संयोगपूर्वं तन्निवृत्त्यर्थ मेतद् भविष्यतीति । नेदं ज्ञापकमित्यत आह नचेत्यादि । ननु चेदं विद्यते ऽयुवन्नरुवन्निति । नैतदस्ति । यद्यप्येतदसंयोगपूर्वम् अनेकाज् न भवति । अटोऽसिद्धत्वात् ।

## ८८ । भुवो वुग् लुङ्लिटोः ।

अभूवन्निति । गातिस्थेत्यादिना (२।४।७७) सिचो लुक् । झेरन्तादेशे कृते संयोगान्तलोपः । अभूवमिति । तस्थेत्यादिना (३।४।१०१) मिपोऽम्भावः । बभूवेत्यादि । भवतेर (७।४।७३) इत्यभ्यासस्यात्वम् । इन्धिभवतिभ्याञ्चेति (१।२।६) लिटःकित्त्वम् । तेन गुणवृद्धी न भवतः । किमर्थं पुनर्भवतेः परस्य लिटः कित्त्वमारभ्यते ? यावदेकदेशविकृतमनन्यवद्भवतीति (प, ३८) कृतयोरपि गुणवृद्ध्योर्वुक् प्राप्नोत्यकृतयोरपि । वुकि कृते ऽनिगन्तत्वादलघूपधत्वादनजन्तत्वाच्च नास्ति गुणवृद्ध्योः प्राप्तिः । ततः कृताकृतप्रसङ्गित्वेन नित्यत्वाद् वुकि कृते गुणवृद्ध्योः प्राप्तिरेव नास्तीत्यनर्थकं कित्त्वम् । नैतदस्ति । वुगप्यनित्य एव । न ह्यसौ कृतयोर्गुणवृद्ध्योः प्राप्नोति । ओरित्यनुवृत्तेरुवर्णान्तस्य वुका भवितव्यमिति कृत्वा । अत्रोभयोरनित्ययोः परत्वाद् गुणवृद्धी स्याताम् । तस्मान् कित्त्वमारब्धव्यम् । किमर्थं पुनरोरित्यनुवर्त्तते ? बोभाव बोभवेति गुणवृद्ध्योः कृतयोर्वुङ् मा भूदित्येवमर्थम् । ननुच कित्त्वे सत्यत्रापि गुणवृद्धिभ्यां न भवितव्यम । नैतदस्ति । नहि यङ्लुगन्ताद् भवतेःपरस्य लिटः कित्त्वं भवति । इन्धिभवतिभ्याञ्चेत्यत्र भवतीति श्तिपा निर्देशात् ॥

## ८९ । ऊदुपधाया गोहः ।

निगूहयतीति । गुह संवरणे । हेतुमणिच् । निगूहक इति ण्वुल् । साधु

निगृहीति । सुप्यजातौ णिनिस्ताच्छील्ये (३।२।७८) इति णिनिः । निगूहं निगूहमिति । आभीक्ष्ण्ये णमुल् चेति(३।४।२२)णमुल् । आभीक्ष्ण्ये (८।१।१२) द्वे भवत इति द्विर्वचनम् । निगूह इति भावे घञ् । अलोऽन्त्यस्य मा भूदिति । उत्तरत्र इत्यभिप्रायः । इह ल्वोरित्यनुवर्त्त्य विनापुत्रपधाग्रहणेन शक्यत एवायमर्थः प्रतिपादयितु मित्यत्रतदेव मनसि कृत्वा परं पृष्टवान् उपधाग्रहणं किमिति ? उत्तरार्थं ह्योपधाग्रहणं क्रियमाणमत्राप्यलोऽन्त्यस्य विधिं निवर्त्तयति । तेन प्रयोजनाभावादोरितित्रत्नानुवर्त्तते । अथ किमर्थं गोह इति विकृतनिर्देशः क्रियते ? न गुह इतिरवोच्येत ? लघु ह्येवं सूत्रं भवतीत्याह गोह इति विकृतग्रहण मित्यादि । ऊत्त्वस्य विशिष्टविषयो यथा स्यादित्येवमर्थम् । गोह इति विकृतस्य कृतोकारस्य ग्रहण मित्यर्थः । एतदेव व्यक्तीकर्त्तुमाह यत्रेत्यादि । अस्य कश्चिदमुमर्थमाचष्टे । एतदुक्तं भवति गुणे कृत ऊत्त्वेन भवितव्यमिति लक्ष्यते । एतच्चायुक्तम् । एवं हि व्याख्यायमाने-ऽयादेशप्रतिषेधार्थं निगूह्य गत इति केचिदिच्छन्तीतुरक्ता यदच्यत्युत्त्वस्या-सिद्धत्वात्तत्रपि लघुपूर्वादिति (६।४।५६) णेरयादेशः स्यादिति तन्नोपपद्यते । यदि गुणं कृत्वोकारस्योत्त्वं विधीयते ततश्च सतूत्कारस्यासिद्धत्वेनैव लघुपूर्वत्वमुपपद्यते । ओकारपूर्वत्वात् । तत् कुत ऊकारस्यासिद्धत्वेऽयादेश-प्रसङ्गः ? तस्मादयमत्रार्थः । यस्मिन् विषये गुहे गोह इत्येतद्रूपं सम्भाव्यते तत्र यथा स्यात् । यत्र प्रत्यये गुणः सम्भवति तस्मिन् कृतेऽकृत एव गुणे यथा स्याद् । अन्यत्र मा भूदिति । तस्माद् विकृतनिर्देशस्य विशिष्टविषयोप-लक्षणार्थत्वाद् गुणविषये सम्मुखीभूत एवाकृत एव गुण ऊत्त्वेन भवितव्यम् । एवञ्च सत्यूत्त्वस्यासिद्धत्वादित्यादिकः प्रसङ्गग्रन्थो युज्यते । नान्यथा । ननु च गुणनिमित्ते प्रत्यय उत्पन्ने परत्वाद् गुणेनैव भवितव्यम् । तत् कथमकृत एव गुण ऊत्त्वं भवेत् ? कृताकृतप्रसङ्गित्वात् । तद्धि कृते गुणे प्राप्नोत्यकृतेऽपि । विकृतनिर्देशस्य विशिष्टविषयोपलक्षणार्थत्वात् । नतूत्त्वे कृते गुणः प्राप्नोति । अलघूपधत्वात् । तस्माद् गुणात् पूर्वमूत्त्वेन नित्यत्वाद् भवितव्यम् । अतएव दीर्घोच्चारणमर्थवद्भवति । नान्यथा । यदि गुणे कृते सत्ययमादेशः स्याद् दीर्घोच्चारणमनर्थकं स्यात् । आन्तरतम्यादेव दीर्घस्य दीर्घो भविष्यति ।

भावितं हि दिवउदोत (६।१।१३१) तपरकरणेन भाव्यमानोऽप्युकारः सवर्णान् गृह्णातीति (प,२१)। यदन्यत् प्राप्नोति तन्निवृत्त्यर्थं दीर्घोच्चारणमिति चेत् ? स्यादेतत्। ऊदुपधाया गोहः (६।४।८९) इति ह्रस्वो मा भूदित्येवमर्थं दीर्घोच्चारणमिति। कुतः पुनरेष निश्चयोऽत्र ह्रस्वत्वेन न भवितव्यमिति ? नहीह कात्यायनस्य भाष्यकारस्य वा वचनमस्ति। नापि शिष्टप्रयोगो यत एष निश्चयः स्यात्। यथालक्षणमप्रयुक्तेष्विति चोच्यते। तस्मादजुगुहदित्येवं भवितव्यम्। यदि गुणे कृतेऽयमादेशः क्रियेत ततः किमनिष्टं स्यात् ? दीर्घोच्चारणमनर्थकं स्यात्। अत्रापि दीर्घोच्चारणं वैचित्र्यार्थं प्रकल्प्येतैवमपि प्रक्रियागौरवं स्यात्। तस्माद् दीर्घोच्चारणसामर्थ्यादकृत एव गुणे ऊत्वेन भवितव्यम्। निगूह्य गत इति। गत्यन्तात् क्त्वा। प्रादिसमासः। समास इत्यादिना (७।१।३७) क्त्वो ल्यप्। तत्र व्याश्रयत्वादित्यादि। एतेनाप्यादेशप्रतिषेधार्थतां विकल्पनिर्देशस्य प्रत्याचष्टे। कथं पुनर्व्याश्रयत्वमित्याह णावूत्वमित्यादि। निगोढ़ेति क्त्च्। होढः (८।२।३१)। झषस्तथोर्धोऽध इति (८।२।४०) धत्वम्। ष्टुना ष्टुरिति (८।४।४१) ष्टुत्वम्। ढो ढे लोपः (८।३।१३)।

## ९०। दोषो णौ।

दूषयतीति। दुष वैकृत्ये। अथ किमर्थं दोष इति विकृतस्य ग्रहणम् ? न दुष इत्येवोच्येत ? विषयावधारणार्थमिति चेत् ? न। णाविति साक्षाद् विषयस्य निर्देशादित्यत आह विकृतग्रहणमित्यादि। पूर्वसूत्रे हि गोह इत्युक्तम्। अत्र यदि दुष इत्येवोच्येत प्रक्रमस्यारम्भस्य भेदः स्यात्। अभेदश्चेष्यते। अतस्तदर्थं विकृतस्य ग्रहणम्। किमर्थं पुनः प्रक्रमस्याभेद इष्यते ? अत्यल्पमिदं पृच्छ्यते। वैचित्र्यस्यापि नाम प्रयोजनं द्रष्टव्यम्। वैचित्र्यस्य ह्ययं प्रकारः प्रक्रमाभेद इति। किं तदर्थेन प्रश्नपरिश्रमेण ?

## ९१। वा चित्तविरागे।

पूर्वेण नित्ये प्राप्ते विकल्पोऽयमारभ्यते। चित्तविराग इति। चित्तस्याप्रीतता। चित्तं दोषयतीति। चित्तमप्रीतं विमुखं करोतीत्यर्थः। चित्तविराग

इति किम् ? साधनं दूषयति। अत्र पूर्वेण नित्यं भवति। णाविति ग्रह ॥ विषयस्य दोषः। भावे घञ्।

## ९२। मितां ह्रस्वः।

एवमादिनेति। आदिशब्देन जनीजृष्क्नसुरञ्जोऽमन्ताश्चेतेएवमादिग्रहणम्। घटयति व्यथयति जनयतीति। घट चेष्टायाम्। व्यथ भयचलनयोः। जनी प्रादुर्भावे। ननु च जनिवध्योश्चेति (७।३।३५) वृद्धिःप्रतिषिध्यते। तदयुक्तमिदमुदाहरणम्। मितसंज्ञाप्यपार्थिका। नैतदस्ति। चिण्कृतो हि स वृद्धिप्रतिषेधः। तत्र ह्यातो युक् चिण्कृतोरित्यनुवर्त्तते (७।३।३३)। रजयतीति। रञ्जेर् णौ मृगरमण उपसंख्यानमित्यनुनासिकलोपे (६।४।२४,वा) कृते ऽतउपधाया इति (७।३।११६) वृद्धिः। तस्यानेन ह्रस्वः। शमयतीति। शमेरमन्तत्वान्मित्त्वम्। अस्यापि नोदात्त उपदेश इत्यादिना (७।३।३४) वृद्धिप्रतिषेधश्चिण्कृतोरेव। ज्ञापयतीति। ज्ञा अवबोधन इत्यस्य क्रयादिपरिपठितस्य मारणतोषणनिशामनेषु ज्ञा मिच्चेति (ग,सू) मित्संज्ञा। अर्त्तिह्रीत्यादिना (७।३।३६) पुकि कृते ह्रस्वः। केचिदत्रेत्यादि। क्रमु पादविक्षेप इत्यस्यामन्तत्वान्मित्संज्ञा। तस्य च ह्रस्वत्वे संक्रामयत्युत्क्रामयतीति न सिध्येत्। तस्मादेतत्सिद्धये वा चित्तविरागइत्यतो (६।४।९१) वाग्रहणमनुवर्त्तयन्ति। तस्मिंश्चानुवर्त्तमाने सर्वत्र विकल्पः प्रसज्येतेत्यतिप्रसङ्गपरिहारार्थं सा च व्यवस्थितविभाषेति व्याचक्षते। अथमितामदितेएवं कस्मान्नोक्तम् ? लघु ह्येवं सूत्रं भवति। अशक्यमेवं वक्तुम्। वेष्ट वेष्टन इति घटादौ पठ्यते। तत्रैवमुच्यमाने तस्याप्यकारः प्रसज्येत। ह्रस्वइत्युच्यमान एच इग् ह्रस्वादेशे (१।१।४८) इतीकारःसिद्धो भवति।

## ९३। चिण्णमुलोर्दीर्घोऽन्यतरस्याम्।

णाविति वर्त्तते। चिण्णमुलौ च तद्विशेषणे। अशमि अशामीति। शमेर्लुङ्न्तात् लुङ्। चिण्भावकर्मणो (३।१।६६) रिति च्लेश्चिण्। चिणो लुगिति (६।४।१०४) तशब्दस्य लुक्। णेरनिटीति (६।४।५१) णिलोपः। शमं शमम्। शामं शाममिति। पूर्ववण्णमुल्द्विर्वचने। दीर्घग्रहणं किमिति ? एवं मन्यते

ह्रस्वस्यैवानन्तरस्य प्रकृतस्य विकल्पमात्रं विधेयम् । एवमप्यभीष्टं सिध्यत्येव । तथाहि यस्मिन् पक्षे ह्रस्वो विधीयते तस्मिन्नशमीत्यादि सिध्यति । यस्मिंस्तु ह्रस्वो न विधीयते तत्रात उपधाया (७।२।११६) इति दीर्घे वृद्धिसंज्ञके विहिते तेनैव रूपेणावस्थानाद् अशामीत्यादि सिध्यतीत्यभिप्रायः । इतरस्तु दीर्घग्रहणमन्तरेण यन्न सिध्यति तद्दर्शयति शमयन्तं प्रयुङ्क्ते इत्यादिना । शमिण्यन्तात् पुनः प्रयोजकविवक्षायां द्वितीयो णिच् । तत्र पूर्वस्य णेर्लोपः । लुङ् । चिण् । पक्षे दीर्घत्वम् । अशमि अशामि । शमं शमम् । शामं शाममिति । द्वितीयणिजन्तात् णमुलि कृते पक्षे दीर्घत्वम् । शंशमयतेरित्यादि । अतर्थं शाम्यतीति यङ् । द्विर्वचनम् । नुगतोऽनुनासिकान्तस्येति (७।४।८५) नुक् । शंशम्येति स्थिते हेतुमण्णिच् । अतो लोप (६।४।४८) इत्यकारस्य लोपः । यस्य हल इति (६।४।४९) यकारस्य । शंशमीति स्थिते यदा ततः परश्चिण् भवति तदा पक्षे दीर्घत्वे कृते ऽशंशम्यशंशामीति भवति । यदा तु णमुल् तदा शंशमं शंशमम् । शंशामं शंशाममिति । तत्र योऽसौ णौ णि लुप्यते यश्च यङोऽकारस्तयोर् दीर्घग्रहणे सत्यचः परस्मिन् पूर्वविधाविति (१।१।५७) स्थानिवद्भावो न भवति । न पदान्तेत्यादिना (१।१।५८) प्रतिषेधात् । तेनासति व्यवधाने दीर्घः सिद्धो भवति । स्यादेतत् । ह्रस्वविकल्पे विधीयमाने यस्मिन् पक्षे ह्रस्वो नास्ति तस्मिन् पक्षे स्वरूपेणैवावस्थितो दीर्घः स्यादित्यत आह ह्रस्वविकल्पे त्वित्यादि । नहि ह्रस्वे विधातव्ये केनचित् स्थानिवद्भावः प्रतिषिध्यते । तत्र ह्रस्वविकल्पे विधीयमाने णिलोपस्य यङकारस्य च स्थानिवद्भावः स्यादेव । ततश्च स्थानिवद्भावाद् विकल्पेन ह्रस्वत्वं न स्यात् । चिण्णमुल्परे हि णौ परतो मितामङ्गानां ह्रस्वत्वं विधेयम् । यश्चात्र णिश्चिण्णमुल्परो न तत्र मिदङ्गम् । पूर्वेण णिचा व्यवधानात् । यस्मिंश्च णौ मिदङ्गं नासौ चिण्णमुल्परः । परेण णिचा व्यवधानात् । तस्मान्नायमस्य योगस्य विषय इति पाक्षिकं ह्रस्वत्वमनेन न स्यात् । पूर्वेणैव योगेन नित्यं स्यात् । ततश्च दीर्घो न स्यात् । णिण्यन्त इत्यादि । णेर्णिरन्तः समीपो यस्मिन् स णिण्यन्तः । अथवा णेर् णि र्णिणिः । सोऽन्तो यस्य स णिण्यन्तः । अस्मिन् पक्षेऽन्तशब्दोऽवयववचनः । यङ्ण्यन्ते

त्वसिद्धिरेवेति। यङ्लुगन्तशब्दस्यापि पूर्ववद्द्विधा व्युत्पत्तिः। कस्यासिद्धिः? प्रकृतत्वाद्दीर्घस्येति वेदितव्यम्। एवकारेणैतद्दर्शयति। णिलुगन्ते स्यादपि केनचित् प्रकारेण दीर्घस्य सिद्धिः। यङ्लुगन्ते त्वसिद्धिरेव। न केनचित् प्रकारेण सिद्धिरित्यर्थः। कथं पुनर्णिलुगन्ते सिद्धिर्भवति? णिजातेराश्रयणात्। णिजातिविवक्षायां हि यद्यपि णिलोपस्य स्थानिवद्भाव स्तथापि नास्ति व्यवधानम्। जातेरेकत्वात्। नहि तत्रैव तस्या व्यवधानमुपपद्यते। तेन व्यवधानाभावाण्णिलुगन्ते दीर्घस्य सिद्धिः। अथवैतदेवकारेण दर्शयति। णिलुगन्ते पूर्वं णिचमाश्रित्यातउपधाया (७।२।११६) इति वृद्धि विधानादस्ति दीर्घस्य सिद्धिः। तस्यास्तु ह्रस्वत्वेन निवृत्तिःक्रियते। नतु सर्वथा नास्त्येव। यङ्लुगन्ते तु सर्वथैव दीर्घसिद्धेरभावः। तत्र वृद्धेरसम्भवादिति। स्यादेतत्। विकल्पे दीर्घत्वे विधीयमानेऽपि नेवात्र दीर्घः सिध्यति। असिद्धवदत्रा भादिति (६।४।२२) णियङो र्लोपस्यासिद्धत्वादित्यत आह व्याश्रयत्वादित्यादि। कथं पुनर्व्याश्रयत्वमित्याह णौ हीत्यादि। अन्यतरस्यांग्रहणं विस्पष्टार्थम्। शक्यते हि वा चित्तविराग (६।४।९१) इत्यतो मण्डूकप्लुतिन्यायेन वाग्रहणमनुवर्त्तयितुम्।

## ९४। खचि ह्रस्वः।

द्विषन्तपः परन्तप इति। द्विषत्परयो स्ताप (३।२।३९) इति खच्। अरुर्द्विषदजन्तस्येति (६।३।६७) मुम्। पुरन्दर इति। पूःसर्वयो र्दारिसहोरिति (३।२।४) खच्। वाचंयमपुरन्दरौ चेति (६।३।६९) निपातनान्मुमागमः ह्रस्वग्रहणं विस्पष्टार्थम्। शक्यते मितां ह्रस्वइत्यतो (६।४।९२) मण्डूकप्लुतिन्यायेन ह्रस्वग्रहणमनुवर्त्तयितुम्।

## ९५। ह्लादो निष्ठायाम्।

प्रह्लन्न इति। ह्लादी सुखे च। रदाभ्यामित्यादिना (८।२।४२) नत्वम्। प्रह्लादयतीति हेतुमण्णिच्।

## ९६। छादेर्घेऽद्व्युपसर्गस्य।

उरश्छद इति। छद अपवारणे। चुरादिणिच्। पुंसि संज्ञायां घः

प्रायेणेति (३।३।११८) घः। उरसम्छद इति विग्रह्य कृद्‌योगा च षष्ठी समस्यत इति (२।२।८, वा) समासः। ननु न णिलोपस्यासिद्धवदत्रा (६।४।२२) भादित्यसिद्धत्वादचः परस्मिन् पूर्वविधाविति (१।१।५७) स्थानिवद्भावाद्वा ह्रस्वभाविन्यज्लक्षणोपधा न संभवति। तत् कथं ह्रस्वत्वं प्रवर्त्तत इत्याह णिलोपस्येत्यादि। यद्यत्र णिलोपस्यासिद्धत्वं स्थानिवद्भावो वा स्यात् तदा वचनमनर्थकं स्यात्। तस्माद् वचनसामर्थ्यादुभयमपि न भवति। तेन ह्रस्वभाविन्युपधा भवति। अद्विप्रभृत्युपसर्गस्येति वक्तव्यमिति। ननु च त्रिप्रभृतयो यत्र सन्ति तत्र द्वावपि स्तः। ततस्तद्ब्युपसर्गस्येत्येवं सिद्धमित्यत आह उत्तरा ह्रीत्यादि। यद्यपि त्रिप्रभृतिषु द्वावपिस्त स्तथापि न ताविह द्विशब्देनोपात्तौ। यत उत्तरा हि संख्या पूर्वसंख्याया यः कृतो व्यपदेश स्तदभिधानं निवर्त्तयति। कथं ज्ञायत इत्याह नहीत्यादि। यद्युत्तरा संख्या पूर्वसंख्याकृतव्यपदेशं न निवर्त्तयेत् तदा त्रिपुत्रोऽपि लोके द्विपुत्र इत्यभिधीयेत। नचाभिधीयते। तथाहि द्विपुत्र आनीयतामित्युक्ते नैव त्रिपुत्र आनीयते। अपितु यस्य द्वाविव पुत्रौ स एव। अद्विप्रभृतीत्यादेश्च वाक्यस्यायमर्थः। अद्विप्रभृत्युपसर्गस्यच्छादेर्ह्रस्वत्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। द्विशब्दोऽत्रानेकोपलक्षणार्थम्। द्व्युपसर्गस्यानेकोपसर्गस्येति यावत्। अद्व्युपसर्गस्येति च प्रसज्यप्रतिषेधोऽयम्। तेनायमर्थो भवति। छादेरन्यस्यानेकोपसर्गस्य घप्रत्यये परत उपधाह्रस्वो न भवतीति। केन पुनःप्राप्तस्य ह्रस्वस्यानेन प्रतिषेधः क्रियते? एतस्मादेव प्रतिषेधाद्विधायकं वाक्यमनुमीयते। योगविभागाद्वा छादे र्घेऽइति। यदि च द्विशब्दोऽत्रानेकोपलक्षणार्थो योगविभागश्चाभ्युपेयेतैवं तदा पर्युदासेऽप्यदोषः। कथं द्व्युपसर्गादनेकोपसर्गादन्योऽद्व्युपसर्ग एकोपसर्गः? तस्य ह्रस्वत्वं भवति? किमर्थमिदम्? नन्छादेर्घे इत्यनेनैव सिद्धम्? सिद्धे सत्यारम्भो नियमार्थः। एकोपसर्गस्यैव भवति। नान्यस्येति। यद्येवमुरम्छद इत्यत्र न प्राप्नोति। नैष दोषः। एवं हि योगविभागोऽनर्थकः स्यात्। तुल्यजातीयापेक्षत्वान्नियमस्य सोपसर्गस्य नियमः क्रियमाणः सोपसर्गस्यैव ह्रस्वत्वं निवर्त्तयति। नानुपसर्गस्य। तेनोरम्छद इत्यत्र प्रवर्त्तत एव।

## ९७। घसिभसोर्हलि च ।

चकारश्छादेरनुकर्षणार्थः। छदिरिति। अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य-इसि रितीसिप्रत्ययः (उण् २।२६५)। छद्मेति। सर्वधातुभ्यो मनिन्निति (उण् ४।५८४) मनिन्। छत्रमिति। सर्वधातुभ्यःष्ट्रन्निति (उण्, ४।५९८) ष्ट्रन्। योगविभागो ऽनेकोपसर्गस्यापि यथा स्यात्। समुपातिच्छदिरिति।

## ९८। गमहनजनखनघसां लोपः क्ङित्यनङि ।

अनङीति। अजादावयं प्रतिषेधः। तेन तत्तुल्ये ऽजादावेव प्रत्यये कार्य्यं विज्ञायत इत्याह अजादौ प्रत्यय इति। जघ्नतुर्जघ्नुरिति। अभ्यासाच्चेति (७।३।५५) कुत्वम्। जज्ञतुर्जज्ञुरिति। जन जनने। परस्मैपदी जौहोत्यादिकः। स्तोः श्चुना श्चुरिति (८।४।४०) श्चुत्वम्। जज्ञ इति। जनी प्रादुर्भावे। आत्मनेपदी। दिवादिः। लिटस्तझयोरेशिरेजित्येश् (३।४।८१)। जक्षतुरिति। अदेर्लिट्यन्यतरस्यामिति (२।४।४०) घस्लादेशः। खरि चेति (८।४।५५) घकारस्य ककारः। शासिवसिघसीनाञ्चेति (८।३।६०) षत्वम्। अथवा घस्लृ अदन इत्यस्यैतद्रूपम्। अक्षन्निति। लुङ्। लुङ्सनोर्घस्लृ इति (२।४।३७) घस्लादेशः। मन्त्रे घसह्वरेत्यादिना (२।४।८०) लेर्लुक्। झेरन्तादेशः। संयोगान्तलोपः। शेषं पूर्ववत्। अघसत्। अगमदिति। पुषादिसूत्रेणाङ्।

## ९९। तनिपत्योश्छन्दसि ।

वितत्निर इति। अत्र यद्युपधालोपस्यासिद्धत्वं तथापि लोपविधान-सामर्थ्यादत एकहल्मध्यइत्यादिनैत्वाभ्यासलोपौ (६।४।१२०) न भवतः। पप्तिमेति। लिट्। क्रादिनियमादिट्।

## १००। घसिभसोर्हलि च ।

धत्वं तकारस्येति। झषस्तथोर्धोऽध (८।२।४०) इति। जश्त्वं घकार-स्येति। झलां जश् झशीति (८।४।५३)। समासे क्त इति। पूर्वापर-प्रथमेत्यादिना (६।२।५८)। समानस्य सभाव इति। समानस्य च्छन्दसी-त्यादिना (६।३।८४)। यदि द्विर्वचनात् पूर्वमुपधालोपःक्रियते तदैकाचत्वा-

भावाद्द्विर्वचनं न प्राप्नोतीत्यत आह च्छान्दसत्वादित्यादि। बब्धामिति। छान्दसमेतत्। तत्र बहुलं छन्दसीति वचनाद् (२।४।३९) बहुलं विधयो भवन्ति। तेन यद्यपि परत्वान्नित्यत्वाच्च द्विर्वचनात् पूर्व्वमुपधालोपः प्राप्नोति तथापि स तथा न क्रियते। द्विर्वचनात् पूर्वं न क्रियत इति भावः। बप्सतीति। भसेःपरस्य झरदादेशः। शपः श्लुः। श्लाविति (६।१।१०) द्विर्वचनम्। अभ्यासकार्य्यम्। उपधालोपे कृते भकारस्य चर्त्वं पकारः। बभस्तीति। तिपि रूपम्।

## १०१। हुझल्भ्यो हेर्धिः।

हलादेरिति। कुतः पुनर्हल्ग्रहणं प्रकृतं येन हिशब्दो विशिष्यते? अनन्तरसूत्रादिति चेत्? न। तद्धि सप्तमीनिर्दिष्टम्। षष्ठीनिर्दिष्टेन चेहार्थः। हुझल्भ्य इत्येषा पञ्चमी हलीत्येतस्याः (६।४।१००) सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति। तस्मादित्युत्तरस्येति (१।१।६७) वचनादित्यदोषः। भिन्धीति। श्नसोरल्लोप (६।४।१११) इत्यकारलोपः। क्षोणीहीति। सेर्ह्यपिच्चेति (३।४।८७) हिरादेशः। ई हल्यघोरितीत्त्वम् (६।४।११०)। जुहुतामिति। लोट्। तसस्ताम्। रुदिहि। स्वपिहीति। अदादित्वाच्छपो लुक्। रुदादिभ्यः सार्वधातुक (७।२।७६) इतीट्। अथेह कस्मान्न भवति जुहुतात् त्वमिति? आह इहेत्यादि। धिभावस्यावकाशोऽनाशिषि जुहुधीति। तातङोऽवकाशः जीवतात् त्वमिति। आशिषि लोटुभयप्राप्तौ परत्वात् तातङेव भवति। अथ कृतेऽपि तस्मिंस्तस्य स्थानिवद्भावात् पुनः प्रसङ्गविज्ञानाद्धिभावः कस्मान्न भवतीत्याह तत्रेत्यादि। यद्येवं भिन्धकिञ्छिन्धकीत्यत्र परत्वाद्धिभावे सत्यनन्तरोक्तादेव हेतोरकज् न स्यादित्यत आह भिन्धकिञ्छिन्धकीत्यादि। व्यक्तौ हि पदार्थे सकृद्गते विप्रतिषेधे यद् बाधितं तद् बाधितमेवेत्येतत् (प,४१) प्रवर्त्तते। जातौ च पुनःप्रसङ्गविज्ञानात् सिद्धमिति (प,४०) विप्रतिषेधे परं कार्य्यमित्यत्र (१।४।२) प्रतिपादितम्। पाणिनेस्तूभयं मतम्। लक्ष्यानुरोधात् क्वचित् किञ्चिद् आश्रीयते। तत्र तातङ्विधौ व्यक्तिपदार्थस्याश्रयणात् सकृद्गते विप्रतिषेधे यद् बाधितं तद्बाधितमेवेत्यस्या (प,४१) उपस्थानम्।

अकच्विधौ तु जातेः पदार्थस्याश्रयणात् पुनः प्रसङ्गविज्ञानात् सिद्धमित्यस्याः ( प, ४० ) । भिन्धकीति । अव्ययसर्वनाम्नामित्यादिनाकच्(५।३।७१) । तत्र तिङश्चेत्यनुवर्त्तते (५।३।५६) ।

## १०२ । श्रुशृणुपॄकृवृभ्यश्छन्दसि ।

शृणुधीति । श्रुवः शृ चेति (३।१।७४) श्नु प्रत्ययः शृभावश्च । पूर्धीति । पॄ पालनपूरणयोः । उदोष्ठ्यपूर्वस्येत्युत्त्वम् (७।१।१०२) । हलि चेति (८।४।७७) दीर्घः । उरुणस्कृधीति । उरु अस्माकं कृधीति स्थिते बहुवचनस्य वस्नसा-वित्यस्मदो (८।१।२१) नसादेशः । नश्च धातु स्थोरुषुभ्य इति (८।४।२७) णत्वम् । सकारस्य रुत्वम् । विसर्जनीयः । तस्मात् कुकमीत्यादिना (८।३।४६) सत्वम् (M) । अपावृधीति । वृङो वृञो वा रूपम् । वृङोऽपि हि व्यत्ययो बहुलमिति (३।१।८५) च्छन्दसि परस्मैपदं भवत्येव । अथ शृणुधीत्यत्रोतश्च प्रत्ययादसंयोगपूर्वादित्यनेन (६।४।१६) लुक् कस्मान् न भवतीत्याह शृणुधीत्य-त्रेत्यादि । यद्यत्र लुक् स्याद् धिभावस्यानर्थक्यं स्यादिति भावः । अन्येषामपि दृश्यत इति (६।३।१३७) दीर्घत्वमपावृधीत्यत्र । ननु च शृणुधीत्यत्र श्रुवः शृ चेति (३।१।७४) शृभावेन श्नुप्रत्ययेन च भवितव्यम् । पूर्धीत्यत्र क्र्यादित्वाच् श्नाप्रत्ययेन । उरुणस्कृधीत्यत्र तनादिकृञ्भ्य उरित्युप्रत्ययेन (३।१।७९) । अपावृधीत्यत्र यदि वृङ् तदा क्र्यादित्वाच् श्नाप्रत्ययेन । अथ वृञ् तदा स्वादित्वाच् श्नुप्रत्ययेन । एवञ्चैतानि रूपाणि न सिध्यन्तीत्यत आह अतोऽन्यत्रेत्यादि । शृणुधीत्येतस्मादुदाहरणादन्येषूदाहरणेषु व्यत्ययो बहुलमिति (३।१।८५) शप् । तस्यापि बहुलञ्छन्दसीति (२।४।७३) लुक् ।

## १०३ । अङितश्च ।

वाच्छन्दसीत्यादि । सार्वधातुकमपिदित्यपितः (१।२।४) सार्वधातुकस्य ङित्त्वं विधीयते । छन्दसि विषये वाच्छन्दसीत्यनेन (३।४।८८) हेर्यदपित्त्वं तद्विकल्प्यते । तेन पक्षे तस्य ङित्त्वं न भवति । अथ रारन्धीति कथं परस्मै-

---

(M) कःकरत्करतिकृधिकृतेष्वनदितेरिति ( ८।३।५० ) सत्वमित्यर्थे ।

पदम् ? यावता रमिरयमात्मनेपदी । कथं वात्र शपः श्रवणं न भवति ? कथञ्चाभ्यासस्य दीर्घत्वम् ? कथञ्चानुदात्तोपदेशेत्यादिना (६।४।३७) मकारलोपो न भवतीत्याह रारन्धीत्यादि । शपः श्लुरिति ब्रुवाणेन श्लाविति (६।१।१०) द्विर्वचनमित्युक्तं भवति । मकारलोपाभावस्त्वङित्त्वादेव सिद्ध इति नासौ यत्नसाध्य इत्यभिप्रायः । यमेःशप इति । बहुलञ्छन्दसीत्यनेन (२।४।७३) । यौतेः शपः श्लुरिति । बहुलं छन्दसीत्यनेन (२।४।७६) ।

## १०४ । चिणो लुक् ।

चिण उत्तरस्य प्रत्ययस्येति । अथ प्रत्ययस्यैतत् कुतो लभ्यते ? अङ्गस्येत्यनेन प्रत्ययस्य सन्निधापितत्वात् । यदि चिण उत्तरस्य प्रत्ययस्य लुग् भवत्यकारितरामकारितमामित्यत्र तरप्तमपोर्लुक् कस्मान्न भवतीत्याह अकारितरामित्यादि । योऽसौ तशब्दस्य लुक् तस्य तरप्तमपोर्लुकि कर्त्तव्ये ऽसिद्धवदत्रा भादित्यसिद्धत्वम्(६।४।२२) । अतस्तशब्देन व्यवधानाच्चिणोऽनन्तरौ तरप्तमपौ न भवत इति तयोर्लुग् न भवति । ननु चान्यस्यान्यस्मिन्नसिद्धवचनादेकस्य तत्रैवासिद्धत्वं नोपपद्यत इत्यत आह चिणो लुगित्येतदित्यादि । चिणो लुगितरभेदेनापि श्रुतमिदं लक्षणं विषयस्य लक्ष्यस्य भेदाद्भिद्यते । व्यक्तौ पदार्थे प्रतिव्यक्तौ लक्षणं भिद्यत इति कृत्वा । तेन भेदे सत्युपपद्यत एवासिद्धत्वम् । अकारि । अहारीति स्थिते ऽतिशयविवक्षायां तरप्तमपौ तिङश्चेत्यनेन (५।३।५६) । तदन्तात् किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे (५।४।११) इत्यामौ कृते ऽकारितरामकारितमामिति भवति ।

## १०५ । अतो हेः ।

गच्छेति । गमेर्लोट् । इषुगमियमां छ इतिच्छत्वम् (७।३।७७) । धावेति । धावु गतिशुद्ध्योः । अथवा सर्त्तेःपाघ्रेत्यादिना (७।३।७८) धावादेशः । युहि रुहीति । अदादित्वाच्छपो लुक् । लुनीहि पुनीहीति । प्वादीनां ह्रस्व इति (७।३।८०) ह्रस्वत्वम् । ई हल्यघोरितीत्त्वम् ( ६।४।११३ ) । ननु चेत्त्वे कृते सत्यनकारान्तत्वान्न भविष्यति । तत किमेतन्निवृत्त्यर्थेन तपरकरणेनेत्यत आह ईत्त्वस्येत्यादि । असिद्धत्वं तु पूर्ववत् ।

## १०६। उतश्च प्रत्ययादसंयोगपूर्व्वात्।

उकारो योऽसंयोगपूर्वइति। अविद्यमानः संयोगः पूर्वो यस्मात् स तथोक्तः। एतेनासंयोगपूर्वग्रहणमुकारविशेषणमिति दर्शयति। स एवंविध उकारः प्रत्ययस्य विशेषणम्। विशेषणेन च तदन्तविधि र्भवतीत्याह तदन्तादित्यादि। किमर्थं पुन स्तदन्तविधिरभ्युपगम्यते ? सुनु चिन्वित्यत्र यथा स्यात्। अस्त्वेतत् प्रयोजनम्। अयन्तु दोषः। तनु कुर्व्वित्यत्र न प्राप्नोति। अत ह्युकार एव प्रत्ययः। न तदन्तः। अत्रापि व्यपदेशिवद्भावेन तदन्तत्वं प्रत्ययस्यास्तीत्यदोषः। कुर्विति। धातोर्गुणे रपरत्वे च कृते ऽतउत् सार्वधातुक (६।४।११०) इत्युत्त्वम्। तक्ष्णुहीति। तनूकरणे तक्ष इति श्नुः। छन्दोवावचनमिति। अभिधाने ऽभिधेयोपचाराद् वार्थो विकल्पो वाशब्देन विवक्षितः। उच्यते व्याख्यायते ऽनेनेति वचनम्। वार्थस्य वचनं वावचनम्। छन्दसि वावचने छन्दोवावचन मिति। सप्तमीति (२।१।४०) योगविभागात् समासः। छन्दसि वेति वक्तव्य मिति। छन्दसि विषये विकल्पेनायं विधिर्भवतीत्येतदर्थंरूपं व्याख्येय मित्यर्थः। तत्रेदं व्याख्यानम्। उत्तरसूत्रे ऽन्यतरस्यांग्रहण मुभयोर्योगयोः शेषः। सा च व्यवस्थितविभाषा। तेनच्छन्दसि विषये विकल्पेनायं विधिर्भवतीति। धिनुहि। कृणुहीति। इवि दिवि धिवि प्रीणनार्थाः। कृवि हिंसाकरणयोः। इदित्वान्नुम्। धिन्विकृण्व्योर चेत्युप्रत्ययो ऽकार श्चान्तादेशः (३।१।८०)। तस्यातो लोप इति (६।४।४८) लोपः।

## १०७। लोपश्चास्यान्यतरस्यां म्वोः।

यो ऽयमुकारोऽसंयोगपूर्व इति। एतेनास्येत्यनेन प्रकृत उकारः प्रत्यवमृश्यत इति दर्शयति। ननु चोत इत्यनुवृत्तेरुकारस्यैव लोपो विज्ञास्यते। तत् किमस्येत्यनेन ? षष्ठीप्रक्लृप्त्यर्थमस्येत्येतदिति चेत् ? न। म्वोरित्येषैव हि सप्तम्यकृतार्था उत इत्यस्याःपञ्चम्याः पूर्वयोगे कृतार्थायाः षष्ठीत्वं प्रकल्पयिष्यति। तस्मिन्निति निर्दिष्टे पूर्वस्येति (१।१।६६) वचनात्। स्यादेतत्। यदि म्वोरित्येषा सप्तमी विज्ञायत एतदेव तु न विज्ञायते किमियं षष्ठ्यत सप्तमीति ? तस्मात् षष्ठीप्रक्लृप्त्यर्थमस्येत्युक्तम्। लुगित्यनुवर्त्तमान इत्यादि।

यदि प्रकृत एव लुक् क्रियते तदा सर्वस्यैव प्रत्ययस्य लुक् स्यात् । नान्त्यस्य । यतः प्रत्ययादर्शनस्य लुगित्येषा संज्ञा विहिता । नतु प्रत्ययावयवस्यादर्शनस्य । सर्व्वस्य तु लुकि कृते कुर्व्वः कुर्म्म इति न सिध्यति । लोपग्रहणाददोषः । तत्र ह्युकारमात्रस्य लोपः । अलोऽन्त्यस्येति (१।१।५२) वचनात् । तस्मादन्त्यस्य लोपार्थं लोपग्रहणम् । किञ्च कुर्व्वः कुर्म्म इत्यत्र गुणो लुकि सति न स्यात् । न लुमताङ्गस्येति (१।१।६३) प्रत्ययलक्षणप्रतिषेधात् । लोपे तु सति भवति । ततो गुणार्थमपि लोपग्रहणं कर्त्तव्यम् ।

## १०८। नित्यं करोतेः ।

करोते रुकारप्रत्ययस्येति । ननु चकारेण पूर्वसूत्र उकारोऽनुकृष्टः । चानुकृष्टश्चोत्तरत्र नानुवर्त्तते (प,७९) । तत् कथमुकारस्य लोपो लभ्यते । नैवम् । पूर्व्वसूत्रे ह्युकारस्य सन्निधानमस्येत्यनेनैव लभ्यत इति तत्र तस्य चकारेण याऽनुकृष्टिः सैतदर्थैव वेदितव्या । उकारलोपस्येत्यादिना कुर्वः कुर्म इत्यत्र सोपपत्तिकां दीर्घप्राप्तिं दर्शयति । न भकुर्छुरामित्यनेन (८।२।७९) च तत्प्रतिषेधम् । नित्यग्रहणं विस्पष्टार्थम् । आरम्भसामर्थ्यादेव हि नित्यो विधिर् भविष्यति ।

## १०९। ये च ।

चकारो लोपस्यानुकर्षणार्थः ।

## ११०। अत उत् सार्वधातुके ।

उकारप्रत्ययान्तस्येति । उकारः प्रत्ययोऽन्तो यस्य स तथोक्तः । उकार-प्रत्ययान्तश्च करोतिः सार्वधातुकत्वं न व्यभिचरति । अनेनाभिप्रायेणाह सार्वधातुकग्रहणं किमिति ? भूतपूर्वेऽपीत्यादि । असति सार्वधातुकग्रहणे करोतेरुकारप्रत्ययान्तस्य क्ङिति प्रत्यये परत उत्त्वमुच्यमानं यत्र क्ङित् सार्वधातुकं परभूतं तत्रैव स्यात् कुरुतः कुर्वन्तीत्यादिषु । कुर्वित्यत्र हेर्लुकि कृते क्ङित्प्रत्ययस्याभावान् न लुमताङ्गस्येति (१।१।६३) प्रत्ययलक्षण-प्रतिषेधात् तु न स्यात् । तस्माद् भूतपूर्वेऽपि सार्वधातुके यथा स्यादित्येवमर्थं सार्वधातुकग्रहणम् । अथ तपरकरणं किमर्थम् ? यावता यद्यपि भाव्यमान

उकार:सवर्णानां ग्राहको भवति तथाप्यान्तरतम्यान्मात्रिकस्य स्थाने मात्रिक एव भविष्यतीत्यत आह तपरकरणमित्यादि । असति हि तपरकरण उकार-प्रत्यय माश्रित्य सार्वधातुकार्धधातुकयोरिति (७।३।८४) गुणे कृते रपरत्वे च यदुत्त्वं तस्योकारस्य पुगन्तलघूपधस्येति (७।३।८६) गुणः स्यात् । तस्मात् तपरकरणं क्रियते ह्रस्वस्यैव श्रवणं यथा स्यात् । लक्षणान्तरेण यो दीर्घः प्राप्नोति स मा भूदिति ॥

## १११ । श्नसोरल्लोपः ।

बन्ध इति । झषस्तथोर्धोऽध इति (८।२।४०) तकारस्य धकारः । स्त इति । अदादित्वाच्छपो लुक् । अथ श्नसोरिति कोऽयं निर्देशः ? यावताकः सवर्णे दीर्घ इति (६।४।१०) दीर्घत्वे कृते श्नासोरिति निर्देशेन भवितव्य मित्याह श्नसोरित्यकारस्य पररूपत्वमित्यादि । अथ तपरकरणं किमर्थम् ? आस्तामासन्नित्यत्राडागमस्य मा भूदिति चेत् ? नैतदस्ति । इह हि लङि कृते लावस्थायामाडागमात् पूर्वमन्तरङ्गत्वाल्लादेशः क्रियते । तत्र कृते विकरणः कृताकृतप्रसङ्गित्वादाडागमं बाधते । आडागमस्य त्वशब्दान्तरप्राप्तेरनित्य-त्वम् । तथाहि कृते विकरणे विकरणान्तस्याङ्गस्य तेन भवितव्यम् । अकृते धातुमात्रस्य । कृते विकरणे यद्यप्याडागमाकारलोपयोर् द्वयोरपि कृताकृतप्रसङ्गित्वेन नित्यत्वं तथापि परत्वादकारलोपः क्रियते । तस्मिन् कृते तस्यासिद्धत्वादाट् । तस्यासिद्धत्वादेव च लोपो न भविष्यतीति किं तपरकरणेन ? एवं तर्ह्येतज् ज्ञापयति । आभाच्छास्त्रीयमसिद्धत्वमनित्य मिति । तेन वुग्युटावुवङ्यणोः सिद्धो भवत इत्येतद् वक्तव्यं न वक्तव्यं भवति ॥

## ११२ । श्नाभ्यस्तयोरातः ।

लुनत इति । आत्मनेपदेष्वनत(७।१।५)इत्यदादेशः । लुनतामिति । लोट् । आमेतः(३।४।९०) । अलुनतेति लङ् । मिमत इति । माङ् माने । अभ्यासस्य भृञामिदितीत्त्वम् (७।४।७६) । एवं सञ्जिहत इत्यत्रापि । ओहाङ् गतावि-त्यस्य । बिभ्रतीति । पूर्ववदित्त्वम् । अलुनादिति । ननु चासति क्ङितीत्य-

श्नन्नीत्वेनात्र भवितव्यम्। तत् कुतो लोपस्य प्रसङ्गः? नैतदस्ति। ईत्वमपि हि क्ङितीष्यते। इह चोत्तरसूत्रे क्ङितीत्यनुवर्त्यम्। तत्र यदि क्ङितीति नानुवर्त्तते तदा स्यादेव लोपः। नन्वाद्ग्रहणं किमर्थम्? आभ्यस्तयोरत इत्येवोच्येत। एवं ह्येकमात्रया लघु भवतीत्यत आह आद्ग्रहणं स्पष्टार्थम्। जागर्त्तेर्जक्षित्यादयः (६।१।६) षड़ित्यभ्यस्तसंज्ञायामपि ऋकारलोपो न भवति जाग्रतीति। एतच्च अत्यकारान्तेन साहचर्य्यादभ्यस्तस्याकारान्तस्यैव ग्रहणाल्लभ्यते।

## ११३। ई हल्यघोः।

लुनीतः पुनीतः। लुनीथः पुनीथ इति। तस्थसौ। मिमीत इति। आत्मनेपदैकवचनम्। मिमीष इति। थासःसे (३।४।८०)। मिमीध्वमिति। ध्वम्। लुनन्ति पुनन्तीति। झिप्रत्ययः। ननु च यद्यप्यजादावपीत्वं स्यात् लोपोऽनवकाशः स्यात्। अतोऽनवकाशत्वाल्लोप ईत्वं बाधिष्यते। तत् किं हलीत्यनेन? नैतदस्ति। असति हल्ग्रहणे वचनादुभयं स्यात्। श्नुसंज्ञकेष्वा लोपः प्रसज्येत। तस्माद्धलीति वक्तव्यम्। दत्त इति। खरि चेति (८।४।५५) चर्त्वम्। धत्त इति। धाञो द्विर्वचने कृते ऽभ्यासे चर्च्च (८।४।५४) इत्यभ्यासस्य जश्त्वे च दधस्तथोश्चेति (८।२।३८) भष्भावेन दकारस्य धकारः। धातोस्त्वाकारलोपे कृते जश्त्वचर्त्वे॥

## ११४। इद् दरिद्रस्य।

दरिद्रतीति। जक्षित्यादयः (६।१।६) षड़ित्यभ्यस्तसंज्ञा। तेनाभ्यस्तलक्षण आकारलोपो भवति। वक्तव्य इति व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। श्नसोरल्लोप इत्यतो मण्डूकप्लुतिन्यायेन लोपग्रहणमनुवर्त्त्य सार्वधातुके हलि क्ङितीत्येतान् विशेषान् निवर्त्त्य दरिद्रातेः सामान्येनेत्वलोपौ विधातव्यौ। नचैवं सति तौ सङ्करेण प्रसजतः। यस्माद् वक्ष्यमाण मन्यतरस्यांग्रहण- मुभयोर्योगयोः शेषभूतम्। सा च व्यवस्थितविभाषा। तेन यत्रेष्यते यत् तत् तत्रैव भविष्यति। नान्यत्रेति। सिद्धश्च प्रत्ययविधाविति। तथासौ कर्त्तव्यो यथा प्रत्ययविधौ प्रत्ययविधानकाले सिद्धो निष्पन्नो भवति। एतदुक्तं

भवति । आर्धधातुके प्रत्यये विषयभूतेऽनुत्पन्न एव लोपः कर्त्तव्य इति । एवं ह्यसौ प्रत्ययविधौ सिद्धो भवति । नान्यथा । सिद्धश्च प्रत्ययविधावित्यस्योपादाने यत् फलं तदाकारान्तलक्षण इत्यादिना दर्शयति । यद्यार्धधातुक उत्पन्ने सति लोपः क्रियते तदा श्याद्व्यधादिसूत्रेण (३।१।१४१) णप्रत्ययः स्यात् । दरिद्रातेराकारान्तत्वात् । ततश्चातो युक् चिण्कृतोरिति (७।३।३३) युकि कृते दरिद्राय इत्यनिष्टं रूपं स्यात् । सिद्धश्च प्रत्ययविधावित्युच्यमाने तु प्रागेव प्रत्ययोत्पत्तेर्लोपः । तस्मिन् सत्यनाकारान्तत्वात् पचाद्यजेव भवति । तेन दरिद्र इतीष्टं सिद्धं भवति । न दरिद्रायके लोप इत्यादिना श्लोकेन यत्रार्द्धधातुके लोपो नेष्यते यत्र विकल्पेन चेष्यते कैश्चित् तद्दर्शयति । दरिद्रायक इत्यत्र ण्वुलन्ते शब्दे सिसाधयिषिते लोपो नेष्यते । दरिद्रातीति दरिद्रायक इति । पूर्ववद् युक् । दरिद्राण इति । अत्रापि ल्युडन्ते लोपो नेष्यते । दिदरिद्रासतीत्येक इति । सनि कृते द्विर्वचन मभ्यासकार्य्यम् । दिदरिद्रिषतीति वेति । सनीवन्तर्द्धेत्यत्र (७।२।४९) तन्निपतितदरिद्राणामित्युपसंख्यानाद्विकल्पेनेट् । अद्यतन्यामिति । लुङीत्यर्थः । लुङोऽद्यतनीति पूर्वाचार्य्यसंज्ञा । अदरिद्रासीदिति । यमरमनमातां सक्चेति (७।२।७३) सगिटौ । अस्तिसिचोऽपृक्त (७।३।९६) इतीट् । इट ईटीति (८।२।२८) सिचो लोपः । ननु चातो धातो (६।४।१४०) रित्याकारलोपे कृते दरिद्र इति निर्देशेन भवितव्यम् । तत् कथं दरिद्रस्येति निर्देश इत्याह दरिद्रस्येति निर्देश इत्यादि । छन्दोवत् सूत्राणि भवन्तीत्यतो ङ्यापोः संज्ञाच्छन्दसोर्बहुलमिति (६।३।६३) बहुलवचनाच्छान्दसमिह ह्रस्वत्वम् । तपरकरणं विस्पष्टार्थम् । भाव्यमानतया सवर्णाग्रहणादेव दीर्घो न भविष्यति ।

## ११५ । भियोऽन्यतरस्याम् ।

हलादौ सार्वधातुके क्ङिति परत इति । यद्यप्येते विशेषाः पूर्वस्मिन्निवर्त्तिता स्तथापीह मण्डूकप्लुतिन्यायेनानुवर्त्तन्त इत्यभिप्रायः । बिभीत इति । ञिभी भये । जुहोत्यादित्वाच्छपः श्लुः । हलादावित्येव । बिभ्यति । इत्व-

विधानसामर्थ्यादेवैरनेकाच इति (६।४।८२) यणादेशो न स्यात्। सार्वधातुक इत्येव। भीतो भीतवान्। क्ङितीति किम्? बिभेति।

## ११६। जहातेश्च।

ईत्वापवाद इत्वमारभ्यते। अन्यतरस्यांग्रहणानुवृत्तेः। पक्षे तदपि भवत्येव। सार्वधातुक इत्येव। हीनः हीनवान्। इह केचित् सार्वधातुक इत्यस्यानुवृत्तिं प्रत्याचक्षते। कथम्? हलि परत ईत्वेत्वे प्राप्नुतः। द्विर्वचनञ्च। तत्र यदि परत्वादीत्वेत्वे स्यातां ततश्चेवर्णान्तताभ्यासस्य स्यात्। तस्मादभ्यस्तग्रहण मनुवर्त्तनीयम्। तस्मिंश्चानुवर्त्तमाने सार्व्वधातुकानुवृत्तिरपार्थिकेति। एतच्चायुक्तम्। अन्तरङ्गत्वात्। द्विर्वचनेनैव प्रागीत्वेत्वाभ्यां भवितव्यम्। तत् कुतोऽभ्यासस्येवर्णान्तताप्रसङ्गः? अन्तरङ्गत्वं तु द्विर्वचनस्याल्पापेक्षत्वात्। तद्धि स्थानमात्रमपेक्षते। ईत्वेत्वयोश्च बह्वपेक्षत्वाद् बहिरङ्गता। बह्वपेक्षा च तयोः पुनरङ्गस्य हलादौ क्ङिति सार्वधातुके विधानात्। जहातेरिति निर्देशाज्जिहीत इत्यत्र जिहातेर्न भवति। पृथग् योगकरण मुत्तरार्थमिति। आ च हाविव्येष (६।४।११७) विधिर्जहातेरेव यथा स्यात्। बिभेतेर्मा भूदिति।

## ११७। आ च हौ।

चकार इत्त्वान्यतरस्यांग्रहणयोरनुकर्षणार्थः।

## ११८। लोपो यि।

## ११९। घ्वसो रेद्धावभ्यासलोपश्च।

अभ्यासलोपश्चेति घुसंज्ञकार्थम् अभ्यासलोपग्रहणम्। नत्वस्त्यर्थम्। अस्तेरभ्यासस्यासम्भवात्। देहि धेहीति। दाञ्धाञोरेते रूपे। अन्येषां तु घुसंज्ञकानामुदाहरणं न सम्भवति। विकरणेन हि व्यवधानात्। असम्भवाच्च यथायोगम्। तत्र दो इत्येतस्य श्यना हिशब्दो व्यवधीयते। दाणो धेटस्तु शपा। देङः पुनरात्मनेपदित्वाद् हेरसम्भवः। एधीति। सकारस्यैत्त्वे कृते तस्यासिद्धत्वाद् हुझल्भ्योहेर्धिरिति (६।४।१०१) धिभावः। ननु चालोऽन्त्यस्येत्यलामन्त्यस्य (१।१।५२) लोपेन भवितव्यम्। तत् कथं सर्व्वस्याभ्यासस्य लोपो

भवतीत्यत आह शिदयमित्यादि। लोपश्चेत्यत्र द्वौ शकारौ निर्दिष्टौ। तत्रैको लोपस्य सम्बन्धी। द्वितीयस्तु विभक्तेः। यश्च लोपस्य सम्बन्धी तस्येत्संज्ञा प्रतिज्ञायत इति शिदयं लोपो भवति। तेन सर्वस्याभ्यासस्य लोपो भवति। आ च हावित्यतो (६।४।११७) चोग्रहणं मण्डूकप्लुतिन्यायेन शक्यतेऽनुवर्त्तयितुम्। तत् त्वन्यतरस्यांग्रहणेन सम्बद्धमिति तदनुवृत्तावन्यतरस्यामित्येतस्याप्यनुवृत्तिरित्याशङ्का स्यात्। अतस्तन्निवृत्त्यर्थं हावित्युक्तम्। चकारस्य सन्नियोगार्थत्वाल्लोपो भवत्येत्त्वञ्च ॥

## १२०। अत एकहल्मध्येऽनादेशादेर्लिटि।

एकहल्मध्य इति। एकशब्दोऽयमसहायवाची। एकश्च एकश्च एकौ। एकौ च तौ हलौ चेत्येकहलौ। एकहलोर्मध्य इति द्विवचनान्तस्य षष्ठीसमासः। द्वयोरेव हि हलोर्मध्यं सम्भवति। नैकस्य। अत्र यदि लिटादेशो न विशिष्यते ततो नेमतुर्नेमुः सेहे सेहाते सेहिरे इत्यत्र न स्यात्। अस्ति ह्यत्राप्यङ्गस्यादेश आदिरित्येतच्चेतसि कृत्वा लिट्यादेशं विशेषयितुमाह लिटि परभूते य आदेशो विधीयते स आदिर्यस्याङ्गस्य नास्तीत्यर्थः। तस्येति। तस्यैवंविधस्याङ्गस्येत्यर्थः। तस्येति चाङ्गस्य योऽकार इत्यनेन सम्बन्धः। अवयवषष्ठी चेयम्। तस्यैवंविधस्याङ्गस्य योऽकारोऽवयव स्तस्ये त्यर्थः। एकहल्मध्य इत्यस्ये दं विवरणम्। असहाययोर्हलोर्मध्य इति। तस्ये त्यनन्तरोक्तोऽकारः सम्बध्यते। तस्याङ्गस्यावयवस्याकारस्ये त्यर्थः। स्थानषष्ठी चेयम्। तस्य स्थान एकार आदेशो भवति। रेणतुः। रेणुरिति। अण रणेति रणिः शब्दार्थः पठ्यते। येमतुर्येमुरिति। यम उपरमे। देमतुर्देमुरिति। दमु उपशमे। ववाश इति वाशृ शब्दे। आत्मनेपदी। शश्रमतुः। शश्रमुरिति। श्रमु तपसि खेदे च। केचित् तु ततचतु स्ततचु रित्येतद् एकहल्मध्यस्य प्रत्युदाहरणं पठन्ति। एतच्चायुक्तम्। क्ङितीत्यनुवर्त्तते। नच तचेः परस्य लिटः कित्त्वमस्ति। असंयोगादिति (२।१।५) प्रतिषेधात्। ततृसरतुः। ततृसरुरिति। त्सर छद्मगतौ। चकणतुः। चकणुरिति। अण रण वण भण मण कण शब्दार्थाः। तत्र कणति स्वादौ पठ्यते। जगणतुर्जगणुरिति। गण संख्याने

चुरादौ पठ्यते । ननु च चौरादिकत्वाण् णिचि कृते कास्प्रत्ययादाममन्त्रे लिटी-त्यामा (३।१।३५)भवितव्यम् । अनित्यण्यन्ताश्चुरादय इत्यदोषः। अनित्यण्यन्तत्वं तु तेषां सप्तमे ज्ञापयिष्यते । बभणतुरिति । भणति भ्वादौ पठ्यते शब्दार्थ एव । नेमतु रिति । णम प्रह्वत्वे शब्दे । णो न इति (६।१।६५) नत्वम् । सेह इति । षह मर्षणे । धात्वादेः षःस इति (६।१।६४) सत्वम् । कथं पुनर्नत्वे सत्वे च लिटयादेशादी न भवत इत्यत आह अनैमित्तिके नत्वसत्वे इत्यादि । नत्वसत्व-विधाने हि न किञ्चिद् निमित्तमाश्रीयत इत्यनैमित्तिके एते भवतः । ततश्च प्रागेव लिडुत्पत्ते स्ताभ्यां भवितव्यम् । तेन तदादि यदङ्गं तल्लिट्यादेशादि न भवति । यदि तर्हि लिटादेशो विशिष्यत एवं सत्यङ्गमविशेषितं स्यात् । ततश्च पक्तः पक्तवानित्यत्रापि प्रसज्येत । पचेरपि ह्यङ्गस्य लिटि परभूते य आदेशः क्रियते स इहाप्यादिर्नास्ति । नैतदस्ति । अभ्यासलोपसन्नियोगेन ह्येत्त्व मुच्यते । तेन यत्रैवाभ्यासलोप स्तत्रैवैत्त्वेन भवितव्यम् । नचात्रा-भ्यासलोपः । असम्भवात् । इह तर्हि स्यात् । पापच्यत इति । अयमप्यदोषः । इह परत्वाद् दीर्घोऽकित (७।४।८३) इति दीर्घो भविष्यति । ह्रस्वहलादि-शेषावुत्सर्गौ । तयो दीर्घत्वमेत्त्वञ्चापवादः । तत्र दीर्घस्यावकाशो बाभा-ष्यते । एत्वस्यावकाशः पेचतुः पेचुरिति । इहोभयं प्राप्नोति पापच्यत इति । अपवादविप्रतिषेधे सति परत्वाद्दीर्घत्वं भविष्यति । अथ बभणतुर्बभणुरित्यत्रैत्वं कस्मान्न भवति ? अभ्यासे चर्च इति (८।४।५४) जश्त्वे कृत आदेशादित्वा-दिति चेत् ? न । एत्त्वे कर्त्तव्ये जश्त्वस्यासिद्धत्वात् । तस्माद् भवितव्यमेवैत्त्वेन । विप्रतिषेधस्य तु यत्र कुहोश्चुरिति (७।४।६२) चुत्वं क्रियते चकणतु श्चकणु र्जहसतुर्जहसुरित्यादाववकाशः स्यादित्यत आह इहेत्यादि । कथमेतज् ज्ञायते ? नास्त्यसिद्धत्वमित्याह तथाचेत्यादि । तत्रैव तृफलभजत्रपश्चेति (६।४।१२२) फलिभज्योरेत्त्व मुपपद्यते यदि जश्त्वचर्त्वयो रसिद्धत्वं न भवति । नान्यथा । अनादेशादित्वादनेनैवैत्त्वस्य सिद्धत्वात् तन्नोपपद्यते । तस्मात् फलिभज्योरेत्त्वविधानादवसीयते जश्त्वचर्त्वयोरसिद्धत्वमिह नास्तीति । रूपाभेदे चेत्यादि । शब्दरूपस्य स्थानिनोऽभेदे सति शश्रादेशः स इह नाश्रीयत इत्यस्यार्थस्य न शसददवादिगुणानामिति (६।४।१२६) शसिदद्योः प्रतिषेध-

वचनं ज्ञापकम्। अभ्यासे चर्चं (८।४।५४) इत्यनेन प्रकृतिजशां प्रकृतिजशः प्रकृतिचरां प्रकृतिचरो भवन्तीति शसः शकारस्य शकारो भवति। ददे टकारस्यापि दकारः। तेनोभावपि तावादेशादी भवतः। तत्र यदि स्थान्यभेदे सति य आदेशः सोऽपीहाश्रीयेत तत आदेशादित्वादेव न भविष्यतीति शसिदद्योरेत्त्वप्रतिषेधो न विधीयेत। विहितश्च। तस्मादेतदेव प्रतिषेधवचनं ज्ञापयति। रूपाभेदे सति य आदेशः स इह नाश्रीयत इति। यदि तर्ह्याश्रीयेत किं स्यादित्यत आह अन्यथाहीत्यादि। अन्यथा योऽपि रूपाभेदादादेशः स्थानिनाऽभिन्नरूपः सो ऽपीहाश्रीयेत ततो यथा चकणतु रित्येवमादीनामेत्त्वं न भवति तथा पेचतुः पेचुरित्येवमादीनामपि प्रकृतिजशरादीनां न स्यात्। प्रकृतिजशः प्रकृतिचरश्चादयोयेषां ते तथोक्ताः। अहं पपठ। अहं पपचेत्यत्र स्थानिवद्भावेन पित्त्वात् कित्त्वं नास्ति। तेनैत्त्वाभ्यासलोपौ न भवतः। वृद्धिरपि न भवति। णलुत्तमो वेति (७।४।९१) पक्षे णित्त्वाभावात्। णित्त्वपक्षे तु परत्वाद्वृद्धा बाधितत्वादेत्वाभ्यासलोपाभ्यां न भवितव्यम् इत्यणित्त्वपक्ष एवोदाहृतम्। दम्भेरिति। किं पुनः कारणं दम्भेरेत्त्वं न भवति? यावता लिट्यनादेशादि ह्येतदङ्गम्। अनिदितामित्यादिना (६।४।२४) नलोपे कृत एकहल्मध्य एवाकार इत्यत आह नलोपस्येत्यादि। ग्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति (१।२।५ सूत्रे) दम्भेः परस्य लिटः कित्त्वमुक्तम्। तस्मिन् सति य उपधाया लोप स्तस्यासिद्धवदत्रा भादित्यसिद्धत्वान्न (६।४।२२) प्राप्नोति। तस्माद् दम्भेरेत्त्वं वक्तव्यम्। व्याख्येय मित्यर्थः। ततेदं व्याख्यानम्। श्नसोरल्लोप (६।४।१११) इत्यत्राभा च्छास्त्रीयस्यासिद्धत्वस्यानित्यत्वं ज्ञापितम्। तेन दम्भेरेत्वे कर्त्तव्ये लोपस्यासिद्धत्वं न भवति। ततश्च दम्भेर्लिटैत्त्वं भविष्यतीति। अथवातएकहल्मध्य (६।४।१२०) इत्यत्रात इति योगविभागः कर्त्तव्यः। तेन यत्र यत्रैत्वमिष्यते तत्र तत्र भविष्यतीति। एवञ्च कृत्वा नशिमन्योरलिट्यैत्त्वमित्याद्यपि नोपसंख्येयम्। योगविभागेनैव सिद्धत्वात्। वक्तव्यशब्दस्य व्याख्येय इत्ययमोऽर्थ इति सर्व्वत्र वेदितव्यम्। अनेशमिति। तस्थेतयादिना (३।४।१०१) मिपोऽमावः। अथ मेनकेतयत्र प्रतययस्यादितयादिनेत्त्वं (७।२।४४) कस्मान्न भवतीतयाह चिपकादिष्वितयादि। चिप-

कादिष्विस्त्वस्य प्रतिषेधो वक्ष्यते । अस्य च क्षिपकादिषु प्रक्षेपः । तेनेत्त्वं न क्रियते । चानशीति । ताच्छील्यवयोवचनशक्तिषु चानश् (३।२।१२९) । मुङ् न क्रियत इति । आने मुगिति (७।२।८२) मुक् प्राप्नोति । स न भवति । अनित्यमागमशासनमिति (पृ ९५) कृत्वा । छान्दसत्वाद्वा । सर्वे विधयश्छन्दसि विकल्प्यन्त इति । छान्दसं कुत्वमिति । अापो: संज्ञाच्छन्दसो र्बहुलमिति (६।३।६३) अापो विधीयमानं कुत्वं बहुलवचनात् पेचिरन्नित्यत्रापि भवति । पचेर्लिङ् । सीयुट् । झस्य रन् । शप् । आद्गुणः (६।१।८७) । पचेरन्निति प्राप्त एत्वे कुत्वे च कृते पेचिरन्निति भवति ।

## १२१ । थलि च सेटि ।

पेचिथ । शेकिथेति । उपदेशेऽत्वत (७।२।६२) इतीट्प्रतिषेधप्राप्त ऋतो भारद्वाजस्येति (७।२।६३) नियमाद् इडेड् भवति । तदय मत्वार्थः । ऋत एव भारद्वाजस्येति । नान्येषां धातूनामिति । पपक्थेति । अन्येषा माचार्याणां मतेनेट्प्रतिषेधो भवत्येव । अथ थल्ग्रहणं किमर्थम् ? न सेटीत्येवोच्येत ? यत्र हि पूर्वेण न सिध्यति तदर्थं वचनम् । अन्यत्रेडादौ किन्त्वात् पूर्वेणैव सिद्धम् । तत्रान्तरेणापि थल्ग्रहणं थल्येव भविष्यतीत्यत आह थल्ग्रहण मित्यादि । असति थल्ग्रहण आरम्भसामर्थ्यादेतावान् निश्चयः स्याद् यत्र पूर्वेण न सिध्यति तदर्थमेतदिति । अक्ङिदर्थमित्येतत् तु दुरवसानम् । बहवो विशेषाः प्रक्रान्ताः । तत्र सन्देहः स्यात् । किमङ्किदर्थमेतत् स्यादुतादेशार्थम् ? आहोस्विदनेकहल्मध्यार्थम् ? किमु अनेकाकारार्थमिति ? तत्रासन्देहार्थं मत एकहल्मध्येऽनादेशादेर्लिटीत्यत (६।४।१२०) विशेषाः सर्वं एवेहानुवर्त्तन्ते । क्ङिद्ग्रहणन्तु निवृत्तम् । तस्मादक्ङिदर्थोऽयमारम्भः । न च थलोऽन्यदिहाक्ङिदस्ति सेट् । ततः सामर्थ्यात् थल्येवायं विधि र्व्याख्येयः । व्याख्यानद्वारेण प्रतिपत्तौ मन्दधियां प्रतिपत्तिगौरवं स्यात् । तस्माद् विस्पष्टार्थं थल्ग्रहणं क्रियते । थलो ह्यक्ङित उपादाने सुखमेव प्रतीयतेऽक्ङिदर्थोऽयमारम्भ इति ।

## १२२। तृफलभजत्रपश्च।

तेरतु स्तेवरिति। ऋच्छत्यृतामिति (७।४।११) गुणः। फेलतुः फेलुरिति। फल निष्पत्तौ। ञिफला विशरण इति च। तरतेर्गुणार्थमिति। न शसददवादिगुणानामिति प्रतिषेधं वक्ष्यति। अतस्तरतेरिदं वचनं गुणइत्येवमभिनिर्वृत्तस्यापि यथा स्यादित्येवमर्थम्। श्रन्थेश्चेति वक्तव्य मिति। ग्रन्थ श्रन्थ सन्दर्भ इत्यस्याप्येत्त्वं भवतीत्येतदर्थरूपं व्याख्येय मित्यर्थः। तत्रेदं व्याख्यानम्। चकारोऽत्र क्रियते। स चानुक्तसमुच्चयार्थः। तेन श्रन्थेरपि भविष्यतीति। श्रेथतुः श्रेथुरिति। पूर्व्ववदुपसंख्यानेन लिटः कित्त्वे नकारलोपः।

## १२३। राधो हिंसायाम्।

राधो हिंसायामर्थं इत्यादि। यद्यपि राध साध संसिद्धाविति राधिः संसिद्धौ पठ्यत इह तथाप्यनेकार्थत्वाद् धातूनां हिंसार्थता वेदितव्या। राधेर् हिंसायामर्थे ऽवर्णस्यैकारादेशो भवतीत्युच्यते। ननुच नात्र सूत्रे ऽवर्णग्रहणमस्ति। योऽप्यत्रोऽवर्णः प्रकृतः सोपि मात्राकालः। नच राधिर्मात्राकालोऽवर्णोऽस्ति। तत् कथमवर्णस्य स्थान एत्त्वं लभ्यत इति यश्चोदयेत् त प्रत्याह अत इत्यतदिह्योपस्थितमित्यादि। अत इति। स्वरितत्वादिहोपस्थितम्। यदिहोपस्थितं तत् तपरत्वकृतस्य कालविशेषस्याभावात् तदपास्य पवित्रज्यावर्णमात्रं स्थानित्वेन प्रत्याययति बोधयति। अन्यथा तस्योपस्थानमनर्थकं स्यात्। अथवेत्यादि। श्नाभ्यस्तयोरित्यनेन (६।४।११२) यतः सूत्रात् स्थान्यनुवर्त्तते तदुपलक्षयति। आत इत्यनेनापि यः स्थान्यनुवर्त्तते तं दर्शयति। श्नाभ्यस्तयोरात इत्यत (६।४।११२) आत इत्यनुवर्त्तत इति व्याख्येय मिति। एवञ्च व्याख्यायमाने राधेरवर्णस्यैत्वं विज्ञायते यदि तस्मात इत्यनुवर्त्तते। एवञ्च सत्यत एकहल्मध्य इत्यत्रापि (६।४।१२०) तस्मात सन्निधानादिहापि प्राप्नोति। शशासिव शशासिमेति। नैष दोषः। मण्डूकप्लुतिन्यायेन तस्येहानुवृत्तिः। एकहल्मध्ये वेत्यादि। अथवैकहल्मध्य इत्यनुवर्त्तते। तत्राप्यनुवर्त्तमाने ऽसम्भवादत इतीह न व्याप्रियते। तेन राधे

र्थं एकहल्मध्येऽवयवः स स्थानी भवति । स पुनराकार एव भवति । तस्यैवेत्त्वं भविष्यति ।

## १२४ । वा जृभ्रमुत्रसाम् ।

जृ वयोहानावित्यस्य गुणार्थं वचनम् । भ्रमेरादेशार्थम् । अनेकहल्-मध्यार्थञ्च । त्रसेश्चानेकहल्मध्यार्थम् । जजरतुरिति पूर्ववद् गुणः ।

## १२५ । फणाञ्च सप्तानाम् ।

बहुवचननिर्देशादाद्यर्थो गम्यते । अत आह फणादीनामित्यादि । फण गतौ । राजृ दीप्तौ । टुभ्राजृ टुभ्राश्ट टुभ्लाश्ट दीप्तौ । स्यमु स्वन ध्वन शब्द इत्येते ध्वनवर्जिताः फणादयः सप्त । तत्राद्यस्य नित्ये प्राप्ते विकल्पार्थं वचनम् । इतरेषामप्राप्ते । तत्र राजृप्रभृतीनां चतुर्णामवर्णस्यैत्त्वस्य प्रतिपत्तये राध हिंसायामित्यत्रात इत्येतदिहोपस्थितमित्यादिना यदुक्तं तद् यथासम्भवं वेदितव्यम् ॥

## १२६ । न शसदद्वादिगुणानाम् ।

अत्र यदि गुण इत्यनेन यस्यैत्त्वं विहितं स एवाकार उच्यते ततोऽयमर्थो-ऽकारस्य गुणस्य न भवतीति । तथाचैत्त्वविधिरनवकाश एव स्यादित्येत-द्बुद्धौ कृत्वा नात्र गुणेनाकार एवोच्यते ऽपि तु गुणशब्दाभिनिर्वृत्त इति दर्शयन्नाह गुण इत्येवमभिनिर्वृत्तस्य चेत्यादि । गुणशब्द मुच्चार्य्य योऽभिनिर्वृत्तः शब्द स्तस्य सम्बन्धी योऽकार स्तस्य स्थान एत्त्वं न भवतीत्यर्थः । तत्-सम्बन्धित्वं पुनस्तस्य तत्स्थानित्वात् तदवयवत्वाच्च यथायोगं वेदि-तव्यम् । तदेवं गुणशब्दाभिनिर्वृत्तस्य सम्बन्ध्यकारः प्रतिषेधस्य निमित्तम् । इतरस्तु विधेरित्येव विधिप्रतिषेधयोर्विषयविभागः । विशशसतुरिति । शसु हिंसायाम् । ददद इति । दद दाने । ववमतुरिति । टुवम उद्-गिरणे । विशशरतुरिति । शॄ हिंसायाम् । गुणशब्दाभिनिर्वृत्तस्येत्यादिना यदुक्तं तस्यार्थमुदाहरणे दर्शयति । विशशरतुरित्यत्रारित्ययं शब्दो गुण-शब्दाभिनिर्वृत्तः । तत्सम्बन्ध्यकारस्यतदेकदेशत्वात् । लुलविथेति । अत्रा-व्योकारो गुणशब्दाभिनिर्वृत्तः । तत्सम्बन्ध्यकारस्य तत्स्थानित्वात् ।

ननु विश्वप्ररतुरित्यलाकारमात्रं गुणशब्देनाभिनिर्द्दिश्यताम्। नाऽरशब्दः। नैतदस्ति। रेफस्य गुणभक्तत्वात्। तथाच भाष्यम् अर्भवति गुणो भवति। आर्भवति वृद्धिर्भवति। रेफसहितो गुणवृद्धिसंज्ञो भवतीति।

## १२७। अर्वणस्त्रसावनञः।

तृदृत्ययमादेशो भवतीति। नानुबन्धकृतमनेकाल्त्वमित्यन्तस्य (प, ७) भवति। एकाल्त्वात्। ऋकारस्यानुबन्धत्वात्। उकारस्यानुबन्धत्वात् प्रथमैकवचनं सुशब्दो गृह्यते। तेन सप्तमीबहुवचने भवत्येव। अर्वत्स्विति। स च नञ उत्तरो न भवतीति चेदिति यत् प्रकृतं तदिहापि सम्बध्यते। अर्व्वन्ताविति। ऋकारस्योगित्कार्य्यार्थत्वादुगिदचामिति (७।१।७०) नुम्। अर्वतीति। उगितश्चेति (४।१।६) ङीप्। आर्व्वतमिति। अपत्यार्थविवक्षायामण्। ननु च नञिवयुक्तन्यायेन (प,७५) साद्दृश्यात् सोरन्यत्र विभक्तावेव भवितव्यम्। नैतत्। असाविति प्रसज्यप्रतिषेधोऽयम्। अतएव वृत्तिकृतोक्तं सुश्चेत् ततः परो न भवतीति। अन्यथा सोरन्यो यः सुप् स चेत् ततः परो भवतीति ब्रूयात्। अथापि पर्य्युदासः? एवमप्यदोषः। अनित्यत्वान्नञिवयुक्तपरिभाषायाः (प, ७५)। अनित्यत्वन्तु तस्या ओषधेश्च विभक्तावप्रथमायामित्यत्र (६।३।१३२) विभक्तिग्रहणाद् विज्ञायते। यदि हि सा नित्या स्यात् प्रथमापर्य्युदासेन विभक्तावेव भविष्यतीति विभक्तिग्रहणं न कुर्य्यात्। कुर्व्वन्नपि तज्ज्ञापयत्यनित्येयं परिभाषेति। (N)

## १२८। मघवा बहुलम्।

मघवेति सुब्व्यत्ययेन षष्ठ्याः स्थाने प्रथमा। मघोन इति। श्वयुवमघोनामिति (६।४।१३३) संप्रसारणम् परपूर्व्वत्वम्। आद्गुणः (६।१।८७)। ननुच मघोऽस्यास्तीति मत्वर्थविवक्षायां छन्दसीवनिपौ (५।२।१०९ वा) वक्तव्याविति वनिप्प्रत्ययान्तोऽयं मघवञ्शब्दः। तत्र वनिपः संप्रसारणे भसंज्ञायां सत्यां यस्येति चेति (६।४।१४८) लोपेन भवितव्यम्। ततश्च मघुन

(N) अर्वणोऽङ्गस्येव तृ। न पदे परे। तथाहि अर्वाङ् मुनिता यथीरोचिनीति वाहेरणुयन सहसद्गवं-गवं इत्यादिषु न तादेशः। ऋधातोर्वनिपि अर्वन्शब्दस्य वा तस्माद् विच् ततो मतुपि अर्वच्छब्दस्य सिद्धिः।

इतत्रनिष्टं रूपं स्यात् । नैतत् । अन्यदेव ह्योदमव्युत्पन्नं प्रातिपदिकम् । तथाहि भाषायामपि तस्य प्रयोगो दृश्यते (0)। अथापि वनिप्प्रतत्रयान्तः स्याद् ? एवमपि बहुलवचनाद् यस्येति (६।४।१४८) चेति लोपो न भविष्यतीतत्रदोषः । मघोनीति । ऋन्नेभ्यो ङीप् (४।१।५) । माघवनमिति । पूर्ववदण् । अन्निति (६।४।१६७) प्रकृतिवद्भावः ।

१२९ । भस्य ।

१३० । पादः पत् ।

पाद इति । पादशब्दो लुप्ताकारो गृह्यत इति । अथ पादयतेः क्विबन्तस्य यः पाच्छब्दः संपद्यते स कस्मान्न गृह्यते ? तस्यासम्भवात् । पादयतेर्हि क्विबन्येभ्योपि दृश्यत (३।२।१७८) इत्यनेन स्यात् । स च दृश्यत इति वचनान्न भवति । यत्र लोके क्विबन्तप्रयोगो दृश्यते तत्र यथा स्यादित्येवमर्थं हि तत्र दृश्यत इत्युक्तम् । नच पादयतेः क्विबन्तस्य प्रयोगो दृश्यते । पादशब्दस्य समास एवाकारो लुप्यते । तेन सामर्थ्यात् तदन्तस्याङ्गस्य कार्य्यं विज्ञायत इत्याह तदन्तस्याङ्गस्येतत्रादि । यदि तर्हि पाच्छब्दान्तस्याङ्गस्य पदित्ययमादेशो विज्ञायत एवन्तर्हि येन विधिस्तदन्तस्येति (१।१।७२) सर्वस्य तदन्तस्य प्राप्नोतीत्याह स चेत्यादि । द्विपद इति । द्वौ पादावस्येति बहुव्रीहिः । संख्यासुपूर्वस्येत्यकारलोपः (५।४।१४०) । द्विपदिकामिति । द्वौ द्वौ पादौ ददातीति पादशतस्येत्यादिना (५।४।१) वुन् । वैयाघ्रपद्य इति । व्याघ्रस्येव पादावस्येति बहुव्रीहिः । पादस्य लोपोऽहस्त्यादिभ्य (५।४।१३८) इत्यकारलोपः । व्याघ्रपदोऽपतत्रमिति गर्गादित्वाद् यञ् ।

१३१ । वसोः संप्रसारणम् ।

प्रतत्रयग्रहणपरिभाषया (प,२४) तदन्तस्य कार्य्यं विज्ञायत इतत्राह वस्वन्तस्येतत्रादि । विदुष इति । विदेः शतुर्वसुः (७।१।३६) । पेचुष इति । क्वसुश्चेति (३।२।१०७) लिटः क्वसुः । अत एकहल्मध्य (६।४।१२०) इतत्रादिनैत्त्वाभ्यासलोपौ । पपुष इति । आतो लोप इटि चेतत्राकारलोपः (६।४।६४) ।

(0) हविर्जक्षिति निःशङ्को मखेषु मघवानसाविति भट्टिः ।

ननु चाकारलोपे कर्त्तव्ये संप्रसारणमसिद्धम्। तत् कुतोऽत्राकारलोप इत्याह आकारलोपे कर्त्तव्य इत्यादि। आकारलोपः संप्रसारणे। तत् तु विभक्ताविति व्याश्रयत्वम्। अतो नास्त्यसिद्धत्वम्। ननु चैकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति। तदनुबन्धकग्रहणे नातदनुबन्धकस्येति (प,८३) वा न क्वसोरिह ग्रहणेन भवितव्यम्। तत् कथं पपुषः पेचुष इत्यत्र संप्रसारणं भवतीति आह वसुग्रहण इत्यादि। एतत् तु शत्रादेशस्य वसो रुकारानुबन्धकरणाद् वेदितव्यम्। उकारानुबन्धस्य ह्येतदेव फलम्। इह सामान्येन ग्रहणं यथा स्यात्। ननु चोगित्त्वार्थं तत् स्यात्। नैतत्। उगित्कार्य्यस्य स्थानिवद्भावेनैव सिद्धत्वात्।

## १३२। वाह ऊठ्।

वाह इति। वहिरयं ण्विप्रत्ययान्तः। स चास्माद् सोपपदादेव ण्वि र्विहितः। तेन सामर्थ्यात् तदन्तविधिर्विज्ञायत इत्याह वाह इत्येवमन्तस्येत्यादि। ऊड़िति तदिति। ठिदयमूकारः। एत्येधत्यूठ्स्विति (६।१।८१) विशेषणार्थः। संप्रसारणं भवतीति। संप्रसारणमित्येष विशेषः कुतो लभ्यते? पूर्वसूत्रात् संप्रसारणमित्यस्यानुवृत्तेः। किमर्थं पुनः संप्रसारणमनुवर्त्यते। स्थानिनियमार्थम्। यद्येतन्नानुवर्त्त्येतालोऽन्त्यस्येत्यन्त्यस्य (१।१।५२) स्यात्। संप्रसारणमित्यस्मिंस्त्वनुवर्त्तमाने तेनाभिसम्बध्यमानेनोठा यण एव स्थान इग् यणः संप्रसारण मिति (१।१।४५) भवितव्यम्। प्रष्ठौह इति। प्रष्ठं वहतीति भजो ण्विरित्यनुवर्त्तमाने (३।२।६२) वहश्चेति (३।२।६४) ण्विः। अथ किमर्थमूट् क्रियते न वाह इत्येतावदेव सूत्रं कर्त्तव्य मित्यभिप्रायः। संप्रसारण एव कृत इति। पूर्वसूत्रात् संप्रसारणग्रहणानुवृत्तेर् गुणे चेति कृत इति सम्बन्धः। गुणस्तु पुगन्तलघूपधस्येति (७।३।८६)। लुप्तेऽपि ण्वौ प्रत्ययलक्षणेन। ननुचाङ्गवृत्ते पुनरङ्गवृत्तावविधि र्निष्ठितस्येति (प,९३) संप्रसारणे कृते गुणेन न भवितव्यम्। निष्ठितस्येति वचनाददोषः। निष्ठा हि शब्दस्य परिसमाप्तिः। सा च तदा भवति यदा शब्दस्य प्रयोगार्हता भवति। नच यावद् गुणादिसंस्कारो न क्रियते तावदस्य प्रयोगार्हता भवति।

तस्मात् कृतेऽपि संप्रसारणे भवत्येव गुणः । तदेतत् स्यात् । यद्यूड् न क्रियते तदा शालिं वहति दितिं वहति शालूहो दितुह इत्येवमाद्यनकारान्ते शालिदितिशब्दे उपपदे वहे र्ण्विप्रत्यये विहिते सति न सिध्यतीत्यत आह अनकारान्ते चोपपद इत्यादि। वहश्चेत्यनेन (३।२।६४) च्छन्दसि सह (३।२।६३) इत्यतोऽत्र च्छन्दोग्रहणानुवृत्ते श्छन्दस्येव ण्विर्विधीयते। दृष्टार्थविधि श्छन्दसि। अकारान्त एव चोपपदे प्रष्ठादौ वहे श्छन्दसि ण्वि दृश्यते। नत्विकारान्ते शाल्यादौ। कथं पुनरनेन बहिरङ्गपरिभाषा (प, ५१) ज्ञाप्यत इत्याह तस्यां हीत्यादि। बहिरङ्गत्वं पुनः संप्रसारणस्य बाह्याजादिप्रत्ययनिमित्तां भसंज्ञामाश्रित्य प्रवृत्तत्वात्। गुणस्य त्वन्तरङ्गत्वम्। अबाह्यप्रत्यये प्रवृत्तत्वात्। किं पुनरस्याः परिभाषाया ज्ञापनेन प्रयोजनम्? पचावेदं यजावेदमित्यत्रासिद्धत्वं बहिरङ्गलक्षणस्य। अतोऽन्तरङ्गलक्षणमेत ऐत्वं न भवति। बहिरङ्गलक्षणत्वाद् गुणस्य। बहिरङ्गत्वन्तु पदद्वयाश्रितत्वाद्। ऐत्वस्य त्वन्तरङ्गत्वं विपर्ययात्।

## १३३। श्वयुवमघोनामतद्धिते।

यून इति। संप्रसारणे कृते परपूर्वत्वे च सवर्णदीर्घत्वम्। शौवमिति नस्तद्धित इति टिलोपः(६।४।१४४)। यौवनमिति। यूनो भाव इति हायनान्तयुवादिभ्योऽणित्यण् (५।१।१३०)। अन्निति (६।४।१६७) प्रकृतिभावाट् टेरिति (६।४।१४३) टिलोपाल्लोपौ न भवतः। माघवन मिति। मघवा देवतास्येति साऽस्य देवतेत्यण् (४।२।२४)। पूर्ववत् प्रकृतिभावः। शौव मित्येतद् व्युत्पादयितु माह शुनो विकार इत्यादि (P)। युवशब्दस्येति। प्रत्ययान्तस्यापि प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति (प, २) संप्रसारणं प्राप्नोति। मघवन्नित्यस्यापि त्रित्यादेशे कृत एकदेशविकृतमनन्यवद्भवतीति (प, ३८) तकारान्तस्यापि प्राप्नोति। तत् कथं न भवतीत्याह श्वादीनामित्यादि।

---

(P) मुद्रितपुस्तके तु शौवनं मांसमिति पाठः। शौव मिति पाठे शुनः संकोच उपसंख्यानमिति (६।४।१४४, वा) संकोचेऽभिधेये एव टिलोपः स्यात्। शौवः सङ्कोचः। शौवनोऽन्यः। न्यासकारस्तु वार्त्तिकं नालोचयदिति प्रतीयते।

तदर्थमिति। नकारान्तानामेव यथा स्यात्। अनकारान्तानां मा भूदित्येवमर्थम्। अन इत्युभयोः शेष इति। अन इत्यस्योभयो र्योगयोः शेषत्वेऽवयवत्वे सत्यन इत्यनेन संप्रसारणशेषस्यातिदेश इति न भवति॥

१३४। अल्लोपोऽनः।

तपरकरणं नञ्समासोऽयमित्याशङ्कानिरासार्थम्। राजकीय इति। गर्तोत्तरपदाच्छ इति (४।२।१०७) च्छे प्रकृते राज्ञः क चेतिच्छः (४।२।१४) ककारस्यान्तादेशः। अत्राप्येकदेशविकृतमनन्यवद् भवतीति (प,३८)।

१३५। षपूर्वहन्धृतराज्ञामणि।

अन्निति (६।४।१६७) प्रकृतिभावेनाल्लोपस्य निवृत्तिर्मा भूदितिएवमर्थं वचनम्। औक्ष्णः। ताक्ष्ण इति। उक्षन् तक्षन् इतिएताभ्या मपत्यार्थेऽण्। भ्रौणघ्न इति। भ्रूणं हतवानिति ब्रह्मभ्रूणवृत्रेषु हन इति (३।२।८७) क्विप्। तदन्तादण्। हो हन्तेर्ञ्णिन्नेष्विति (७।३।५४) कुत्वम्। धार्त्तराज्ञ इति। धृतराजशब्दाद् बहुव्रीहेरण्। सामनो वेमन इति। तस्येदमित्यण् (४ ३।१२०)। उभावपि न भवत इति। अल्लोपटिलोपावुभावपि चापित्त्य प्रकृतिभावस्य विधानात्। ताक्षण्य इति। कुर्वादिभ्यो ण्य इति (४।१।१५१) ण्ये प्रकृते सेनान्तलक्षणकारिभ्यश्चेत्यप्रत्ययः (४।१।१५२)। ये चाभावकर्मणोरिति (६।४।१६८) प्रकृतिभावः।

१३६। विभाषा ङिश्योः।

शीशब्दे चेति। एतेन नपुंसकाच्चेति (७।३।१९) यो विहितः शीशब्दस्तस्येदं ग्रहणम्। नतु जश्शसोःशिरिति (७।१।२०) यो विहितः शिशब्दस्तस्येदं ग्रहणमिति दर्शयति। कुतःपुनरेतज् ज्ञायते? शिशब्दे भसंज्ञाया अभावात्।

१३७। न संयोगाद् वमन्तात्।

प्रातिदीव्ने ति। हलि चेति (८।२।७७) दीर्घः। अथान्तग्रहणं किमर्थम्? न वम इत्येवोच्येत। वकारमकाराभ्यां संयोगेन विशिष्यमाणे न च तदन्तविधिर्भवतीत्यन्तरेणाप्यन्तग्रहणं तदन्तविधिर्लभ्यत एव। सत्यमेतत्। विस्पष्टार्थमन्तग्रहणम्॥

१३८। अचः।

अचइत्ययमञ्चतिर्लुप्तनकारो गृह्यत इति। कुत एतत्? प्रत्याहारः कस्मान्न गृह्यते? अल्लोप इत्यनुवृत्तेर्न शक्यते प्रत्याहारो ग्रहीतुम्। प्रत्याहार-ग्रहणे सति तेनाकारो विशिष्येत। तथाचानर्थकं प्रत्याहारग्रहणं स्यात्। नह्यकारोऽच्त्वं व्यभिचरति। ननु चाङ्गं प्रकृतम्। तत् प्रत्याहारेण विशिष्यते ऽजन्तस्याङ्गस्येति। न। एवं सत्यजन्तस्याल्लोपो भवतीत्येष सूत्रार्थः स्यात्। तथाच यस्येति चेति (६।४।१४८) लोपोऽनर्थकः स्यात्। अनेनैव सिद्धत्वात्। अपिच द्युप्रागपागुदक्प्रतीचो (४।२।१०१) यदितित्यमादिर्निर्देशो लिङ्गं ह्यत्राप्रत्याहारग्रहणस्य। यदि हि प्रत्याहारग्रहणं स्याद् अत्राञ्चते र्ग्रहणं न स्यात्। नह्येतदजन्तमङ्गम्। अतएव निर्देशात् पचाद्यजपि न गृह्यते। नह्येतत् पचाद्यजन्तमङ्गम्। दधीच इति। दध्यञ्चतीति ऋत्विगा-दिना (३।२।५९) क्विन्। अनिदितामित्यादिनानुनासिकलोपः (६।४।२४)। चाविति दीर्घः (६।३।१३८)।

१३९। उद ईत्।

१४०। आतो धातोः।

कीलालप इति। विजुपिच्छन्दसीति (३।२।७३) विचि प्रकृत आतो मनिन्क्वनिब्वनिपश्चेति (३।२।७४) विच्। निय इति। क्विप्। इयङ्।

१४१। मन्त्रेष्वाङ्यादेरात्मनः।

आङिति। तृतीयैकवचनस्यैषा संज्ञा पूर्व्वाचार्य्यैर्विहिता। आङो-ऽन्यत्रापि दृश्यत इति। मन्त्रेष्विति बहुवचननिर्देशादेतल्लभ्यते। बहुवचन-निर्देशेन ह्ययमर्थः सूचितः। बहुविषयोऽयं निर्देश इति। एवञ्च बहुविषयो भवति यद्याङोऽन्यत्रापि क्वचिद् भवति। नान्यथा। त्मन्यासमञ्जतेति। सप्तम्येकवचने। अत्रादिलोपः। आदिग्रहणमुत्तरार्थम्। इह तु पूर्वसूत्रा-दात इत्यनुवृत्तेरन्तरेणाप्यादिग्रहणमादेरेव लोपो भवतीति शक्यते विज्ञातुम्।

१४२। ति विंशते र्डिति।

विंशक इति। विंशतित्रिंशद्भ्यां ड्वुन्संज्ञायामिति (५।१।२४) ड्वुन्।

तिशब्दस्य लोपे कृते ऽतो गुणे पररूपत्वम् । विंशं शतमिति । विंशति रधिका ऽस्मिन्निति शदन्तविंशते श्चेति डप्रत्ययः (५।२।४६) । विंश एकविंश इति । तस्य पूरणे डट् (५।२।४८) । तिग्रहणमन्त्यस्य मा भूदितेयवमर्थम् ।

## १४३ । टेः ।

कुमुद्वानित्यादि । कुमुदनड्वेतसेभ्यश्चातुरर्थिको ड्मतुप् (४।२।८७) । उपसरज इति । सप्तम्यां जनेर्डः (३।२।९७) । एवं मन्दुरज इत्यत्रापि । अत्र हि ङ्यापोः संज्ञाच्छन्दसोर्बहुलमिति (६।३।६३) पूर्वपदस्य ह्रस्वत्वम् । त्रिंशक इति । पूर्ववत् ड्वुन् । ननुच भस्येत्यनुवर्त्तते (६।४।१२९) । नच ड्मतुपि डप्रत्यये च धातोर्विहिते पूर्वस्य भसंज्ञा प्राप्नोति । उभयोरनजादित्वात् । असादित्वाच्च यथायोगम् । तत् कथमत्र लोपो भवतीत्याह डित्यभस्यापीत्यादि । यदि टिलोपो न स्यात् तदा डित्त्वमनर्थकं स्यात् । अथैवं कस्मान्न विज्ञायते प्रयोजनाभावादत्रेत्संज्ञैव न भवतीति ? तस्याश्चासत्यां श्रवणार्थमेव डकारोच्चारणमिति ? अशक्यमेवं विज्ञातुम् । एवं तर्हि प्रावृट्शरत्कालदिवां ज इति (६।३।१५) कृतटिलोपस्य जने निर्द्देशो नोपपद्येत । तस्मादत एव निर्देशादवसीयते भवति धातुप्रत्ययडकारस्येत्संज्ञेति । तस्याश्चासत्यां यदि टिलोपो न स्यात् तस्यास्तदा वैयर्थ्यं स्यात् ! ड्मतुपोऽपि यदि डकारस्य लोपो न स्यात् तदन्तेन तन्नामादेशो न गम्येत । तत्र च देशे तन्नाम्नीति (४।२।६७) वर्त्तते । तस्मादवश्यं तत्रापि डकारस्येत्संज्ञया भवितव्यम् । तस्याश्च तत्सामर्थ्यात् टिलोपे न ।

## १४४ । न स्तद्धिते ।

सात्वत इति । सत्वतोऽपत्यमित्यण् । नान्तस्य टिलोप इत्यादि । किं पुनः कारणं न सिध्यति यत उपसंख्यानं कर्त्तव्यमित्याह अत्र य इनन्ता इत्यादि । ये त्वनन्ता स्तेषामनिति (६।४।१६७) प्रकृतिभावः प्राप्त इति प्रकृतेन सम्बन्धः । साब्रह्मचारा इति । तस्येदमित्यण् (४।३।१२०) । पीठसर्पिण इति । इम इति प्रकृतेन सम्बन्धः । पैठसर्पा इति । पूर्ववदण् । कालापा इति । पूर्व्ववत् प्रोक्तार्थे कलापिवैशम्पायनान्तेवासिभ्यश्चेति (४।३।१०४) वैशम्पायनान्ते-

वासिष्ठाण् णिनिप्रत्यये प्राप्ते तदपवादः कलापिनोऽण् (४।३।१०८)। ततस्तदधीते तद्वेद (४।२।५९) इत्यण् । तस्य प्रोक्ताल्लुगिति (४।२।६४) लुक् । छन्दोब्राह्मणानि च (४।२।६६) तद्विषयाणीत्यध्येतृवेदितृविषयता। कौथुमा इति । तस्येदमित्यण् (४।३।१२०)। तत्कृतो ग्रन्थ उपचारादित्यादि । उपचारस्य तु तत्कृतत्वमेवात्र निबन्धनम्। भवति हि तत्कृतत्वे तदुपचारः । यथा सर्वमिदं पुराणं कर्म शुभाशुभं भुज्यत इति । अथ कस्मादुपचार आश्रीयते ? नाधिकृत्य कृते ग्रन्थ (४।३।८७) इत्येवमादिशैषिकार्थविवक्षायां तद्धित एव क्रियेतेत्यत आह शैषिकेष्वर्थेष्वित्यादि। तैतिलिजाजलिशब्दौ वृद्धसंज्ञकौ । तयो-र्वृद्धत्वात् शैषिकेष्वर्थेषु विधीयमानोऽसौ तद्धितो वृद्धाच्छ इतिच्छः (४।२।११४) प्रसज्येत। तस्मिंश्च सति तैतिला जाजला इति न सिध्येत् । तस्मान्मा भूदेष दोष इत्युपचार आश्रितः। एवमित्यनेनानन्तरोक्तां व्युत्पत्तिं दर्शयति च्छ-प्रत्ययनिवृत्तये । लाङ्गलिशब्दस्याप्येवं व्युत्पत्तिः कर्त्तव्या । लाङ्गल्याचार्यः । तत्कृतो ग्रन्थ उपचारात् लाङ्गलिशब्देनाभिधीयते । लाङ्गला इति । शिखण्डा इत्याद्युदाहरणत्रयेपि तस्येदमित्यण् (४।३।१२०)। आश्म इति । अत्रापि तस्य विकार इत्यण् (४।३।१३४)। आश्मनोऽन्यत्रेति । अत्रापि तस्येदमित्य-त्रार्थाभिधाने । चार्म इत्यत्रापि तस्येदमित्यणेव (४।३।१२०)। चार्मणोऽन्य इति। चर्मणो विकार इति । शौव इति । द्वारादीनाञ्चेत्यैजागमः (७।३।४)। सायंप्रातिकादयः प्रातिपदिकेषु न पठ्यन्त इत्यतः पृच्छति के पुनः सायं-प्रातिकादय इति । सायंप्रातिकप्रकारा इत्यनेन प्रकारवचनतामादिशब्दस्य दर्शयति। ननु च सायंचिरमित्यादिनाव्ययेभ्य (४।३।२३) ष्ट्युट्युलभ्यां भवितव्यम् । तत् कथं ठञ् भवतीत्याह ट्युट्युलौ तु नेष्येते इति । अनभि-धानात् । अत्र च सर्वत्रोपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपाद-नम् । नस्तद्धितइत्यादेः (६।४।१४४) सूत्रादादिग्रहणमनुवर्त्तते । तद्धित-ग्रहणञ्चेदमर्थमेव कृतम् । तदनुवृत्तौ चायमर्थो भवति । नान्तादीनां तद्धिते परतष्टिलोपो भवतीति। आदिशब्देन सायंप्रातिकादयो गृह्यन्ते । तेन सर्वत्र टिलोपः सिद्धो भवति । इत्येवमादिषु न दृश्यते टिलोप इति । एतेनारातीय इत्येवमादीनामसायंप्रातिकत्वं दर्शयति। अथ शाश्वत इत्यत्र

कथमण् ? यावता कालाट्ठञिति (४।३।११) ठञा भवितव्यम् । नैतदस्ति । कालाट्ठञितयत्र (४।३।११) कालादिति योगविभागः कर्त्तव्यः । तेन शश्वच्छब्दाद् यथाविहितमण् भवति । नच योगविभागेन ठञ् बाध्यते । येषाञ्च विरोधः शाश्वतिक इति (२।४।९) निपातनात् । तेन पक्षे ठञपि भवत्येव । टुप्टुलौ तु शाश्वतशब्दान्नेष्येते । अनभिधानादेव । अथ शाश्वतिक इतयत्रेसुसुक्तान्तात् क इति (७।३।५१) ठञः कादेशः कस्मान्न भवति ? अतएव निर्देशात् ।

## १४५ । अह्नष्टखोरेव ।

द्व्यह इति । तद्धितार्थोत्तरपदसमाहारे चेति (२।१।५१) समासः । राजाहःसखिभ्यष्टजिति टच् समासान्तः (५।४।९१) । अत्राह्नोऽह्न एतेभ्य (५।४।८८) इत्यह्नादेशः प्राप्तः । स च न संख्यादेः समाहार इति (५।४।८९) प्रतिषेधान्न भवति । द्व्यह्नीन इति । तद्धितार्थे समाया इति (५।१।८५) वर्त्तमाने रात्र्यहःसंवत्सराच्चेति (५।१।८७) खः । केन पुनरह्नीन इतयत्र खप्रतयय इतयाह अह्नः समूहे खो वक्तव्य (४।२।४३ वा) इति । ननुच अह्नो नकारान्तत्वात् पूर्व्वेणैव सिद्धष्टिलोपः । तत् किमर्थायमारम्भ इत्याह सिद्धे सतीत्यादि । आह्निकमिति । आर्हीयष्ठक् । यदि सिद्धे सति नियमार्थोऽयमारम्भ एवं सत्येवग्रहण मनर्थकं स्यात् । विनापि तेन सिद्धे सत्यारम्भो नियमार्थो विज्ञास्यत इत्याह एवकारकरणं विस्पष्टार्थमिति । अथ विपरीतनियमाशङ्कानिरासार्थं कस्मान्न भवतीत्याह अह्न एवेत्यादि । यद्यह्न एव टखोरित्येष विपरीतनियमः स्यादेवं सत्यन्यस्य खे टिलोपप्रसङ्ग एव नास्ति । आत्माध्वानौ ख इति (६।४।१६९) प्रकृतिवद्भावविधानमनर्थकं स्यादित्यभिप्रायः ॥

## १४६ । ओ र्गुणः ।

बाभ्रव्य इति । मधुबभ्रोर्ब्राह्मणकौशिकयोरिति (४।१।१०६) बभ्रुशब्दादपत्यार्थे यञ् । माण्डव्य इति । अत्रापि गर्गादित्वात् । वान्तो यि प्रत्यय (६।१।७९) इत्यवादेशः । शङ्कव्यमित्यादौ तस्मै हित (५।१।५)

मित्यस्मिन्नर्थे उगवादिभ्यो यत् (५।१।२)। औपगवः कापटव इति। अत्राप्यपत्यार्थेऽण्। तद्धित इत्येव। वोतो गुणवचनादिति (४।१।४४) ङीष्। पट्वी। ओरोदिति वक्तव्य इत्यादि। एवमुच्यमाने लघु सूत्रं भवतीति भावः। स्वायम्भुव इति। स्वयम्भवतीति क्विप्। स्वयम्भूः। स्वयम्भुव इदमित्यण्। संज्ञापूर्वकस्य विधेरनित्यत्वादत्र (प, ९४) गुणो न भवति। तस्मिंश्चासत्युवङेव क्रियते।

## १४७। ढे लोपोऽकद्र्वाः।

कामण्डलेयः शैतबाहेय इति। चतुष्पाद्भ्यो ढञिति (४।१।१३५) ढञ्। एवं जाम्बेय इत्यत्रापि। माद्रबाहेय इति। मद्रबाहुशब्दाद्बाह्वन्तात् संज्ञाया-मितूरङ्। तदन्तात् स्त्रीभ्यो ढक् (४।१।१२०)। काद्रवेय इति। कद्रुक-मण्डल्वोश्छन्दसि संज्ञायामितूरङ् (४।१।७१)। तदन्तात् पूर्ववड् ढक्।

## १४८। यस्येति च।

अत्र यस्येति यकारस्येदं ग्रहणं वा स्यादिवर्णावर्णयोर्वा? अत्र यदि यकारस्येदं ग्रहणं स्यादुत्तरसूत्रे पुनर्यग्रहणं न कुर्य्यात्। एतदेव हि तत्रानुवर्त्तिष्यते। तस्मादिवर्णावर्णयोरिदं ग्रहणम्। तत्र वर्णग्रहणं सर्वत्र तदन्तविधिं प्रयोजयतीति तदन्तविधिर्विज्ञायत इत्येतच्चेतसि कृत्वाह इवर्णावर्णान्तस्येत्यादि। दाक्षी प्लाक्षीति। दाक्षिप्लाक्षिशब्दाभ्यामितो मनुष्यजातेरिति (४।१।६५) ङीष्। सखीत्यत्रापि सख्यशिश्वीति भाषायामिति (४।१।६२) निपातनात्। ननुचात्र सवर्णदीर्घत्वेनाप्येतत् सिद्धम्। तत् किमर्थमत्र लोपो विधीयत इत्यत आह सवर्णदीर्घत्वे हीत्यादि। अतिक्रान्ता सखी एन मिति प्रादिभ्यो धातुजस्येति (२।२।२४, वा) बहुव्रीहिरुत्तरपदलोपश्च। उपसर्जनह्रस्वत्वम्। तत्र यदि सवर्णदीर्घत्वं क्रियेत ननु लोपस्तदा सखीकारेकारयो रेकादेशः सखिशब्दस्यान्तवद् भवतीति शेषो घ्यसखीति (१।४।७) घिसंज्ञायाः प्रतिषेधः स्यात्। ततश्चातिसखेरागच्छतीति घेर्ङिति गुणो (७।३।१११) न स्यात्। लोपे सत्युपसर्जनह्रस्वत्वे सति यद्यपि प्रविभिष्टं रूपं तथापि लाक्षणिकम्। अतो लक्षणप्रतिपदोक्तपरिभाषया,

(प, ११४) तत्र श्व्रहत इति न भवति प्रतिषेधः। तस्माल् लोप एव कर्त्तव्यः। दौलेय इत्युदाहरणत्रय इतश्चानिञ (४।१।११२) इत्यपत्यार्थे ढक्। कुमारीति। वयसि प्रथमे ङीप् (४।१।२०)। गौरीति। षिद्गौरादिभ्यश्चेति (४।१।४१) ङीष्। शार्ङ्गरवीति। शार्ङ्गरवाद्यञो ङीन् (४।१।७३)। बालाकिः सौमित्रिरिति। बलाकासुमित्राभ्यां बह्वादित्वादिञ्। यस्येत्यादाविति। आदिशब्देनोत्तरो विधिः परिगृह्यते। वक्तव्य इति व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। विभाषा (६।४।१२६) श्विशोरित्येतत्सूत्राद्विभाषाग्रहणं मण्डूकप्लुतिन्यायेनानुवर्त्तते। सा च व्यवस्थितविभाषा। तेन चानेन सूत्रेण लोपो विधीयते यश्चोत्तरसूत्रेण तावुभावपि न भवत इति। काण्डे कुड्ये इति। औङ आप (७।१।१८) इति। नपुंसकाच्चेति (७।१।१९) शीभाव इति। तत्र यस्येत्यकारलोपः प्राप्नोति। सौर्य्ये इति। तेनैकदिगिति (४।३।११२) सूर्य्यशब्दादण्। तदन्तादौङः शीभावः। तत्रानेनाकारलोपः प्राप्नोति। उत्तरसूत्रेण यकारलोपश्च। इयङुवङ्भ्यामित्यादि। इयङुवङोरवकाशः श्रियौ श्रियः। भ्रुवौ भ्रुवः। लोपस्यावकाशः कामण्डलेयः। माद्रबाहेय इति। वात्सप्रेयः। लैखाभ्रेय इत्यत्रोभयं प्राप्नोति। लोपो भवति विप्रतिषेधेन। वत्सप्रीरिति क्विबन्तमेतत्॥

## १४९। सूर्य्यतिष्यागस्त्यमत्स्यानां य उपधायाः।

यद्यत्र भसंज्ञया सूर्य्यादयो विशिष्येरन् सूर्य्यादीनां भसंज्ञकानामिति तदा सौरी बलाकेत्यत्र लोपो न स्यात्। नहि सूर्य्यशब्द इह भसंज्ञक इति। किं तर्हि? अन्यदेवाणन्तं शब्दान्तरमिति बुद्धौ निधायानाश्रितरूपभेदस्य लोपेन सम्बन्धः सूर्य्यादिभिः सम्बन्धिभिर्यकारो विशिष्यत इति दर्शयन्नाह सूर्य्यतिष्यागस्त्यमत्स्य इत्येतेषामित्यादि। भस्येति। भसंज्ञकस्य। यो यकार उपधा तस्य लोपो भवति स चेद् यकारः सूर्य्यादीनां सम्बन्धी भवति। अयमत्रार्थो विवक्षितः। ते तु सूर्य्यादयो भत्वेन न विशिष्यन्ते। तेन यदापि तेषां भसंज्ञा न भवति तदापि तस्योपधायकारस्य लोपो भवत्येव

यद्यसौ यकारः सूर्य्यादीनां सम्बन्धी भवति। सौरी बलाकेति। ननु चात्राकारलोपस्य व्याश्रयत्वेनासिद्धत्वं नास्तीत्युपधायकारो न भवतीत्येतदुक्तमित्याह अपि यो यस्येतिलोप इत्यादि। अत्र हि द्वौ यस्येतिलोपौ। एकोऽणि परतः। अपर ईकारे। तत्र प्रथमो व्याश्रयः। तथाहि लोपोऽणमाश्रित्य भवति। यल्लोपस्त्वीकारम्। अतो व्याश्रयत्वादसिद्धत्वाभावस्तस्य युक्तः। इतर स्त्वीकारमाश्रित्य भवति। समानाश्रय एव। ततश्च तस्यासिद्धत्वादुपधायकारो भवति। भस्याणन्तस्येत्यादिना सूत्रार्थमुदाहरणे दर्शयति। तैषम्। तैषीति। नक्षत्रेण युक्तः काल (४।२।३) इत्यण्। टिड्ढाणञिति (४।१।१५) ङीप्। ऋषित्वादणि कृत इति। ऋष्यन्धकेत्यादिना (४।१।११४)। मत्स्यचरीति। मत्स्यो भूतपूर्वः। भूतपूर्वे (५।३।५३) च रट्। पूर्ववत् ङीप्। भवत्यत्र मत्स्यचर इति भसंज्ञकमत्स्यसम्बन्धी यकारः। नत्वसौ भसंज्ञकस्योपधेति लोपो न प्रवर्त्तते। अथ किमर्थं यग्रहणम्? यावता सूर्य्यादिभि रुपधायां विशिष्यमाणायाम् अन्तरेणापि यग्रहणं यकारस्योपधाभूतस्य लोपो विज्ञास्यते। यकार एव हि तेषामुपधा। नतु वर्णान्तरम् इत्यत आह यग्रहण मुत्तरार्थमिति। वक्तव्यमिति व्याख्येयमित्यर्थः। व्याख्यानन्त्विहापि पूर्ववद् विभाषा माश्रित्य कर्त्तव्यम्। मात्स्यमिति। तस्येदमित्यण् (४।३।१२०)। सौरीयमिति। अषान्ताद्वृद्धाच्छः (४।२।११४)। एवमागस्तीयमिति। सौर्य्यमिति। सूर्य्यो देवतास्येति सास्य देवतेत्यण् (४।२।२४)। आगस्त्य इति। अपत्यार्थ ऋष्यण्। नक्षत्राणीति। नक्षत्रसम्बन्धी योऽण् तस्मिन्नित्यर्थः। ककारादेः शब्दस्येति। ककारस्याकारस्येत्यर्थः। आद्युदात्तत्वञ्चेति। प्रत्ययस्वरेणान्तोदात्तत्वे प्राप्ते सत्याद्युदात्तार्थं वचनम्। अन्तित इति। अपादाने चाहीयरुहोरिति (५।४।४५) तसिः। तादेश्चेति। तिकशब्दस्येत्यर्थः। चकारात् कादेश्च। अन्तम इति। अतिशायने तमप्। अन्तिषदिति। सत्सूद्विषेत्यादिना (३।२।६१) क्विप्। ये चेति इष्यत इति प्रकृतेन सम्बन्धः। अन्तिय इति। भवे छन्दसीति (४।४।११०) यः। तत्र साधुरिति (४।४।९८) वा। केचित् सर्वमेव लोपविधानञ्छन्दस्येवेच्छन्ति।

१५० । हलस्तद्धितस्य ।

तद्धित इति निवृत्तम् । उत्तरसूत्रे तद्धितग्रहणात् । तेनायमीत्येव विधिः । गार्गीत्यादि । गर्गादिशब्देभ्यो यञन्तेभ्यो यञश्चेति (४।१।१६) ङीप् । कारिकेयीति । स्त्रीभ्यो ढक् (४।१।१२०) । तदन्तात् टिड्ढाणञिति (४।१।१५) ङीप् । वैश्यीति । पुंयोगादाख्यायामिति (४।१।४८) ङीष् ।

१५१ । आपत्यस्य च तद्धितेऽनाति ।

गार्गकमिति । गोत्रोचोष्ट्रोरभ्रेत्यादिना (४।२।३९) गार्ग्यशब्दाद्वुञ् । तत्र यञो लोपः । साङ्काश्यक इति । काम्पिल्यक इति । पूर्ववत् सङ्काशकम्पिल-शब्दाभ्याञ्चातुरर्थिको वुञ्छणित्यादिना (४।२।८०) ण्यः । तदन्ताज्जातादौ शैषिकेऽर्थे धन्वयोपधाद्वुञिति (४।२।१२१) वुञ् । अथ तद्धितग्रहणं किमर्थम् ? न स्तद्धित इति (६।४।१४४) तद्धितग्रहण मनुवर्त्तिष्यत इत्यत आह तद्धित-ग्रहणमित्यादि । सोमो देवतास्येति सोमाट्ट्यण् (४।२।३०) । टिड्ढाणञिति (४।१।१५) ङीप् । तत्र परतोऽनपत्ययकारस्यापि हलस्तद्धितस्येत्यनेन लोपो यथा स्यादित्येवमर्थं तद्धितग्रहणम् । अन्यथा यदि तदेव प्रकृतं तद्धितग्रहण मिहानुवर्त्तेत तदा तत्सम्बद्धमीद्ग्रहण मनुवर्त्तेत । तथाचो-भयमिहानुवर्त्तमानं पूर्वयोगेऽप्यनुवर्त्तेत । तथाच पूर्वेणैव योगेन सिद्धे सत्यु-भयत्र तद्धित ईति च नियमार्थोऽयमारम्भः स्यात् । आपत्यस्यैवानाकारादौ तद्धिते लोपो भवति । ईति च । नानापत्यस्य च । एवञ्च यथानपत्यस्य साङ्काश्यक इत्यत्र लोपो न भविष्यति तथा सौमी इष्टिरित्यत्रापि न स्यात् । नियमेन व्यावर्त्तितत्वात् । इह तु तद्धितग्रहणे क्रियमाणे पूर्वयोगे तद्धित-ग्रहणस्य निवृत्तिराख्यायते । तेन पूर्वयोगेन तद्धितमात्रस्य यकारस्यान-पत्यस्य चापत्यस्य चाविशेषेण लोपो विधीयते । सौमी इष्टिरित्यत्रापि लोपो यथा स्यादित्येवमर्थं तद्धितग्रहणम् । ननुच यद्युभयत्र तद्धित ईति चायं नियमः स्यात् सूत्रद्वयस्यार्थोऽपार्थकः स्यात् । हल आपत्यस्यानातीत्ये-कमेव योगं कुर्य्यात् । तस्मात् सूत्रद्वयस्यारम्भसामर्थ्यादन्यतरस्यैवेहानुवृत्ति र्भविष्यति । नतूभयस्यापि । इह त्वेतावान् सन्देहः स्यात् । किं तद्धित-

ग्रहणमिहानुवर्त्तेत उतेदुग्रहणमिति ? अत्रापि तद्धितग्रहण मनुवर्त्तते । नेद्ग्रहणमिति । व्याख्यानात् । सर्वसन्देहेष्विदमुपतिष्ठते भवति व्याख्यानतो विशेषप्रतिपत्ति र्न हि सन्देहादलक्षणमिति (प,१) । तद्धितग्रहणे च केवल इहानुवर्त्तमाने तद्धितविषय एवायं नियमो भविष्यति । नत्वीड्विषय इति । तथाचासत्यपि पुनरिह तद्धितग्रहण ईति नियमाभावात् पूर्वसूत्रेण सौमी इष्टिरित्यत्रापि लोपः सिध्यत्येव । तत् कथमिदमुक्तं तद्धितग्रहणमीत्यन-पत्यस्यापि लोपार्थमिति ? सुखेन लोपः प्रतीयत इत्ये तदर्थमिदमित्यभि-प्रायो द्रष्टव्यः । ततश्चायमत्रार्थः सम्पद्यते प्रतिपत्तिगौरवपरीहारार्थं तद्धित-ग्रहणम् । गार्गायण इति । यञिञोश्चेति (४।१।१०१) फक् । कारिकेयिरिति । कारिकाया अपत्यमिति स्त्रीभ्यो ढक् (४।१।१२०) । ततस्तस्यापत्यम् । अत इञ् (४।१।९५) । कारिकेयिः ॥

## १५२ । क्यच्व्योश्च ।

अतद्धितार्थोऽयमारम्भः । क्य इति क्यच्क्यङोः सामान्येन ग्रहणम् । गार्गीयतीति । सुप आत्मनः क्यच् (३।१।८) । क्यचि चेतीत्वम् (७।४।३३) गार्गीय इति । कर्तुः क्यङ् सलोपश्चेति (३।१।११) क्यङ् । अकृत्सार्वधातु-कयोरिति (७।४।२५) दीर्घः । गार्गीभूत इति । अभूततद्भाव इति (५।४।५०,वा) च्विः । अस्य च्वावितीत्वम् (७।४।३२) ।

## १५३ । बिल्वकादिभ्यश्छस्य लुक् ।

बिल्वकादिभ्य इति । आगन्तुकेनाकारेण निर्देशः । बिल्वकीया इति । उत्करादिभ्यश्छः (४।२।९०) । नड़ादीनां कुक् चेति (४।२।९१) चातुरर्थि-कश्छः । कुगागमः । बैल्वका इति । प्राग्दीव्यतोऽण् (४।१।८३) । अथच्छ ग्रहणं किमर्थम् ? यावता कृतकुगागमा बिल्वकादयो गृहीताः । एभ्यश्छ-प्रत्ययः सम्भवतीत्यन्तरेणापिच्छग्रहणं छस्यैव लोपो भविष्यतीति अत आहच्छ-ग्रहणमित्यादि । यदि च्छग्रहणं न क्रियेत तदा सन्नियोगशिष्टपरिभाषयाच्छ-कारे (प,८७) निवर्त्तमाने कुको निवृत्तिः स्यात् । तस्याश्च परिभाषाया एतदेवच्छग्रहणं ज्ञापकम् । अथ लुक्ग्रहणं किमर्थम् ? प्रकृत एव लोपो

विधीयेतेत्यत (६।४।१४७) आह लुग्ग्रहणमित्यादि। यकारग्रहणमेकदेशोपलक्षणार्थं द्रष्टव्यम्। स हि लोप उपधाया इत्यनेन सम्बन्ध इति तस्मिन्ननुवर्त्तमाने य उपधाया (६।४।१४८) इत्येतदप्यनुवर्त्तेत। तस्येयादेशे कृते यकारमात्रस्य स्यात्। अथाप्युपधाया इतीयतन्नानुवर्त्तेत? एवमप्यादेः परस्येतीकारमात्रस्य (१।१।५४) स्यात्। लुग् ग्रहणमिति। लुगिति प्रत्ययादर्शनस्यैषा संज्ञा। ननु प्रत्ययस्यैकदेशस्यादर्शनस्येति। लुग्ग्रहणे सति सर्व्वस्यैव लुक् सिध्यति। तदर्थं हि लुक्ग्रहणम्।

## १५४। तुरिष्ठेमेयस्सु।

तुरिति। विशेषकरानानुबन्धानुत्सृज्य तृं स्तृचोः सामान्येन ग्रहणम्। करिष्ठ इति। करोतेस्तृन्। तदन्तादतिशायन इष्ठन्। अत्र तृशब्दस्य लोपः। विजयिष्ठ इति। विपूर्वाज्जयतेस्तृन्। वहिष्ठ इति। अत्रापि वहेस्तृन्। तदन्तादिष्ठन्। हो ढः (८।२।३१) इति ढत्वम् (८।२।१)। तृशब्दस्य लोपे कर्त्तव्ये पूर्वत्रासिद्धमित्यसिद्धम् (८।२।१)। तेन पूर्वं लोप एव क्रियते। तस्मिन् कृते झलि पदान्ते च विधीयमानं ढत्वं निमित्ताभावान्न प्रवर्त्तते। दोहीयसीति। दुहेस्तृजन्तादीयसुन्। उगितश्चेति (४।१।६) ङीप्। अत्रापि लोपे कर्त्तव्ये दादे र्धातोर्घः (८।२।३२) इत्येतदप्यसिद्धमिति पूर्वं लोपः। तस्मिन् सति पूर्ववद् घत्वं न प्रवर्त्तते। अथालोऽन्त्यस्येत्यन्त्यस्यायं (१।१।५२) लोपः कस्मान्न भवतीत्याह सर्वस्येत्यादि। तत्रैव कारणमाह अन्त्यस्येत्यादि। यद्यन्त्यस्य स्याद् वचनवैयर्थ्यमापद्येत। अन्त्यस्य टेरित्येवं सिद्धत्वात्। तस्मादन्त्यलोपवचने प्रयोजनं नास्तीति सर्व्वस्य तृशब्दस्य लोपो यथा स्यादित्येवमर्थमिदं वचनं विज्ञायते। यदि तर्हि तृशब्दस्य लोपार्थं वचनमनन्तरो लुगेव कस्मान्न विधीयते। एवं तर्हि सर्वस्य सुखमेव लोपोऽवसीयते। प्रत्ययादर्शनस्य लुग्विधानादित्यत आह लुगित्येतत् त्वित्यादि। कः पुनस्तत्र सति दोषः स्यादित्यत आह तथाहीत्यादि। यदि लुगित्येतदिहानुवर्त्तेत ततोऽन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति (प,५३) कृत्वा पूर्वं लुका भवितव्यम्।

ततश्च न लुमताङ्गस्येति (१।१।६३) प्रत्ययलक्षणनिषेधः स्यात् । करिष्ठो विजयिष्ठ इत्यत्राऽऽर्धधातुकलक्षणो गुणो न स्यात् । तस्मान्मा भूदेष दोष इति लुगित्येतदिहानुवर्त्तते । अथेमनिज्ग्रहणं किमर्थम् ? यावता त्वशब्दात् पर इमनिज् न सम्भवति । तथापि पृथ्वादिभ्य इमनिज् वा (५।१।१२२) वर्णदृढादिभ्यः (५।१।१२३) ष्यञ्चेत्यनेन योगद्वयेन स विहितः । न त्वशब्दान्तं किञ्चित् पृथ्वादिषु दृढादिषु वा मध्ये पठ्यते । नापि वर्णवाच्यस्तीत्यत आह इतरो त्वितग्रादि ॥

## १५५ । टेः ।

णाविष्ठवदिति । तसिलादिष्वाकृत्वसुच इष्ठनि पुंवद्भाव उक्तः । र ऋतो हलादेर्लघोरिति (६।३।१६१) रभावः । टेरिति टिलोपः । स्थूलदूर-युवह्रस्वेत्यादिना (६।४।१५६) यणादिपरस्य लोपः पूर्वस्य च गुणः । विन्मतो-र्लुगिति (५।३।६५) लुक् । युवाल्पयोः कनन्यतरस्यामिति (५।३।६४) कन् । प्रियस्थिरेत्यादिना (६।४।१५७) प्रादय आदेशाः । एतानि कार्य्याणि यथेष्ठनि भवन्ति तथा णावपि यथा स्युरिति णाविष्ठवत् प्रतिपादिकस्य कार्य्यं भवतीति वक्तव्यम् । प्रातिपदिकग्रहणं शक्यमकर्त्तुम् । अन्यस्यातिदेश-स्यासम्भवात् । वतिरिह सादृश्यार्थः । तेन यस्येष्ठनि यत्कार्य्यं विवक्षितं ततोऽन्यस्यातिदेशस्यासम्भवात् तदवच्छेदार्थं प्रातिपदिकग्रहणं न कर्त्तव्यम् । तत् क्रियते विस्पष्टार्थम् । केचित् तु ब्रुवते प्रत्ययस्य कार्य्याणामतिदेशो मा भूदित्येवमर्थं प्रातिपदिकग्रहणम् । तेन बहुमाचष्टे बहयतीत्यत्रेष्ठस्य यिट्चेति (६।४।१५८) यिड् न भवति । एतच्चायुक्तम् । इष्ठवदित्यत्र हि सप्तमीसमर्थाद्वतिः विहितः । णाविति प्रतियोगिनि सप्तमीश्रवणात् । तेनेष्ठनि यत् कार्य्यं विहितं तदतिदिश्यते । नत्विष्ठस्य यत् कार्य्यं तदपि । नच यिड् इष्ठनि यत् कार्य्यम् । अपि त्विष्ठन एव । तस्येह प्राप्तिरेव नास्तीति किन्तन्निवृत्त्यर्थेन प्रातिपदिकग्रहणेन ? एनीमिति । एतशब्दाद्वर्णादनु-दात्तात्तोपधादित्यादिना (४।१।३९) ङीप् । तकारस्य च नकारः । एतयतीति

णौ कृते पुंवद्भावेन ङीष्नकारावुभावपि निवर्त्तेते। ननु च ङीषा व्यवहितोऽत्र णिरिति णावतिदेशः क्रियमाण स्तद्व्यवधाने न प्राप्नोतीति। नैष दोषः। इष्ठन्यपि हि ङीपा व्यवधान एव प्रातिपदिकस्य पुंवद्भावः। तस्मादिहापि व्यवधानेऽपि तद्वदेव भविष्यति। स्रग्विणमिति। अस्मायामेधास्रजो विनिरिति (५।२।१२१) विनिः। स्रजयतीत्यत्र संज्ञापूर्वको विधिरनित्य (प, ८४) इत्यत उपधाया (७।२।११६) इति वृद्धिर्न भवति। अङ्गवृत्तेः पुनरङ्गवृत्तावविधिर्निष्ठितस्येति (प,९३) वा। प्रापयतीत्येवमादौ भवत्येवानिष्ठितत्वात्। अत्तार्त्तिह्रीत्यादिना (७।३।३६) पुक्। ननु भारद्वाजीयपाठे प्रादयो न सिध्यन्ति। अपि तु स्रजयति वसयतीति लुक्। कनयतीत्यत्र च कनित्यत आह तदेतदुभयमप्युदाहरणमात्रमित्यादि। तदेतद्भारद्वाजीयपाठे ऽन्येषाञ्च प्रयोजनमुपदर्शितम्। नत्वेतदुदाहरणमात्रपरिगणनम्। एतावदेव प्रयोजनमिति यस्मात् प्रादयोऽपीष्यन्ते। ननु प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति (ग,सू) चुरादिगण एव पठ्यते। तत् कस्मात् पुनरिह णाविष्ठवद्भाव उच्यते ? अस्यैव प्रपञ्चार्थमित्येके। गणे वा स वक्तव्यः। असौ इतर इति विकल्पप्रदर्शनार्थमित्यन्ये।

१५६। स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः।

यद्यपि पूर्वं भावसाधनो लोपशब्द उपात्त स्तथापीह कर्मसाधनो गृह्यते। यणादिपरमिति निर्देशात्। भावसाधने हि तस्मिन् कर्त्तृकर्मणोः कृतीति (२।३।६५)षष्ठी स्यात्। कर्मसाधने तु कर्मणस्तेनैवाभिहितत्वात् प्रथमैव युज्यत इति मन्यमानो लोपशब्दस्य कर्मसाधनतां दर्शयन्नाह यणादिपरं लुप्यत इति। कथं पुनस्तस्यैव भावसाधनस्य सतः कर्मसाधनतोपपद्यते ? कः पुनराह तस्यैवेति? प्रतिसूत्रं ह्यनुवर्त्तमानो लोपशब्दो भिद्यते। ननु च यणादौ परस्मिँल्लुप्ते सामर्थ्यात् तत्पूर्वस्यैव गुणो विज्ञास्यते। तत् किमर्थं पूर्वग्रहणम् इत्याह पूर्वग्रहणं विस्पष्टार्थमिति।

## १५७। प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ॥

किं पुनः कारणं प्रियोरुगुरुदीर्घाणामेवेमनिजुदाहियते। नान्येषामित्याह प्रियोरुबहुलगुरुदीर्घा इत्यादि। प्रियादिभ्य एवेमनिच् सम्भवति। नान्येभ्य इत्येवंपरमेतद्वाक्यमित्यर्थः। अन्यथा यद्यपि प्रियादय एव पृथ्वादिषु पठ्यन्ते तथापि यद्यन्ये वा दृढादिषु पठ्यन्ते वर्णवाचिनो वा स्युस्तदोदाह्रियेतेमनिच् तेषामित्यकारणमेतद् इमनिचोऽत्र उदाहरणं स्यात्।

## १५८। बहोर्लोपो भू च बहोः।

बहोरुत्तरेषामित्येतेन प्रथमस्य बहोः पञ्चम्यन्ततां दर्शयति। तस्य च बहोरित्यनेनापि द्वितीयस्य षष्ठ्यन्तताम्। भूयानिति। आदेः (१।१।५४) परस्येतीकारस्यैव लोपः। अथ किमर्थं बहोरिति पुनर्ग्रहणम् इत्याह बहोरिति पुनरित्यादि। असति हि बहोरितिग्रहणे बहुशब्दस्य स्थानित्वं न प्रतीयेत। पञ्चम्यन्तेन निर्देशात्। तस्मात् स्थानित्वप्रतिपत्तये पुनर्बहोरित्युच्यते। अन्यथा हीत्यादि। यदि बहोरिति नोच्येत तदा प्रत्ययानामेव भूभावः स्यात्। तस्मादित्युत्तरस्येति (१।१।६७) वचनात्। ननु पृथग्निर्देशादेव प्रत्ययानां न भविष्यति। अन्यथा भूलोपावित्ययं ब्रूयात्। नैतदस्ति। अस्ति ह्यन्यत् पृथङ्निर्देशस्य प्रयोजनम्। किम्? पृथक्स्थानिकौ यथा स्याताम्। आदेर्माभूतामिति। यदि भूलोपावित्येवमुच्येत तदादेः परस्येत्यादावस्यैव (१।१।५४) वर्णस्य पर्य्यायेण भूलोपौ स्यातामिति। अतो भिन्नस्थानिकौ यथा स्यातामित्येवमर्थः पृथग्योगनिर्देशः स्यात्। तस्माद् युक्तमुक्तमन्यथा हि प्रत्ययानामेव भूभावः स्यादिति। चकारोऽत्र सन्नियोगार्थः।

## १५९। इष्ठस्य यिट् च।

लोपापवादो यिडागम इति। नाप्राप्ते तस्मिन्नस्यारम्भात्। तस्मिन्निकार उच्चारणार्थ इति। प्रयोजनान्तराभावात्। चकारो बहोश्च भूरित्यनुकर्षणार्थः।

## १६०। ज्यादादीयसः।

ज्यायानिति। प्रशस्यस्य श्रः (५।३।६०)। ज्य चेति (५।३।६१) ज्यादेशः। लोपस्य यिट् चेत्यादि। यद्यत्र लोपो यिटा न व्यवधीयते तदा तेनैव ज्यायानित्येतत् सिध्यतीति कृत्वाऽऽदिति नोच्यत इत्यभिप्रायः। कथं पुनरादित्यनुच्यमाने लोपेन सिध्यतीत्यत आह लोपे हि सतीत्यादि। अथ दीर्घोच्चारणं किमर्थम्? यावतान्तरतम्यादेव दीर्घस्य दीर्घ एव भविष्यति। नैतदस्ति। नहि भाव्यमानोऽण् सवर्णान् न गृह्णातीति।

## १६१। र ऋतो हलादेर्लघोः।

कर्त्तव्यमिति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। उत्तरसूत्रे यद्विभाषाग्रहणं तदिहापि सम्बध्यते। सा च व्यवस्थितविभाषा। तेन पृथ्वादीनामेव भविष्यति। यद्येवं हलादेर्लघोरित्येतन्न कर्त्तव्यम्। व्यवस्थितविभाषया हलादेर्लघोश्च भविष्यति। सत्यमेतत्। तद् विस्पष्टार्थं क्रियते। तत इह न भवतीत्याह अक्रियमाणे तु परिगणने कृतयतीत्यादावपीष्ठवद्भावेन स्यादेवेति भावः।

## १६२। विभाषर्जोश्छन्दसि।

## १६३। प्रकृत्यैकाच्।

स्रजिष्ठ इति। अत्र प्रकृतिवद्भावेन टिलोपो न भवति। ननु च विन्मतोर्लुक् टिलोपं बाधिष्यते। नाप्राप्ते तस्मिंस्तस्यारम्भात्। नैतदस्ति। द्वौ टिलोपौ। एको विन्मत्वन्तस्य। अन्यो लुकि कृते सत्यवशिष्टस्य। तत्र योऽसौ विन्मत्वन्तस्य टिलोपस्तस्मिन्नप्राप्ते लुगारभ्यत इति युक्तं यदसौ तं बाधते। यस्त्ववशिष्टस्य टिलोपस्तस्य प्राग्लुकप्राप्त्यसम्भवादप्राप्त एव तस्मिन्नारभ्यमाणः कथं पश्चादुपजातप्राप्तिकं लोपं बाधेत? तस्मादारब्धव्यमिदम्। प्रकृत्याके राजन्येत्यादि। किं वक्तव्य मेतत्? न। कथं तर्हि

तुरिष्ठेमेयःसु (६।४।१५४) इत्यत्रतन्निवृत्तम् । सामान्येनायं प्रकृतिवद्भावो विधेयः । विभाषेति चानुवर्त्तते । सा च व्यवस्थितविभाषा । तेन यत्र यत्रेष्यते तत्र सर्वत्र भविष्यति । यत्र तु नेष्यते तत्र न भविष्यत्येव । एवमिनण्यनपत्य (६।४।१६४) इत्येवमादिकं प्रकृतिभावविधानमनर्थकं स्यादिति चेत् ? न । प्रपञ्चार्थत्वात् । राजन्यकमिति । राज्ञोऽपत्यमिति राजश्वशुराद् यत् (४।१।१२३) । तस्मात् समूहेऽर्थे गोत्रोक्षोष्ट्र (४।२।३९) इत्यादिना वुञ् । मानुष्यकमिति । मनोरपत्यमिति मनोर्जातावञ्यतौ षुक् चेति (४।१।१६१) येषां मतेऽपत्यार्थे यत् तेषां पूर्वसूत्रेण वुञि कृते लोपः प्राप्नोति । स प्रकृतिभावान्निवर्त्तते । येषान्तु मतेन जातिमात्रे यन् नापत्ये तेषां नार्थः प्रकृतिभावेन । अनापत्ययकारत्वादेव हि लोपो न भविष्यति ॥

## १६४ । इनण्यनपत्ये ।

सांकूटिनम् । सांराविणम् । सांमार्जिनमिति । कूट दाहे । रु शब्दे । मृजू शुद्धौ । अभिविधौ भाव इनुण् (३।३।४४) । मृजेर्वृद्धिः (७।२।११४) । सांकूटिन् सांराविन् सांमार्जिन् इति स्थिते ऽणिनुण इति (५।४।१५) स्वार्थे ऽण् । मैधाव इति । अस्मायेत्यादिना (५।२।१२१) विनिः । तदन्तात् प्राग्दीव्यतोऽण् (४।१।८३) अपत्यार्थे ।

## १६५ । गाथिविदथिकेशिगणिपणिनश्च ।

अपत्यार्थोऽयमारम्भः । अनपत्ये पूर्वेणैव सिद्धत्वात् । इन्नन्तत्वादेषाम् ।(Q)

## १६६ । संयोगादिश्च ।

अयमप्यपत्यार्थ आरम्भः । शङ्खिन इति । शङ्खमद्रवज्रशब्देभ्यो मत्वर्थे इनिः । तदन्तात् पूर्ववदण् ।

(Q) गाथाशब्दो व्रीह्यादिः । तत इनिः । विदथी केशी गणी पणीति च मत्वर्थीयेन्यन्ताः । विदथी यज्ञः । विदथिनोऽपत्यं वैदथिनः ।

१६७। अन्।

अनपत्य इति निवृत्तम्। सामान्येनाण्मात्रे विधिः। सामनो वैमन इति। तस्येदमित्यण् (४।३।१२०)। सौत्वन इति। षुञ अभिषवे। सुयजो-र्ङ्वनिबिति (३।२।१०३) ङ्वनिप्। ह्रस्वस्य पिति कृति तुक् (६।१।७१)।

१६८। ये चाभावकर्मणोः।

सामन्यो वैमन्य इति। तत्र साधुरिति (४।४।९८) यत्।

१६९। आत्माध्वानौ खे।

आत्मनीनमिति। आत्मन्विश्वजनभोगोत्तरपदात् खः (५।१।९)। अध्व-नीनमिति। अत्राप्यध्वनो यत्खाविति (५।२।१६) खप्रत्ययः। प्रत्यात्ममिति। आत्मानं प्रति। अव्ययं विभक्तीत्यादिना (२।१।६) यथार्थेऽव्ययीभावः। ततोऽनश्चेति (५।४।१०८) टच्। प्राध्वमिति। प्रगत मध्वानमिति प्रादि-समासः। उपसर्गादध्वन इत्यच् (५।४।८५)।

१७०। न मपूर्वोऽपत्येऽवर्म्मणः।

चार्मण इति। परिवृतो रथ इत्यर्थे प्राग्दीव्यतोऽण् (४।२।१०)। वा हितनाम्न इति वक्तव्यमिति। हितनामशब्दस्य वा प्रतिषेधो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। इहापि तदेव विभाषाग्रहण-मनुवर्त्तते। सा च व्यवस्थितविभाषा। तेन हितनाम्नो वा प्रतिषेधो भविष्यति।

१७१। ब्राह्मोऽजातौ।

यद्येतदेकमेव सूत्रं स्यात् ततो नियमार्थं वा स्यात्? विध्यर्थं वा? यद्यपत्य इति वर्त्तते ततोऽनन्तरसूत्रेणैव प्रकृतिभावे प्रतिषिद्धे न स्तद्धित (६।४।१४४) इति टिलोपः सिध्यत्येव। सिद्धे सतीरतन्नियमार्थं भविष्यति। अजातावेवापत्यार्थे यथा स्यादिति। तथाच तस्येदमित्यणि (४।३।१२०) विहिते ब्राह्मी गर्भः। ब्राह्ममस्त्रम्। ब्राह्मं हविः। ब्राह्मी ओषधिरिति न

सिध्यति । अपत्याणोऽभावात् । अथापत्य इति निवृत्तम् । ततो विध्यर्थमेव भविष्यति । अपत्ये हि पूर्वसूत्रेण प्रकृतिभावः प्रतिषिद्धः । ततश्चान्निति (६।४।१६७) प्रकृतिभावे प्राप्तेऽजातौ ब्राह्म इत्येतट्टिलोपार्थं निपात्यते । एवञ्च विध्यर्थेऽस्मिन् सिद्धम् ब्राह्मो गर्भः । ब्राह्ममस्त्रम् । ब्राह्मं हविरिति । ब्रह्मण इयं ब्राह्मी ओषधिरित्येतत् तु न सिध्येत् । अजाताविति प्रतिषेधात् । अपत्ये जातौ च न मपूर्व्वोऽपत्येऽवर्म्मण इति (६।४।१७०) प्रकृतिभावे प्रतिषिद्धे सति न स्त्रद्धित इति (६।४।१४४) भवति टिलोपः । ब्राह्मो नारद इति । तथेहापि स्याद् ब्रह्मणोऽपत्यमिति ब्राह्मण इति । एवमेकयोगे दोषप्रसङ्गमभिवीक्ष्य तत् परिजिहीर्षुराह योगविभागोऽत्र क्रियत इति । योगविभागे सति यद्यपत्य इत्यनुवृत्तेरपत्य एव टिलोपो निपात्यते पूर्ववत् सिद्धे सति नियमार्थमेव निपातनं स्यात् । ततश्च स दोष स्तदवस्थ एव स्याद् यः प्राङ् नियमपक्षे उक्तः । तथाच योगविभागकरण मनर्थकं स्यात् । तस्मादपत्याधिकारेऽपि योगविभागकरणसामर्थ्यादपत्यादन्यत्र ब्राह्मइत्येतन्निपात्यते । एवमनपत्येऽपि ब्राह्म इति निपातनाद् ब्राह्मो गर्भो ब्राह्ममस्त्रं ब्राह्मं हविरित्येतत् सिध्यति । ततो ऽजातावित्ययं द्वितीयो योगः । न मपूर्व्वोऽपत्येऽवर्म्मण इति (६।४।१७०) प्रकृतिभावे प्रतिषिद्धे यो न स्त्रद्धित (६।४।१४४) इति टिलोपः स मा भूदित्येवमर्थोऽपत्य इत्येवेति । एतेनास्मिन् द्वितीये योगेऽपत्यइत्यनुवर्त्तत इत्याचष्टे । अजाताविति च प्रसज्यप्रतिषेधोऽयम् । तत्र जातेरपत्यार्थेन सम्बन्धः । नञस्तु भवतिना । तमेवार्थं वृत्तौ दर्शयन्नाह अपत्ये जातावपि ब्राह्मण इति लोपो न भवतीति । जातिविशिष्टेऽपत्ये विवक्षितेऽपि परतो ब्राह्मण इत्यत्र टिलोपो न भवतीत्यर्थः । अपत्य इत्येव । ब्राह्मी ओषधिरिति । प्रत्युदाहरणव्याजेन योगविभागे सति जातिमात्रविवक्षायां ब्राह्मी ओषधिरित्येतदपि सिद्धं भवतीति दर्शयति ।

## १७२ । कार्म्मस्ताच्छील्ये ।

यद्येवमिति । यदि णकारोऽत्र प्रत्यय एवं सति किमर्थमिदम् ? नैवास्य प्रयोजनं किञ्चिदित्यर्थः । किं कारणमित्याह न स्त्रद्धित इत्येवं लीत्यादि ।

यदि लक्षणेन न प्राप्नोति तदर्थं निपातनमारभ्यते। इह तु न स्वद्भित (६।४।१४१) इतैयवं सिद्धः। नहि णे केनचित् प्रकृतिभाव उक्तो यत स्तत्र टिलोपार्थमारभ्यमाण मिदमर्थवत् स्यात्। अणि हि प्रकृतिभावो ऽणन्त-स्योक्तः। नतु णे। अनन्तरोक्तमर्थमभुग्रपगच्छति। यदि सत्यं किमर्थमिद-मित्याह ज्ञापकार्थमित्यादि। अण्कृतानीत्यादि। अणि कृतानि कार्य्याणि अण्कृतानि। सप्तमीति (२।१।४०) योगविभागात् समासः। अथवाऽणा कृतानि। कर्तृकरणे कृता बहुलमिति (२।१।३२) समासः। किमेतस्य ज्ञापनेन प्रयोजनमित्याह तेनेत्यादि। चुरा शीलमस्याः। तपः शीलमस्या इति च्छत्रादिभ्यो ण इति (४।४।६२) णः। तदन्तान् ङीप्। ताच्छीलिके ण इत्यस्यार्थस्य ज्ञापितत्वात्। तदस्यां प्रहरणमिति क्रीड़ायां ण ( ।२।५७) इति दण्डात् णे दाण्डेति। अण्कृतं कार्य्यं न भवति। यदि तर्हि ताच्छीलिकेष्वण्कृतमिष्यते ऽणेवच्छत्रादिभ्यः कस्मान्नोच्यते ? तत्राप्ययमर्थः। ज्ञापनार्थं निपातनं कर्त्तव्यं न भवति। युक्तमेतदुक्तवानसि। वैचित्र्यार्थं त्वण् कृतः। कार्मणमिति। तद् युक्तात् कर्मणोऽणित्यण् (५।४।३६)। कर्मणा युक्तं कार्मणमिति।

## १७३। औक्षमनपत्ये।

औक्षं पदमिति। तस्येदमित्यण् (४।३।१२०)।

## १७४। दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेय-वासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि।

उपचाराद् ग्रन्थोऽप्यथर्वन्नित्युच्यत इति। उपचारस्य तु तत्-प्रोक्तत्वमेव निबन्धनम्। आथर्वणिक इति। वसन्तादिभ्यष्ठक् (४।२।६३)। भ्रौणहत्यमिति। भ्रूणं हतवानिति ब्रह्मभ्रूणवृत्रेषु क्विप् (३।२।८७) तदन्तात् ष्यञ्। हनस्तोऽचिण् (७।३।३२) णलोरित्यनेनैव तकारः सिद्धः। तत् किं निपात्यत इत्याह हनस्तोऽचिण्णलोरित्यादि।

धातोः स्वरूपग्रहणे तत्प्रत्यये कार्य्यसंप्रत्यय एव। धातो रित्येवं यो विहितः प्रत्यय स्तत्र कार्य्यं विज्ञायत इत्यर्थः। न च ष्यञ्प्रत्ययो धातुप्रत्ययः। किं तर्हि ? प्रातिपदिकप्रत्ययः। तेन तत्र हन स्तोऽचिण्णलोरिति (७।३।३२) तकारो न प्राप्नोति। अतो निपात्यते। कथं पुनर्विज्ञायते धातोः स्वरूपग्रहणे तत्प्रत्यये कार्य्यं भवतीति। अतएव निपातनात्। ननुच हो हन्तेर्ञ्णिन्नेष्विति (७।३।५४) कुत्वप्रतिषेधार्थं निपातनं स्यात्। नैतदस्ति। न (७।३।५९) क्वादेरित्यत्र हि नेति योगविभागादपि शक्यते कुत्वनिवृत्तिः कर्त्तुम्। भ्रौणघ्नः। वार्त्रघ्न इति। अपत्यार्थेऽण्। इक्ष्वाकुशब्दाद् यदा जनपदशब्दादित्यादिनाञ् (४।१।१६८) भवति तदैक्ष्वाकशब्दः ञित्स्वरेणाद्युदात्तः। यदा तु कोपधादिति (४।२।१३२) शैषिकोऽण् तदान्तोदात्तः। ननु चैवंविधसूत्र एकस्योपादानेऽपरस्य ग्रहणं न सिध्यति। तस्मादुभयोरपि स्वरभिन्नयोरुपादानं कर्त्तव्यमैक्ष्वाक ऐक्ष्वाक इति। एतच्चोद्यमपाकर्त्तुमाह स्वरसर्वनाम्नेत्यादि। उदात्तादीनां स्वराणामविभागेनोच्चारणमेकश्रुतिः। सा च स्वराणां सर्वनामेव सर्वनाम। यथैव हि तस्यापत्यमित्यादौ (४।१।९२) निर्देश उपगुप्रभृतीन् विशेषान् विभागेन प्रतिपादयति तथैकश्रुतिरप्युदात्तादीन् स्वरविशेषान्। तथात्रायमैक्ष्वाकशब्दः पठ्यते नाप्याद्युदात्तो नाप्यन्तोदात्तः। तस्य त्वेवं पठितस्य प्रत्ययविशेषात् स्वरविशेषो भवति। यदाञ् तदाद्युदात्तः। यदाण् तदान्तोदात्तः। इयादेशापवाद इति। केकयादिसूत्रेणेयादेशः (७।३।२) प्राप्नोति। तदपवादो लोपो निपात्यते। अतो गुणे पररूपत्वम्। अथ किमर्थमिति। येनाभिप्रायेण पृष्टवान् तं स्वयमेवाविष्कर्त्तुमाह ततोऽञि कृत इत्यादि। सिद्धमिति। रूपस्वरूपयोरभेदात्। यल्लोपार्थञ्चेत्यादिना बिदादिषु पाठे यो गुणस्तं दर्शयति यस्कादिषु चेत्यादि। तत्र हि तस्य बहुषु गोत्रप्रत्ययस्य लुग् यथास्यादित्येवमर्थः पाठः। स च लुग् बिदादिषु पाठे सति यञञोश्चेत्यनेनैव (२।४।६४) सिध्यतीति नार्थो यस्कादिषु पाठेन। मैत्रेयः सह इत्यादि। एतेन बिदादिषु पाठे यो दोषस्तं दर्शयति। बिदादिषु पाठे सति सर्वमेतदुपपद्यते

यदुक्तवानसि । किन्तु मैत्रेयशब्दादजन्तात् सङ्घाङ्कलक्षणेतत्रादिनाण्_ प्रत्यय: (४।३।१२७) स्यात् । ततो मैत्रेय इतत्रनिष्टं रूपं स्यात् । ननु मैत्रेयक इतत्रभीष्टम् । ढञन्तात् तु गोत्रचरणाद्वुञ्_ भवतीति मैत्रेयक इतत्रभीष्टं सिध्यति । हिरण्मय इति । मयड्वैतयोर्भाषायामिति (४।३।१४०) मयट् ।

१७५ । ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि ।

ऋत्व्यम् । वास्त्व्यमिति । भवेच्छन्दसीति (४।४।११०) यत् । वास्त्वमिति । तस्येद मितत्रण_ (४।३।१२०) । एवं माध्वीतत्रापि । हिरण्यय इति पूर्ववन्मयट् । (R)

---

(R) The editor had chiefly at his disposal, to collate and prepare the press copy of the Sixth Adhyaya of the Kasika-Vivarana-Panchika, the following MSS.

(ज) or iv i.e. the 4th MS. containing I. 2 ; III. I. 2. ; VI. I, 4.

(फ) or XI. i e. the 11th MS. containing II. I, 2. ; VI. 3 ; VII. I. 2. 3. 4.

(ध) or XV i.e. the 15th MS. „ VI. 4.

(ढ) or XXII i e. the 23rd MS. „ VI. 3, 4 ; VIII. 3, 4,

(म) or XXV i.e. th 25th MS. „ VI. I, 2 ; VIII. I, 2.

(य) or XXVI i e. the 26th MS. „ VI. 2.

Of these :——

The (ज) has, at the end of 1/2, श्रीमधुसूदनशर्मणा लिखितम् । At the end of 3/2, श्रीकाशिपतिशर्मणः पुस्तकमिदम् । लिखितं श्रीजगन्मोहनदेवेन । शकाब्दाः १७३०, आषाढ़स्य तृतीयदिवसे । शक १७३० is 1808 AD. At the end of 6/4, there is

इन्दुविन्दुमुनिचोणीशाके सिंहगते रवौ ।

व्यालिखि न्यासटीकेयं श्रीकृष्णानन्दशर्मणा ॥ १ ॥

The शाक १७३९ is put down at the end of 6/3. It is 1817 AD.

इन्दुविन्दुमुनिचोणीशाक is १७०१ i.e. 1779 AD. The MS. is very old ; many pages were found stuck to one another and in some places moth-eaten. It is in Bengali characters and belongs to the Varendra Research Society, Rajshahi.

(फ) At its end is लिखिता श्रीरामकान्तशर्मणा । One leaf is missing in VI. 3, and VII. 3 is incomplete. It is a very good and correct MS. written in Bengali characters.

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरण-पञ्जिकायां षष्ठाध्यायस्य चतुर्थः पादः समाप्तः ॥ ६।४ ॥

—:o:—

समाप्तश्च षष्ठोऽध्यायः ॥ ६ ॥

---

(घ) It is incomplete and also is in Bengali.

(ङ) VI 4. is incomplete. It was got from the village बेलघरिया, Rajshahi, from the house of पण्डित शिवचन्द्रसिद्धान्त ।

(झ) It is a copy from Sravan Belgola, Mysore, duly compared and certified. Written in Devanagar from the MS. on palm leaves in Canarese chracters, preserved in the Jaina Matha of that place.

(ञ) This MS. is from Kasmere; got through the favour of Mr. M. Kaul M. A. Supdt Research Department, Kasmere State. It was received from Srinagar, Jambu-Kasmere; duly compared and certified and written in Devanagra from a MS. in that department of the Raj as stated above. But this MS. too is not complete. Portions of the 7th & 8th Adhyayas are not to be had here. In the colophon of VI. 2 of this MS. are the words इति स्थविरजिनेन्द्रबुद्ध्युपरचितायाम् & & & —in stead of इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपाद &c.

# KASIKA VIVARANA PANJIKA
## Vol. II.

## शुद्धिपत्रम्

| पृष्ठायाम् | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५४ | २४ | लशून | लशुन |
| ८४ | २५ | कश्चिन्…कश्चित् | क्वचिन्…क्वचित् |
| १८६ | २० | व्यवधानोऽपि | व्यवधानेऽपि |
| २१६ | २१ | एतश्च | ततश्च |
| ,, | २२ | विशेषं दर्शयति…ननु विशेषं | |
| २२६ | २७ | सम्बन्ध | सम्बद्ध |
| ३११ | १५ | कश्चिति | क्वचिति |
| ३२२ | ८,१२ | समरणौ | श्रमरणौ |
| ३५४ | ४ | त्यवन्त: | त्यवन्त; |
| ४०८ | १८ | नोपगर्गं | सोपसर्गं |
| ,, | २२ | संहृत | संहित |
| ,, | २६ | एकोऽर्थो | एकोऽभिन्नोऽर्थो |
| ५२८ | २३ | ङ्किति | क्ङिति |
| ५३० | १८ | ङ्किति | क्ङिति |
| ५४० | १७, १८ | ,, | ,, |
| ५५६ | २६ | अवाप्युरिति | अवाप्सुरिति |

